# जैमिनीयब्राह्मणम्

तदाहुः केन जुहोति कस्मिन्हूयत इति ।
प्राणेनैव जुहोति प्राणे हूयते ।
तद्यदेतदग्नीन्मन्थन्ति यजमानस्यैव तत्प्राणाञ्जनयन्ति ।
तद्यावद्वै मन्थन्ति न तर्हि प्राणिति ।
अरण्योरेवास्य तर्हि प्राणा भवन्ति ।
तस्य वै मथ्यमानस्य भस्मावशीयते ।
अन्नमेवास्य तज्जायते ।
अन्नं म एतदजनीत्येव तद्विद्यात् ।
धूमोऽनु निनर्दति ।
मन एवास्य तज्जायते ।
मनो म एतदजनीत्येव तद्विद्यात् ।
अङ्गारोऽनु निर्वर्तते ।
चक्षुरेवास्य तज्जायते ।
चक्षुर्म एतदजनीत्येव तद्विद्यात् ।
स एषोऽङ्गार एतानि भस्मानि ग्रसते ।
यथा कुमारो जातस्स्तनमभिपद्येत तथा तिर्यङ्विसर्पति ।
श्रोत्रमेवास्य तज्जायते ।
श्रोत्रं म एतदजनीत्येव तद्विद्यात् ।
उपरि तृणानि धुनोति ।
प्राण एवास्य स जायते ।
प्राणो म एषोऽजनीत्येव तद्विद्यात् ।
भा इत्युद्दीप्यते ।
वागेवास्य सा जायते ।
वाङ्म एषाजनीत्येव तद्विद्यात् ।
स एतान्पञ्च प्राणाञ्जनयते ।
तांस्त्रेधा व्यूह्य देवान्कृत्वा तेषु जुह्वदास्ते ।
देवा हैवास्य देवा भवन्ति ।

इमे त्वेवास्य देवा भवन्ति येषु जुह्वदास्ते १

तद्यदाहुः केन जुहोति कस्मिन्हूयत इति प्राणेनैव जुहोति प्राणे हूयते ।
तदेतदन्नं प्राणे जुहोति ।
स एषोऽनकाममार इमान्हि प्राणानभि वर्धयमानस्य तेषु जुह्वदास्ते ।
अथैतद्ध वाव ब्राह्मणस्य स्वं यद्धविः ।
तदात्मन्निधत्त एष्वमृतेषु प्राणेषु ।
तदस्यात्मन्निहितं न प्रमीयते ।
तद्यदा वै मन उत्क्रामति यदा प्राणो यदा चक्षुर्यदा श्रोत्रं यदा
वागेतानेवाग्नीनभिगच्छति ।
अथास्येदं शरीरमेतेष्वेवाग्निष्वनुप्रविध्यन्ति अस्माद्वै त्वमजायथा एष
त्वज्जायतां स्वाहा इति ।
सोऽत आहुतिमयो मनोमयः प्राणमयश्चक्षुर्मयश्श्रोत्रमयो वाङ्मय ऋङ्मयो
यजुर्मयस्साममयो ब्रह्ममयो हिरण्यमयोऽमृतस्संभवति ।
अमृता हैवास्य प्राणा भवन्ति ।
अमृतशरीरमिदं कुरुते ।
सोऽमृतत्वं गच्छति य एवं विद्वानग्निहोत्रं जुहोति २

प्रजापतिस्सहस्रसंवत्सरमास्त ।
स सप्त शतानि वर्षाणां समाप्येमामेव जितिमजयद्यास्येयं जितिस्ताम् ।
स स्वर्गं लोकमारोहन्देवानब्रवीदेतानि यूयं त्रीणि शतानि वर्षाणां
समापयाथेति ।
तथेति ।
ते त्रीणि शतानि वर्षाणां समाप्य तामु एव जितिमजयन्यां प्रजापतिरजयत्
।
त एते सर्व एव प्रजापतिमात्रा अया३मया३मिति ।
तेऽब्रुवन्देवशरीरैर्वा इदममृतशरीरैस्समापाम न वा इदं मनुष्यास्समाप्स्यन्ति
।
एतेमं यज्ञं संभरामेति ।
तं संवत्सरमभिसमभरन् ।

तेऽब्रुवन्महद्वा इदं समेव भरामेति ।
तं द्वादशाहमभिसमभरन् ।
तेऽब्रुवन्महद्वा इदं समेव भरामेति ।
तं पृष्ठ्यं षडहमभिसमभरन् ।
तेऽब्रुवन्महद्वा इदं समेव भरामेति ३

तं त्रिरात्रं तं द्विरात्रं तमप्तोर्यामं तमतिरात्रं तं वाजपेयं तं षोडशिनं तमुक्थ्यं तमग्निष्टोमं तमिष्टिपशुबन्धांस्तं चातुर्मास्यानि तं दर्शपूर्णमासौ तमेते अग्निहोत्राहुती अभिसमभरन् ।
सोऽतो न पराजयते ।
तद्वा अपराजितं यदग्निहोत्रम् ।
न ह वै पराजयते य एवं वेद ।
स यत्पुरस्तादप उपस्पृशति सत्यं वा आपस्सत्यं दीक्षा दीक्षैवास्य सा ।
अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा इत्यष्टाक्षरेण जुहोति ।
अष्टाक्षरा गायत्री ।
तदेव प्रातःसवनम् ।
मनसा निष्केवल्येनोत्तरामाहुतिं जुहोति ।
तदेव माध्यन्दिनं सवनम् ।
उपमृष्टे प्राश्नाति ।
तदेव तृतीयसवनम् ।
लेलिहितमिव हि तत्तृतीयसवनम् ।
उपरिष्टादप उपस्पृशति ।
अवभृथ एवास्य सः ।
स यदेते सायमाहुती जुहोत्येताभ्यामेवास्याहुतिभ्यां सर्वैरेतैर्यज्ञक्रतुभिरिष्टं भवति ।
अथ यदेते प्रातराहुती जुहोत्येताभ्यामेवास्याहुतिभ्यां सर्वैरेतैर्यज्ञक्रतुभिरिष्टं भवति ।
तदेतदपर्यन्तं यदग्निहोत्रम् ४

अथ पशुकामस्सायं पशुषु समेतेष्वग्निहोत्रं जुहुयात् ।

ब्रह्म वा अग्निहोत्रम् ।
ब्रह्मणैवैतत्पशून्परिगृह्णाति ।
अविसृष्टेषु प्रातः ।
ब्रह्म वा अग्निहोत्रम् ।
ब्रह्मणैवैतत्पशून्परिगृह्णाति ।
स एतान्ब्रह्मणोभयतः पशून्परिगृह्णीते ।
अव पशून्रुन्द्धे ।
बहुपशुर्भवति ।
अथ स्वर्गकामः द्वौ समुद्रावचर्यौ विततौ महान्तावावरीवर्तेते पथेव पदौ इति ।
द्वौ हैव समुद्रावचर्यावहश्चैव रात्रिश्च ।
ते ये नक्तं जुह्वति रात्रिमेव ते समुद्रं प्रविशन्ति ।
अथ य उदिते जुह्वत्यहरेव ते समुद्रं प्रविशन्ति ।
तयोर्वा एतयोरत्ययनमस्ति यथा वै षवं षचं वा स्यात्सेतोर्वा संक्रमणम् ।
अस्तमिते पुरा तमिस्रायै सुव्युष्टायां पुरोदयात् ५

अथो हैतौ श्यामशबलावेव यदहोरात्रे ।
अहर्वै शबलो रात्रिश्श्यामः ।
ते ये नक्तं जुह्वति रात्रिमेव ते श्यामं प्रविशन्ति ।
अथ य उदिते जुह्वत्यहरेव ते शबलं प्रविशन्ति ।
तयोरेतदेवात्ययनमस्तमिते पुरा तमिस्रायै सुव्युष्टायां पुरोदयात् ।
अथो हैषु सवितैव द्युम्नः ।
सविता वै प्रजापतिः प्रजापतिर्विश्वे देवाः ।
प्रजापतावेवास्य तद्विश्वेषु देवेषु हुतं भवति ।
तदेतत्प्राजापत्यं यदग्निहोत्रम् ।
अथ यदेतत्प्रातः प्रभात्येतस्मिन्वै द्युम्ने प्रजापतिः प्रजाः प्रजनयां चकार ।
सविता वै प्रजापतिः प्रजापतिर्विश्वे देवाः प्रजापतावेवास्य तद्विश्वेषु देवेषु हुतं भवति ।
तदेतद्वैश्वदेवं यदग्निहोत्रम् ।
अथो हैतदहोरात्रे एवंमुखं संधत्तः ।

अन्नं वा अग्निहोत्रम् ।
अन्नाद्यमेवैतदहोरात्रयोर्मुखतोऽपिदधाति ।
एवमेव पुनः प्रातस्संधत्तः ।
अन्नं वा अग्निहोत्रम् ।
अन्नाद्यमेवैतदहोरात्रयोर्मुखतोऽपिधायैतौ पुनर्मृत्यू अतिमुच्यते यदहोरात्रे ६

असौ वा आदित्योऽस्तं यन्षोढा विम्रोचति ।
व्यम्रुचदिति ह स्म वा एतं पूर्वं पुराणिन आचक्षते ।
अथैतर्हि न्यम्रुचदिति ।
स वा एषोऽस्तं यन्ब्राह्मणमेव श्रद्धया प्रविशति पयसा
पशूंस्तेजसाग्निमूर्जौषधी रसेनापस्स्वधया वनस्पतीन् ।
स यद्ब्राह्मणोऽग्निहोत्रपात्राणि निर्णेनेक्ति यत्परिचेष्टति ययैवैनं श्रद्धया
प्रविष्टो भवति तामेवास्मिंस्तत्संभरति ।
अथ यत्पयो दुहन्ति येन पयसा पशून्प्रविष्टो भवति तदेवास्मिंस्तत्संभरति ।
अथ यदङ्गारान्निरूहति येन तेजसाग्निं प्रविष्टो भवति तदेवास्मिंस्तत्संभरति
।
अथ यत्तृणेनावद्योतयति ययोर्जौषधीः प्रविष्टो भवति तामेवास्मिंस्तत्संभरति
।
अथ यदपः प्रत्यानयति येन रसेनापः प्रविष्टो भवति तमेवास्मिंस्तत्संभरति
।
अथ यत्समिधमभ्यादधाति यया स्वधया वनस्पतीन्प्रविष्टो भवति
तामेवास्मिंस्तत्संभरति ७

तमेवं संभृत्य सायं जुहोति ।
स तां गर्भकृतो रात्रिं वसति ।
एवमेव पुनस्संभृत्य प्रातर्जुहोति ।
तं जनयति ।
सोऽस्य जायमान एव सर्वं पाप्मानमपहन्ति ।
देवा वै प्रजापतेरजायन्त ।
एष उ एवंविदो जायते ।

स यावन्तं प्रजापतिर्लोकमजयत्तावन्तं जयति ।
अथो हेन्नतेऽयं वाव माम अनुष्ठ्या संभरति हन्तायं साङ्गस्सतनुरविह्रुतो जरसं गच्छत्विति ।
स ह साङ्ग एव सतनुरविह्रुतो जरसं गच्छति ।
अथो हेन्नतेऽयं वाव मामनुष्ठ्या वेद हन्तेममेवाविशानीति ।
स हैवंविदमेवाविशति ।
स एष वा एको वीरो य एष तपत्येष इन्द्र एष प्रजापतिः ।
एतस्मिन्हास्य तद्धुतं भवति य एवं विद्वानग्निहोत्रं जुहोति ८

यद्ध वा अह्ना पापं क्रियत आदित्यस्तत्कारयति ।
यद्रात्र्याग्निस्तत् ।
तावब्रूतामित्थं चेद्वै भविष्यावो न वै तर्हि शक्ष्यावः प्रजा भर्तुम् ।
हन्तान्नमेवासावान्योन्यस्मिन्नेवात्मानं जुहवावेति ।
स यदादित्योऽस्तमेत्यग्नावेव तदात्मानं जुहोति ।
स यत्किं चादित्योऽह्ना पापं करोति तदस्याग्नी रात्र्यापहन्ति ।
आदित्यमुद्यन्तमग्निरनूदेति ।
आदित्य एव तदात्मानं जुहोति ।
स यत्किं चाग्नी रात्र्या पापं करोति तदस्यादित्योऽह्नापहन्ति ।
स यथाहिरहिच्छव्यै निर्मुच्येत यथा मुञ्जादिषीकां विवृहेदेवमेव सर्वस्मात्पाप्मनो निर्मुच्यते स य एवं विद्वानग्निहोत्रं जुहोति ९

सायमाहुत्यैव यत्किं चाह्ना पापं करोति तदस्याग्नी रात्र्यापहन्ति ।
प्रातराहुत्यैव यत्किं च रात्र्या पापं करोति तदस्यादित्योऽह्नापहन्ति ।
स
यथाहिरहिच्छव्यै निर्मुच्येत यथा मुञ्जादिषीकां विवृहेदेवमेव सर्वस्मात्पाप्मनो निर्मुच्यते ।
तद्यथा हिरण्ये ध्माते न कश्चन न्यङ्गः पाप्मा परिशिष्यत एवं हैवास्मिन्न कश्चन न्यङ्गः पाप्मा परिशिष्यते य एवं विद्वानग्निहोत्रं जुहोति १०

अथ ह स्माह नगरी जानश्रुतेयोऽसौ वा आदित्योऽस्तं यन्नग्निमेव योनिं

प्रविशतीति ।
स यदेते सायमाहुती जुहोत्येतस्यैव तदादित्यस्य पृष्ठे प्रतितिष्ठति ।
यथोभयापदी प्रतितिष्ठेत्तादृक्तत् ।
अथ यदेते प्रातराहुती जुहोत्युत्थापयत्येवैनं ताभ्याम् ।
स यथा हस्ती हस्त्यासनमुपर्यासीनमादायोत्तिष्ठेदेवमेवैषा देवताइतद्विद्वांसं जुह्वतमादायोदेति ।
सैनं तं लोकं गमयति य एतस्यै यतः परं नास्ति ।
स यत्किं च पराचीनमादित्यात्तदमृतं तदभिजयति ।
अथ यदर्वाचीनमादित्यादहोरात्रे तदुपमथ्नीतामितो यथा रेष्मणोपमथ्न्यादेवम् ।
बहवो ह वा आदित्यात्पराञ्चो लोकाः ।
तेऽस्य सर्व आप्ता भवन्ति ते जिताः ।
तेष्वस्य सर्वेषु कामचारो भवति य एवं विद्वानग्निहोत्रं जुहोति ११

देवा वै मृत्युना समयतन्त ।
स यो ह स मृत्युरग्निरेव सः ।
तेऽब्रुवन्नेतेमं जिगीषामेति ।
तेऽब्रुवन्नाज्याहुतिं जुहवाम तयैनं जिगीषामेति ।
तथेति ।
त आज्याहुतिमजुहवुः ।
तामन्नमकुरुत तां प्रत्युददीप्यत
तस्माद्यत्राज्याहुतिं जुह्वति प्रत्युद्दीप्यत एव ।
तेऽब्रुवन्पश्वाहुतिं जुहवाम तयैनं जिगीषामेति ।
तहृतेति ।
ते पशुमालभ्य मेदस्समवदाय पश्वाहुतिमजुहवुः ।
तामन्नमकुरुत तां प्रत्युददीप्यत ।
तस्माद्यत्र पश्वाहुतिं जुह्वति प्रत्युद्दीप्यत एव ।
तेऽब्रुवन्क्षीराहुतिं जुहवाम तयैनं जिगीषामेति ।
तथेति ।
ते क्षीराहुतिमजुहवुः ।

तयैनमजयन् ।
तस्माद्यत्र क्षीराहुतिं जुह्वत्यङ्गारा एव भवन्ति ।
तेऽब्रुवन्नजेष्म वा एनमन्नेन हन्तानपजय्यं जिगीषामेति १२

तेऽब्रुवन्सोमाहुतिं जुहवाम तयैनं जिगीषामेति ।
तथेति ।
ते सोमेनायजन्त ।
ते सोमाहुतिमजुहवुः ।
तयैनं प्राजयन् ।
तस्माद्यत्र सोमाहुतिं जुह्वत्यङ्गारा एव भवन्ति ।
स य एवं विद्वानाज्याहुतिं च पश्वाहुतिं जुहोति प्रियमेवास्य तेन धामोपगच्छति ।
अथ यत्क्षीराहुतिं जुहोति जयत्येवैनं तेन ।
अथ यत्सोमाहुतिं जुहोति यथा जित्वा प्रजयेत्तादृक्तत् ।
स एतौ पुनर्मृत्यू अतिमुच्यते यदहोरात्रे १३

सोमाहुतिघट्टः ।
प्राणाय त्वा इति समिधमभ्यादधाति ।
अपानेऽमृतमधां स्वाहा इति जुहोति ।
अथ स्रुचमभिमृशति हृदयं प्रेतिर्संततिश्चक्षुरानतिश्श्रोत्रमुपनतिर्वागागतिः ।
प्रतीतं देवेभ्यो जुष्टं हव्यमस्थात् ।
अमृते मामधात् ।
आ मां प्राणा विशन्तु भूयसे सुकृताय इति ।
स ह भूय एव सुकृतं करोति ।
अथो हैनममुष्मिँल्लोके न पापिवागागच्छति य एवं विद्वानग्निहोत्रं जुहोति १४

तदाहुर्यज्जीवन्पुरुषः करोत्येव साधु करोति पापं का तयोर्दुष्कृतसुकृतयोर्व्यावृत्तिरिति ।
यद्ध वै जीवन्पुरुषस्साधु करोति प्राणांस्तदभिसंपद्यते ।

अथ यद्दुष्कृतं शरीरं तत् ।
स यदस्माल्लोकादेवंवित्प्रैति तस्य प्राणेन सह सुकृतमुत्क्रामति शरीरेण सह दुष्कृतं हीयते ।
तदाहुर्दुर्विदितं वैतद्यदा मर्त्यवान्दुष्कृतेन सह वसात् ।
यो वा एतेन जीवन्नेव व्यावर्तते तत्सुविदितमिति ।
तद्वा एतदग्निहोत्रमेवाभिसंपद्यते १५

मनो वा अनु प्राणा वाचमन्वात्मा ।
स यद्वाचा पूर्वमाहुतिं जुहोति मनसोत्तरां तद्दुष्कृतसुकृते व्यावर्तयति ।
तस्मादाहुर्नैते आहुती संसृज्ये ।
दुष्कृतसुकृते ह्येताभ्यां व्यावर्तयतीति ।
स यत्सायमाहुत्योर्वाचा पूर्वामाहुतिं जुहोति यदेवाह्ना पापं करोति तस्मादेव तया व्यावर्तते ।
अथ यन्मनसोत्तरां यदेव रात्र्या पापं करोति तस्मादेव तया व्यावर्तते ।
अथ यत्प्रातराहुत्योर्वाचा पूर्वामाहुतिं जुहोति यदेव रात्र्या पापं करोति तस्मादेव तया व्यावर्तते ।
अथ यन्मनसोत्तरां यदेवाह्ना पापं करोति तस्मादेव तया व्यावर्तते ।
स एषोऽहरहर्दुष्कृतेन व्यावर्तमान एति य एवं विद्वानग्निहोत्रं जुहोति १६

द्वे ह वाव योनी ।
देवयोनिर्हैवान्या मनुष्ययोनिरन्या ।
द्वा उ हैव लोकौ ।
देवलोको हैवान्यो मनुष्यलोकोऽन्यः ।
सा या मनुष्ययोनिर्मनुष्यलोक एव सः ।
तत्स्त्रियै प्रजननम् ।
अतोऽधि प्रजाः प्रजायन्ते ।
तस्मादु कल्याणीं जायामिच्छेत कल्याणे म आत्मा संभवादिति ।
तस्मादु जायां जुगुप्सेन्नेन्मम योनौ मम लोकेऽन्यस्संभवादिति ।
तस्य वै संभविष्यतः प्राणा अग्रे प्रविशन्त्यथ रेतस्सिच्यते ।
स इमान्प्राणानाकाशानभिनिर्वर्तते ।

तस्मादु समानस्यैव रेतसस्सतो यादृश एव भवति तादृशो जायते ।
अथैषा देवयोनिर्देवलोको यदाहवनीयः ।
एषा ह वै देवयोनिर्देवलोकः ।
तस्माद्यो गार्हपत्ये जुहुयादकृतं करोतीत्येवैनं मन्येरन् ।
स यज्जुहोति यस्साधु करोत्येतस्यामेवैनद्देवयोनावात्मानं सिञ्चति ।
सोऽस्यात्मामुष्मिन्नादित्ये संभवति ।
स हैवं विद्वान्द्व्यात्मा द्वियोनिः ।
एकात्मा हैवैकयोनिरेतदविद्वान्स यदस्माल्लोकादेवंवित्प्रति - १७

तस्य प्राणः प्रथम उत्क्रामति ।
स हेयत्तां देवेभ्य आचष्ट इयदस्य साधु कृतमियत्पापमिति ।
अथ हायं धूमेन सहोर्ध्व उत्क्रामति ।
तस्य हैतस्यर्तवो द्वारपाः ।
तेभ्यो हैतेन प्रब्रुवीत
विचक्षणादृतवो रेत आभृतमर्धमास्यं प्रसुतात्पित्र्यावतः
तं मा पुंसि कर्तर्येरयध्वं पुंसः कर्तुर्मातर्यासिषिक्त
स उपजायोपजायमानो द्वादशेन त्रयोदशोपमासः
सं तद्विदे प्रति तद्विदेऽहं तं मा ऋतवोऽमृत आनयध्वम्
इति ।
तं हर्तव आनयन्ते ।
यथा विद्वान्विद्वांसं यथा जानञ्जानन्तमेवं हैनमृतव आनयन्ते ।
तं हात्यर्जयन्ते ।
स हैतमागच्छति तपन्तम् ।
तं हागतं पृच्छति कस्त्वमसि इति ।
स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाह यस्तेऽयं मय्यात्माभूदेष ते सः
इति ।
तस्मिन्हात्मन्प्रतिपन्न ऋतवस्संपलाय्य पद्गृहीतमपकर्षन्ति ।
तस्य हाहोरात्रे लोकमाप्नुतः ।
तस्मादु हैतेन प्रब्रुवीत कोऽहमस्मि सुवस्त्वम् ।
स त्वां स्वर्ग्यं स्वरगामिति ।

को ह वै प्रजापतिः ।
अथ हैवंविदेव सुवर्गः ।
स हि सुवर्गच्छति ।
तं हाह यस्त्वमसि सोऽहमस्मि ।
योऽहमस्मि स त्वमस्येहि इति ।
स एतमेव सुकृतरसमप्येति ।
तस्य पुत्रा दायमुपयन्ति पितरस्साधुकृत्याम् ।
स हैवं विद्वान्द्वयात्मा द्विदायः ।
एकात्मा हैवैकदाय एतदविद्वानग्निहोत्रं जुहोति १८

वाग्वा अग्निहोत्री ।
तस्यै मन एव वत्सः ।
मनसा वै वाचं प्रत्तां दुह्रे ।
वत्सेन वै मातरं प्रत्तां दुह्रे ।
तद्वा इदं मनः पूर्वं यत्पश्चा वागन्वेति तस्माद्वत्सं पूर्वं यन्तं पश्चा मातान्वेति
।
हृदयमेव मेथ्युपदोहनी प्राणो रज्जुः ।
प्राणेनैव वाक्च मनश्चाभिहिते ।
रज्ज्वा वै वत्सं च मातरं चाभिदधाति ।
तद्ध जनको वैदेहो याज्ञवल्क्यं पप्रच्छ वेत्थाग्निहोत्रं याज्ञवल्क्या३ इति ।
वेदेति होवाच ।
किमिति ।
पय इति ।
यत्पयो न स्यात्केन जुहुया इति ।
व्रीहियवाभ्यामिति ।
यद्व्रीहियवौ न स्यातां केन जुहुया इति ।
यदन्यद्धान्यं तेनेति ।
यदन्यद्धान्यं न स्यात्केन जुहुया इति ।
आरण्याभिरोषधीभिरिति ।
यदारण्या ओषधयो न स्युः केन जुहुया इति ।

अद्भिरिति ।
यदापो न स्युः केन जुहुया इति ।
स होवाच न वा इह तर्हि किं चनासीदथैतदु हूयत इव सत्यं श्रद्धायामिति ।
तं होवाच वेत्थाग्निहोत्रं याज्ञवल्क्य नमस्तेऽस्तु सहस्रं भगवो दद्म इति ।
अथ हैनमुपजगौ किं स्विद्विद्वान्प्रवसति - । १९

- अग्निहोत्री गृहेभ्यः
कथा तदस्य काव्यं कथा संततोऽग्निभिः
इति ।
यदग्नीनाधायाथापप्रवसति कथमस्यानपप्रोषितं भवतीति ।
स होवाच वाजसनेयः
यो जविष्ठो भुवनेषु स विद्वान्प्रवसन्विदे
तथा तदस्य काव्यं तथा संततोऽग्निभिः
इति ।
मन इति होवाच ।
मनो वाव भुवनेषु जविष्ठम् ।
मनसैवास्यानपप्रोषितं भवतीति ह तदुवाच ।
अथ हैनमुपजगौ
यत्स दूरं परेत्याथ तत्र प्रमाद्यत्
कस्मिन्सास्य हुताहुतिर्गृहे यामस्य जुह्वति
इति ।
स होवाच वाजसनेयः
यो जागार भुवनेषु स विद्वान्प्रवसन्विदे
तस्मिन्सास्य हुताहुतिर्गृहे यामस्य जुह्वति
इति ।
प्राण इति होवाच ।
प्राणो वाव भुवनेषु जागरः ।
प्राण एवास्य सा हुताहुतिर्भवति ।
तस्मादाहुः प्राणोऽग्निहोत्रमिति ।

यावद्ध्येव प्राणेन प्राणिति तावदग्निहोत्रं जुहोति २०

रौद्रं गवि वायव्यमुपसृष्टमाश्विनं दुह्यमानमग्नीषोमीयं दुग्धं पौष्णः प्रेन्दवो मैत्रश्शरो वारुणमधिश्रितं वैष्णवं प्रतिष्ठाप्यमानं वैश्वदेवमुन्नीतं सवितुः प्रक्रान्तं द्यावापृथिव्योरुपसन्नमिन्द्राग्न्योः पूर्वाहुतिः प्रजापतेरुत्तरा ।
तदेतत्सप्तदशमग्निहोत्रम् ।
सप्तदश उ एवा वाजपेयः ।
स य एवं विद्वानग्निहोत्रं जुहोत्युभावेव लोकावभिजयति यश्चाग्निहोत्रहुतो यश्च वाजपेययाजिनः ।
त्रयोऽग्निहोत्रे स्थाणव इति ह स्माह शाण्डिल्यः ।
यदप्रदीप्तायां समिधि जुहोति स स्थाणुः ।
यदेनामपराध्नोति स स्थाणुः ।
यदेने संसृजत्स स्थाणुः ।
आदीप्तायै समिधस्समुन्मुखे जुहोति ।
अतिहायोत्तरामाहुतिं जुहोति ।
प्र ह सप्तदशसप्तदश सहस्रपोषान्पुष्यति य एवं विद्वानग्निहोत्रं जुहोति २१

आरुणिर्वाजसनेयो बर्कुर्वार्ष्णः प्रियो जानश्रुतेयो बुडिल आश्वतराश्विर्वैयाघ्रपद्य इत्येते ह पञ्च महाब्रह्मा आसुः । अथैतेषां महतां ब्राह्मणानां समुदितमारुणेर्जीवलस्य कारीरादेरषाढस्य सावयस्येन्द्रद्युम्नस्य भाल्लवेयस्येति ।
ते होचुर्जनको वा अयं वैदेहोऽग्निहोत्रेऽनुशिष्टः स नोऽतिवदन्निव मन्यत ।
एत ।
तमग्निहोत्रे कथां वादयिष्याम इति ।

ते हाजग्मुः ।
ते ह ब्रह्मचारिणमूचुः प्र णो ब्रूहीति ।
तान्ह प्रोवाच ।

तेभ्यो ह प्रोक्तेभ्यः पृथगासनानि पृथगुदकानि

पृथङ्मधुपर्कान्पृथगावसथान्पृथक्पञ्चभ्यः पञ्चापचितीश्चकार ।
अथ हैषां सभाग आवव्राजोप्त्वा केशश्मश्रूणि नखान्निकृत्याज्याभ्यज्य दण्डोपानहं बिभ्रत् ।
तान्होवाच ब्राह्मणाः कथा भगवन्तो नोऽनुसंवादयथेति ।
अति नोऽवादीरिति होचुः ।
अथ हैनाण्पूर्वाः पप्रच्छ ब्राह्मणाः कथा भगवन्तो यूयमग्निहोत्रं जुहुथेति ।
अति वै नोऽवादीरिति होचुर्यो नो भूयसः सतः पूर्वोऽप्राक्षीः ।
गौतम प्रतिब्रूहीति २२

स होवाच यश इत्येव सम्राडहमग्निहोत्रं जुहोमि ।
तस्मादहं यशोऽस्मि ।
यशो वाव मे प्रजायामन्ततो भवितेति ।
तं होवाच गौतम किं यश इति ।
अग्निमुपदिशन्नुवाचेदं यश इत्यदो यश इत्यादित्यम् ।
सोऽहमदो यशोऽस्मिन्यशसि सायं जुहोमीदं यशोऽमुष्मिन्यशसि प्रातर्जुहोमि ।
एतावेव मा तद्गमयिष्यतो यत्र सर्वे कामाः ।
एतौ मे पुनर्मृत्युमपजेष्यत इति ।
सुहुतं देवान्राधयानि इति ह प्रशशंस ।
अथ हापरं पप्रच्छ कथा भगवस्त्वमग्निहोत्रं जुहोषीति ।
स होवाच वाजसनेयः सत्यमित्येव सम्राडहमग्निहोत्रं जुहोमि ।
तस्मादहं सत्यमस्मि ।
तस्मान्मम सत्यमिव वदतः प्रकाश इति ।
तं होवाच याज्ञवल्क्य किं सत्यमिति ।
अग्निमुपदिशन्नुवाचेदं सत्यमित्यदः सत्यमित्यादित्यम् ।
सोऽहमदः सत्यमस्मिन्न्सत्ये सायं जुहोमीदं सत्यममुष्मिन्सत्ये प्रातर्जुहोमि ।
एतावेव मा तद्गमयिष्यतो यत्र सर्वे कामाः ।
एतौ मे पुनर्मृत्युमपजेष्यत इति ।
सुहुतं देवान्राधयानि इति हैव प्रशशंस ।

अथ हापरं पप्रच्छ कथा भगवस्त्वमग्निहोत्रं जुहोषीति २३

स होवाच बर्कुर्वार्ष्णो भूयिष्ठं श्रेष्ठं वित्तानामित्येव सम्राडहमग्निहोत्रं जुहोमि
।
तस्मादहं भूयिष्ठं श्रेष्ठं वित्तानामस्मि ।
भूयिष्ठं वाव मे श्रेष्ठं वित्तानां प्रजायामन्ततो भवितेति ।
तं होवाचाग्निवेश्य किं भूयिष्ठं श्रेष्ठं वित्तानामिति ।
अग्निमुपदिषन्नुवाचेदं भूयिष्ठं श्रेष्ठं वित्तानामित्यदो भूयिष्ठं श्रेष्ठं
वित्तानामित्यादित्यम् ।
सोऽहमदो भूयिष्ठं श्रेष्ठं वित्तानामस्मिन्भूयिष्ठे श्रेष्ठे वित्तानां सायं जुहोमीदं
भूयिष्ठं श्रेष्ठं वित्तानाममुष्मिन्भूयिष्ठे श्रेष्ठे वित्तानाम्प्रातर्जुहोमि ।
एतावेव मा तद्गमयिष्यतो यत्र सर्वे कामाः ।
एतौ मे पुनर्मृत्युमपजेष्यत इति ।
सुहुतं देवान्राधयानि इति हैव प्रशशंस ।
अथ हापरं पप्रच्छ कथा भगवस्त्वमग्निहोत्रं जुहोषीति ।
स होवाच प्रियो जानश्रुतेयस्तेज इत्येव सम्राडहमग्निहोत्रं जुहोमि तस्मादहं
तेजोऽस्मि ।
तेजो वाव मे प्रजायामन्ततो भवितेति ।
तं होवाच काण्ड्वीय किं तेज इति ।
अग्निमुपदिशन्नुवाचेदं तेज इत्यदस्तेज इत्यादित्यम् ।
सोऽहमदस्तेजोऽस्मिंस्तेजसि सायं जुहोमीदं तेजोऽमुष्मिंस्तेजसि प्रातर्जुहोमि
।
एतावेव मा तद्गमयिष्यतो यत्र सर्वे कामाः ।
एतौ मे पुनर्मृत्युमपजेष्यत इति ।
सुहुतं देवान्राधयानि इति हैव प्रशशंस ।
अथ हापरं पप्रच्छ कथा भगवस्त्वमग्निहोत्रं जुहोषीति ।
२
स होवाच बुडिल आश्वतराश्विर्वैयाघ्रपद्योऽर्काश्वमेधावित्येव
सम्राडहमग्निहोत्रं जुहोमि ।
अन्नं ह्येतद्देवानां यदर्कोऽश्वो मेधो मेध्य इति ।

तं होवाच वैयाघ्रपद्य कोऽर्कः कोऽश्वो मेधो मेध्य इति ।
अग्निमुपदिशन्नुवाचायमर्क इत्यसावश्वो मेधो मेध्य इत्यादित्यम् ।
सोऽहममुमश्वं मेधं मेध्यमस्मिन्नर्के सायं जुहोमीममर्कममुष्मिन्नश्वे मेधे मेध्ये प्रातर्जुहोमि ।
एतावेव मा तद्गमयिष्यतो यत्र सर्वे कामाः ।
एतौ मे पुनर्मृत्युमपजेष्यत इति ।
सुहुतमिति ह प्रशस्योवाच यो ह किल मह्यमग्निहोत्र इतिं च गतिं ब्रूयात्तस्मा अहं वरं दद्यामिति ।
ते होचुर्न न्वै वयमग्निहोत्र इतिं च गतिं चानूचिमहे त्वमस्मभ्यमग्निहोत्र इतिं च गतिं च ब्रूहि वयं तुभ्यं पृथक्पञ्च वरान्दद्म इति ।
अग्निमुपदिषन्नुवाचेयमितिरित्यसौ गतिरित्यादित्यम् ।
सोऽहममूं गतिमस्यामितौ सायं जुहोमीमामितिममुष्यां गतौ प्रातर्जुहोमि ।
एतावेव मा तद्गमयिष्यतो यत्र सर्वे कामाः ।
एतौ मे पुनर्मृतुमपजेष्यत इति ।
सुहुतमिति ह प्रशस्योचुर्वरान्वृणीष्व यानदामेति ।
स होवाचैष एव मे वरोऽहमेव युष्मभ्यं पृथक्पञ्च सहस्राणि शताश्वानि ददानीति ।
एतानि वा अग्निहोत्र उपासनान्येते कामाः ।
एतानेव कामानवरुन्द्धे य एवं वेदाथो यस्यैवं विद्वानग्निहोत्रं जुहोति २५

अग्नीनादधानः प्रातरेवोद्धरेत ।
द्विस्सायं द्विः प्रातर्जुहोति ।
चतस्र आहुतयस्संपद्यन्ते ।
चतुष्पदा वै पशवो ये च ग्राम्या ये चारण्याः ।
तेषामेवैतत्प्रत्याशं प्रत्यपचयति ।
एष वै मृत्युर्यदग्नी रिहन्नेव नाम ।
तमेव ताभिराहुतिभिश्शमयित्वा पृथिवीं लोकानां जयत्यग्निं देवं देवानाम् ।
अग्नेर्देवस्य सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति ।

स ततो धूममेव रथं समास्थाय वायोस्सलोकतामभिप्रयाति ।
द्व्यहं जुहोति ।
अष्टावाहुतयस्संपद्यन्ते ।
अष्टाशफा ह वै पशवो ये च ग्राम्या ये चारण्याः ।
तेषामेवैतत्प्रत्याशं प्रत्यपचयति ।
एष वै मृत्युर्यद्वायुरजिर एव नाम ।
तमेव ताभिराहुतिभिश्शमयित्वान्तरिक्षं लोकानां जयति वायुं देवं देवानाम्
।
वायोर्देवस्य सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति
२६

स ततो रेष्माणमेव रथं समास्थायादित्यस्य सलोकतामभिप्रयाति ।
त्र्यहं जुहोति ।
द्वादशाहुतयस्संपद्यन्ते ।
द्वादश मासास्संवत्सरः ।
संवत्सरो वा इदं सर्वम् ।
यदिहाश्नाति यत्पिबति यस्मै कस्मै चन प्रतिव्याददाति सर्वं तदस्यानशितं
भवति यावज्जीवानाशकव्रती भवति ।
एष वै मृत्युर्यदादित्यो म्रोचन्नेव नाम ।
तमेव ताभिराहुतिभिश्शमयित्वा दिवं लोकानां जयत्यादित्यं देवं देवानाम्
।
आदित्यस्य देवस्य सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं
जुहोति २७

स ततो रश्मीनेव रथं समास्थाय चन्द्रमसस्सलोकतामभिप्रयाति ।
चतुरहं जुहोति ।
षोडशाहुतयस्संपद्यन्ते ।
षोडशकलं वै ब्रह्म ।
षोडशकला देवाः ।
षोडशकलमिदं सकृत्सर्वम् ।

स यदिह रिप्रं पापं कर्म करोत्येकयैव ततः कलया ।
यथा सुवर्णः प्रवृत्तस्तप्यमानस्सुवर्णतामभिनिष्पद्यत एवमेव द्विषत्सु भ्रातृव्येषु मलं पाप्मानं प्रत्यूह्य स्वर्गं लोकमभिप्रैति ।
एष वै शशो य एषोऽन्तश्चन्द्रमसि ।
एष हीदं सर्वं शास्ति ।
एष वै यमो य एषोऽन्तश्चन्द्रमसि ।
एष हीदं सर्वं यमयति ।
एष मृत्युर्यद्यमोऽत्स्यन्नेव नाम ।
तमेव ताभिराहुतिभिश्शमयित्वोर्जं लोकानां जयति यमं देवं देवानाम् ।
यमस्य देवस्य सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति २८

स ततस्स्वधामेव हिरण्मयीं नावं समारुह्य प्रजापतेस्सलोकतामभिप्रयाति ।
पञ्चाहं जुहोति ।
विंशतिराहुतयस्संपद्यन्ते ।
सविंशो वै प्रजापतिः ।
एष वै मृत्युर्यत्प्रजापतिः प्रभूमानेव नाम ।
तमेव ताभिराहुतिभिश्शमयित्वा नभो लोकानां जयति प्रजापतिं देवं देवानाम् ।
प्रजापतेर्देवस्य सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति २९

तद्यद्वै तन्नभो नामाभीर्वै सा ।
न हि तत्प्राप्य कस्माच्चन बिभेति ।
तस्मात्तन्नभः ।
षडहं जुहोति ।
चतुर्विंशतिराहुतयः संपद्यन्ते ।
चतुर्विंशत्यक्षरा वै गायत्री ।
चतुर्विंशतिर्वसवो देवाः ।

ते गायत्रीमन्वायत्ताः ।
तेभ्यो गायत्रीव वसुभ्यो देवेभ्य एकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
गायत्रीं स छन्दसां जयति वसून्देवान्देवानाम् ।
वसूनां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं
जुहोति ३०

सप्ताहं जुहोति ।
अष्टाविंशतिराहुतयस्संपद्यन्ते ।
अष्टाविंशत्यक्षरा वा उष्णिक् ।
अष्टाविंशतिर्भृग्वङ्गिरसो देवाः ।
त उष्णिहमन्वायत्ताः ।
तेभ्य उष्णिग्भृग्वङ्गिरोभ्यो देवेभ्य एकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
उष्णिहं वै स छन्दसां जयति भृग्वङ्गिरसो देवान्देवानाम् ।
भृग्वङ्गिरसां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं
जुहोति ३१

अष्टाहं जुहोति ।
द्वात्रिंशदाहुतयस्संपद्यन्ते ।
द्वात्रिंशदक्षरा वा अनुष्टुप् ।
द्वात्रिंशद्विश्वे देवाः ।
तेऽनुष्टुभमन्वायत्ताः ।
तेभ्योऽनुष्टुब्विश्वेभ्यो देवेभ्य एकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
अनुष्टुभं वै स छन्दसां जयति विश्वान्देवान्देवानाम् ।
विश्वेषां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं
जुहोति ३२

नवाहं जुहोति ।

षट्त्रिंशदाहुतयस्संपद्यन्ते ।
षत्रृत्रिंशदक्षरा वै बृहती ।
षट्त्रिंशत्साध्या देवाः ।
ते बृहतीमन्वायत्ताः ।
तेभ्यो बृहती साध्येभ्यो देवेभ्य ग्रकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
बृहतीं वै स छन्दसां जयति साध्यान्देवान्देवानाम् ।
साध्यानां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति ३३

दशाहं जुहोति ।
चत्वारिंशदाहुतयस्संपद्यन्ते ।
चत्वारिंशदक्षरा वै पङ्क्तिः ।
चत्वारिंशन्मरुतो देवाः ।
ते पङ्क्तिमन्वायत्ताः ।
तेभ्यः पङ्क्तिर्मरुद्भ्यो देवेभ्य एकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
पाङ्क्तिं वै स छन्दसां जयति मरुतो देवान्देवानाम् ।
मरुतां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति ३४

एकादशाहं जुहोति ।
चतुश्चत्वारिंशदाहुतयस्संपद्यन्ते ।
चतुश्चत्वारिंशदक्षरा वै त्रिष्टुप् ।
चतुश्चत्वारिंशद्रुद्रा देवाः ।
ते त्रिष्टुभमन्वायत्ताः ।
तेभ्यस्त्रिष्टुब्रुद्रेभ्यो देवेभ्य एकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
त्रिष्टुभं वै छन्दसां जयति रुद्रान्देवान्देवानाम् ।
रुद्राणां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं

जुहोति ३५

द्वादशाहं जुहोति ।
अष्टाचत्वारिंशदाहुतयस्संपद्यन्ते ।
अष्टाचत्वारिंशदक्षरा वै जगती ।
अष्टाचत्वारिंशदादित्या देवाः ।
ते जगतीमन्वायत्ताः ।
तेभ्यो जगत्यादित्येभ्यो देवेभ्य एकैकेनाक्षरेण कामान्निकामान्दुहे ।
एवमस्मै जुह्वते दुहे ।
जगतीं वै स छन्दसां जयत्यादित्यान्देवान्देवानाम् ।
आदित्यानां देवानां सायुज्यं सलोकतां समभ्यारोहति य एवं विद्वानग्निहोत्रं जुहोति ३६

अत्र वै ब्रह्म न विराजत्यनाथमपरायणमनुत्तरम् ।
तद्वै तदग्निहोत्रं द्वादशाहं ब्रह्म जुहवां चकार ।
तद्द्वादशाहं हुत्वा कीर्तिं यशः प्रजातिममृतं तदुदाजहार ।
तद्वै तदग्निहोत्रं द्वादशाहं ब्रह्म हुत्वा प्रजापतये प्रत्यूह्य स्वर्गं लोकमभ्युच्चक्राम ।
तद्वै तदग्निहोत्रं द्वादशाहं प्रजापतिर्जुहवां चकार ।
तद्द्वादशाहं हुत्वा प्रज्ञां मेधां मीमांसां तपस्तदुदाजहार ।
तद्वै तदग्निहोत्रं द्वादशाहं प्रजापतिर्हुत्वा देवेभ्यश्चर्षिभ्यश्च प्रत्यूह्य स्वर्गमेव लोकमभ्युच्चक्राम ।
तद्वै तदग्निहोत्रं द्वादशाहं देवाश्चर्षयश्च जुहवां चक्रुः ।
तद्द्वादशाहं हुत्वा पूर्वेभ्यो मनुष्येभ्यः प्रत्यूह्य स्वर्गमु एव लोकमभ्युच्चक्रामुः ।
तद्वै तदग्निहोत्रं द्वादशाहं ब्रह्म जुहवां चकार ।
द्वादशाहं प्रजापतिर्द्वादशाहं देवाश्चर्षयश्च ।
तद्द्वादशाहं-द्वादशाहं हुत्वा कामान्निकामानापुः ।
किमु य एनदेवं यावज्जीवं जुहुयात् ३७

तद्वै तदग्निहोत्रं त्र्यहमेव पयसा जुहुयात् ।
तद्वा अग्निष्टोमस्य रूपम् ।
अग्निष्टोमेनैवास्येष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ।
तद्वै तदग्निहोत्रं त्र्यहमेव दध्ना जुहुयात् ।
तद्वै वाजपेयस्य रूपम् ।
वाजपेयेनैवास्येष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ।
तद्वै तदग्निहोत्रं त्र्यहमेवाज्येन जुहुयात् ।
तद्वा अश्वमेधस्य रूपम् ।
अश्वमेधेनैवास्येष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ।
तद्वै तदग्निहोत्रं त्र्यहमेवाद्भिर्जुहुयात् ।
तद्वै पुरुषमेधस्य रूपम् ।
पुरुषमेधेनैवास्येष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ।
स्वयमहतवासा यजमानोऽग्निहोत्रं जुहुयादजस्त्रेष्वग्निष्वप्रवसन् ।
त्रयोदशीं रात्रिं सोमेन वा पशुना वेष्ट्वोत्सृजेत ।
यथा सावसान्कृत्वा प्रार्जयेत्तादृक्तत् ।
तद्वै तदग्निहोत्रं द्वादशाहमेव पूर्वे मनुष्या जुहवां चक्रुः ।
तस्मात्तेषां दुहे धेनुर्वहत्यनड्वानाधानप्रहितोऽश्वोऽश्वतर उपतिष्ठत्यधिकक्ष्यो हस्ती वहति ३८

उपसृज्याग्निहोत्रीमित्याह उपसृष्टे द्यावापृथिवी ।
रुद्रा उपगृह्णन्ति वसूनां दुग्धम् ।
भूतकृत स्थ निरूढ जन्यं भयमित्यङ्गारान्निरूहति ।
अथाधिश्रयति वैश्वानरस्याधिश्रेतमसि ।
अग्निस्ते तेजो मा प्रतिधाक्षीत् ।
सत्याय त्वा इति ।
अथावद्योतयति सं ज्योतिषा ज्योतिः इति ।
अथापः प्रत्यानयति यस्ते अप्सु रसः प्रविष्टस्तेन संपृच्यस्व इति ।
स यदेवास्य तत्र दिशो ग्रसन्ते तदेवास्य तत्समन्वानयति अन्तरितं रक्षोऽन्तरिता अरातयः इति ।
त्रिः पर्यग्नि करोति ।

अथोद्वासयति दिवं दृंहान्तरिक्षं दृंह पृथिवीं दृंहप्रजां पशूञ्जुह्वतो मे दृह इति
।
भूतकृत स्थ प्रत्यूढं जन्यं भयमित्यङ्गारान्प्रत्यूहति ।
अथ स्रवं च स्रुचं चादाय निष्टपति प्रत्युष्टं रक्षः प्रतुष्टा अरातयः इति ।
अथ स्रुचं संमार्ष्टि सजूर्देवेभ्यस्सायंयावभ्यः इति सायम् ।
सजूर्देवेभ्यः प्रातर्यावभ्यः इति प्रातः ।
सुवर्णा त्वां सुवर्णमयीम् ।
हिरण्ययष्टिरस्यमृतपलाशा स्रोतो यज्ञानामिति ।
स्रोतो हैव स यज्ञानां भवति ।
अथाह उन्नेष्यामि इति ।
ओं मामहं स्वर्गं लोकमभि इति ब्रूयात् ३९

स यं प्रथमं स्रुवमुन्नयति तद्वै दर्शपूर्णमासयो रूपम् ।
दर्शपूर्णमासाभ्यामेवास्येष्टं भवति य एवं विद्वान्प्रथमं स्रुवमुन्नयति ।
अथ यं द्वितीयं स्रुवं तद्वै चातुर्मास्यानां रूपम् ।
चातुर्मास्यैरेवास्येष्टं भवति य एवं विद्वान्द्वितीयं स्रुवमुन्नयति ।
अथ यं तृतीयं स्रुवमुन्नयति तद्वा इष्टिपशुबन्धानां रूपम् ।
इष्टिपशुबन्धैरेवास्येष्टं भवति य एवं विद्वांस्तृतीयं स्रुवमुन्नयति ।
अथ यं चतुर्थं स्रुवमुन्नयति तद्वै त्र्यम्बकवाजपेयाश्वमेधानां रूपम् ।
त्र्यम्बकवाजपेयाश्वमेधैरेवास्येष्टं भवति य एवं विद्वांश्चतुर्थं स्रुवमुन्नयति ।
अथ समिधमादाय प्राङ्प्रति ।
पुरुष इत्समित् ।
तमन्नमिन्द्धे अन्नस्य मा तेजसा स्वर्गं लोकं गमय ।
यत्र देवानामृषीणां प्रियं धाम तत्र म इदमग्निहोत्रं गमय इति
तूष्णीमुपसादयति ।
अथ समिधमभ्यादधाति स्वर्गस्य त्वा लोकस्य संक्रमणं हिरण्मयं वंशं
दधामि स्वाहा इति ।
अथ जुहोति ।
स यां प्रथमां जुहोति देवांस्तयाप्नोति ।
अथ यां द्वितीयां जुहोत्यृषींस्तयाप्नोति ४०

अथोपमार्ष्टि ।
स यत्प्रथममुपमार्ष्टि तेन गन्धर्वाप्सरसः प्रीणाति ।
तं गन्धर्वाप्सरस आहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यद्द्वितीयमुपमार्ष्टि तेन ग्रहांश्च पितृंश्च प्रीणाति ।
तं ग्रहाश्च पितरश्चाहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यद्द्वरङ्गुल्या प्राश्नाति स यत्प्रथमं प्राश्नाति तेन प्राणापानौ तृप्यतः ।
तं प्राणापानावाहतुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यद्द्वितीयं प्राश्नाति तेनोदानापानौ तृप्यतः ।
तमुदानापानावाहतुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यत्स्रुचा प्राश्नाति तेन समानव्यानौ च गर्भांश्च प्रीणाति ।
तं समानव्यानौ गर्भाश्चाहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यत्स्रुचं निरश्नाति तेन देवजनान्प्रीणाति ।
तं देवजना आहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यत्स्रुचस्संक्षालनं निनयति तेन वयांसि प्रीणाति ।
तं वयांस्याहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ या एतास्स्रुचो निर्णिज्योदीचीरप उत्सिञ्चति तेन ऋषीन्प्रीणाति ।
तमृषय आहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यत्स्थालीसंक्षालनं निनयति तेन सर्पजनान्प्रीणाति ।
तं सर्पजना आहुश्श्रद्धा ते मा विगात्सर्वैः कामैस्तृप्य स्वर्गं लोकमाप्नुहीति ।
अथ यत्पश्चाद्वा पुरस्ताद्वा परिक्रम्य दक्षिणतोऽग्नीनामास्ते प्रजापतिरेव तद्भूत्वास्ते कं अहमस्मि कं मम इति ४१

भृगुर्ह वारुणिरनूचान आस ।
स हात्येव पितरं मेनेऽति देवानत्यन्यान्ब्राह्मणाननूचानान् ।
स ह वरुण ईक्षां चक्रे न वै मे पुत्रः किं चन प्रजानाति ।
हन्तैनं प्रज्ञापयानीति ।
तस्य ह प्राणानभिजग्राह ।
स ह तताम ।
स ह तान्तः परं लोकं जगाम ।
स हामुष्मिँल्लोके आजगाम ।
पुरुष एव पुरुषं संवृश्च्याथैनं जघास ।
स होवाचाभूद्वतेदं किं स्विदिदमिति ।
तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति ।
द्वितीयं हाजगाम ।
पुरुष एव पुरुषमाक्रन्दयन्तं जघास ।
स होवाचाभूद्वतेदं किं स्विदिदमिति ।
तं होचुः पितरं वरुणं पृच्छासि स ते इदं प्रवक्तेति ।
तृतीयं हाजगाम ।
पुरुष एव पुरुषं तूष्णीं व्याहरन्तं जघास ।
स होवाचाभूद्वतेदं किं स्विदिदमिति ।
तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति ।
चतुर्थं हाजगाम ।
द्वे स्त्रियौ महद्वित्तं जुगुपतुः ।
स होवाचाभूद्वतेदं किं स्विदिदमिति ।
तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति ।
पञ्चमं हाजगाम ।
लोहितकुल्यां च घृतकुल्यां च प्रबाहुक्स्यन्दमाने ।
सा या लोहितकुल्यास तां कृष्णो नग्नः पुरुषो मुसली जुगोप ।
अथ या घृतकुल्या तस्यै हिरण्मयाः पुरुषा
हिरण्मयैश्चमसैस्सर्वान्कामानुदाचिरे ।
स होवाचाभूद्वतेदं किं स्विदिदमिति ।
तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति ।

षष्ठं हाजगाम ।
पञ्च नदीः पुष्करिणीः पुण्डरीकिणीर्मधूदकास्स्यन्दमानाः ।
तासु नृत्तगीतं वीणाघोषोऽप्सरसां गणास्सुरभिर्गन्धो महान्घोषो बभूव ।
स होवाचाभूद्वतेदं किं स्विदिदमिति ।
तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति ४२

स ह तत एवाववृते ।
स ह वरुणमेवाजगाम ।
तं होवाचागास्ताता३ इति ।
आगां ततेति ।
अदर्शस्ताता३ इति ।
अदर्शं ततेति ।
किं ताता३ इति ।
पुरुष एव पुरुषं संवृश्च्याथैनमघदिति ।
ओमिति होवाच ।
ये वा अस्मिँल्लोकेऽग्निहोत्रं जुह्वतो नैवंविदो वनस्पतीन्संवृश्च्याभ्यादधति तान्वा अमुष्मिँल्लोके वनस्पतयः पुरुषरूपं कृत्वा प्रत्यदन्ति ।
तस्य का निष्कृतिरिति ।
यदेवैतत्समिधमभ्यादधाति सा तस्य निष्कृतिस्तया तदतिमुच्यत इति ।
किं द्वितीयमिति ।
पुरुष एव पुरुषमाक्रन्दयन्तमघदिति ।
ओमिति होवाच ।
ये वा अस्मिँल्लोकेऽग्निहोत्रं जुह्वतो नैवंविदः पशूनाक्रन्दयतः पचन्ते तान्वा अमुष्मिँल्लोके पशवः पुरुषरूपं कृत्वा प्रत्यदन्ति ।
तस्य का निष्कृतिरिति ।
यदेवैतद्वाचा पूर्वामाहुतिं जुहोति सा तस्य निष्कृतिस्तया तदतिमुच्यत इति ।
किं तृतीयमिति ।
पुरुष एव पुरुषं तूष्णीं व्याहरन्तमघदिति ।
ओमिति होवाच ।

य वा अस्मिँल्लोकेऽग्निहोत्रं जुह्वतो नैवंविदो व्रीहियवांस्तूष्णीं व्याहरतः पचन्ते तान्वा अमुष्मिँल्लोके व्रीहियवाः पुरुषरूपं कृत्वा प्रत्यदन्ति ।
तस्य का निष्कृतिरिति ।
यदेवैतन्मनसोत्तरामाहुतिं जुहोति सा तस्य निष्कृतिस्तया तदतिमुच्यत इति ।
किं चतुर्थमिति ।
द्वे स्त्रियौ महद्वित्तमजूगुपतामिति ।
ओमिति होवाच ।
श्रद्धा च वै ते अश्रद्धा चाभूताम् ।
ये वा अस्मिँल्लोकेऽग्निहोत्रं जुह्वतो नैवंविदोऽश्रद्दधाना यजन्ते तदश्रद्धां गच्छति यच्छ्रद्दधानास्तच्छ्रद्धाम् ।
तस्य का निष्कृतिरिति ।
यदेवैतद्द्विरङ्गुल्या प्राश्नाति सा तस्य निष्कृतिस्तया तदतिमुच्यत इति ४३

किं पञ्चममिति ।
लोहितकुल्यां च घृतकुल्यां च प्रबाहुक्स्यन्दमाने ।
सा या लोहितकुल्याभूत्तां कृष्णो नग्नः पुरुषो मुसली जुगोप ।
अथ या घृतकुल्या तस्यै हिरणमयाः पुरुषा हिरणमयैश्चमसैस्सर्वान्कामानुदचन्त इति ।
ओमिति होवाच ।
ये वा अस्मिँल्लोकेऽग्निहोत्रं जुह्वतो नैवंविदो ब्राह्मणस्य लोहितमुत्पीडयन्ति सा सा लोहितकुल्या ।
अथ य एनां कृष्णो नग्नः पुरुषो मुसल्यजूगुपत्क्रोधस्स तस्यो तदेवान्नमिति ।
तस्य का निष्कृतिरिति ।
यदेवैतत्स्रुचा प्राश्नाति सा तस्य निष्कृतिस्तया तदतिमुच्यत इति ।
अथ या एतां स्रुचं निर्णिज्योदीचीरप उत्सिञ्चति सा सा घृतकुल्या ।
तस्यै हिरणमयाः पुरुषा हिरणमयैश्चमसैस्सर्वान्कामानुदचन्त इति ।

किं षष्ठमिति ।
पञ्च नदीः पुष्करिणीः पुणडरीकिणीर्मधूदकास्स्यन्दमानाः ।

तासु नृत्तगीतं वीणाघोषोऽप्सरसां गणास्सुरभिर्गन्धो महान्घोषोऽभूदिति ।
ओमिति होवाच ।
ममैवैते लोका अभूवन्निति ।
ते केनाभिजय्या इति ।
एतेनैव पञ्चगृहीतेन पञ्चोन्नीतेनेति ।
स होवाच न वै किलान्यत्राग्निहोत्राल्लोकजित्या अवकाशोऽस्ति ।
अद्यैव मे अग्न्याधेयस्योपवसथ इति ।
तस्य ह तथा चक्रुः ।
स य एवं विद्वानग्निहोत्रं जुहोति नैनममुष्मिँल्लोके वनस्पतयः पुरुषरूपं कृत्वा प्रत्यदन्ति न पशवो न व्रीहियवा नास्येष्टापूर्ते श्रद्धां चाश्रद्धां च गच्छतोऽपहते लोहितकुल्यामवरुन्द्धे घृतकुल्याम् ४४

एष वा अग्निर्वैश्वानरो य एष तपति ।
तस्य रात्रिस्समिदहर्ज्योती रश्मयो धूमो नक्षत्राणि विष्फुलिङ्गाश्चन्द्रमा अङ्गाराः ।
तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा अमृतमपो जुह्वति ।
तस्या आहुतेर्हुतायै सोमो राजा संभवति ।
स्तनयित्नुरेवाग्निर्वैश्वानरः ।
तस्य द्यौस्समिद्विद्युज्ज्योतिरभ्राणि धूमो मरीचयो विष्फुलिङ्गा अशनिरङ्गाराः ।
तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवास्सोमं राजानं जुह्वति ।
तस्या आहुतेर्हुतायै वृष्टिस्संभवति ।
पृथिव्येवाग्निर्वैश्वानरः ।
तस्यान्तरिक्षं समिदग्निर्ज्योतिर्वायुर्धूमो मरीचयो विष्फुलिङ्गा दिशोऽङ्गाराः ।
तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा वृष्टिं जुह्वति ।
तस्या आहुतेर्हुताया अन्नं संभवति ।
पुरुष एवाग्निर्वैश्वानरः ।
तस्य वाक्समिच्चक्षुर्ज्योतिः प्राणो धूमो मनोऽभिनन्दो विष्फुलिङ्गाश्श्रोत्रमङ्गाराः ।

तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा अन्नं जुह्वति ।
तस्या आहुतेर्हुतायै रेतस्संभवति ।
स्त्र्येवाग्निर्वैश्वानरः ।
तस्योपस्थं समिद्योनिर्ज्योतिरिष्या धूमोऽभिनन्दो
विष्फुलिङ्गास्संस्पर्शोऽङ्गाराः ।
तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा रेतो जुह्वति ।
तस्या आहुतेर्हुतायै पुरुषस्संभवति ।
सोऽत्र पञ्चम्यां विसृष्ट्यां पुरुषो देवेभ्यो जायते ।
पञ्चम्यां दिव्या आपः पुरुषवाचो वदन्ति अथ यदामुं लोकमप्येति - ४५

- तस्याग्निर्वैश्वानरः ।
तस्यौषधयश्च वनस्पतयश्च समित् ।
ज्योतिरेव ज्योतिः ।
धूम एव धूमः ।
विष्फुलिङ्गा एव विष्फुलुङ्गाः ।
अङ्गारा एवाङ्गाराः ।
तस्मिन्नेतस्मिन्नग्नौ वैश्वानरेऽहरहर्देवा पुरुषं जुह्वति ।
तस्या आहुतेर्हुतायै पुरुषोऽमुं लोकं संभवति ।
सोऽस्य लोकः पुनरुत्थायै भवति ।
तस्य हैतस्य देवस्याहोरात्रे अर्धमासा मासा ऋतवस्संवत्सरो गोप्ता य एष तपति ।
अहोरात्रे प्रचरे ।
तं हर्तूनामेको यः कूटहस्तो रश्मिना प्रत्यवेत्य पृच्छति कोऽसि पुरुषेति ।
स किं विद्वान्प्रवृञ्जयात् ।
तस्य ह प्रहरति ।
तस्य ह प्रतिराद्धस्य त्रेधा साधुकृत्या विनश्यति ।
स तृतीयमादत्ते ।
दिशोऽनु तृतीय व्येति ।
तृतीयेन सहेमं लोकमभ्यवैति ।
स यो हास्य दानजितो लोको भवति तस्मिन्निरमते ।

तमु ह वै ततो मृत्युरेवान्तत आप्नोति ।
अनवजितो हास्य पुनर्मृत्युर्भवति स य एवंवित्स्यात् ।
स यदोपतापी स्याद्यत्रास्य समं सुभूमि स्पष्टं स्यात्तद्ब्रूयादिह मेऽग्निं मन्थतेति ।
ईश्वरो हागदो भवितोः ।
यद्यु तन्न यदस्माल्लोकात्प्रेयादथैनमाददीरन् ।
नानास्थाल्योरग्नी ओप्य हरेयुरन्वाहार्यपचनादुल्मुकम् ।
आददीरन्यज्ञपात्राणि सर्पिरपो दारूण्यनुस्तरणीं क्षुरं नखनिकृन्तनम् ।
ते यन्ति यत्रास्य समं सुभूमि स्पष्टं भवति ।
तदस्याग्नीन्विहरन्ति ४६

अथास्यां दिशि कूपं खात्वा वपन्ति केशश्मश्रूणि ।
उप्त्वा केशश्मश्रूणि नखान्निकृन्तन्ति ।
नखान्निकृत्य निरान्त्रं कुर्वन्ति ।
निरान्त्रं कृत्वा निष्पुरीषं कुर्वन्ति ।
निष्पुरीषं कृत्वा पांसुभिः कूपे पुरीषमभिसंवपन्ति ।
पाप्मानमेवास्य तत्प्रच्छादयन्ति ।
प्रक्षाल्यात्राणि प्रत्यवधायैनमाहरन्ति ।
तमन्तरेणाग्नी निधाय गार्हपत्य आज्यं विलाप्योत्पूय चतुर्गृहीतं गृहीत्वा गत्वाहवनीये समिद्वत्यन्वारब्धे जुहोति अयं वै त्वदस्मादसि त्वमेतद् ।
अयं ते योनिरस्य योनिस्त्वम् ।
पिता पुत्राय लोककृज्जातवेदः ।
नयास्येनं सुकृतां यत्र लोकः ।
अस्माद्वै त्वमजायथा एष त्वज्जायतां स्वाहा इति ।
सोऽत आहुतिमयो मनोमयः प्राणमयश्चक्शुर्मयश्श्रोत्रमयो वाङ्मय ऋङ्मयो यजुर्मयस्साममयो ब्रह्ममयो हिरण्मयोऽमृतस्संभवति ४७

अथैतां चितां चिन्वन्ति ।
तस्यामेनमादधति ।
तस्य नासिकयोस्स्रुवौ निदध्याद्दक्षिणहस्ते जुहूं सव्य उपभृतमुरसि ध्रुवं

मुखेऽग्निहोत्रहवणीं शीर्षतश्चमसमिळोपहवनं कर्णयोः प्राशित्रहरणे उदरे पात्रीं समवत्तधानीमाण्डयोर्दृषदुपले शिश्ने शम्यामुपस्थे कृष्णाजिनमनुपृष्ठं स्फ्यं पार्श्वयोर्मुसले च शूर्पे च पत्त उलू-खलम् ।
परिशिष्टानि यज्ञपात्राण्युपरि निदधति ।
अपो मृण्मयान्यभ्यवहरन्ति ददत्येवायस्मयानि ।
अथैनं सर्पिषाभ्युत्पूरयन्ति ।
यज्ञपात्रेषु सर्पिरासिञ्चन्ति ४८

अथैतामनुस्तरणीमानयन्ति ।
तांप्रोक्ष्य त्रिरपसली पर्याणाय्य कूटेन हन्यात् ।
प्रदक्षिणं हैके पर्याणयन्ति ।
तदु तथा न कुर्यात् ।
तस्यै वस्पामुत्खिद्य शीर्ष्णि परिव्ययन्ति ।
हस्तयोर्मतस्नी हृदये हृदयं बाह्वोर्बाहू ।
यथाङ्गमेवेतराण्यङ्गानि विचिन्वन्ति ।
अथैनं चर्मणा प्रोर्णुवन्ति स्वया तन्वा समृध्यस्व इति ।
संस्तीर्योपादीपयन्ति ।
स तथैव चिकीर्षेद्यथैनमाहवनीयः प्रथमो गच्छेत् ।
तदेनं देवलोकः प्रत्यागच्छति ।
अथ यथान्वाहार्यपचनस्तदेनं पितृलोकः प्रत्यागच्छति ।
अथ यथा गार्हपत्यस्तथास्मिँल्लोके प्रजया च पशुभिश्च प्रतितिष्ठति ।
तस्योपादीप्तस्य धूम एव शरीरं धुनोति ।
स यद्धुनोति तस्माद्धुनः ।
धुनो ह वै नामैशः ।
तं धूम इति परोक्षमाचक्षते परोक्षेणैव ।
परोक्षप्रिया इव हि देवाः ।
धूमाद्वै रात्रिमप्येति रात्रिया
अहरह्नोऽपोच्छन्तीपक्षमपोच्छन्तीपक्षादापूर्यमाणपक्षमापूर्यमाणपक्षान्मासम् ।
ते अत्र मासे शरीरं चासुश्च संगच्छाते ।
तं हर्तूनामेको यः कूटहस्तो रश्मिना प्रत्यवेत्य पृच्छति कोऽसि पुरुषेति ४९

तं प्रतिब्रूयात्
विचक्षणादृतवो रेत आभृतम्
अर्धमास्यं प्रसुतात्पित्र्यावतः
इति ।
यददो विचक्षणं सोमं राजानं जुह्वति तत्तत् ।
तं मा पुंसि कर्तर्येरयध्वम्
इति ।
पुंसि ह्येनमेतत्कर्तर्येरयन्ते ।
पुंसः कर्तुर्मातर्यासिषिक्त
इति ।
मातरि ह्येनमासिञ्चति ।
स उपजायोपजायमानस्त्रयोदशेन द्वादशोपमासः
इति ।
एष त्रयोदशो य एष तपति ।
सं तद्विदे प्रति तद्विदेऽहम्
तं मर्तवोऽमृत आनयध्वं द्वादशत्रयोदशेन पित्रा
तया मात्रा तया श्रद्धया तेनान्नाद्येन तेन सत्येन
अहर्मे पिता रात्रिर्माता सत्यमस्मि
तं मर्तवोऽमृत आनयध्वम्
इति ।
तं हर्तव आनयन्ते ।
यथा विद्वान्विद्वांसं यथा जानञ्जानन्तमेवं हैनमृतव आनयन्ते ।
तं हात्यर्जयन्ते ।
स हैष न मनुष्यो य एवं वेद ।
देवानां ह वै स एको य एवंवित् ।
तं ह वै मनोजवसः पितरश्च पितामहाश्च प्रत्यागच्छन्ति ततः किं न आहार्षीरिति ।
तान्प्रतिब्रूयाद्यत्किं च पुण्यमकरं तद्युष्माकमिति ।
तस्य पुत्रा दायमुपयन्ति पितरस्साधुकृत्यां द्विषन्तः पापकृत्याम् ।

स एवमेतत्त्रेधा विभज्यैतस्य सलोकतामप्येति य एष तपति ५०

दीर्घसत्त्रं ह वा एत उपयन्ति येऽग्निहोत्रं जुह्वति ।
एतद्ध वै सत्त्रं जरामूरीयम् ।
जरया वा ह्येवास्मान्मुच्यते मृत्युना वा ।
तदाहुर्यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽग्नीनन्तरेण युक्तं वा वियायात्सं वा चरेयुः किं तत्र कर्म का प्रायश्चित्तिरिति ।
वज्रो वै चक्रः ।
वज्रो वा एतस्याग्नीनन्वेति यस्यान्तरेण युक्तं वा वियाति सं वा चरन्ति ।
कुर्वीत हैव निष्कृतिमपि हेष्ट्या यजेत ।
तदु तथा न विद्यात् ।
इमान्वा एष लोकाननुवितनुते योऽग्नीनाधत्ते ।

तस्यायमेव लोको गार्हपत्यो भवत्यन्तरिक्षलोकोऽन्वाहार्यपचनोऽसावेव लोक आहवनीयः ।
कामं वा एषु लोकेषु युक्तं चायुक्तं च वयांसि संचरन्ति ।
स विद्याद्यदि मेऽपि ग्राम एवाग्नीनन्तरेणायासीन्नैव म आर्तिरस्ति न रिष्टिः काचनेति ।
त्रयो ह त्वै ग्राम्याः पशवोऽजुष्टा दुर्वराह एडकश्श्वा ।
तेषां यदि कश्चिदन्तरेण समेजयेत किं तत्र कर्म का प्रायश्चित्तिरिति ५१

तदु हैके छादिमुष्टिमेव निवपन्तो यन्ति गार्हपत्यादाहवनीयादिदं विष्णुर्विचक्रमे इत्येतयर्चा ।
तदु तथा न कुर्यात् ।
यो ह तत्र ब्रूयादासान्वा अयं यजमानस्यावाप्सीत्क्षिप्रे परमासानावप्स्यते ज्येष्ठ्यगृह्यं रोत्स्यतीति तथा हैव स्यात् ।
इत्थमेव कुर्यात् ।
उदपात्रं वैवोदकमण्डलुं वादाय गार्हपत्यादाहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रमे इत्येतयैवर्चा ।
देवपवित्रं वा एतद्यदृग्देवपवित्रमेतद्यदापः ।

तद्यदेवात्र यज्ञस्याशान्तं भवति यदमेध्यमापो वै तस्य सर्वस्य शान्तिः ।
अद्भिरेवैनं तच्छमयन्ति ५२

तदाहुर्यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽग्निहोत्रं दुह्यमानं स्कन्देत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
यदेव तत्र स्थाल्यां परिशिष्टं स्यात्तेन जुहुयात् ।
यद्यु नीची स्थाली स्यादपि वा भिद्येत किं तत्र कर्म का प्रायश्चित्तिरिति ।
स्कन्नप्रायश्चित्त्यै वाभिमृश्य अस्कन्नधित इति ।
अथ यदन्यद्विन्देत्तेन जुहुयात् ।
यदा वै स्कन्दत्यथ धीयते ।
रेतो वै पयो योनिरियम् ।
योन्यामेवैतद्रेतः प्रतिष्ठापयति ।
अनुष्ठयास्य रेतस्सिक्तं प्रजायते य एवं वेद ।
अमुतो वै पर्जन्यस्स्कन्दतीहौषधयो वनस्पतयो जायन्ते ।
पुरुषाद्रेतस्स्कन्दति पशुभ्यः ।
तत इदं सर्वं प्रजातम् ।
स विद्यादुप मा देवाः प्राभूवन्प्रजातिर्मे भूयस्यभूच्छ्रेयान्भविष्यामीति ।
तथा हैव स्यात् ।
अथो यत्रैतद्विभिन्नं तदुदपात्रं वैवोदकमण्डलुं वोपनिनयेद्भूर्भुवस्स्वः इत्येताभिर्व्याहृतिभिः ।
एता वै व्याहृतयस्सर्वप्रायश्चित्तयः ।
तदनेन सर्वेण प्रायश्चित्तिं कुरुते ५३

अथैतानि कपालानि संचित्य यत्राहवनीयस्य भस्मोद्धृतं स्यात्तदुपनिकिरेत् ।
एतदेवात्र कर्म ।
अथो खल्वाहुर्यत्प्राच उद्द्रुतस्य स्कन्देत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
यदेव तत्र स्रुचि परिशिष्टं स्यात्तेन जुहुयात् ।
यद्यु नीची स्रुक्स्यादपि वा भिद्येत किं तत्र कर्म का प्रायश्चित्तिरिति ।
तस्योक्तः प्रत्यभिमर्शः ।

तदु हैके तत एव प्रत्येत्योन्नयन्ति ।
तदु तथा न कुर्यात् ।
यो ह तत्र ब्रूयाद्यदनेनाग्निहोत्रेणाचिकीर्षीन्नचवृतत्तस्मान्नास्येदं स्वर्ग्यमिव भविष्यतीति तथा हैव स्यात् ।
इत्थमेव कुर्यात् ।
यत्रैव स्कन्देत्तदुपविशेत् ।
अथास्मिन्स्थालीमाहरेयुस्स्रुवं च स्रुचं च निर्णिज्य ।
तदद एवास्योन्नेष्यामीत्युक्तं भवति ।
अथ यथोन्नीतमुन्नीय समिधमादाय प्राक्प्रेयात् ।
तद्यथा प्रत्युत्थायामित्रान्पचेदेवमेवैतदवृत्तिं पाप्मानमपहत्याहुतिं प्राप्नोति ।
तदु हैक उपेव लभन्ते ।
अहुतं तस्य यस्याग्निहोत्रोच्छिष्टेन जुह्वति यातयामं ह्येतदिति वदन्तः ।
तदु तथा न विद्यात् ।
यदा वा एतदयातयामं भवत्यथैतस्यापि हविरातञ्चनं कुर्वन्ति ५४

तदाहुर्यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽग्निहोत्रं दुह्यमानममेध्यमापद्येत किं तत्र कर्म का प्रायश्चित्तिरिति ।
तदु हैके होतव्यमेव मन्यन्ते न वै देवाः कस्माच्चन बीभत्सन्त इति वदन्तः ।
तदु तथा न विद्यात् ।
पुरुषो न्वेव बीभत्सेयाद्बीभत्सते बीभत्सान्ता३ इदु देवाः ।
इत्थमेव कुर्यात् ।
गार्हपत्यस्यैवोष्णं भस्म निरूह्य तस्मिन्नेनत्तूष्णीं निनयेत् ।
तन्न हुतं नाहुतम् ।
अद्भिरनुनिनयेत् ।
अद्भिरेवैनदाप्नोति ।
अथ यदन्यद्विन्देत्तेन जुहुयात् ।
अथो खल्वाहुर्यद्दुग्धममेध्यमापद्येत किं तत्र कर्म का प्रायश्चित्तिरिति ।
येष्वेवाङ्गारेष्वधिश्रयिष्यन्स्यात्तानेव प्रत्यूह्य तेष्वेवैनत्तूष्णीं निनयेत् ।
तन्न हुतं नाहुतम् ।

अद्भिरनुनिनयेत् ।
अद्भिरेवैनदाप्नोति ।
अथ यदन्यद्विन्देत्तेन जुहुयात् ।
अथो खल्वाहुर्यदधिश्रितममेध्यमापद्येत किं तत्र कर्म का प्रायश्चित्तिरिति ।
येष्वेवाङ्गारेष्वधिश्रितं स्यात्तानेव प्रत्यूह्य तेष्वेवैनत्तूष्णीं निनयेत् ।
तन्न हुतं नाहुतम् ।
यदहैनत्तेषु निनयति तेन हुतं यद्वेनांस्तेनो एवानुगमयति तेनो अहुतम् ।
अद्भिरनुनिनयेत् ।
अद्भिरेवैनदाप्नोति ।
अथ यदन्यद्विन्देत्तेन जुहुयादथो खल्वाहुः - ५५

- यत्प्रागुद्द्रुतममेध्यमापद्येत किं तत्र कर्म का प्रायश्चित्तिरिति ।
तदु हैके होतव्यमेव मन्यन्ते प्रेतमेतन्नैतस्याहोमः कल्पत इति वदन्तः ।
अथ हैकेऽद्भिरभ्यासिच्य परासिञ्चन्ति ।
तदु तथा न कुर्यात् ।
यो ह तत्र ब्रूयात्पराङ्वा अयमिदमग्निहोत्रमसिञ्चत्परासेत्स्यतेऽयं यजमान इति तथा हैव स्यात् ।
इत्थमेव कुर्यात् ।
आहवनीय एव समिधमभ्याधायाहवनीयस्यैवोष्णं भस्म निरूह्य तस्मिन्नेनत्तूष्णीं निनयेत् ।
तन्न हुतं नाहुतम् ।
अद्भिरनुनिनयेत् ।
अद्भिरेवैनदाप्नोति ।
अथ यदन्यद्विन्देत्तेन जुहुयात् ।
अथो खल्वाहुर्यदववर्षेत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
स विद्यादुपरिष्टान्मा शुक्रमागात्प्रजातिर्मे भूयस्यभूच्छ्रेयान्भविष्यामीति ।
तथा हैव स्यात् ।
अथो खल्वाहुर्यत्पूर्वस्यामाहुतौ हुतायामङ्गारा अनुगच्छेयुः क्वोत्तरां जुहुयादिति ।
य एव तत्र शकलोऽन्तिकस्स्यात्तमध्यस्य जुहुयात् ।

दारौदारौ ह्यग्निः ।
स यदि तस्यां न तिष्ठेद्धिरण्यमभिजुहुयात् ।
अग्नेर्वा एतद्रेतो यद्धिरण्यम् ।
य उ वै पिता स पुत्रः ।
तस्माद्धिरण्यमभिजुहुयादथो खल्वाहुः - ५६

- यदधिश्रिते यजमानो म्रियेत किं तत्र कर्म का प्रायश्चित्तिरिति ।
पर्याधायैवैनद्विष्यन्दयेत् ।
एतदेवात्र कर्म ।
अथो खल्वेषैव सर्वेषां हविर्यज्ञानां प्रायश्चित्तिः ।
अथो खल्वाहुर्यत्प्राच्युद्द्रुते यजमानो म्रियेत किं तत्र कर्म का
प्रायश्चित्तिरिति ।
यदेवादश्चतुर्गृहीतमादिष्टं स्यात्तत्रैवैनदभ्युन्नयेत् ।
एतदेवात्र कर्म ।
अथो खल्वाहुर्यत्पूर्वस्यामाहुतौ हुतायां यजमानो म्रियेत किं तत्र कर्म का
प्रायश्चित्तिरिति ।
तदु हैके होतव्यमेव मन्यन्ते कृत्स्नं वा एतस्याग्निहोत्रं हुतं भवति यस्य पूर्वा
हुताहुतिर्भवतीति वदन्तः ।
तदु तथा न विद्यात् ।
न वै प्रेतस्याग्निहोत्रं जुहोति ।
यदेवादयश्चतुर्गृहीतमादिष्टं स्यात्तत्रैवैनदभ्युन्नयेत् ।
एतदेवात्र कर्म ५७

तदाहुर्यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽग्निहोत्री दुह्यमानोपविशेत्किं तत्र
कर्म का प्रायश्चित्तिरिति ।
तामु हैके यजुषोत्थापयन्ति ।
अवृत्तिं वा एषा यजमानस्य पाप्मानं प्रतिदृश्योपविशति यस्याग्निहोत्री
दुह्यमानोपविसति ।
तामुत्थापयन्ति उदस्थाद्देव्यदितिः इति ।
इयं वै देव्यदितिः ।

इमामेवास्मै तदुत्थापयन्ति ।
आयुर्यज्ञपतावधादित्यायुरेवास्मिंस्तद्दधाति ।
मित्राय वरुणाय च इति प्राणापानौ न्वै मित्रावरुणौ
प्राणापानावेवास्मिंस्तद्दधाति ।
तां तस्यामेवाहुतौ हुतायां ब्राह्मणाय ददति ।
यं संवत्सरमनभ्यागमिष्यन्तो भवन्त्यवृत्तिमस्मिन्पाप्मानं निवेशयाम इति वदन्तः ५८

तदु होवाच वाजसनेयोऽश्रद्दधानेभ्यो हैभ्यो गौरपक्रामति ।
आर्त्याहुतिं विध्यन्ति ।
इत्थमेव कुर्यात् ।
दण्डमेव लब्ध्वा तेनैनां विपिष्योत्थापयेत् ।
तद्यथा वा अदो धावयतोऽश्वतरो गदायते युक्तो वा बलीवर्द उपविशति तेन दण्डप्रजितेन तोत्त्रप्रजितेन यमध्वानं कामयते तं समश्नुते ।
एवमेवैतया दण्डप्रजितया तोत्त्रप्रजितया यं स्वर्गं लोकं कामयते तं समश्नुते ।
तामात्मन्नेव कुर्वीत ।
आत्मन्नेव तच्छ्रियं धत्त इति ५९

तदाहुर्यदेतस्य दीर्घसत्त्रिणोऽग्निहोत्रं जुह्वतोऽग्निहोत्रीवत्सो नश्येत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
तदु होवाचारुणिर्द्यौर्वा अग्निहोत्री तस्या आदित्य एव वत्स इयमेवाग्निहोत्रस्थाली ।
न ह वा एवंविदोऽग्निहोत्रीवत्सो नश्यति ।
क्व ह्येष नश्येत् ।
नो वा एवंविदोऽग्निहोत्रं दुह्यमानं स्कन्दति ।
अस्यां ह्येवं प्रतितिष्ठति ।
नो वा एवंविदोऽग्निहोत्री दुह्यमानोपविशति ।
यदा वा एषा सुवृष्टं वर्षत्यभिनिषद्येव बतावर्षीदित्येनामाहुः ।
अथो खल्वाहुर्यदेषा लोहितं दुहीत किं तत्र कर्म का प्रायश्चित्तिरिति ।

अवृत्तिं वा एषा यजमानस्य पाप्मानं प्रतिदृश्य दुहे या लोहितं दुहे ।
स व्युत्क्रामतेऽत्युक्त्वान्वाहार्यपचनं परिच्छादयितवै ब्रूयात् ।
तदधिश्रित्य मेक्षणं कृत्वा श्रपयेत् ।
तत्तदेव तूष्णीं निनयेत् ।
अनिरुक्तो वै प्रजापतिः ।
प्राजापत्यमग्निहोत्रम् ।
अथो भूर्भुवं स्वरित्येताभिर्व्याहृतिभिः ।
एता वै व्याहृतयस्सर्वप्रायश्चित्तयः ।
तदनेन सर्वेण प्रायश्चित्तिं कुरुते अथो खल्वाहुः - ६०

यदग्नयोऽनुगच्छेयुः किं तत्र कर्म का प्रायश्चित्तिरिति ।
तमु हैक उल्मुकादेव निर्मन्थन्ति ।
यतो वै मनुष्यस्यान्ततो नश्यति ततो वाव स तस्य प्रायश्चित्तिमिच्छत इति वदन्तः ।
तदु तथा न विद्यात् ।
उल्मुकं ह्येव तत आदाय चरेदुल्मुकस्य वाववृश्चम् ।
इत्थमेव कुर्यात् ।
उल्मुकादेवापच्छिद्यारण्योरभिविमन्थत् ।
उपाह तं काममाप्नोति य उल्मुकमथ्य उपो तं योऽरण्योः ।
अथो खल्वाहुर्यदाहवनीय उद्धृतोऽनुगच्छेत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
अननुगतो वा एष तावद्भवति यावद्गार्हपत्यो नानुगच्छति ।
स यद्यपि बह्विव कृत्वोऽनुगच्छेत्पुनःपुनरेवैनमुद्धरेत् ।
एतदेवात्र कर्म ।
अथो खल्वाहुर्यदाहवनीय उद्धृते गार्हपत्योऽनुगच्छेत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
तमु हैके तत एव प्राञ्चमुद्धरन्ति ।
तदु तथा न कुर्यात् ।
यो ह तत्र ब्रूयात्प्राचो न्वा अयं यजमानस्य प्राणान्प्रावृक्षन्मरिष्यत्ययं यजमान इति तथा हैव स्यात् ।

तमु हैके तत एव प्रत्यञ्चमाहरन्ति ।
प्राणो वै गृहपत्योऽपान आहवनीयः ।
संविदानौ वा इमौ प्राणापानावन्नमत्त इति वदन्तः ।
अथो गृहो वै गृहपत्यः ।
प्रतिष्ठो वै गृहाः ।
स य एनं तत्र ब्रूयात्प्र न्वा अयमस्यै प्रतिष्ठाया अच्योष्ट मरिष्यत्ययं यजमान इति तथा हैव स्यात् ।

तमु हैके गार्हपत्य एव मथित्वोपसमादधति ।
तदु तथा न कुर्यात् ।
यो ह तत्र ब्रूयादग्नावध्यग्निमजीजनत्त्विप्रेऽस्य द्विषन्भ्रातृव्यो जनिष्यत इति तथा हैव स्यात् ।
तमु हैकेऽनुगमय्य मन्थन्ति ।
तदु तथा न कुर्यात् ।
यो ह तत्र ब्रूयादपि यत्परिशिष्टमभूत्तदजीजसन्नास्य दायादश्चन परिशेक्ष्यत इति तथा हैव स्यात् ।
इत्थमेव कुर्यात् ।
अरण्योरेव समारोहयेत
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः
तं जानन्नग्न आरोहाथा नो वर्धया रयिमथा वर्धया गिरः
इति वा ।
स उदवसाय जुह्वद्वसेत् ।
नवावसाने हास्योभयतोरात्रं हुतं भवति नो कां चन परिचक्षां कुरुते ।
स प्रातर्भस्मोद्धत्य शकृत्पिण्डेन परिलिप्य यथायथमग्नीनादधीत ।
एतदेवात्र कर्म अथो खल्वाहुर्यदाहवनीयमनुद्धृतम् ६१

अभ्यस्तमियात्किं तत्र कर्म का प्रायश्चित्तिरिति ।
एतस्माद्ध वै विश्वे देवा अपक्रामन्ति यस्याहवनीयमनुद्धृतमभ्यस्तमेति ।
स दर्भेण सुवर्णं हिरण्यं प्रबध्य पश्चाद्धरेत् ।
तदेतस्य रूपं क्रियते य एष तपति ।

अह्नो वा एतद्रूपम् ।
तदह्नो रूपं क्रियते ।
अथेध्ममादीप्य प्राञ्चं हरेयुः ।
तमुपसमाधाय चतुर्गृहीतमाज्यं गृहीत्वा विश्वेभ्यो देवेभ्यस्स्वाहा इति जुहुयात् ।
तद्यथा वा अद आवसथवासिनं क्रुद्धं यन्तमुत्तवेहता वानुमन्त्रयेतान्येन वा प्रियेण धाम्नैवमेव तद्विश्वान्देवाननुमन्त्रयते ।
ते हास्मै सर्व एवाक्रुद्धा भवन्ति ।
अथो खल्वाहुर्यदाहवनीयमनुद्धृतम् ६२

अभ्युदीयात्किं तत्र कर्म का प्रायश्चित्तिरिति ।
एतस्माद्ध वै विश्वे देवा अपक्रामन्ति यस्याहवनीयमनुद्धृतमभ्युदेति ।
स दर्भेण रजतं हिरण्यं प्रबध्य पुरस्ताद्धरेत् ।
तच्चन्द्रमसो रूपं क्रियते ।
रात्रेर्वा एतद्रूपम् ।
तद्रात्रे रूपं क्रियते ।
अथेध्ममादीप्यान्वञ्चं हरेयुः ।
तमुपसमाधाय चतुर्गृहीतमाज्यं गृहीत्वा विश्वेभ्यो देवेभ्यस्स्वाहा इति जुहुयात् ।
यत्र वै दीप्तं तत्रैतदिह गार्हपत्य इत्येव विद्वानुद्धरेत् ।
असावेव बन्धु ।
अथ हैक आहुरेते ह वै स्वर्गं लोकं पश्यन्तो जुह्वति य आदित्यमिति ।
स यो वा त्वै गतश्रीस्स्याद्यो वास्माल्लोकात्क्षिप्रे प्रजिगांसेत्स उदितहोमी स्यादथो खल्वाहुः - ६३

यदग्नयस्संसृज्येरन्किं तत्र कर्म का प्रायश्चित्तिरिति ।
स यदि परस्तादन्योऽभिदहन्नेयात्स विद्यात्परस्तान्मा शुक्रमागात्प्रजातिर्मे भूयस्यभूच्छ्रेयान्भविष्यामीति ।
तथा हैव स्यात् ।
यदि त्वस्य हृदयं विलिखेदग्नये विविचय इष्टिं निर्वपेत् ।

एता एव पञ्चदश सामिधेनीर्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ।
अथैते याज्यापुरोनुवाक्ये
वि ते विष्वग्वातजूतासो अग्ने भामासश्शुचे शुचयश्चरन्ति
तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः
इति ।
अथ याज्या
त्वामग्ने मानुषीरीळते विशो होत्राविदं विविचिं रत्नधातमम्
गुहा सन्तं सुभग विश्वदर्शतं तुविष्मणसं सुयजं
घृतश्रियम्
इति ।
अथो हैनया पाप्मना व्यावृत्स्यमानो यजेत ।
क्षिप्रे हैव पाप्मनो व्यावर्तते ।
यदि त्वयमितोऽभिदहन्नेयादग्नये संवर्गायेष्टिं निर्वपेत् ।
एता एव पञ्चदश सामिधेनीर्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये अथैते
याज्यापुरोनुवाक्ये - ६४

मा नो अस्मिन्महाधने परा वर्ग्भारभृद्यथा
सं वर्गं सं रयिं जय
इति ।
अथ याज्या
परस्या अधि संवतो अवरं अभ्या तर
यत्राहमस्मि तं अव
इति ।
अथो हैनया यद्भ्रातृव्यस्य संविवृक्षेत तत्कामो यजेत ।
क्षिप्रे हैवास्य संवृङ्क्ते ।
अथो खल्वाहुर्यदग्नावग्निमभ्युद्धरेत्किं तत्र कर्म का प्रायश्चित्तिरिति ।
अग्नयेऽग्निमत इष्टिं निर्वपेत् ।
एता एव पञ्चदश सामिधेनीर्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ।
अथैते याज्यापुरोनुवाक्ये
अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा

हव्यवाड्जुह्वास्यः
इति ।
अथ याज्या
त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्सता
सखा सख्या समिध्यसे
इति ।
अथो हैनया ब्रह्मवर्चसकामो यजेत ।
तेजस्वी हैव ब्रह्मवर्चसी भवति ।
अथो खल्वाहुर्यदाहवनीयगार्हपत्यौ संसृज्येयातां किं तत्र कर्म का प्रायश्चित्तिरिति ।
अग्नये वीतय इष्टिं निर्वपेत् ।
एता एव पञ्चदश सामिधेनीर्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ।
अथैते याज्यापुरोनुवाक्ये
अग्न आ याहि वीतये गृणानो हव्यदातये
नि होता सत्सि बर्हिषि
इति ।
अथ याज्या
यो अग्निं देववीतये हविष्ममाविवासति
तस्मै पावक मृडय
इति ।
तस्मै पावक मृडय इति ६५

अग्निष्टोम
प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट्छन्दसां ज्योतिर्विराड्वाचः ।
अग्नौ संतिष्ठते ।
विराजं संपद्यते ।
तस्मादेष ज्योतिरुच्यते ।
द्वौ स्तोमौ प्रातस्सवनं वहतो यथा चक्षुश्च प्राणश्च तथा तत् ।
द्वौ स्तोमौ माध्यन्दिनं सवनं वहतो यथा च श्रोत्रं च बाहू च तथा तत् ।
द्वौ स्तोमौ तृतीयसवनं वहतो यथा मध्यं च प्रतिष्ठा च तथा तत् ।

हिंकारेण वै ज्योतिषा देवास्त्रिवृते ब्रह्मवर्चसाय ज्योतिरदधुः ।
त्रिवृता ब्रह्मवर्चसेन पञ्चदशायौजसे वीर्याय ज्योतिरदधुः ।
पञ्चदशेनौजसा वीर्येण सप्तदशाय प्रजायै पशुभ्यः प्रजननाय ज्योतिरदधुः ।
सप्तदशेन प्रजया पशुभिः प्रजनेनैकविंशाय प्रतिष्ठायै ज्योतिरदधुः ।
स्तोमो वा एतत्स्तोमे ज्योतिर्दधदेति ।
तस्माज्ज्योतिष्टोम इत्याख्यायते ।
अथ यत्स्तोमस्स्तोमं सवनमभिप्रणयति तस्माज्ज्योतिष्टोम इत्याख्यायते ।
अथो यद्यज्ञस्संस्तुतो विराजमभिसंपद्यते ज्योतिर्विराट्तस्माज्ज्योतिष्टोम
इत्याख्यायते ६६

अस्थूरिर्वा एष यज्ञः पुरुषसंमितः ।
यत्काम एनमाहरते समस्मै काम ऋध्यते ।
अस्थूरिणा हि तत्र गच्छति यत्र जिगमिषति ।
प्रजापतिर्यत्प्रजा असृजत ता अग्निष्टोमेनासृजत ।
दशमेन च वै स ता अग्निष्टोमस्य स्तोत्रेणासृजत दशमेन च मासा
संवत्सरस्य ।
ता द्वादशेन चैवाग्निष्टोमस्य स्तोत्रेण पर्यगृह्णाद्द्वादशेन च मासा संवत्सरस्य
।
तस्मात्पशवो दशमासो गर्भान्बिभ्रति ।
त एकादशमनुप्रजायन्ते ।
न का चन द्वादशमतिहरति ।
परिगृहीता हि तेन ।
तासां परिगृहीतानामश्वतरोऽत्यप्रवत ।
तस्यानुहाय रेत आदत्त ।
तद्गर्दभे न्यमाट्र्तद्वडबायां तत्पशुषु तदोषधीषु ।
तस्माद्गर्दभो द्विरेतास्तस्माद्वडबा द्विरेताः ।
तस्मात्पशवो द्वौ द्वौ जनयन्ति ।
तस्मादोषधयोऽनभ्यक्ता रेभन्ति ।
तस्मादश्वतरो बर्हिषि न देयः ।
अति ह्यप्लवताप ह्यक्रामत् ।

आत्तरेता ह्यप्रजा हि ।
षोडशिनस्स्तोत्रे देयः ।
अतिरिक्तो वै षोडशि स्तोत्राणामतिरिक्तोऽश्वतरः पशूनाम् ।
अतिरिक्त एवा तदतिरिक्तं दधति यज्ञस्य सलोमतायै ।
स य एवं विद्वानग्निष्टोमेनोद्गायति प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति ।
ज्येष्ठयज्ञो वा एष प्रजापतियज्ञो यदग्निष्टोमः ।
अश्नुते ज्यैष्ठ्यं श्रैष्ठ्यं य एवं वेद ६७

प्रजापतिर्वाविदमग्र आसीत् ।
मनो ह वै प्रजापतिर्देवता ।
सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति ।
स शीर्षत एव मुखतस्त्रिवृतं स्तोममसृजत गायत्रीं छन्दो रथन्तरं सामाग्निं देवतां ब्राह्मणं मनुष्यमजं पशुम् ।
तस्माद्ब्राह्मणो गायत्रीछन्दा आग्नेयो देवतया ।
तस्मादु मुखं प्रजानाम् ।
मुखाद्ध्येनमसृजत ।
सोऽकामयत प्रैव जायेयेति ।
स बाहुभ्यामेवोरसः पञ्चदशं स्तोममसृजत त्रिष्टुभं छन्दो बृहत्सामेन्द्रं देवतां राजन्यं मनुष्यमश्वं पशुम् ।
तस्माद्राजन्यस्त्रिष्टुप्छन्दा षन्द्रो देवतया ।
तस्मादु बाहुभ्यां वीर्यं करोति ।
बाहुभ्यां ह्येनमुरसो वीर्यादसृजत ।
सोऽकामयत प्रैव जायेयेति ६८

स उदरादेव मध्यतस्सप्तदशं स्तोममसृजत जगतीं छन्दो वामदेव्यं साम विश्वान्देवान्देवतां वैश्यं मनुष्यं गां पशुम् ।
तस्माद्वैश्यो जगतीछन्दा वैश्वदेवो देवतया ।
तस्मादु प्रजनिष्णुः ।
उदराद्ध्येनं प्रजननादसृजत ।

सोऽकामयत प्रैव जायेयेति ।
स पद्भ्यामेव प्रतिष्ठाया एकविंशं स्तोममसृजतानुष्टुभं छन्दो यज्ञायज्ञीयं साम न कां चन देवतां शूद्रं मनुष्यस्मविं पशुम् ।
तस्माच्छूद्रोऽनुष्टुप्छन्दा वेश्मपतिदेवः ।
तस्मादु पादावनेज्येनैव जिजीविषति ।
पद्भ्यां ह्येनं प्रतिष्ठाया असृजत ।
एतया वै सृष्ट्या प्रजापतिः प्रजा असृजत ।
स य एतदेवं वेद भूमानमेव प्रजया पशुभिर्गच्छति ।
तस्माद्वेतं यज्ञं भूयिष्ठं प्रशंसन्ति यदग्निष्टोमम् ।
प्रजापतियज्ञो ह्येषः ६९

प्रजापतिः प्रजाभ्य ऊर्जं व्यभजत् ।
तदुदुम्बरस्समभवत् ।
प्रजापतिरुद्गाता प्राजापत्य उदुम्बरः ।
वृणुतेऽन्यानृत्विजो नोद्गातारम् ।
यदुद्गाता प्रथमेन कर्मणौदुम्बरीमन्वारभते स्वयैव तद्देवतयात्मानमार्त्विज्याय वृणीते ।
तामन्वारभते आयोष्ट्वा सदने सादयाम्यवतश्छायायां समुद्रस्य हृदये ।
नमस्समुद्राय नमस्समुद्रस्य चक्षसे ।
मा मा योनोर्वां हासीः इति ।
यदाह आयोष्ट्वा सदने सादयामि इति यज्ञो वा आयुस्तस्यैतत्सदनं क्रियते ।
अवतश्छायायामिति ।
यज्ञो वा अवतिः ।
तस्यैषा छाया क्रियते यत्सदः ।
समुद्रस्य हृदये इति ।
मध्यतो वा आत्मनो हृदयम् ।
तस्मान्मध्यतस्सदस औदुम्बरीमीयते ।
नमस्समुद्राय नमस्समुद्रस्य चक्षसे इति ।
वाग्वै समुद्रो मनस्समुद्रस्य चक्षुः ।
एताभ्यामेवैतद्देवताभ्यां नमस्करोति ।

आर्त्विज्यं करिष्यन्मा मा योनोर्वा हासीः इति साम वै योनोर्वा साम्न
एवैतन्नमस्करोति ।
आर्त्विज्यं करिष्यन्नैनंसामावहते ।
न सामन्यामार्तिमार्छति ।
न साम्नो हीयते य एवं विद्वान्साम्ने नमस्करोति ।
य एवैनमुपवदति स आर्तिमार्छति ७०

प्रजापतेर्वा एतदुदरं यत्सदः ।
ऊर्गुदुम्बरः ।
यन्मध्यतस्सदस औदुम्बरीमीयते मध्यत एवैतत्प्रजानामन्नमूर्जं दधाति ।
तस्मान्मध्यतोऽशनमशितं धिनोति ।
तस्माद्यत्रैषा यातयाम्नी क्रियते तत्प्रजा अशनायुका भवन्ति ।
पोषुका ह त्वै भवन्ति ।
उपस्पृश्यां नोपस्पृश्यामिति मीमांसन्ते ।
सर्वं वावेदमात्मन्वत् ।
यस्त्वा अन्नमभीव कामयते तमेवैतद्भूयिष्ठं द्वेष्टि ।
यदुपस्पृशेदन्नाद्यं प्रथमेत् ।
यन्नोपस्पृशेदन्नाद्यादात्मानमन्तर्यात् ।
उपस्पृश्य नस्वास्पृष्टेनैवोद्देयन्नान्नाद्यं प्रथमति नान्नाद्यादात्मानमन्तरेति ।
साम देवानामन्नमूर्गुदुम्बरः ।
यदुद्गातौदुम्बरीं श्रयते सामन्नेवैतद्देवानामन्नमूर्जं दधाति ।
तस्माद्यत्र साम्नार्त्विज्यं कुर्वन्ति तदेव देवा भूयिष्ठमिवादन्ति ७१

प्रजापतिरुद्गातोर्गुदुम्बरः ।
स एष ऊर्जि श्रितः प्रजापतिः प्रजाभ्य ऊर्जमन्नाद्यं विभजति ।
उदङ्ङासीन उद्गायति ।
उदीचीमेव तद्दिशमूर्जा भाजयति ।
प्रत्यङ्ङासीनः प्रस्तौति ।
प्रतीचीमेव तद्दिशमूर्जा भाजयति ।
दक्षिणासिनः प्रतिहरति ।

दक्षिणामेव तद्दिशमूर्जा भाजयति ।
प्राञ्चोऽन्य ऋत्विज आर्त्विज्यं कुर्वन्ति ।
प्राचीमेव तद्दिशमूर्जा भाजयन्ति ।
तस्मादेषा दिशां वीर्यवत्तमोपजीवनीयतमा भूयिष्ठैः प्रीता ।
तस्माद्यत्प्रजा अवृत्तिं नीयन्ति प्राचीरेव यन्ति ।
एषा हि दिशां वीर्यवत्तमोपजीवनीयतमा भूयिष्ठैः प्रीता ।
यदुदीचीनदेवत्या उद्गातारोऽथ कस्माद्विपर्यावृत्य दिश आर्त्विज्यं कुर्वन्तीत्याहुः ।
ब्रूयाद्दिशामभिष्टयै दिशामभिप्रेत्यै ।
तस्मात्सर्वासु दिक्ष्वन्नं विद्यत इति ।
उद्दिवं स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृंह ।
द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा ।
घृतेन द्यावापृथिवी आ प्रीणीथाम् ।
सुपिप्पला ओषधीः कृधि स्वाहा इत्यौदुम्बरीमभिजुहोति ।
इमानेवैतल्लोकान्रसेनानक्ति ७२

प्रजापतिः प्रजा असृजत ।
सोऽग्निमपि मुखादसिसृक्षत ।
सोऽग्निर्मुखाद्बीभत्समान ऊर्ध्वं उदद्रुत्य मस्तिष्कमुद्धत्यासृज्यत ।
तं देवाश्चर्षयश्चोपसमेत्याब्रुवन्वितुन्नोऽयं मस्तिष्को मामुया भूत्करवामेमं कस्यां चिताचितीति ।
ते बृहस्पतिमब्रुवन्सोममस्मिन्गृहाणेति ।
स बृहस्पतिरब्रवीत्स वा अयं क्रूर इवापूतोऽमेध्योऽशृतंकृत इति ।
वयं त एतं पूतं मेध्यं शृतंकृतं कुर्म इत्यब्रुवन् ।
तं वै म आहरतेति ।
तथेति ।
तमस्मै प्रायच्छन् ।
तं प्रत्यगृह्णाद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि इति ।
देवाङ्गैर्वावैनं तत्प्रत्यगृह्णात् ।

तं प्रतिगृह्यापवयत्
वसवस्त्वा पुनन्तु गायत्रेण छन्दसा सुप्रजावनिं रायस्पोषवनिम्
रुद्रास्त्वा पुनन्तु त्रैष्टुभेन छन्दसा सुप्रजावनिं रायस्पोषवनिम्
आदित्यास्त्वा पुनन्तु जागतेन छन्दसा सुप्रजावनिं रायस्पोषवनिम्
इति ।
छन्दोभिश्च वावैनं तद्देवताभिश्चापवयत् ।
तं पवयित्वा पश्चादक्षं सादयति बार्हस्पत्यमसि वानस्पत्यं
प्रजापतेर्मूर्धात्यायुपात्रमिति ।
यदाह बार्हस्पत्यमसि इति बृहस्पतिर्ह्येतमग्रे प्रत्यगृह्णात् ।
यदाह वानस्पत्यमिति वनस्पतिभ्यो ह्येनमधिकुर्वन्ति ।
यदाह प्रजापतेर्मूर्धा इति प्रजापतेर्ह्येष मूर्धासीत् ।
यदाह अत्यायुपात्रमित्यति ह्येतदन्यानि पात्राणि पात्रम् ।
यदेतद्देवपात्रं प्रथमं युज्यत उत्तमं विमुच्यते तेनैवात्यन्यानि पात्राणि ।
प्र श्रेयसः पात्रमाप्नोति य एवं वेद ।
तं पश्चादक्षं सादयित्वा गायत्रं विश्वरूपासु गायति ७३

नमः पितृभ्यः पूर्वसद्भ्यो नमस्साकंनिषद्भ्यः
युज्ये वाचं शतपदीं गाये सहस्रवर्तनीम्
गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि संभृतम्
देवा ओकांसि चक्रिरे
इति ।
यन्नमः पितृभ्यः पूर्वसद्भ्यः इति पितरो वा अत्र पूर्व उपसीदन्ति ।
न तेभ्य एवैतन्नमस्करोति नमस्साकंनिषद्भ्यः इति यैरेव
ब्राह्मणैस्सहोपसीदत्यार्त्विज्यं करिष्यंस्तेभ्य एवैतन्नमस्करोति ।
युज्ये वाचं शतपदीमिति वाचमेवैतच्छतपदीं युङ्क्ते ।
गाये सहस्रवर्तनीमितियुक्तामेवैनामेतत्सहस्रवर्तनीं भूतां गायति ।
गायत्रं त्रैष्टुभं जगदिति एतानि वै त्रीणि सवनानि तान्येवैतान्यात्मन्परिगृह्णीते
।
विश्वा ओकांसि चक्रिरे इति सदेवमेवैतेन यज्ञं कुरुते ७४

कुसुर्विन्दो हौद्दालकिस्सोमानामुज्ञगौ ।
तमु हासितमृगा कश्यपानां पुत्रा ऊचुः को नु नोऽयं नृशंसकोऽन्त उद्गायत्येतेममनुव्याहरिष्याम इति ।
तेऽनुव्याहरिष्यन्त आस्तावमुपसेदुः ।
स होवाच नमो ब्राह्मणा अस्तु पुरा वा अहमद्य प्रातरनुवाकाद्गायत्रेण विश्वरूपासु यज्ञं समस्थापयम् ।
स यथा गोभिर्गवायमित्वा श्रमणमबलमनुसंनुदेदेवं वावेदं यज्ञशरीरमनुसंनुदाम इति ।
ते होत्थाय प्रवव्रजुर्नमोऽस्मै ब्राह्मणायास्तु विदां वा अयमिदं चकारेति ।
पुरा ह वा अस्य प्रातरनुवाकाद्गायत्रेण विश्वरूपासु यज्ञस्संस्थितो भवति य एवं वेद ७५

तदाहुः अध्वर्यो किं स्तुतं स्तोत्रं होता प्रातरनुवाकेनान्वशंसीदिति ।
अकर्म वयं तद्यदस्माकं कर्म इत्याह होतारं पृच्छत इति ।
होतः किं स्तुतं स्तोत्रं प्रातरनुवाकेनान्वशंसीः इति ।
अकर्म वयं तद्यदस्माकं कर्म इत्याह उद्गातारं पृच्छत इति ।
उद्गातः किं स्तुतं स्तोत्रं होता प्रातरनुवाकेनान्वशंसीदिति ।
अकर्म वयं तद्यदस्माकं कर्म इति ब्रूयादगासिष्म यदत्र गेयमिति ।
तं यदि ब्रूयुः तमांसि वा अगासीर्न ज्योतींषि अगासिषं युष्मानेव तमसा पाप्मना विध्यानि इति ।
तमसा चैवैनांस्तत्पाप्मना च विध्यति ७६

पश्चात्प्राञ्च उपसीदन्ति ।
वाचमेवैतन्मुखतोऽवरुन्धते ।
यत्पुरस्तात्प्राञ्च उपसीदेयुर्वाचं पृष्ठतः कुर्वीरन् ।
वागेषामुपदासुका स्यात् ।
वाग्वै देवेभ्योऽपाक्रामत् ।
सा वनस्पतीन्प्राविशत् ।
सैष याद्ये ।
यदधोऽधोऽद्यं द्रोणकलशं प्रोहन्ति दैवीमेवैतद्वाचमवरुन्द्धे ।

उद्गातार उद्गीथायाधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति ।
अस्मादेवैतल्लोकादि्द्वषन्तं भ्रातृव्यमन्तरेति य एवं वेद ।
नाक्षमुपस्पृशेत् ।
यदक्षमुपस्पृशेद्भ्रातृव्ये श्रियमृञ्ज्यात् ।
अन्तरा चक्रौ प्रोहति ।
तस्माद्यदन्तरा चक्रावनसस्तदुपजीवनीयतमम् ।
तस्मादन्तरा शम्ये युक्तो भुनक्ति ७७

वसवो वा एतमग्रे प्रौहन् ।
तेऽश्राम्यन् ।
ते रुद्रानाह्वयन् ।
तं रुद्राः प्रौहन् ।
तेऽश्राम्यन् ।
त आदित्यानाह्वयन् ।
तमादित्याः प्रौहन् ।
तं प्रोहति वसवस्त्वा प्रोहन्तु गायत्रेण छन्दसा ।
रुद्रास्त्वा प्रोहन्तु त्रैष्टुभेन छन्दसा ।
आदित्यास्त्वा प्रोहन्तु जागतेन छन्दसा इति ।
देवतानामेवैनं तत्प्रौढिमनुप्रोहति ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रोहामि इति वा प्रोहेत् ।
देवाङ्गैरेवैनं तत्प्रोहति ।
बृहस्पतिर्वा एतमग्रे प्रौहत् ।
स रूपेण वर्चसा व्याध्र्यत ।
स ऐक्षत कास्य प्रायश्चित्तिरिति ।
तां द्रोणकलश एव पर्यपश्यत् ।
तमभ्यमृशत्तनूपा असि तन्वं मे पाहि ।
वर्चोधा असि वर्चो मे धेहि ।
आयुर्धा अस्यायुर्मे धेहि ।
वयोधा असि वयो मे धेहि इति ।

यदेवास्य तत्रात्मनो मीयते तदेतेनाप्यायनम् ।
एतेनैवोद्गाताभिमृशति तनूपा असि तन्वं मे पाहि ।
वर्चोधा असि वर्चो मे धेहि ।
आयुर्धा अस्यायुर्मे धेहि ।
वयोधा असि वयो मे धेहि इति ।
यदेवास्यात्रात्मनो मीयते तदेतेनैवाप्यायते ।
द्वयं वावेदं ब्रह्म चैव क्षत्रं च ।
तदुभयं द्रोणकलशे ।
उभयं ब्रह्म च क्षत्रं चावरुन्द्धे य एवं वेद ७८

संमुखान्ग्राव्णः कृत्वाभिमृशति श्येना अजिरा ऋतस्य गर्भाः प्रयुतो नपातः पर्वतानां ककुभ आ नस्तं वीरं वहत यं बहव उपजीवामो अभिशस्तिकृतमनभिशस्तेन्यमन्यस्याभिशस्त्याः कर्तारमिति ।
आ हैवास्य वीरो जायतेऽभिशस्तिकृदनभिशस्तेन्योऽन्यस्याभिशस्त्याः कर्ता ।
द्रोणकलशमध्यूहति इदमहं मां ब्रह्मवर्चसेऽध्यूहामि इति ।
यद्यस्यावरुद्धो राजन्यस्स्याद्विमुखान्ग्राव्णः कृत्वा तूष्णीं द्रोणकलशमध्यूह्य तमवह्लारयन्दक्षिणा निरूहेदिदमहममुं विशो निरूहामीदमस्य राष्ट्रं न्युब्जामि इति न्यञ्चं द्रोणकलशं न्युब्जेत् ।
संमुखान्ग्राव्णः कृत्वा योऽस्य राजन्यस्स्यात्तस्य नाम गृहीत्वा द्रोणकलशमध्यूहेदिदमहममुं विश्यध्यूहामि इति ।
अपेतरो रुध्यतेऽवेतरो गच्छति ।
स यद्येनमवगत्य नाद्रियेत तं कामयेत अत्रैवान्तरवरुद्धोऽस्त्विति ।
विमुखान्ग्राव्णः कृत्वा तूष्णीं द्रोणकलशमध्यूह्य इमा पांशुसवनः इति ग्रावा ।
तमुपरिष्टादभिनिदध्यादिदमहममुष्मिन्विश्यध्यूहामि इति ।
अभिप्रक्षीणानाहीनं वितिष्ठति ।
स यद्येनं विदित्वोपधावेदस्मिन्वावेदं ब्राह्मणेऽध्यास यदिदमस्मै वचने वचेति ।
संमुखान्ग्राव्णः कृत्वा द्रोणकलशमध्यूहेदिदमहममुं विश्यध्यूहामि इति ।

ईशे स्वानामपैनं स्याश्चायन्त्यनन्तरमवरुद्धो भवति ७९

राष्ट्रं वै द्रोणकलशो विशो ग्रावाणः ।
यद्द्रोणकलशश्शिथिलस्स्याद्राष्ट्रं शिथिलं स्यात् ।
तदनु विशो विशमनु यजमानो यजमानमनु प्रजाः ।
तं दृंहति देवी त्वा धिषणे निपातां ध्रुवे सदसि सीदेष ऊर्जे सीद इति ।
इमे वै देवी धिषणे इदं ध्रुवं सदः ।
एभिरेवैनं तल्लोकैर्दृंहति इष ऊर्जे सीद इति वर्षं वा इषे यदुपरिष्टाद्वर्षस्यैधते तदूर्जे तदेवैतेनावरुन्द्धे ।
स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत् ।
तं देवाश्चर्षयश्चाभिषज्यन् ।
तेऽत्रिमब्रुवन्नृषे त्वमिदमपजहीति ।
तथेति ।
तदत्रि अपाहन् ।
तेऽब्रुवन्यो नस्तमसा विद्धेभ्यो ज्योतिरविदज्ज्योतिरस्य भागधेयमस्त्विति ।
तदेतदत्रिहिरण्यं ह्रियते ।
शतमानं ह स्म पुरा ह्रियते ।
अथैतर्हि यावदेव कियच्च ददति तत् ।
एतद्ध वाव सर्वेषु लोकेषु ज्योतिर्यद्धिरण्यम् ।
सर्वेषु लोकेषु ज्योतिर्धत्ते य एवं विद्वानत्रिहिरण्यं ददाति ८०

स यत्प्रथममपाहन्सा कृष्णाविरभवत् ।
यद्द्वितीयमपाहन्सा धूम्राविरभवत् ।
यत्तृतीयमपाहन्सा फाल्गुन्यविरभवत् ।
स यं कामयेत पापीयान्स्यादिति कृष्णमस्य पवित्रेऽप्यस्येत्पापीयानेव भवति ।
अथ यं कामयेत नार्वाङ्न परस्स्यादिति धूम्रमस्य पवित्रेऽप्यस्येन्नैवार्वाङ्न परो भवति ।
अथ यं कामयेत श्रेयान्स्याद्रुचमश्नुवीतेति फाल्गुनमस्य पवित्रं कुर्याच्छ्रेयानेव भवति रुचमश्नुते ।

अस्ति हि तत्राप्यादित्यस्य न्यक्तम् ।
तदन्तरेषे अवहृत्य संमार्ष्टि वसवस्त्वा संमृजन्तु गायत्रेण छन्दसा ।
रुद्रास्त्वा संमृजन्तु त्रैष्टुभेन छन्दसा ।
आदित्यास्त्वा संमृजन्तु जागतेन छन्दसा इति ।
तद्तदुदीचीनदशं पवित्रवत्या वितनोति पवित्रं ते विततं ब्रह्मणस्पते इति समष्ट्यै ।
तपोष्पवित्रं विततं दिवस्पदे इति स्वर्गकामस्य ।
अरूरुचदुषसः पृश्निरग्रयुः इति प्रजाकामस्य ।
सर्वाभिरेव वितनुयादेतेषां सर्वेषां कामानामुपाप्त्यै ।
राजानमानयति ।
तमभिमन्त्रयते स पवस्व सुधामा देवानामभि प्रैयाणि धाम ।
त्रिर्देवेभ्योऽपवथास्त्रिरादित्येभ्यस्त्रिरङ्गिरोभ्यः ।
येन तुर्येण ब्रह्मणा बृहस्पतयेऽपवथास्तेन मह्यं पवस्व ।
स नः पवस्व शं गवे शं जनाय शमर्वते
शं राजन्नोषधीभ्यः
इति ।
शमेवोद्गात्रे भवति शं यजमानाय शं प्रजाभ्यः ।
अध्वर्युराग्रायणं ग्रहं गृह्णन्हिंकरोति ।
तदेव हिंकृतं भवति ।
अथोद्गात्रैकर्चो गायत्रं गायति उच्चा ते जातमन्धसा इति ।
स उदित्येवेतो देवेभ्यो हव्यं वहति दिवि सद्भूम्या ददे इत्यमुतो वृष्टिमाच्यावयति ।
ताविमौ लोकौ सवासिनौ करोति ।
तावस्मै कामं पिन्वाते ।
काममस्मा इमौ लोकौ पिन्वाते य एवं वेद ८१

क्रूरमिव वा एतद्यज्ञस्य कुर्वन्ति यद्धविधाने ग्रावभिस्सोमं राजानं हत्वा बहिष्पवमानं सर्पन्ति ।
का तस्य प्रायश्चित्तिरित्याहुरप उपस्पृशेयुः ।
आपो वै सर्वस्य शान्तिः ।

अद्भिरेवैनत्तच्छमयन्ति ।
वाग्वा एतस्मा अग्रेऽध्वनेऽतन्द्रायत बहिष्पवमानं सर्पन्ती ।
तां प्रजापतिरब्रवीद्भागधेयं ते करोम्यथ सर्पेति ।
बहिष्पवमानं सप्स्यन्होमं जुहुयाज्जुष्टो वाचो भूयासं जुष्टो वाचस्पत्युः ।
देवि वाग्यत्ते वाचो मधुमत्तस्मिन्मा धाः ।
स्वाहा सरस्वत्यै इति ।
यत्सरस्वत्यै स्वाहा इति जुहुयाद्वाचं सरस्वतीं स्वाहाकारेण परिगृह्णीयात् ।
अथ यत्स्वाहा सरस्वत्यै इति जुहोति वाचं तदुत्तरां स्वाहाकाराद्दधाति ।
तया परिगृहीतया यज्ञं तनुते ।
वाचा ह्यूर्ध्वो यज्ञस्तायते ।
वेकुरा नामासि प्रेषिता दिव्याय कर्मणे शिवा नस्सुयमा भव ।
सत्याशीर्यजमानाय स्वाहा इति वा जुहुयात् ।
वाग्वै वेकुरा ।
ब्रह्म वाक् ।
ब्रह्मण एव तद्वाचे होमं हुत्वा सर्पति नार्तिमार्छति ८२

अरण्यमिव वा एते यन्ति ये बहिष्पवमानं सर्पन्ति ।
तानीश्वरो रक्षो वा हन्तोरन्या वा नंष्टृआ ।
अथ द्वितीयां जुहोति सूर्यो मा देवो दिव्येभ्यो रक्षोभ्यः पातु वात
आन्तरिक्षेभ्योऽग्निः पार्थिवेभ्यस्स्वाहा इति ।
य एवैषां लोकानामधिपतयस्तेभ्य एवैतदात्मानं परिदाय सर्पति नार्तिमार्छति
।
प्रजापतिर्यद्यज्ञमसृजत तं हविर्धान एवासृजत ।
स सृष्ट उदङ्प्राद्रवत् ।
तमेतदत्राप्त्वास्तुवन् ।
यत्रैतदुदञ्चयित्वा बहिष्पवमानेन स्तुवन्ति यज्ञमेवैतदाप्त्वा स्तुवन्ति ।
यो वै दैव्यं वाजिनं वेद वाजी भवति ।
यज्ञो वाव दैव्यो वाजी ।
य इन्नु मानुषं वाजिनमशान्तमसंमृष्टमारोहति तमिन्नु स हिनस्ति वा प्र वा
क्षिणोति ।

अथ किं यो दैव्यं वाजिनमशान्तमसंमृष्टमारोहात्  ८३

अध्वर्युः प्रस्तरं हरन्सर्पति ।
तमनुमन्त्रयते एतदहं दैव्यं वाजिनं संमार्ज्मि इति ।
संमृष्टमेवैनं शान्तमारोहति नार्तिमार्छति ।
देवक्षेत्रं वा एषोऽध्यवस्यति यस्सोमस्योद्गायति ।
य इन्नु मानुषाय क्षेत्रपतयेऽप्रोच्यावस्यति तमिन्नु स हिनस्ति वा प्र वा यापयति ।
अथ किं यो दैव्याय क्षेत्रपतयेऽप्रोच्यावस्यात् ।
सोमोद्गायोद्गाय सोम इत्याह ।
सोमो वै देवानां क्षेत्रपतिः ।
सोमायैव तद्देवानां क्षेत्रपतये प्रोच्योद्गायति नार्तिमार्छति ।
मह्यं तेजसे मह्यं ब्रह्मवर्चसाय मह्यमन्नाद्याय मह्यं भूम्ने मह्यं पुष्ट्यै मह्यं प्रजननाय प्रजानां भूम्ने प्रजानां पुष्ट्यै प्रजानां प्रजननाय सोमस्य राज्ञो राज्याय मम ग्रामण्याय इति ।
ग्रावो ह स्माह मैत्रेयः किं ममेकस्मा आगास्यामि किमेकस्मा इति ।
एतेन ह स्म वै स तदाह सोमोद्गायोद्गाय सोमेदममुष्मा इदममुष्मै इति ।
ते ह स्मास्मै कामास्समृध्यन्ते ।
देवपाशा वा एते वितायन्ते यद्धिष्ण्या अग्नयो विह्रियन्ते ।
तान्यो विद्वानभ्यवैति देवपाशान्प्रतिमुञ्चते ।
एषा वै यज्ञस्य द्वार्यदन्तराग्नीध्रं च चात्वालं च ।
तयाभ्यवेयात् ।
तयोदेयात् ।
धा वै नाम वेदिः ।
तामभ्यवयन्ब्रूयाद्धा असि सुधां मे धेहि ।
आयुष्मन्तस्त्वद्वर्चस्वन्त उद्गेष्म इति ।
न देवपाशान्प्रतिमुञ्चते नार्तिमार्छति  ८४

प्राणान्वै तत्संतत्य स्वर्गं लोकं सर्पन्ति यदन्तर्हविर्धाने ग्रहान्गृहीत्वा बहिष्पवमानं सर्पन्ति ।

संततास्सर्पन्ति ।
संतत इव वै स्वर्गो लोकः ।
स्वर्गस्यैव लोकस्य संतत्या अव्यवच्छेदाय ।
प्रावभ्रा इव सर्पन्ति ।
प्रतिकूलमिव वा इतस्स्वर्गो लोकः ।
तद्यथा वा अदः प्रतिकूलमुद्यन्प्रावभ्र इव भवत्येवमेवैतत् ।
स्वर्गस्य लोकस्य समष्ट्या अनपव्याधाय ।
अध्वर्युः प्रथमस्सर्पति प्राणो यज्ञस्य ।
तस्माद्यदवच्छिद्येरन्प्राणादवच्छिद्येरन्प्रमायुकास्स्युः ।
प्रस्तोता द्वितीयस्सर्पति मुखं साम्नः ।
तस्माद्यदवच्छिद्येरन्मुख्यं आर्तिमार्छेयुः ।
उद्गाता तृतीयस्सर्पति सर्वदेवत्यः प्रजापतिः ।
तस्माद्यदवच्छिद्येरन्सर्वज्यानिं जीयेरन् ।
प्रतिहर्ता चतुर्थस्सर्पति तुरीयं साम्नः ।
तस्माद्यदवच्छिदेरंस्तुरीयेणात्मनो यातयेयुः ।
यजमानः पञ्चमस्सर्पति ।
पाङ्क्तो यज्ञः पाङ्क्ताः पशवः ।
तस्माद्यदवच्छिद्येरन्यज्ञात्पशुभ्योऽवच्छिद्येरन् ८५

ब्रह्मा षष्ठस्सर्पति ।
षड्वै छन्दांसि ।
छन्दोभिरेव तद्रक्षः पाप्मानमपघ्नते ।
सर्वं वावैतद्ब्रह्म ।
यद्ब्रह्मा पश्चाद्भवति ब्रह्मणैव तद्रक्षः पाप्मानमपहत्य स्वर्गं लोकं सर्पन्ति ।
प्रस्तरं हरन्तस्सर्पन्ति ।
यजमानो वै प्रस्तरो बर्हिः प्रजाः ।
यदुपर्युपरि बर्हिः प्रस्तरं हरन्ति यजमानमेव तत्प्रजास्वध्यूहन्ति ।
तस्माद्यजमान उपर्युपर्येवान्याः प्रजाः ।
यदुपास्येत्स्वर्गलोको यजमानस्स्यादवास्माल्लोकाच्छिद्येत ।
यदत्यस्येदस्मिँल्लोके प्रतितिष्ठेदव स्वर्गाल्लोकाच्छिद्येत ।

तदाहुरर्धात्मा वा एष यजमानस्य यत्पत्नी ।
यत्सा बहिर्वेदि भवति तेनास्माल्लोकान्नावच्छिद्यते ।
उपैवास्येदित्युत वै पत्नी न भवति ।
अथो यद्यपि स्यादुपैवान्यदस्येदत्यन्यदस्येत् ।
यदुपास्यति तेन स्वर्गलोको यदत्यस्यति तेनास्माल्लोकान्नावच्छिद्यते ८६

आदित्यो वा एतदत्राग्र आसीद्यत्रैतच्चात्वालमदोऽग्निः ।
स इदं सर्वं प्रातपत् ।
तस्य देवाः प्रदाहादबिभयुः ।
तेऽब्रुवन्सर्वं वा अयमिदं प्रधक्ष्यति वीमौ परिहरामेति ।
तमतस्तिसृभिराददत तिसृभिरन्तरिक्षात्तिसृभिर्दिवमगमयन् ।
स ततः पराङेवातपत् ।
त एतदावदुत्तममक्षरमपश्यन् ।
तेनैनमर्वाञ्चमकुर्वन् ।
तत एतदर्वाङ्तपति ।
षतेनो एवावताक्षरेणाग्निमस्मिँल्लोकेऽदधुः ।
स यं कामयेत यजमानस्स्वर्गलोकस्स्यादिति
चात्वालमेवैनमवख्याप्योद्गायेत् ।
तमतस्तिसृभिरेवाददते तिसृभिरन्तरिक्षात्तिसृभिर्दिवं गमयन्ति ।
सदैव सर्वाभिस्स्तुयुरथोत्तमामग्रे ब्रूयादथावरामथावराम् ।
तास्सर्वा अर्वाचीः ।
तदु वा आहुस्सत्रैतत्प्रत्यवरूढं स्वर्गकाम्या वै यजत इति ।
यदेवाद आवदुत्तममक्षरं भवति तेनास्माल्लोकान्नावच्छिद्यते ८७

रथन्तरवर्णामुत्तमां गायन्ति ।
इयं वै रथन्तरम् ।
अस्यामेवैतत्प्रतितिष्ठति ।
प्रजापतिः प्रजा असृजत ।
ता एनं सृष्टा अन्नकाशिनीरभितस्समन्तं पर्यविशन् ।
ताभ्यो हिंकारेणान्नाद्यमसृजत ।

तदोंकारेण सृष्टमवारयत ।
प्रजापतिरेष यदुद्गाता ।
तमेतत्प्रजा अन्नकाशिनीरभितस्समन्तं परिविशन्ति ।
ताभ्यो हिंकारेणैवान्नाद्यं सृजते ।
तदोंकारेण सृष्टं वारयते ।
स यद्धिंकृत्येनोंकुर्यात्पराङ्देवान्नाद्यमियात् ।
यत्साम प्रथममभिव्याहरेत्क्षत्रं बलमृच्छेत् ।
क्षत्रं हि साम ।
यदृचं प्रथममभिव्याहरेद्विशं बलमृच्छेत् ।
विड्ढ्यृक् ।
यद्यजुः प्रथममभिव्याहरति ब्रह्म वै यजुर्ब्रह्मवर्चसमेतत्करोति ।
भूर्भुवस्स्वः ।
मधु करिष्यामि ।
मधु जनयिष्यामि ।
मधु भविष्यति ।
भद्रंभद्रम् ।
इषमूर्जमिति ।
यद्भूर्भुवस्स्वः इत्येतद्वै ब्रह्मैतद्यजुः ।
यन्मधु करिष्यामि इति प्रजा वै मधु ता एव तत्करोति ।
यन्मधु जनयिष्यामि इति प्रैवैनास्तज्जनयति ।
यन्मधु भविष्यति इति भूतिमेवैनास्तद्गमयति ।
भद्रंभद्रमिति यद्वै पुरुषस्य वित्तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रं तदे-
वैतेनावरुन्द्धे ।
इषमूर्जमिति वर्षं वा इषे यदुपरिष्टाद्वर्षस्यैधते तदूर्जे तदेवैतेनावरुन्द्धे ८८

प्रजापतिं कल्पयित्वोद्गायेत् ।
यो ह वै प्रजापतिं कल्पयित्वोद्गायति कल्पतेऽस्मै दिशः प्रदिश आदिशो
विदिश उद्दिशो दिश इति ।
दिशो वै प्रजापतिः ।
प्रजापतिमेव तत्कल्पयित्वोद्गायति ।

कल्पतेऽस्मै य एवं वेद ।
कपिवनो ह स्माह भौवायनः किं ते यज्ञं गच्छन्ति यदेव सोमस्याभक्षयित्वा प्र वा सर्पन्ति प्र वा धावयन्तीति ।
बहिष्पवमानमुपसन्नेषु ब्रूयाद्यं ब्रह्माणं शुचिमिव मन्येताहरहस्तमिति ।
तेन समुपहूयाथानुमन्त्रयेत
यो देवानामिह सोमपीथोऽस्मिन्यज्ञे बर्हिषि वेद्याम्
तस्येदं भक्षयामसि
इति ।
यदि च ह प्रधावयति यदि च नाथ हास्य भक्षित एव देवस्सोमो भवति ।
एतदायतना वा आरण्याः पशवः ।
यद्बहिष्पवमानमरण्ये स्तुवन्ति तस्मादारण्याः पशवोऽरण्यं सचन्ते ।
पराचीषु स्तुवन्ति ।
तस्मादारण्याः पशवोऽरण्यादेवारण्यमभिप्रेरते ।
एकरूपासु स्तुवन्ति ।
तस्मादारण्याः पशव एकरूपाः ।
आवदुत्तममक्षरं भवति ।
तस्मादेकैकोऽन्योऽचलो ग्रामेऽधिगम्यते ।
अथो अरण्ये हतं ग्राममभ्यवहरन्ति ।
स्तुत्वोद्द्रवन्ति ।
यजमानमेव तत्स्वर्गं लोकं गमयन्ति ।
बाहूनुद्गृह्णन्ति ।
यजमानमेव तत्स्वर्गे लोके समादधति ।
ते वै तदनृतं कुर्वन्ति ये मर्त्यं सन्तममृतत्वं गमयन्ति ।
ते रूपेण वर्चसा व्यृध्यन्ते ।
स य एतदेवान्य उत्तिष्ठेत्तमुत्तिष्ठन्तमारभ्यानूत्तिष्ठेत् ।
न रूपेण वर्चसा व्यृध्यते नार्तिमार्छति ।
भविष्यद्विजानीयात् ।
यद्येताः प्रजा दोद्रुवा इव स्युर्दोद्रुवो योगक्षेमो भविष्यति ।
तयायमुद्गातोदगासीदिति विद्यात् ।
यद्यु शान्ता इव स्युश्शान्तो योगक्षेमो भविष्यति ।

तथायमुद्गातोदगासीदिति विद्यात् ।
एषो ह विज्ञा ८९

उपास्मै गायता नरः इति ग्रतामकामो भूतिकामः प्रजननकामः प्रतिपदं कुर्वीत ।
अस्यै वावेदमुपगायन्ति ।
उप वावेदमस्यां सर्वमुपैवास्यां प्रजया पशुभिः प्रजायते य एवं वेद ।
नरो ह वै देवविशः क्षत्रं सोम इन्दुः ।
विशं चैवैतेन क्षत्रं चावरुन्द्धे ।
अभि देवं इयक्षते इति सर्वा एवैतेन देवता अनन्तरायमभियजते ।
उपो षु जातमप्तुरमिति प्रजाकामः प्रतिपदं कुर्वीत ।
उपेव वा आत्मन्प्रजया पशुभिः प्रजायते ।
एतां एवापरेद्युः प्रतिपदं कुर्वीत ।
अप्तुरमिति ह्यस्या आप्त्वा श्रेयांसं वसीयानात्मना भवति ।
गोभिर्भङ्गं परिष्कृतमिति ।
यज्ञो वै गोभिर्भङ्गः पशवः परिष्कृतः ।
यज्ञं चैवैतेन पशूंश्चावरुन्द्धे ।
इन्दुं देवा अयासिषुः इति ।
यजमानो वै सोमो राजेन्दुस्स्तोमा देवाः ।
स्तोमा एवैनं स्वर्गं लोकं गमयन्ति ९०

पवस्व वाचो अग्रियः इति श्रैष्ठ्यकामः प्रतिपदं कुर्वीत ।
प्रजापतिः प्रजा असृजत ।
ता एनं सृष्टा नापाचायन् ।
सोऽकामयत श्रैष्ठ्यमासां प्रजानां गच्छेयमिति ।
स एतां प्रतिपदमपश्यत् ।
तयास्तुत ।
ततो वै स तासां प्रजानां श्रैष्ठ्यमगच्छत् ।
गच्छति स्वानां श्रैष्ठ्यं य एवं वेद ।
एषो ह वै समृद्धा स्तोत्रिया यस्यै पवस्व इत्यारम्भः ।

समृद्धयैवास्य स्तोत्रियया स्तुतं भवति ।
यो वै दैव्यं मिथुनं वेद प्र मिथुनेन जायते ।
पवस्व इति च वाचः इति च दैव्यं मिथुनम् ।
प्र मिथुनेन जायते य एवं वेद ।
सर्वेषां वा एषा त्रयाणां साम्नां प्रतिपत्पवस्व इति वामदेव्यस्य वाचः इति रथन्तरस्य अग्रियः इति बृहतः ।
सर्वेषामस्य साम्नां प्रतिपदा स्तुतं भवति ।
सोम चित्राभिरूतिभिः इति सोमो वै देवानां चित्रं सोमेनैव देवानां चित्रेण बहुर्भवति प्रजायते ।
अभि विश्वानि काव्या इति विश्वमेवैतेन काव्यमवरुन्द्धे ९१

पवस्वेन्दो वृषा सुतः इति जने प्रतिष्ठाकामः प्रतिपदं कुर्वीत ।
कृधी नो यशसो जनः इति ह्यस्यै यशस्येव जने भवति ।
वृषा सुतः इति वृषेव वै प्रजनितेवाधिपतिरिव तस्यां जनतायां भवति यस्यामृध्यते ।
वृषेवैव प्रजनितेवाधिपतिरिव तस्यां जनतायां भाति यस्यां भवति य एवं वेद ।
सर्वो ह वै जने बुभूषतेऽरातीयति ।
विश्वा अप द्विषो जहि इति विश्वा एवैतेन द्विषोऽपहते ।
तया पवस्व धारया इति संग्रामं संयतिष्यमानस्य प्रतिपदं कुर्यात् ।
यया गाव इहागमञ्जन्यास उप नो गृहानिति जन्या वा एष गा आजिहीर्षति यस्संग्रामं संयतते ।
आ जन्या गा हरति ।
एतामेव प्रतिपदं कुर्वीत सनिं प्रैष्यन् ।
जन्या वा एष गा आजिहीर्षति यस्सनिं प्रैति ।
आ जन्या गा हरत्युपैनं जन्या गावो नमन्ति य एवं वेद ।
अग्न आयूंषि पवसे इत्यामयाविनः प्रतिपदं कुर्यात् ।
अग्निं वा एतस्य शरीरमप्येति वायुं प्राणः ।
अग्निनैवास्य पवमानेन शरीरं प्राणेन संदधाति ।
एतामेवं प्रतिपदं कुर्वीरन्येषां दीक्षितानां प्रमीयते ।

अपूता इव वा एतेऽमेध्या मन्यन्ते येषां दीक्षितानां प्रमीयते ।
अग्निनैवैनान्पवमानेन पूतान्मेध्यान्करोति एतामेव प्रतिपदं कुर्वीत - ६२

- ब्रह्मवर्चसकामः ।
अग्निर्वै देवानां ब्रह्मा ।
अग्निनैव देवानां ब्रह्मणा वर्चसी भवति ।
एतामेव प्रतिपदं कुर्वीताभिचरन् ।
अग्निर्वै देवानां ब्रह्मा ।
अग्निनैव देवानां ब्रह्मणा यं द्वेष्टि तं स्तृणुते ।
एतामेव प्रतिपदं कुर्वीतान्नाद्यकामः ।
आ सुवोर्जमिषं च नः इति ह्यस्या इषं चैवैतेनोर्जं चावरुन्द्धे ।
एतामेव प्रतिपदं कुर्वीताभिचर्यमाणः ।
यो वा अभिचरति योऽभिदासति यः पापं कामयते स वै दुच्छुनः ।
आरे बाधस्व दुच्छुनामित्यारादेवैतेन द्विषन्तं पाप्मानं भ्रातृव्यमवाञ्चमपबाधते ।
दविद्युतत्या रुचा इति ब्रह्मवर्चसकामः प्रतिपदं कुर्वीत ।
दविद्युतती वै गायत्री ।
गायत्री ब्रह्मवर्चसमोजो वीर्यं त्रिष्टुप्प्रजननं जगती ।
ब्रह्मवर्चस्योजस्वी वीर्यवान्प्रजया पशुभिर्जायते य एवं वेद ।
परिष्टोभन्त्या कृपा सोमाश्शुक्रा गवाशिरः इति ।
यज्ञो वै सोमाश्शुक्राः पशवो गवाशिरः ।
यज्ञं चैवैतेन पशूंश्चावरुन्द्धे ।
अस्य प्रत्नामनु द्युतमिति प्रतिपदं कुर्वीत यस्य पिता वा पितामहो वा
श्रेयान्स्यादथात्मना पापीयानिव मन्येत ।
यैवास्य पित्र्या पैतामही श्रीस्तामेवाश्नुते ।
शुक्रं दुदुह्रे अह्रयः इति ।
यज्ञो वै शुक्रः पशवोऽह्रयः ।
यज्ञं चैवैतेन पशूंश्चावरुन्द्धे ।
पयस्सहस्रसामृषिमिति ।
पयस्वानेव भवत्यास्य सहस्रसा वीरो जायते ६३

एते असृग्रमिन्दवः इति बहूनां संयजमानानां प्रतिपदं कुर्यात् ।
एते इत्येवैनाञ्ज्यैष्ठ्यायाभिवदति छन्दसैवैनान्रूपिणा समावद्भाजः करोति ।
समावत्येनान्यज्ञस्याशीरागच्छति ।
प्रजापतिर्यत्प्रजा असृजत ता एनयैव प्रतिपदासृजत ।
एते इत्येव देवानसृजत असृग्रमिति मनुष्यानिन्दवः इति पितॄंस्तिरः
पवित्रमिति ग्रहानाशवः इति स्तोमान्विश्वानि इत्युक्थानि अभि सौभगा
इत्येवैनाञ्जातान्सौभाग्येनाभ्यानक् ।
प्रजापतिरेव भूतः प्रजास्सृजते य एवं विद्वानेतया प्रतिपदोद्गायति ।
अथो हैनास्तत्सौभाग्येनैवाभ्यानक्ति ।
असृक्षत प्र वाजिनः इति त्रयाणां संयजमानानां प्रतिपदं कुर्यात् ।
छन्दसैवैनान्रूपिणा समावद्भाजः करोति ।
समावत्येनान्यज्ञस्याशीरागच्छति ।
गव्या सोमासो अश्वया इति गोअश्वमेवैभ्य एतेनावरुन्द्धे ।
शुक्रासो वीरयाशवः इति यज्ञो वै शुक्रः प्रजा वीरो यज्ञं चैवैभ्य एतेन प्रजां
चावरुन्द्धे ।
युवं हि स्थः स्वःपती इति द्वयोस्सम्यजमानयोः प्रतिपदं कुर्यात् ।
छन्दसैवैनौ रूपिणा समावद्भाजौ करोति ।
समावत्येनौ यज्ञस्याशीरागच्छति ९४

इन्द्रश्च सोम गोपती ईशाना पिप्यतं धियः इति ।
इन्द्रश्च वै सोमश्चाकामयेतां सर्वासां प्रजानामैश्वर्यमाधिपत्यमश्नुवीवहीति ।
तावेतां प्रतिपदमपश्यताम् ।
तयास्तुवताम् ।
ततो वै तौ सर्वासां प्रजानामैश्वर्यमाधिपत्यमाश्नुवाताम् ।
अश्नुते ह वै स्वानामैश्वर्यमाधिपत्यमेतया प्रतिपदा तुष्टुवानः ।
इन्द्रायेन्दो मरुत्वते इति राजन्यबन्धोः प्रतिपदं कुर्यात् ।
षन्द्रो वै राजन्यो मारुतीर्विशः ।
क्षत्रायैव तद्विशमनुवर्त्मानं कुर्वन्ति ।
तस्मात्क्षत्रस्य विडनुवर्त्मा ।

यो जिनाति न जीयते इति वा जिनात्येव न जीयते ।
हन्ति शत्रुमभीत्य इत्यन्यतो वात्येवाभीत्य शत्रुं हन्ति नैनं शत्रुः प्रत्युद्यामी भवति ।
स पवस्व सहस्रजिदिति ।
यो वै सर्वं जयति विजयते सः ।
सर्वजित्सर्वमेव जयति ।
विजयत एतया प्रतिपदा तुष्टुवानः ९५

अपघ्नन्पवते मृधः इत्यभिशस्यमानस्य प्रतिपदं कुर्यात् ।
मृधो वा एतमजुष्टास्सचन्ते यमभिशंसन्ति ।
अप पापीर्मृधो हते ।
अप सोमो अराव्णः इति ।
अरावाण इव ह्येतं सचन्ते यमभिशंसन्ति ।
गच्छन्निन्द्रस्य निष्कृतमिति ।
अनिन्द्रियो वा एषोऽपदेवो भवति यमभिशंसन्ति ।
इन्द्रियावन्तमेवैनमेतेन सदेवं कुर्वन्ति ।
आग्नावारुणीआमयाविनो ज्योगामयाविनः प्रतिपदं कुर्यात् ।
अग्निना वा एष वरुणेन गृहीतो भवति य आमयावी ज्योगामयावी ।
अग्निनैवैनमाग्नेयान्मुञ्चन्ति वरुणेन वारुणात् ।
यस्यां वर्षीयस्यामृचि ह्रसीयो ह्रसीयस्यां वा वर्षीयस्तां आनायकामः प्रतिपदं कुर्वीत ।
वर्षीयसा वा एष ह्रसीयः प्रेप्स्यतीति ह्रसीयसा वर्षीयः ।
प्र ह्रसीयसा वर्षीय आप्नोति य एवं वेद ।
एष देवो अमर्त्यः इति प्रतिपदं कुर्वीत यः कामयेताहमेवैकधा श्रेष्ठस्स्वानां स्यां रुचमश्नुवीयेति ।
एष एषः इत्येवैनां ज्येष्ठ्याय श्रेष्ठ्यायाभिवदति ।
एकधैव श्रेष्ठस्स्वानां भवति रुचमश्नुते ।
ईश्वरो ह त्वस्यापरः प्रजायामेतादृङ्वीरो नाजनितोः ।
एष एव नातोऽन्य इतीव ह्येनं वागभिवदति ।
तदु त्वेतन्न तथा ।

देवो अमर्त्यः इति वा आह ।
अदेवश्च ह वै स मर्त्यश्च यस्य वीरस्य सतो वीरो वीर्यवान्नाजायते ।
अथ ह वै स एव देवस्सोऽमर्त्यश्चो यस्य वीरस्य सतो वीरो वीर्यवानाजायते
।
आ हास्य वीरस्य सतो वीरो वीर्यवाञ्जायते संधीयते प्रजया न व्यवच्छिद्यते
९६

देवासुरा अस्पर्धन्त ।
ते देवा वज्रं क्षुरपविमसृजन्त पुरुषमेव ।
तमसुरानभ्यवृञ्जन् ।
सोऽसुरानपोह्य देवानभ्यावर्तत ।
तस्माद्देवा अबिभयुः ।
तमभिपद्य त्रेधा समशृणन् ।
स त्रेधा संशीर्ण उदेवातिष्ठत् ।
तमारभ्य पर्यैक्षन्त ।
तस्मिन्देवताश्छन्दांसि पुरुषे प्रविष्टा अपश्यन् ।
तेऽब्रुवन्देवता वै छन्दांसीमा अस्मिन्पुरुषे प्रविष्टाः ।
अस्मिन्वा अयं लोके पुण्यं जीवित्वेष्टापूर्तेन तपसा
सुकृतेनास्मानन्वागमिष्यतीति ।
ते वै तथा करवामेत्यब्रुवन्यथा नो नान्वागच्छादिति ।
तस्मै वै पाप्मानमन्ववदधामेति तस्मा एतं पाप्मानमन्ववादधुः - ९७

- स्वप्नं तन्द्रीं मन्युमशनयामक्षकाम्यां स्त्रीकाम्यामिति ।
एते ह वै पाप्मानः पुरुषमस्मिँल्लोके सचन्ते ।
य एतदग्ने तीर्त्वास्मिँल्लोके साधु चिकीर्षात्तत्त्वमस्मिँल्लोके
धीप्सतादित्यग्निमस्मिँल्लोकेऽदधुः ।
वायुमन्तरिक्ष आदित्यं दिवि ।
उग्रदेवो ह स्माह राजनिर्नाहं मनुष्यायारातीयामि यानस्मै त्रीन्देवानां
श्रेष्ठानरातीयतोऽशृणोम् ।
अरातीतमरातीतं ह्येव तस्मै यस्मा एता देवता अरातीयन्तीति ।

अथो हास्मा एता देवता नारातीयन्ति य एवं वेद ।
अथो ह तमेव धीप्सन्ति य एवं विद्वांसं धीप्सतीति ।
ते देवा अब्रुवन्या एवेमा देवताश्छन्दांसि पुरुषे प्रविष्टा
एताभिरेवासुरान्धूर्वामैवेति ९८

तेषां प्राणमेव गायत्र्यावृञ्जत चक्षुस्त्रिष्टुभा श्रोत्रं जगत्या वाचमनुष्टुभा ।
अस्मादेवैनाँल्लोकाद्गायत्र्यान्तरायन्नन्तरिक्षात्त्रिष्टुभामुष्माज्जगत्या
पशुभ्योऽनुष्टुभा ।
तान्सर्वस्मादेवान्तरायन् ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
यद्देवा असुरानधूर्वंस्तद्धुरां धूस्त्वम् ।
धूर्वति द्विषन्तं भ्रातृव्यं य एवं वेद ।
प्रजापतिर्यत्प्रजा असृजत ता धूर्भिरेवासृजत ।
रेत एव रेतस्ययासिञ्चत्प्राणं गायत्र्या समैरयच्चक्षुस्त्रिष्टुभा श्रोत्रं जगत्या
वाचमनुष्टुभा ।
आत्मानमेव पङ्क्त्या प्रत्युपादधात् ।
प्रजापतिरेव भूतः प्रजास्सृजते य एवं विद्वान्धूर्भिरुद्गायति ९९

रेतस्यां गायति ।
रेतस्तत्सिञ्चति ।
संततमिव गायति ।
सततिमिव वै रेतः ।
परोक्षमेव प्रथमे गायति ।
परोक्षमिव वै रेतः ।
नर्चमुपस्पृशेत् ।
यदृचमुपस्पृशेद्रेतो विच्छिन्द्यात् ।
त्र्युदासां गायति ।
प्राणमेव प्रथमेनोदासेन परिगृह्णात्यपानं द्वितीयेन व्यानं तृतीयेन ।
त्र्युदासां गायति ।

आत्मानमेव प्रथमेनोदासेन परिगृह्णाति जायां द्वितीयेन प्रजां तृतीयेन ।
त्र्युदासां गायति ।
इममेव लोकं प्रथमेनोदासेनाभ्यारोहत्यन्तरिक्षं द्वितीयेनमुं तृतीयेन ।
स यो हैवं विद्वांस्त्र्युदासां गायत्यभि ह भ्रातृव्यलोकाय विजयते ।
स यो भ्रातृव्यलोकं चिच्छित्सेद्द्व्युदासामेव गायेत् ।
ओषमस्य द्विषन्भ्रातृव्यः पराभवति श्रियमात्मनाश्नुते ।
ईश्वरो ह तु प्रमायुको भवितोः ।
प्राणेभ्यो ह्येति त्र्युदासायै ।
स तथैव चिकीर्षेद्यथा सर्वमायुरियात् ।
अन्येन भ्रातृव्यलोकं चिच्छित्सेद् ।
त्र्युदासामेव गायेत् ।
न हिंकुर्यात् ।
यद्धिंकुर्याद्वज्रेण हिंकारेण रेतो विच्छिन्द्यात् १००

तदाहुर्हिंकारेण वै प्रजापतिः प्रजाभ्योऽन्नाद्यमसृजत ।
यन्न हिंकुर्यादशनायुकाः प्रजास्स्युः ।
हिंकुर्यादेव ।
भूः इति ।
यन्न हिंकारं विसृजति तेन रेतो विच्छिनत्ति न हिंकारमन्तरेतीति ।
तदु वा आहुः ममृदीय इव वा अतो रेतो दारुणतर इव ।
हिंकारोऽपि वैनद्वालेन विच्छिन्द्यात् ।
हिंकारस्यैव काले हिंकारं मनसा ध्यायेत् ।
तन्न रेतो विच्छिनत्ति न हिंकारमन्तरेतीति ।
भूः इति निधनं करोति ।
प्रजापतिर्यदग्रे व्याहरत्स भूः इत्येव व्याहरत् ।
स इमामसृजत ।
स यद्भूः इति निधनं करोत्यस्यामेवैतद्रेतः प्रतिष्ठापयत्यथो एनत्तद्भूतिमेव गमयति १०१

गायत्रीं गायति ।

प्राणो वै गायत्री ।
तस्यै द्वे अक्षरे व्यतिषजति ।
प्राणापानावेव तद्व्यतिषजति ।
तस्मात्प्राणापानौ व्यतिषक्तौ प्रजा अनुसंचरत आ च परा चायातयामानौ ।
सदिति निधनं करोति ।
प्राणो वै सन् ।
प्राण एव तत्प्रतितिष्ठति ।
त्रिष्टुभं गायति ।
चक्षुर्वै त्रिष्टुप् ।
तस्यै द्वे अक्षरे द्योतयति ।
चक्षुषी एव तद्दधाति ।
तस्माद्युक्ते इव चक्षुषी ।
ज्योतिः इति निधनं करोति ।
चक्षुर्वै ज्योतिः ।
चक्षुष्येव तत्प्रतितिष्ठति ।
जगतीं गायति ।
श्रोत्रं वै जगती ।
तस्यै चत्वार्यक्षराणि द्योतयति ।
श्रोत्रमेव तद्दधाति ।
श्रोत्रे द्वे परिश्रवणे द्वे ।
तस्मात्समानत्र सन्सर्वा अनुदिशश्शृणोत्यपि पराङ्यन्पश्चाद्वदतश्शृणोति ।
इळा इति निधनं करोति ।
पशवो वा इळा ।
पशुष्वेतत्प्रतितिष्ठति ।
अनुष्टुभं गायति ।
वाग्वा अनुष्टुप् ।
तामर्वाचीमभिनुदन्गायति वाचोऽनपक्रमाय ।
यत्पराचीमपनुदन्गायेद्वाचं प्रधमेद्वागस्मादपक्रामुका स्यात् ।
तां यदर्वाचीमभुनुदन्गायत्यात्मन्नेव तद्वाचं प्रतिष्ठापयति ।
तस्यै निरुक्तं चानिरुक्तं च पदे गायति ।

निरुक्तेन वै वाचो भुञ्जतेऽनिरुक्तमस्या उपजीवनीयम् ।
भुङ्क्ते वाचोप चैनां जीवति य एवं वेद ।
स यन्निरुक्तमेव गायेद्वदेयुरेव प्रजा न तूष्णीमासीरन् ।
अथ यदनिरुक्तं गायेद्तूष्णीमेव प्रजा आसीरन्न वदेयुः ।
यस्मान्निरुक्तं चानिरुक्तं च पदे गायति तस्मात्प्रजा वदन्ति च तूष्णीं चासते ।
वागिति निधनं करोति ।
वाग्वै ब्रह्म ।
वाच्येव तद्ब्रह्मन्प्रतितिष्ठति ।
पङ्क्तिं गायति ।
ऋतवो वै पङ्क्तिः ।
तस्यै षडक्षराणि द्योतयति ।
षड्वा ऋतवः ।
ऋतुष्वेव तत्प्रतितिष्ठति १०२

तदाहुस्समदमिव वा एतच्छन्दोभ्यः कुर्वन्ति यद्गायत्रे सति प्रातस्सवने सर्वाणि छन्दांस्यभिगीयन्ते योधुकाः प्रजा भवन्तीति ।
स यः कामयेत शान्ताः प्रजा एधेरन्निति न धुरो विगायेत् ।
अपशीर्षाणं तु यज्ञं यजमानस्य कुर्यादनृतेन दक्षिणाः प्रतिगृह्णीयात् ।
ब्रह्म वै करदिति वै यजमानो दक्षिणा ददाति ।
स तथैव चिकीर्षेद्यथा नापशीर्षाणं यज्ञं यजमानस्य कुर्यान्नानृतेन दक्षिणाः प्रतिगृह्णीयात् ।
व्येव गायेत् ।
यस्त्वा एना विजिगासन्न शक्नोति विगातुमार्तिमार्च्छति ।
यदि रेतस्यां न शक्नोति विगातुमरेतस्क आत्मना भवति अरेतस्का गर्भा जायन्ते ।
यदि गायत्रीं न शक्नोति विगातुं प्रमायुक आत्मना भवति मृता गर्भा जायन्ते ।
यदि त्रिष्टुभं न शक्नोति विगातुमन्ध आत्मना भवत्यन्धा गर्भा जायन्ते ।
यदि जगतीं न शक्नोति विगातुं बधिर आत्मना भवति बधिरा गर्भा जायन्ते

।
यद्यनुष्टुभं न शक्नोति विगातुमजिह्व आत्मना भवति अजिह्वा गर्भा जायन्ते
।
यदि पङ्क्तिं न शक्नोति विगातुमृतवो लुभ्यन्ति ।
स य एना नाशंसेत विगातुं परोक्षेणैवैनास्स रूपेण गायेत् ।
उभयेन त्वाव रेतस्या गीयते १०३

गायत्र्यां प्रस्तुतायां गायत्रमेव गायन्पृथिवीं मनसा गच्छेत् ।
प्राणयापान्यान्यात् ।
सदिति निधनं करोति ।
परोक्षेणैवैनांस्तद्रूपेण गायति ।
त्रिष्टुभि प्रस्तुतायां गायत्रमेव गायन्नन्तरिक्षं मनसा गच्छेत् ।
दिदृक्षेतैवाक्षिभ्याम् ।
ज्योतिः इति निधनं करोति ।
परोक्षेणैवैनांस्तद्रूपेण गायति ।
जगत्यां प्रस्तुतायां गायत्रमेव गायन्दिशः पशून्मनसा गच्छेत् ।
शुश्रूषेतैव कर्णाभ्याम् ।
इळा इति निधनं करोति ।
परोक्षेणैवैनांस्तद्रूपेण गायति ।
अनुष्टुभि प्रस्तुतायां गायत्रमेव गायन्दिवं मनसा गच्छेत् ।
वाचा गायन्वागिति निधनं करोति ।
परोक्षेणैवैनांस्तद्रूपेण गायति ।
पङ्क्त्यां प्रस्तुतायां गायत्रमेव गायनृतून्मनसा गच्छेत् ।
परोक्षेणैवैनांस्तद्रूपेण गायति ।
ओषमेवैतदुत्तमं तृचं गायति ।
प्रजननो वा एष तृचः ।
ओषमेव प्रजया पशुभिः प्रजायते य एवं वेद ।
प्रजापतिर्यत्प्रजा असृजत ता एतेनैव तृचेनासृजत ।
पवमानस्य ते कवे वाजिन्सर्गा असृक्षत इति सर्गश एवासृजत ।
असृग्रं वारे अव्यये इति चासृजत ।

तासां सृष्टानां परावापादबिभेत् ।
स एतामुत्तमां समुद्रवतीमपश्यत् ।
तयैनाः अच्छा समुद्रमिन्दवः इत्येव समुद्रेण समन्तं परिण्यदधात् ।
ता अस्य न परोप्यन्त ।
नास्य वित्तं परोप्यते य एवं वेद ।
अग्मन्नृतस्य योनिमा इति ।
ग्रहा ह वा ऋतस्य योनिः ।
एतस्य ह वा इदमक्षरस्य कृतो जाताः प्रजा गच्छन्ति चा च गच्छन्ति १०४

देवासुरा वा एषु लोकेष्वस्पर्धन्तास्मिन्भुवने ।
ते देवा अकामयन्तेमाँल्लोकाञ्जयेमासुरान्स्पर्धा भ्रातृव्यानिति ।
त एतान्याज्यानि स्तोत्राण्यपश्यन् ।
तैरस्तुवत ।
तैरिमानाजयन् ।
इमानेव लोकमाग्नेयेनाजयन्नन्तरिक्षं मैत्रावरुणेनामुमैन्द्रेण दिश एवैन्द्राग्नेन ।
तद्यदिमाँल्लोकानाजयंस्तदाज्यानामाज्यत्वम् ।
एमाँल्लोकाञ्जयति स्पर्धा द्विषन्तं भ्रातृव्यं य एवं वेद ।
ते देवा अब्रुवन्वीमानि भजामहा इति ।
तेषां ह विभागे न समपादयन् ।
तेऽब्रुवनाजिमेषामयाम गिरिं काष्ठां कृत्वेति ।
यदब्रुवनाजिमेषामयामेति तदेषां द्वितीयमाज्यत्वम् ।
यदु गिरिं काष्ठामकुर्वंस्तस्मादसौ गिरिः काष्ठो नाम १०५

तेषां पच्छोऽसृज्यन्त ।
तेषामग्निः प्रथम उदजयत् ।
अथ मित्रावरुणावथेन्द्रः ।
अथैकमनुज्जितमासीत् ।
तदिन्द्रोऽवेदग्निर्वावेदमुज्जेष्यतीति ।
सोऽब्रवीदग्ने यतर आवयोरिदमुज्जयात्तन्नौ सहासदिति ।
तथेति ।

तदग्निरुदजयत् ।
तदेनयोस्सहाभवदध्यर्धमन्यस्य स्तोत्रमध्यर्धमन्यस्य ।
षन्द्राग्नो यज्ञः ।
स य एवमेता देवानामुज्जितीर्वेद यत्र कामयत उदिह जयेयमित्युत्तत्र जयति ।
तदाहुर्यदाज्यानि सर्वाणि समाननिधनानि केनाजामि क्रियन्त इति ।
नानादेवत्यानीति ब्रूयात्तेनाजामीति ।
अथो यन्नानारूपाणीति ब्रूयात्तेनो एवेति ।
ते वा एते पशव एव ।
यदाज्यान्यन्तसदसं स्तुवन्ति तस्माद्ग्राम्याः पशवोऽन्तर्ग्रामे न्योकसः ।
पराचीषु पुनरभ्यावर्तन्त ।
तस्माद्ग्राम्याः पशवः पराञ्चः प्रातः प्रेरते ते सायं समावर्तन्ते ।
नानारूपासु स्तुवन्ति ।
तस्माद्ग्राम्याः पशवो नानारूपाः ।
नानादेवत्यासु स्तुवन्ति ।
तस्माद्ग्राम्याः पशवो नाना ।
ते यथायथं सायं गृहानभ्युपायन्ति १०६

देवासुरास्संयत्ता ज्योङ्न व्यजयन्त ।
तेष्वसुरेष्विदं सर्वमासीत् ।
अथैकमेवाक्षरं देवेष्वासीत् ।
वागेव ।
सोऽग्निरब्रवीदहं वा इदमदर्शं यथेदं जेष्यामीति ।
तद्वै ब्रूहीत्यब्रुवन् ।
सोऽब्रवीदक्षरेणैवेदं सर्वं संनिधाय धुराधुरमासजामेति ।
यदब्रवीदक्षरेणैवेदं सर्वं संनिधाय धुराधुरमासजामेति
तदाज्यधुरामाज्यधूस्त्वम् ।
तेऽक्षरेणैवेदं सर्वं संनिधाय धुराधुरमासजन् ।
तानजयन् ।
जयति स्पर्धां द्विषन्तं भ्रातृव्यं य एवं वेद ।

स यदीतरा धुरो विगायेद्व्येवाज्यधुरो गायेत् ।
स यो हैवं विद्वान्संग्रामयोस्संनिहितयोर्ब्रूयादक्षरेण त्वा संनिदधामीति परं ग्रामं स हैव तं ग्रामं जयति ।
अथो यस्मिन्नेवंविद्ग्रामे भवति स उ हैव तं ग्रामं जयति ।
ते देवा अब्रुवन्वीमानि भजामहा इति ।
तस्मादु गिरिः काष्ठो नाम १०७

स तेषां सकृदेवं सर्वेषामसृज्यन्त ।
तेषामग्निरेवोदजयत् ।
तस्यापगमनमगतस्याक्षोऽछिद्यत ।
तस्य रथचक्रं पतित्वा कृष्णाधिकां कोशान्तेन पर्यवर्तत ।
तमब्रुवन्नीक्षित्वान्नादो वा अयं श्रेष्ठो भविष्यति पाप्मा वा अस्य पर्यवर्तीति ।
स यो हैवं विद्वान्परिवर्तयतेऽन्नाद एव श्रेष्ठस्स्वानां भवत्यथो हास्य तं पाप्मानमेव परिवर्तयन्ति ।
सोऽग्निरुज्ञित्य प्राद्रवत् ।
तमिन्द्रोऽब्रवीत्सह नावस्त्विति ।
नेत्यब्रवीत् ।
यद्वा एको गृह्याणां विन्दते सर्वेषां वै तत्सह भवति ।
सहैव नावस्त्विति ।
नेत्येवाब्रवीत् ।
स वै माभि चिदवेक्षस्वेति ।
तमभ्यवैक्षत ।
सोऽब्रवीत्सान्त्वाय माभ्यवैक्षिष्ठास्सह नावभूदिति ।
यंयं न्वेवाहमभ्यवेक्षिष्य इत्यब्रवीत्तेनतेनैव मे सह भवैष्यतीति ।
नेत्येवाब्रवीत् ।
सान्त्वाय वै मा त्वमेनदभ्यवैक्षिष्ठास्सहैव नावभूदिति १०८

तौ वै पृच्छावहा इति ।
तौ प्रजापतावपृच्छेताम् ।

स प्रजापतिरब्रवीत्सान्त्वाय वै वां त्वमेतमभ्यवैद्विष्ठास्सहैव वामभूदिति ।
तथेति ।
तदेनयोस्सहाभवदध्यर्धमन्यस्य स्तोत्रमध्यर्धमन्यस्य ।
षन्द्राग्नो यज्ञः ।
तौ मित्रावरुणौ प्राणापानौ पशुभ्योऽपाक्रामतामनुवी मन्यमानौ
नावाभ्यामनुवीभ्यां पशवः प्राणिष्यन्तीति ।
ते पशवोऽप्राणन्त आध्मायमाना अशेरत ।
तदाभ्यामाचक्षताप मित्रावरुणौ प्राणापानौ पशुभ्योऽतामिष्ठां त इमेऽप्राणन्त
आध्मायमानाश्शेरत इति ।
तावाद्रुत्याब्रूतां प्राणन्तु नौ युवाभ्यां पशव इति ।
नावाभ्यामनुवीभ्यामित्यब्रूताम् ।
ताभ्यामेतं मैत्रावरुणमाज्यमवाकल्पयन् ।
ततो वै ताभ्यां पशवः प्राणन् ।
स य एवमेतामग्नेरुज्जितिं वेद यत्र कामयत उदिह जयेयमित्युत्तत्र जयति ।
य उ एवैतामिन्द्रस्यार्धितां वेद यत्र कामयत उदिह जयेयमित्युत्तत्र जयति
।
य उ एवैतां मित्रावरुणयोरवक्ळिप्तिं वेद यत्र कामयतेऽव म इह
कल्पेतेत्यवास्मै तत्र कल्पते १०९

तानि वा एतान्यैन्द्राग्नान्येव सर्वाणि यदाज्यानि ।
आग्नेयीषु स्तुवन्ति ।
तेनाग्नेयं गायत्री छन्दस्तेनाग्नेयं पञ्चदशस्तोमस्तेनैन्द्रम् ।
तदेतदैन्द्राग्नमेव मैत्रावरुणीषु स्तुवन्ति ।
तेन मैत्रावरुणं गायत्री छन्दस्तेनैग्नेयं पञ्चदशस्तोमस्तेनैन्द्रम् ।
तदेतदैन्द्राग्नमेवैन्द्रीषु स्तुवन्ति ।
तेनैन्द्रं गायत्री छन्दः ।
षन्द्राग्नमेवैन्द्राग्नीषु स्तुवन्ति ।
तेनैन्द्राग्नं गायत्री छन्दस् ।
तेनाग्नेयं पञ्चदशस्तोमस्तेनैन्द्रम् ।
तदेतदैन्द्राग्नमेवैन्द्राग्नीषु स्तुवन्ति ।

तेनैन्द्राग्नं गायत्री छन्दस्तेनाग्नेयं पञ्चदशस्तोमस्तेनैन्द्रम् ।
तदेतदैन्द्राग्नमेव ।
इन्द्राग्नी यज्ञस्य देवता ।
स्वायामेवैतद्देवतायां प्रातस्सवने यज्ञं प्रतिष्ठापयन्ति ११०

प्रजापतिः प्रजा असृजत ।
ता अप्राणा असृजत ।
ताभ्य एतेनैव साम्ना प्राणमदधात् ।
प्राणो वै गायत्रम् ।
सर्वमायुरेति य एवं वेद ।
ताः प्राणं विविदाना रक्षांस्यन्वसचन्त ।
ता एतदेव साम गायन्नत्रायत ।
यद्गायन्नत्रायत तद्गयत्रस्य गायत्रत्वम् ।
त्रायत एनं सर्वस्मात्पाप्मनो य एवं वेद ।
तदूर्ध्वमिव गेयम् ।
ऊर्ध्वो वै स्वर्गो लोकः ।
स्वर्गस्यैव लोकस्य समष्ट्यै ।
त्र्यावृद्गेयम् ।
त्रयो वा इमे लोकाः ।
एषां लोकानामाप्त्यै ।
त्र्युदासं गेयम् ।
त्रयो वै प्राणापानव्यानाः ।
तेषां संतत्यै ।
समस्मै प्राणापानव्यानास्तायन्ते य एवं वेद ।
त्र्यावृद्गेयम् ।
त्रयो वा इमे लोकाः ।
एषां लोकानां संतत्यै ।
समस्मा इमे लोकास्तायन्ते य एवं वेद १११

पितृदेवत्यं त्वस्य नोपगन्तवा इत्याहुः ।

एतद्ध वा अस्य पितृदेवत्यं यत्तान्तीकरोति ।
यदि सामि ताम्येन्मध्य ऋचोऽवान्यात् ।
प्राणो वा ऋक्प्राणो गायत्रम् ।
प्राणस्यतन्मध्ये प्राणं समानयते ।
यद्यु च इयात्प्राणापानव्यानान्गायेत् ।
प्राण इति द्वे अक्षरे अपान इति त्रीणि व्यान इति त्रीणि ।
तदष्टौ संपद्यन्ते ।
अष्टाक्षरा गायत्री ।
तेन गायत्र्यै नैति ।
साम्नोऽन्तररण्यं नावेत्यम् ।
यो ह वै साम्नोऽन्तररण्यमवैति सर्वज्यानिं वा जीयते प्र वा मीयते ।
एतद्ध वै साम्नोऽन्तररण्यं यत्प्रस्तुतमनभिस्वरितमादीयते ।
स्वरेण संपाद्योद्गायेत् ।
एतद्वै साम्नस्स्वं यत्स्वरः ।
स्वेनैवैनत्तत्समर्धयति ।
एतद्वै साम्नोऽन्नाद्यं यत्स्वराः ।
अन्नाद्येनैवैनत्तत्समर्धयति ।
एतद्वै साम्न आयतनं यत्स्वरः ।
आयतनेनैवैनत्तत्समर्धयति ।
एतद्वै साम्नः प्रियं धाम यत्स्वरः ।
प्रियेणैवैनत्तद्धाम्ना समर्धयति १९२

देवान्वै यज्ञस्याहुतिर्नागच्छत् ।
स प्रजापतिराइक्षत कथं नु देवान्यज्ञस्याहुतिर्गच्छेदिति ।
स एते द्वे अक्षरे गायत्र्या उदखिदत् ।
स एव द्व्यक्षरो वषट्कारोऽभवत्ततो वै देवान्यज्ञस्याहुतिरगच्छत् ।
अन्नं वै वषट्कारः ।
अत्त्यन्नं य एवं वेद ।
इन्द्रो वृत्राय वज्रमुदयच्छत् ।
तस्यैते अक्षरे चक्रावास्ताम् ।

वज्रो वा एषः ।
य एते निस्पृशेद्वज्रं निस्पृशेत् ।
यो वै दुग्धाद्दुग्धमुपैति न स आप्यायते ।
अथ योऽदुग्धाद्दुग्धमुपैति स आप्यायते ।
दुग्धाद्वा एष दुग्धमुपैति य एते अक्षरे उपैति ।
तस्मादेते अक्षरे नोपेत्ये ।
यस्य वै सर्वा गायत्री गीयते सर्वमस्य गृहे अधिगम्यते ।
यस्यो नागीयत ईश्वरो रूक्षो भवितोः ।
अन्यतरदक्षरमवगृह्य वाचं चतुर्विंशीमुपेयात् ।
नास्योना गायत्री गीयते नि च स्पृशति न च ११३

यो वा अंशुमेकाक्षरं वेदान्नाद एव श्रेष्ठस्स्वानां भवति ।
अथो सह एव तस्यै जनताया उद्गायति ।
वाग्वा अंशुरेकाक्षरः ।
तदेव गायत्रम् ।
गायत्र्यै प्रस्तुतायै यदादेरुत्तरमक्षरं स स्थाणुः ।
यस्तदुद्गायन्नारभते स्थाणुमारभते ।
य एनं निर्हरति गायत्रीं छिद्रां करोति ।
गायत्रीं छिद्रां अनु यज्ञस्स्रवति यज्ञमनु यजमानो यजमानमनु प्रजाः ।
सध्र्यश्वो ह स्माह तैग्मायुधिः क उ स्विदद्य रसदिहावुरसि निम्रदिष्यत इति ।
एते ह वै रसदिहौ ये एते गायत्र्या उत्तमे अक्षरे ।
यस्ते उद्गायन्नारभते रसदिहावुरसि निमर्दते ।
य उ एने निर्हरति गायत्रीं छिद्रां करोति ।
गायत्रीं छिद्रां अनु यज्ञस्स्रवति यज्ञमनु यजमानो यजमानमनु प्रजाः ११४

तानि सर्वाण्यक्सराण्युद्धृत्य वाचं दध्यात् ।
वाग्वै ब्रह्म ।
तद्यथा चर्मणा कृतिकण्टकान्प्रावृत्यातीयादेवमेवैतद्वाचा ब्रह्मणा यज्ञस्थाणुं प्रमृद्य स्वस्त्यतिक्रामति नार्तिमार्छति ।

अव वा एतत्प्रतिहर्ता साम्नश्छिद्यते यद्गायत्रस्य न प्रतिहरति ।
प्रस्तूयमानं मनसा प्रतिहिंकुर्यात् ।
अपान्य वागिति ब्रूयात् ।
तथा साम्नो नावच्छिद्यते नार्तिमार्छति ।
यो वा अक्षरमंशुमद्वेद वहन्त्येनमंशुमतीस्संयुक्ताः ।
वाग्वा अक्षरम् ।
तस्यै प्राण एवांशुः ।
वहन्त्येनमंशुमतीस्संयुक्ता य एवं वेद ११५

मरुत्वतीः प्रतिपदो भवन्ति ।
मरुत्वन्तं ग्रहं गृह्णन्ति मरुत्वान्वा इन्द्रो वृत्रमहन्वार्त्रहत्याय ।
उच्चा ते जातमन्धसा इत्यन्धस्वतीर्भवन्ति ।
अहर्वा अन्धः ।
अह्न एवारम्भः ।
यज्ञो वा अन्धः ।
यज्ञस्यैवारम्भः ।
त्रीणि यज्ञेऽन्धांसीति ह स्म पूर्वे ब्राह्मणा मीमांसन्ते उच्चा ते जातमन्धसा ।
वसोर्मन्दानमन्धसः । पुरोजिती वो अन्धसः इति ।
त्रयः पशुषु भोगाः प्रातर्मध्यन्दिने सायम् ।
तानेवैतेनावरुन्द्धे ।
इमौ वै लोकौ सह सन्तौ व्यैताम् ।
तयोर्न किं चन समपतत् ।
ते देवमनुष्या आशनायन् ।
इतःप्रदानाद्धि ते देवा जीवन्त्यमुतःप्रदानान्मनुष्याः ।
स एताः प्रजापतिर्ऋचोऽपश्यदुच्चा ते जातमन्धसा इति ।
स उदित्येवेतो देवेभ्यो हव्यमवहद्दिवि सद्भूम्या ददे इत्यमुतो
वृष्टिमाच्यावयत् ।
ताविमौ लोकौ सवासिनावकरोत् ।
तावस्मै कामं अपिन्वाताम् ।
काममस्मा इमौ लोकौ पिन्वाते य एवं वेद ।

तासु गायत्रमुक्तब्राह्मणम्  ११६

अथामहीयवम् ।
प्रजापतिः प्रजा असृजत ।
ता अनशना असृजत ।
ता अशनायन्तीरन्यान्यामादन् ।
स प्रजापतिरैक्षत कथं नु म इमाः प्रजा नाशनायेयुरिति ।
स एतत्सामापश्यत् ।
तेनाभ्योऽन्नाद्यं प्रायच्छद्वर्षमेवापनिधनेन ।
ताभ्योऽवर्षदेव नोदगृह्णात् ।
स एतन्निधनमपश्यत् ।
तदुपैत् ।
तत आभ्य उदगृह्णात् ।
एतस्य ह वा इदं साम्नः क्रतोर्वर्षति च पर्जन्य उच्च गृह्णाति ।
यो वृष्टिकामस्स्यादेतेनैवापनिधनेन स्तुवीत ।
वर्षुको हास्मै पर्जन्यो भवति ।
स यद्यतीव वर्षेदेतदेव निधनमुपेयादुदहास्मै गृह्णाति ।
वर्षति च हास्मै पर्जन्य उच्च गृह्णाति य एवं वेद ।
ता यदेनं प्रजास्सुहिता अशिता आमहीयन्त तदामहीयवस्यामहीयवत्वम् ।
षनं भार्यास्सुहितास्सुहितं महीयन्ते य एवं वेद ।
ता एनमन्नं विविदाना नापाचायन् ।
सधमादमिवैवासन् ।
अन्नं हि श्रीः ।
सोऽशोचत् ।
स नामहीयत ।
स षक्षत कथं न्विमा अहं प्रजास्सृजेय ता मा सृष्टा नापचायेयुरिति ।
स एतत्सामापश्यत् ।
तेनास्तुत  ११७

स स्तौषे इत्येव निधनमुपैत् ।

ता अतोषयत् ।
ता अस्य वशमायन् ।
तोषयति द्विषतो भ्रातृव्यान्वशमस्य स्वा आयन्ति य एवं वेद ।
स यदामहीयमाना अपश्यत्तदामहीयवस्यामहीयवत्वम् ।
यद्वेवैना वशे कृत्वामहीयत तद्वेवामहीयवस्यामहीयवत्वम् ।
आस्वान्वशे कृत्वा महीयते य एवं वेद ।
तद्येऽस्य स्वा अवशीकृता इव स्युरेतदेवैषां मध्य आसीनोऽधीयीत ।
वश एवैनान्कुरुते ।
उत्तरकुरवो हाहुरवषट्कृतस्यैव सोमस्य कुरुपञ्चाला भक्षयन्तीति ।
एकैकस्यै देवतायै होता वषट्करोति सर्वाभ्य उद्गाता ।
सर्वदेवत्यो ह्युद्गाता ।
आमहीयवस्य निधनेन वषट्कुर्यादिति ।
वषट्कृतस्यैव सोमस्य भक्षयन्ति ।
तदु ह स्माह मार्जश्शैलनो भ्रातृव्यान्वाव निधनेन तोषयतीति ।
पुरस्तादेव निधनस्य वषट्कुर्याद्वौषड्भूमी ओ ददा इति ।
वषट्कृतस्यैव सोमस्य भक्षयति ११८

यो वै यज्ञस्योधर्वेद दुहे यज्ञम् ।
पवमानो वाव यज्ञः ।
तस्य गायत्र्येवोधः ।
गायत्रीं चतुर्ऋचां कुर्यात् ।
यज्ञस्यैव तदूधर्दधाति दुहे यज्ञम् ।
यो वै यज्ञस्य प्रतिष्ठां वेद प्रति यज्ञं स्थापयति प्रत्यात्मना तिष्ठति ।
पवमानो वाव यज्ञः ।
तस्य गायत्र्येव प्रतिष्ठा ।
गायत्रीं चतुर्ऋचां कुर्याद्यज्ञस्यैव तत्प्रतिष्ठां दधाति ।
प्रति यज्ञं स्थापयति प्रत्यात्मना तिष्ठति ।
उच्चा ते जातमन्धसा । अस्य प्रत्नामनु द्युतम् । एना विश्वान्यर्य आ
इत्येतासु गायत्रं कुर्यात् ।
तास्वामहीयवम् ।

स यद्धाय्यां चतुर्थीं दधाति तेन चतुर्ऋचं भवति प्रतितिष्ठतीभः ।
प्रति यज्ञं स्थापयति प्रत्यात्मना तिष्ठति ११९

त्रीणि ह वै छन्दांसि यज्ञं वहन्ति गायत्री त्रिष्टुब्जगती ।
तदेवानुष्टुबान्तादन्वायत्ता ।
तया देवास्स्वर्गं लोकमजिगांसन् ।
तया न व्याप्नुवन् ।
तस्यां चतुष्पदः पशूनुपादधुर्गां चाश्वं चाजां चाविं च ।
तया व्याप्नुवन् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा बृहती वा इयमभूद्ययेदं व्यापामेति ।
तदेव बृहत्यै बृहतीत्वम् ।
न ततः पुरा बृहती नाम छन्द आस ।
सा वा एषा पशव एव यद्बृहती ।
येन निधनमुपयन्ति तेन प्रस्तौति ।
तेनो एव पुनरादिमादत्ते ।
तस्मात्पशवो यत एव प्रजायन्ते ततस्संभवन्ति ।
ते तत एव पुनः प्रजायन्ते ।
न बृहत्या वषट्कुर्याद्पशूनामप्रवर्गाय ।
यद्बृहत्या वषट्कुर्याद्वज्रेण वषट्कारेण पशून्प्रवृञ्ज्यात् १२०

देवा वा असुरान्हत्वापूता इवामेध्या अमन्यन्त ।
तेऽकामयन्त पूता मेध्याश्शृतास्स्याम गच्छेम स्वर्गं लोकमिति ।
त एता ऋचोऽपश्यन् ।
ताभिरपुनत ।
पुनानस्सोम धारयापो वसानो अर्षसि इति ।
आपो वै पवित्रम् ।
अद्भिरेवापुनत ।
आ रत्नधा योनिमृतस्य सीदसि इति ।
अन्तरिक्षं वा ऋतम् ।
अन्तरिक्षमेवैतेनात्यायन् ।

उत्सो देवो हिरण्ययः इति ।
असौ वै लोक उत्सो देवः ।
अमुमेवैतेन लोकमुपासीदन् ।
ततो वै ते पूता मेध्याश्शृता अभवन्नगच्छन्स्वर्गं लोकम् ।
पूतो मेध्यश्शृतो भवति गच्छति स्वर्गं लोकमेताभिर्ऋग्भिस्तुष्टुवानः १२१

तासु रौरवम् ।
अग्निर्वै रूरुरेतत्सामापश्यत् ।
यदग्नी रूरुरेतत्सामापश्यत्तद्रौरवस्य रौरवत्वम् ।
रूर इतिवृध्रः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतामिळां उपैत् ।
पशवो वा इळा ।
ततो वै पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु रूर इतिवृध्रोऽपश्यत्तस्माद्वेव रौरवमित्याख्यायते ।
अथ यौधाजयम् ।
इन्द्रो वै युधाजीवन्नेतत्सामापश्यत् ।
यदिन्द्रो युधाजीवन्नेतत्सामापश्यत्तद्यौधाजयस्य यौधाजयत्वम् ।
अयुध इव द्विषन्तं भ्रातृव्यं जयति य एवं वेद ।
युधाजीवो वैश्वामित्रः प्रतिष्ठाकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स प्रत्यतिष्ठत् ।
तदेतत्प्रतिष्ठा साम ।
प्रतितिष्ठति य एवं वेद ।
यदु युधाजीवो वैश्वामित्रोऽपश्यत्तस्माद्वेव यौधाजयमित्याख्यायते १२२

यौधाजयेन वै देवा असुरान्संविच्य रौरवेणैषां रवमाणानां स्वमाददत ।
यौधाजयेनैव द्विषन्तं भ्रातृव्यं संविच्य रौरवेणास्य रवमाणस्य स्वमादत्ते य एवं वेद ।
रौरवेण वै देवा ऊर्ध्वास्स्वर्गं लोकमारोहन् ।
तानसुरा ओ वा इत्येवान्वारोहन् ।
तद्देवाः प्रत्यबुध्यन्त ।
त एतं स्तोभमपश्यन् ।
तेनैनानो हा उ वा इत्यवाचोऽवाघ्नन् ।
उत्सो देवो हिरा हा उ वा इति भूमिस्पृश एवाकुर्वन् ।
अन्तगतमिव सामासीत् ।
ऊर्ध्वस्स्वर्गो लोक एव यच्छेत् ।
ऊर्ध्वं प्रतिहारादुद्गाता ।
स्वर्गस्य लोकस्य समष्ट्यै ।
णयाया औ हो वा हो इळा इति ।
स्वरेणैव संतत्य स्वर्गं लोकं समश्नुते ।
एतावन्ति ह खलु वै सामान्येतावती सामक्ळ्प्तिरेतावानु सामबन्धुः ।
स्वारं भवति ।
प्राणो वै स्वरः ।
अथ निधनवत् ।
आत्मा वै निधनम् ।
अथैळम् ।
पशवो वा इळा ।
प्राणमात्मानं पशूंस्तानेवैतत्संदधाति ।
सर्वयास्य सामक्ळ्प्त्या सर्वेण सामबन्धुना स्तुतं भवति य एवं वेद १२३

द्वे उ ह वाव सामनी स्तोभवच्चैवास्तोभवच्च ।
तयोर्यत्स्तोभवत्तत्क्षत्रमथ यदस्तोभवत्तद्ब्रह्म ।
उभयं ब्रह्म च क्षत्रं चावरुन्द्धे य एवं वेद ।
अथ यौधाजयं त्रिणिधनं सवनानां क्ळ्प्त्यै ।
पवमानेन वै देवेभ्योऽन्नाद्यं प्रदीयते ।

तन्मध्येनिधनं भवत्यन्नाद्यस्य विशेषाय ।
यद्धि देवेभ्यस्सर्वमन्नाद्यं प्रदीयते न तदिहान्नद्यं परिशिष्येत यन्मनुष्याश्च पशवश्चोपजीवेयुः ।
तद्यन्मध्येनिधनं भवत्यन्नाद्यस्यैव विशेषाय ।
देवानां वा असुरा यज्ञवेशसमचिकीर्षन् ।
यावत्येतद्दक्षिणानां काले न स्तुवन्ति न शंसन्ति ।
तद्देवाः प्रत्यबुध्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ते प्रातस्सवनमेव प्रथमेन निधनेन पर्यगृह्णन्माध्यंदिनं द्वितीयेन तृतीयसवनं तृतीयेन ।
तानेव वज्रानुदयच्छन् ।
तानेव वज्रानुद्यतानसुरा नोपाधृष्णुवन् ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
अथ ह स कॢप्त एव पवमानो यस्मिन्नधि त्रिणिधनं भवति सवनानामेव कॢप्त्यै १२४

देवासुरास्संयत्ता ज्योङ्न व्यजयन्त ।
बृहस्पतिर्देवानां पुरोहित आसीदुशना काव्योऽसुराणाम् ।
तद्यदेवावस्ताद्ब्रह्माक्रियत तत्परस्तादक्रियत ।
तत्समानं ब्रह्म न व्यजयत ।
तेषां ह त्रिशीर्षा गन्धर्वो विजयस्यावेत् ।
स हेर्ष्युरास ।
तस्य हाप्स्वन्तर्नौनगरं परिप्लवमास ।
तदिन्द्रोऽन्वबुध्यत त्रिशीर्षा वै नौ विजयस्य वेदेति ।
तस्य जायामुपार्च्छदेतस्यैव विजयस्य कामाय ।
तामब्रवीत्पृच्छतात्पतिं य इमे देवासुरास्संयत्ता ज्योगभूवन्कतर एषां जेष्यन्तीति ।
तद्धैव संवदमानावाजगाम ।

स ह तदेव नौमराड उपशिश्लेष जलायुका वा तृणकं वा भूत्वा ।
सेयं पतिं पप्रच्छ य इमे देवासुरास्संयत्ता ज्योगभूवन्कतर एषां जेष्यन्तीति
१२५

मोच्चैरिति होवाच कर्णिनी वै भूमिरिति ।
तदिदमप्येतर्ह्याहुर्मोच्चैः कर्णिनी वै भूमिरिति ।
नेति होवाच ब्रूह्येवेति ।
स होवाच ब्राह्मणाविमौ समं विदतुर्बृहस्पतिरयं देवेषूशना काव्योऽसुरेषु ।
तौ यत्कुरुतस्तत्सममेव यच्छति ।
या इतर आहुतीर्जुहोति ता इतरः ।
तास्समेत्य यथायथमेव पुनर्विपरायन्ति ।
तयोर्यतरो यतरानुपसमेष्यति ते जेष्यन्तीति ।
तद्धैवेन्द्रोऽनुबुध्य शुको भूत्वोत्पपात ।
तं हान्वीक्ष्य पतन्तमुवाच येषामसौ हरितवर्णकः पतति ते जेष्यन्तीति ।
स होशनसं काव्यमाजगामासुरेषु ।
तं होवाचर्षे कमिमं जनं वर्धयस्यस्माकं वै त्वमसि वयं वा
तवास्मानभ्युपावर्तस्वेति ।
कथेति होवाच केन मोपमन्त्रयस इति ।
या इमा विरोचनस्य प्राह्लादेः कामदुघस्ताभिरिति ।
तथेति ।
ताभिर्ह प्र त्वित्येव प्रदुद्रुवतुः ।
तौ हासुरा अन्ववजहिरे ।
तौ हान्वाजग्मुः ।
स होवाचर्षेऽनु वै नाविमेऽसुरा आग्मन्निति ।
स वै तथा कुर्विति होवाच यथा नावेते नान्वागच्छानिति तौ
हैतत्प्रतिपेदाते - १२६

स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः इति ।
आ दिवो विष्टम्भमुच्छिश्रियतुः ।

तं हैवासुरा नातीयुः ।
तौ हाभिः कामदुघाभिर्देवानाजग्मतुः ।
तौ हागतौ महयां चक्रिरे
ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन
स चिद्विवेद निहितं यदासामपीच्यं गुह्यं नाम गोनाम्
इति ।
ता एताः पशव्या ऋचः ।
अव पशून्रुन्द्धे बहुपशुर्भवत्येताभिर्ऋग्भिस्तुष्टुवानः ।
तास्वौशनम् ।
उशना वै काव्यो देवेष्वमर्त्यं गन्धर्वलोकमैच्छत ।
स एतत्सामापश्यत् ।
तेनातुत ।
ततो वै स देवेष्वमर्त्यं गन्धर्वलोकमाश्नुत ।
तदेतल्लोकवित्साम ।
अश्नुते देवेष्वमर्त्यं गन्धर्वलोकमेतेन तुष्टुवानः ।
यदुशना काव्योऽपश्यत्तस्मादौशनमित्याख्यायते ।
तत्स्वारं भवति ।
स्वरेण वै देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते ।
ऋक्समं पवमानान्ते भवति ।
नर्चा सामातिरेचयन्ति नर्चं साम्ना ।
तद्यदिहेव चेहेव च पवमने न स्तुवत एतस्यैव समतायै समं क्ळ्प्त्यै ।
पदानुस्वारं पुरस्ताद्गायत्रं भवति पदानुस्वारमुपरिष्टात्पवमानान्ते ।
तस्मादुभयतःप्राणाः प्रजा ऊर्ध्वाश्चावाचीश्च ।
द्विषाम्नी गायत्री ।
योऽयमवाङ्प्राण एष एव सः ।
तस्मादेतेन द्वयं प्राणेन करोति भस्म च करोति वातं च ।
द्विषाम्नी बृहती ।
योऽयं प्राङ्प्राण एष एव सः ।
तस्मादेतेन द्वयं प्राणेन करोति रेतश्च सिञ्चति मेहति च ।
एकसाम्नी त्रिष्टुप् ।

नाभिरेव सा ।
तस्यामेकं साम ।
तस्मादेतेनैकमेव प्राणेन करोति यदेव प्राणानुदनतोऽनूदनिति १२७

प्रजापतिर्यद्बृहद्रथन्तरे असृजत स मन एवाग्रे बृहदपश्यत् ।
वाचं रथन्तरमभिव्याहरत् ।
तद्यद्वाचं रथन्तरमभिव्याहरत्तस्माद्रथन्तरं पूर्वं योगमानशे ।
अथ यन्मनोऽग्रे बृहदपश्यत्तस्मादु बृहद्रथन्तरे इत्याख्यायेते ।

मनो वै पूर्वमथ वाक् ।
मनो वै बृहद्वाग्रथन्तरम् ।
ऋग्वै रथन्तरं साम बृहत् ।
ब्रह्म वै रथन्तरं क्षत्रं बृहत् ।
इदं वै रथन्तरमदो बृहत् ।
यद्वा एजत इव तद्राथन्तरं यदुपस्थितं तद्बार्हतम् ।
ये वा अन्यतोदन्ताः पशवस्ते राथन्तरा य उभयतोदन्तास्ते बार्हताः ।
या वै तिरश्ची विद्युत्सा राथन्तरी योर्ध्वा सा बार्हती ।
रथन्तरस्य महिम्नस्संभृत्य रथन्तरेणोद्गायेद्यस्ते अग्नौ महिमा यस्ते रथे यस्ते महिमा स्तनयित्नौ य उ ते वाते यस्ते महिमा तेन संभव रथन्तर द्रविणस्वन्न एधि इति ।
द्रविणस्वदेवोद्गात्रे भवति द्रविणस्वद्यजमानाय द्रविणस्वत्प्रजाभ्यः १२८

देवासुरा अस्पर्धन्त ।
ते देवा वज्रं क्षुरपविमसृजन्त पुरुषमेव ।
तमसुरानभ्यवृञ्जन् ।
सोऽसुरानपोह्य देवानभ्यावर्तत ।
तस्माद्देवा अबिभयुः ।
तमभिपद्य बृहद्रथन्तरयोः प्रौहन् ।
स एष वज्रः क्षुरपविर्बृहद्रथन्तरयोः पुरुष एव ।
स यं द्विष्याद्बृहद्रथन्तरयोरेनं मुखेऽपिदध्यात् ।

यदि राथन्तरस्सोमस्स्याद्रथन्तरे प्रस्तुते ब्रूयान्नमो मात्रे पृथिव्यै रथन्तर मा मा हिंसीः इति ।
यदि बार्हतस्सोमस्स्याद्बृहति प्रस्तुते ब्रूयाद्दिवं पितरमुपश्रये बृहन्मा मा हिंसीः इति ।
अथानुमन्त्रयेत प्राणैरमुष्य प्राणान्वृङ्क्ष्व ।
तद्घणेन तेद्घणीयसायुरस्य प्राणान्वृङ्क्ष्व ।
क्रुद्ध एनं मन्युना दण्डेन जहि ।
धनुरेनमातत्येष्वा विध्य इति ।
बृहद्रथन्तरयोरेवैनं मुखेऽपिदधाति ।
यं द्वेष्टि तं पुरा संवत्सरात्प्राणो जहाति ।
यो वै देवरथं वेद रथी भवति ।
यज्ञो वाव देवरथः तस्य बहिष्पवमानमेव रथमुखं बृहद्रथन्तरे अश्वावाज्यानि योक्त्राण्यभीशू पवमानौ पद्घसी - १२९

औशनकावे आणी नौधसकालेये वन्धुराधिष्ठानं वामदेव्यमुपस्थो यज्ञायज्ञीयमध्यास्थाता स एष पुरुषः ।
एष वै देवरथः ।
रथी भवति य एवं वेद ।
यदि राथन्तरस्सोमस्स्याद्बृहन्नान्तर्यात् ।
यदि बार्हतस्सोमस्स्याद्रथन्तरं नान्तर्यात् ।
हो वै बृहद्राथन्तरम् ।
रथन्तरे प्रस्तुते हो इत्युक्त्वादिमाददीत ।
बृहदेव तद्रथन्तरस्य मुखतो युनक्ति ।
आ वै रथन्तरं बार्हतम् ।
बृहति प्रस्तुते आ इत्युक्त्वादिमाददीत ।
रथन्तरमेव तद्बृहतो मुखतो युनक्ति ।
अस्थूरिं देवरथं करोति प्रति यज्ञं स्थापयति प्रत्यात्मना तिष्ठति ।
एष वै देवरथो यद्रथन्तरम् ।
रथन्तरे प्रस्तुते पृथिवीं हस्ताभ्यां गच्छेद्देवरथस्यानपव्याथाय १३०

एकमक्षरं स्तोभति ।
तस्मादरेणारेण रथः प्रतितिष्ठन्नेति ।
द्वे अक्षरे स्तोभति ।
द्वे रथस्य पक्षसी ।
पक्षाभ्यामेव तद्देवरथं प्रतिष्ठापयति ।
त्रीण्यक्षराणि स्तोभति ।
द्विपाद्वै यजमान आत्मा तृतीयः ।
यजमान एव तत्प्रतितिष्ठति ।
अथो त्रय इमे लोकाः ।
तानेव तदाप्नोति ।
चत्वार्यक्षराणि स्तोभति ।
चतस्रो दिशश्चतुष्पादाः पशवः ।
दिक्षु चैतत्पशुषु च प्रतितिष्ठति ।
पञ्चाक्षराणि स्तोभति ।
पाङ्क्तो यज्ञः पाङ्क्ताः पशवः ।
यज्ञे चैतत्पशुषु च प्रतितिष्ठति ।
षडक्षराणि स्तोभति ।
षड्वा ऋतवः ।
ऋतुष्वेव तत्प्रतितिष्ठति ।
अथो षड्वै छन्दांसि ।
तान्येव तदाप्नोति ।
सप्ताक्षराणि स्तोभति ।
सप्तपदा वै शक्वर्यः ।
शाक्वराः पशवः ।
पशुष्वेव तच्छक्वर्यां प्रतितिष्ठति ।
अथो सप्त चतुरुत्तराणि छन्दांसि सप्त मुख्याः प्राणाः ।
तान्येव तदाप्नोति ।
अष्टावक्षराणि स्तोभति ।
अष्टाक्षरा वै गायत्री ।
तेजो ब्रह्मवर्चसं गायत्री ।

तेजस्येव तद्ब्रह्मवर्चसे प्रतितिष्ठति ।
अथो अष्टाशफेष्वेव पशुषु १३१

नवाक्षराणि स्तोभति ।
नव वै पुरुषे प्राणाः ।
प्राणानेवैतद्द्विषतो भ्रातृव्यस्य वृङ्क्ते ।
प्राणानात्मन्धत्ते ।
अथो त्रिवृत एव स्तोमस्य स्तोत्रमाप्नोति ।
दशाक्षराणि स्तोभति ।
दशाक्षरा विराडन्नं विराट् ।
विराज्येव तदन्नाद्ये प्रतितिष्ठति ।
अथो दश प्राणाः ।
तानेव तदाप्नोति ।
एकादशाक्षराणि स्तोभति ।
एकादशाक्षरा त्रिष्टुप् ।
इन्द्रियं वीर्यं त्रिष्टुप् ।
इन्द्रिय एव तद्वीर्ये प्रतितिष्ठति ।
द्वादशाक्षराणि स्तोभति ।
द्वादशाक्षरा वै जगती ।
पशवो जगती ।
पशुष्वेव तज्जगत्यां प्रतितिष्ठति ।
अथो द्वादश मासाः ।
तानेव तदाप्नोति ।
त्रयोदशाक्षराणि स्तोभति ।
य एवासावधिचरस्त्रयोदशो मास तमेव तदाप्नोति ।
चतुर्दशाक्षराणि स्तोभति ।
संवत्सरो वै चतुर्दशः ।
संवत्सर एव तत्प्रतितिष्ठति ।
पञ्चदशाक्षराणि स्तोभति ।
पञ्चदश वा अर्धमासस्य रात्रयः ।

अर्धमासश एव संवत्सरमाप्नोति ।
षोडशाक्षराणि स्तोभति ।
षोडशकलो वै पुरुषः ।
कला एव तद्द्विषन्तं पाप्मानं भ्रातृव्यमवाञ्चमपवहन्ति श्रियमात्मनाश्नुते ।
अथो षोडशिन एव स्तोभस्य स्तोत्रमाप्नोति ।
सप्तदशाक्षराणि स्तोभति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतावेव तत्प्रतितिष्ठति १३२

एतदन्यत्स्तोभेत् ।
ऋचमेव न गायेत् ।
स यदृचमेव गायति तेन रथन्तरस्य रूपान्नैति ।
ऋग्घि रथन्तरं साम बृहत् ।
यद्यु स्तोभेदष्टावेवाक्षराणि स्तोभेत् ।
तद्वेव संमीलते ।
स्वर्दृशं प्रतिविपश्येच्चक्षुषोऽप्रवर्हाय ।
यदीशानमिन्द्र इति प्रतिहरेदीशानो यजमानस्य पशूनभिमानुकस्स्यात् ।
अथ यच्छानमिन्द्र इति प्रतिहरति नेशानो यजमानस्य पशूनभिमन्यते शान्ताः प्रजा एधन्ते ।
प्रतिहारेप्रतिहार उद्गात इळा इद्ब्रूयात् ।
पशवो वा इळायतनं रथन्तरम् ।
आयतन एव तदेतान्पशून्प्रतिष्ठापयति ।
नस्थुषः इति ब्रूयात् ।
यत्तस्थुषः इति ब्रूयात्स्थायुकास्य श्रीस्स्यात् ।
अथ यन्नस्थुषः इत्याह नास्य श्रीस्तिष्थति पशवोऽस्य स्वायातेन यान्ति ।
बृहद्रथन्तरे व्यावर्तयेत् ।
यद्ध वै बृहद्रथन्तरे न व्यावर्तयेद्यथा महावृक्षौ समृत्य शाखा विपरिश्शृणीत एवं प्रजाः पशून्विपरिश्शृणीयाताम् ।
हो वा हा वै बृहदो वा हा रथन्तरम् ।
बृहद्रथन्तरे एवैतद्व्यावर्तयति वि पाप्मना वर्तते य एवं वेद १३३

यथा स्यादेवं बुभूषन्नुपेयात् ।
यथा स्यादेवं भ्रातृव्यवान् ।
जयत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
बृहद्रथन्तरे यदसृज्येतां ताभ्यां भीषा प्रजाः पशव उदवेपन्त ।
ते आत्मानमेव पर्यैक्षेतां किं नु नाविदं क्रूरं इवात्मनो यस्माद्भीषा प्रजाः पशव उदवेपिषतेति ।
ते निधने एवापश्यताम् ।
ते अरण्ये निधाय ग्राममभ्यवैताम् ।
तदेव स्वकृतमिरिणमभवत् ।
तस्मादाहुर्न स्वकृतमिरिणमध्यवसेयम् ।
ईश्वरः पापीयान्भवितोर्यत्स्वकृतमिरिणमध्यवस्यतीति ।
बृहद्रथन्तरयोर्ह वा एतन्निधनाभ्यां निर्दग्धम् ।
ते ह वा एते ग्रामगेये एवापनिधने यद्बृहद्रथन्तरे ।
कामं ह वा एताभ्यामपनिधनाभ्यां ग्रामे स्तुवीत १३४

अष्टाक्षरेण प्रस्तौति ।
द्व्यक्षरेणोत्तरे प्रस्तौत्यभिक्रान्त्या अनपभ्रंशाय ।
अष्टाक्षरेण प्रस्तौति ।
द्व्यक्षरेणोत्तरे प्रस्तौति ।
द्विपादमेव तदष्टाशफेषु पशुष्वध्यूहति ।
तस्माद्द्विपादष्टाशफान्पशूनधितिष्ठति ।
अष्टाक्सरेण प्रस्तौति ।
द्व्यक्षरेणोत्तरे द्वे प्रस्तौति ।
तद्द्वादश संपद्यन्ते ।
द्वादश मासास्संवत्सरः ।
संवत्सरः प्रजापतिर्यज्ञः ।
संवत्सरमेवैतेन प्रजापतिं यज्ञमाप्नोति ।
अक्षरेष्ठं रथन्तरं करोति ।
तस्मादरेणारेण रथः प्रतितिष्ठन्नेति ।

रथन्तरेण वै देवा संविच्य बृहता जालेनेवाभिन्यौब्जन् ।
रथन्तरेणैव द्विषन्तं भ्रातृव्यं संविच्य बृहता जालेनेवाभिन्युब्जति य एवं वेद ।
रथन्तरेण वै देवा ऊर्ध्वास्स्वर्गं लोकमायन् ।
तान्यसुररक्षसानि नव नवतय इमाँल्लोकानवृणवन् ।
रथा ह नामासुः ।
ते देवा रथन्तरेणैव स्तुत्वा रथन्तरं समारुह्य स्वर्गं लोकमगच्छन् ।
तेऽब्रुवन्नतारिष्म वा इमान्रथानिति ।
तदेव रथन्तरस्य रथन्तरत्वम् ।
तरति द्विषन्तं भ्रातृव्यं य एवं वेद १३५

अशनया ह वै रथा अन्नमु वै रथन्तरम् ।
अन्नेनाशनयां घ्नन्ति ।
तांतां अशनयां अन्नेन हत्वा स्वर्गं लोकमारोहन् ।
बृहता वै देवास्स्वर्गं लोकमजिगांसन् ।
तेन न व्याप्नुवन् ।
तस्मिन्नुष्णिक्कुभा उपादधुः ।
तेन व्याप्नुवन् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा बृहद्वावेदमभूद्येन स्वर्गं लोकं व्यापामेति ।
तदेव बृहतो बृहत्वम् ।
द्वादश बृहतो रोहान्रोहेत्स्वर्गकाम उदधिमर्दयेद्वृष्टिकामः ।
यावन्त्यु ह वै बृहत्या अक्षराण्युष्णिक्कुभोश्च तावदितस्स्वर्गो लोकः ।
प्र स्वर्गं लोकमाप्नोति य एवं वेद १३६

अथो बृहत् ।
मनो बृहत् ।
द्वादशाक्षरः प्रस्तावः ।
तावद्धि साम ।
द्वादश मासास्संवत्सरः ।
संवत्सरः साम ।

त्रयो बृहतो रोहा इम एव लोकाः ।
ते पुनर्नव भवन्ति प्राणा एव ।
मनो दशमम् ।
द्वादश बृहतस्तन्वो मासा एव ।
मासा रश्मयः ।
रश्मयो मरुतः ।
तैरसावादित्यो धृतः ।
स य एतदेवं वेद यत्र कामयत इह ध्रियेयेति ध्रियते तत्र ।
यो वै बृहतो बार्हतं पदं वेदोरु प्रजया पशुभिः प्रथते ।
द्वादशाक्षरं वाव बृहतो बार्हतं पदम् ।
तदायच्छतेव गेयम् ।
यो वै बृहति त्रिवृतं सदेवं प्रोढं वेद गच्छति क्षत्रमात्राम् ।
रोहा ह वाव बृहतस्त्रिवृत्सदेवः ।
ब्रह्मणोऽस्य सतः क्षत्रस्येव प्रकाशो भवति य एवं वेद ।
इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मन्यमानः परां परावतमगच्छत् ।
तं प्रजापतिरकामयत तत्स्यादिति ।
तमो हो इत्यन्वाह्वयत् ।
सोऽभवत् ।
ओ हो इत्येवापरुद्धो राजन्यः कुर्वीत ।
अव हैव गच्छति १३७

देवा वा असुरान्युधमुपप्रयन्तोऽब्रुवन्यन्नो वामं वसु तदपनिधाय युध्यामहै यदद्य कस्मिंश्चिद्भूतेऽभ्युपधावामेति ।
पशवो वाव तेषां वामं वस्वासीत् ।
तदपनिधाय युधमुपपरायन् ।
ते देवा असुरानजयन् ।
ते विजिग्यानाः पुनरायन्त एकं भूतमभ्यवायन् ।
तन्न व्यजानतेदं मम वाममिदं ममेति ।
तेऽब्रुवन्वीदं भजामहा इति ।
तस्य विभागे न समपादयन् ।

तेऽब्रुवन्प्रजापतावेव पृच्छामहा इति ।
ते प्रजापतावपृच्छत ।
स प्रजापतिरब्रवीत्सर्वेषामेव व एतद्वामं सह सर्वान्व एतेन स्तोष्यन्ति सर्वान्व एतदवैष्यति मा विभग्ध्वमिति ।
तद्यद्गायत्रीषु स्तुवन्ति तेनाग्नेयम् ।
गायत्र्यो ह्यग्निरिति ।
यत्पृष्ठं माध्यंदिनं तेनैन्द्रम् ।
यत्कवतीषु स्तुवन्ति तेन प्राजापत्यम् ।
यदनिरुक्तं तेन वैश्वदेवम् ।
यन्मैत्रावरुणाय स्तुवन्ति तेन मैत्रावरुणम् ।

तद्वा एतत्पशव्यं यद्वामदेव्यम् ।
अनेजन्नुद्गायेत्पशूनामपरावापाय ।
यदेजन्नुद्गायेत्पशून्परावपेत् ।
तदाहुः प्रावृतोऽनेजन्नुद्गायेन्नेन्मोपद्रष्टानुव्याहरादिति ।
तदुपकार्यरूपम् ।
प्रावृत एवानेजन्नुद्गायेत् १३८

अन्नं ह स्म वा एतत्पुरा विशश्शीर्षन्निदधति य एव तमुद्गायन्नावपातयिष्यति स न उद्गास्यतीति ।
तदु तदुपकार्यरूपमेव ।
काममेवोद्गेयम् ।
तस्य त्रीण्यक्षराणि छन्नानि गायति ।
त्रयो वा इमे लोकाः ।
प्रजापतिर्वामदेव्यं प्रजापतिर्लोकानामभिनेता ।
स यो प्रजापतिस्स्वर्गस्य लोकस्याभिनेता । स यस्स्वर्गस्य लोकस्याभिनेता स मा स्वर्गं लोकमभिनयादिति । लोकानामभिनेता स नो लोकानभिनयादिति ।
वामदेव्यस्य स्तोत्र ऋषभमप्यर्जेत् ।
सौ हौ खा इत्येवर्षभः ।

योनिर्वामदेव्यं प्रजननमृषभः ।
योन्यामेवैतत्प्रजननेन प्रजननमपिसृजति प्रजात्यै ।
तत्परोह्वमिव गेयम् ।
नर्चमुपस्पृशेत् ।
वयो वै वामदेव्यम् ।
यदृचमुपस्पृशेद्यथा वयोऽन्तरिक्षेण पतद्वृक्षमृच्छेत्तादृक्तत् ।
पदे अन्तरा नावान्यात् ।
यत्पदे अन्तरावान्याद्यथा कर्तं पतेत्तादृक्तत् ।
उत्तरस्य पदस्यारभ्यावान्यात् ।
स यथाक्रमणादाक्रमणमाक्रम्योदन्यात्तादृक्तत् १३९

विच्छिन्नमिव वा एतत्साम प्रतिहारं प्रति ।
कया शचायि वा र्तो हायीति संक्रामेदनादृत्य प्रतिहारम् ।
तदु तद्दुष्कररूपम् ।
सामि ताम्येत्तत् ।
प्रतिहार एव प्रतिह्रियमाणे वागित्युद्गाता ब्रूयात् ।
वाग्वै ब्रह्म ।
वाचैवैनत्तद्ब्रह्मणा संदधाति ।
आपो वै देवानां पत्नय आसन् ।
ता मिथुनमैच्छन्त ।
ता मित्रावरुणावुपैताम् ।
ता गर्भमदधत ।
ततो रेवतयः पशवोऽसृज्यन्त ।
रेवतीषु पशुकामस्य कुर्यात् ।
पशुमानेव भवति ।
ईश्वरो ह त्वप्रजातिर्भवितोः ।
कवतीभ्यो ह्येति प्राजापत्याभ्यः ।
अथ ह वा एतद्भरद्वाजः पृश्निस्तोत्रं ददर्श पशुकामः कया नश्चित्र आ भुवद्
। रेवतीर्न सधामदे । अभी षु नः सखीनामिति ।
स यदेकां रेवतीं मध्यतोऽपिसृजति तेन पशुभ्यो नैति ।

यदु कवत्यौ प्राजापत्ये अभितो भवतस्तेनो प्रजायै नैति ।
तत्स्वारं भवति ।
प्राणो वै स्वरः ।
प्राणानेवैतत्पशुषु दधाति ।
ईश्वरो ह तु स्वरेण यजमानस्य पशून्निःस्वरितोर्यद्यनिधनं कुर्यात् ।
प्राणानपिहन्यात् १४०

अविता जरायितॄणामा आउहो हा यि शतां भवस्यौहो हुं मा ता या हुं मा इत्युत्तमाया उत्तरार्धे कुर्यात् ।
स यथा व्रजे गा अनुपाद्यार्गलेनापिहन्यात्तादृक्तत् ।
तदाहुस्स्वयोनावेव तत्स्वारं कार्यम् ।
य एनमेवं चकृवांसमुपमीमांसेत स्वरेण यजमानस्य पशून्निरस्वारीरिति तं ब्रूयान्निधनवत्पुरस्ताद्रथन्तरं निधनवदुपरिष्टान्नौधसम् ।
ताभ्यां म एतदुभयतः प्रजाः पशवः परिगृहीताः ।
प्राणमेवैतदधां मध्यतः पशूनामिति ।
य एवैनमेवं चकृवांसमुपमीमांसते स आर्तिमार्छति ।
अष्टाक्षरा गायत्र्यष्टौ वसवः ।
गायत्रं प्रातस्सवनम् ।
अक्षरेऽक्षरे देवतान्वायत्ता ।
एकादशाक्षरा त्रिष्टुबेकादश रुद्राः ।
त्रैष्टुभं माध्यंदिनं सवनम् ।
अक्षरे-ऽक्षरे देवतान्वायत्ता ।
द्वादशाक्षरा जगती ।
द्वादशादित्याः ।
जागतं तृतीयसवनम् ।
अक्षरे-ऽक्षरे देवतान्वायत्ता ।
अथ किं प्रतियज्ञं यजमानमपिनयन्तीति ।
स ब्रूयात्प्रजापतिर्यद्वामदेव्यमसृजत तस्य त्रीण्यक्षराण्युदखिदत् ।
स एव त्र्यक्षरः पुरुषोऽभवत् ।
वामदेव्यस्य स्तोत्रे पुरुषः इति ब्रूयात् ।

तत्प्रतियज्ञं यजमानमपिनयन्तीति ।
तदाहुर्न पुरुषः इति ब्रूयात्परोक्षमेव ध्यायेन्मनसैव नियच्छेदिति ।
तदु वा आहुर्नैव परोक्षं ध्यायेन्न मनसा नियच्छेद्यद्वाव वेद तेनैवाप्तमिति
१४१

देवा वा असुरान्युधमुपप्रयन्तोऽब्रुवन्यन्नो वामं वसु तदपनिधाय युध्यामहै
यदद्य कस्मिंश्चिद्भूतेऽभ्युपधावामेति ।
प्राणा वाव तेषां वामं वस्वासीत् ।
तदपनिधाय युधमुपपरायन् ।
तदेकधा भूत्वा सृजमानमतिष्ठदृचस्सामानि यजूंषि गामश्वमजामविं व्रीहिं
यवं ब्राह्मणं राजन्यं वैश्यं शूद्रं यदिदं किं चित्तत्सर्वम् ।
तदेभ्य आचक्षतेदं वै वस्तद्वामं वस्वेकधा भूत्वा सृजमानं तिष्ठतीति ।
ते देवा असुरानजयन् ।
ते विजिग्यानाः पुनरायन्त एकं भूतमभ्यवायन् ।
तन्न व्यजानतेदं मम वाममिदं ममेति ।
तेऽब्रुवन्वीदं भजामहा इति ।
तस्य विभागे न समपादयन् ।
तदेवैनानब्रवीत्सर्वानेव वो मया स्तोष्यन्ति सर्वान्वोऽहमवैष्यामि मा मा
विभग्ध्वमिति ।
तद्यद्गायत्रीषु स्तुवन्ति तेनाग्नेयम् ।
गायत्र्यो ह्यग्निरिति ।
यत्पृष्ठं माध्यंदिनं तेनैन्द्रम् ।
यत्कवतीषु स्तुवन्ति तेन प्राजापत्यम् ।
यदनिरुक्तं तेन वैश्वदेवम् ।
यन्मैत्रावरुणाय स्तुवन्ति तेन मैत्रावरुणम् ।
तदेनानब्रवीत्सृजध्वं मदिति ।
तथेति ।
तदभ्यस्वरन् ।
तेऽब्रुवन्सृजस्वेति १४२

तद्रथन्तरमसृजत ।
तद्रथघोषोऽन्वसृज्यत ।
तेऽब्रुवन्नरात्स्मानेन स्तोत्रेणेति ।
तस्माद्रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्ति ।
अरात्स्मानेन स्तोत्रेणेत्येव तद्विद्यात् ।
तदब्रुवन्सृजस्वैवेति ।
तद्बृहदसृजत ।
तत्पर्जन्यस्य घोषोऽन्वसृज्यत ।
तेऽब्रुवन्नरात्स्मानेन स्तोत्रेणेति ।
तस्माद्बृहतस्स्तोत्रे दुन्दुभीनुद्वादयन्ति ।
वर्षुकः पर्जन्यो भवति ।
अरात्स्मानेन स्तोत्रेणेत्येव तद्विद्यात् ।
तदब्रुवन्सृजस्वैवेति ।
तद्वैरूपमसृजत ।
तद्ग्रामघोषोऽन्वसृज्यत ।
तेऽब्रुवन्नरात्स्मानेन स्तोत्रेणेति ।
तस्माद्वैरूपस्य स्तोत्रे ग्रामघोषं कुर्वन्ति ।
अरात्स्मानेन स्तोत्रेणेत्येव तद्विद्यात् ।
तदब्रुवन्सृजस्वैवेति ।
तद्वैराजमसृजत ।
तदग्नेर्घोषोऽन्वसृज्यत ।
तेऽब्रुवन्नरात्स्मानेन स्तोत्रेणेति ।
तस्माद्वैराजस्य स्तोत्रेऽग्निं मन्थन्ति ।
अरात्स्मानेन स्तोत्रेणेत्येव तद्विद्यात् ।
तदब्रुवन्सृजस्वैवेति ।
तच्छाक्वरमसृजत ।
तदपां घोषोऽन्वसृज्यत ।
तेऽब्रुवन्नरात्स्मानेन स्तोत्रेणेति ।
तस्माच्छाक्वरस्य स्तोत्रेऽप उपनिधाय स्तुवन्ति ।
अरात्स्मानेन स्तोत्रेणेत्येव तद्विद्यात् ।

तदब्रुवन्सृजस्वैवेति ।
तद्रैवतमसृजत ।
तत्पशुघोषोऽन्वसृज्यत ।
तेऽब्रुवन्नरात्स्मानेन स्तोत्रेणेति ।
तस्माद्रैवतस्य स्तोत्रे पशुघोषं कुर्वन्ति वत्सान्मातृभिस्संवाशयन्ति ।
अरात्स्मानेन स्तोत्रेणेत्येव तद्विद्यात् ।
तदब्रुवन्सृजस्वैवेति १४३

तन्नासृजत ।
तदूर्ध्वमुदैषद्यथा पृष्ठं यथा ककुदेवम् ।
तद्देवास्संगृह्योर्ध्वा उदायन् ।
तेऽब्रुवन्नियद्वावेदमासेदं वाव नो देवानां वाममिति ।
यदब्रुवन्नियद्वावेदमासेदं वाव नो देवानां वाममिति वामदेव्यस्य तद्वामदेव्यत्वम् ।
तद्वा एतत्पिता माता साम्नां यद्वामदेव्यम् ।
यद्वै पुत्रोऽतिपादयति पिता वै तस्य शमयिता पिता निषेद्धा ।
तद्यन्मध्यतः क्रियते शान्त्या एव निषिद्ध्यै ।
तद्यानि ह वै स्तुतानि सामानि पश्चात्त्वत्तेषां वामदेव्यम् ।
अथ यान्यस्तुतानि पुरस्त्वत्तेषाम् ।
तेषामुभयेषां शान्त्यै निषिद्ध्यै ।
तत्स्वधूर्गेयं नोच्चैरिव न नीचैरिव ।
यदुच्चैर्गायेच्छ्रेयसो भ्रातृव्यस्य नियानेन यायात् ।
यन्नीचैर्गायेत्पापीयसो भ्रातृव्यस्य नियायेन यायात् ।
इयं वावैतस्य धूरिदमन्तरिक्षम् ।
एतदेवैनं धूर्वति य एवं विद्वांसं धूर्वतीति ।
तदाहुः प्रादेशमात्राद्वा एतदिमं लोकं न स्पृशति प्रादेशमात्रादमुं नेति ।
अथो आहुर्यावदेव गोस्सूताया उल्बं तावतैवेमं लोकं न स्पृशति तावतामुं नेति ।
अथो आहुर्यावदेव शकृत्युल्बं तावतैवेमं लोकं न स्पृशति तावतामुं नेति ।
तदेवमिवैव मन्यमानेन गेयम् ।

तदु वा आहुर्यथा वा अन्तरेण चक्रौ विष्टब्धावेवमेतेनेमौ लोकौ विष्टब्धौ ।
नीवेमं लोकं स्पृशति नीवामुमिति ।
नो हान्यस्यानुवर्त्म गेयम् ।
ईश्वरो होपजीवी भवितोर्योऽन्यस्यानुवर्त्मा गायति ।
स्वधूरेव गेयम् ।
यो वै देवानां मधु वेद मधव्यो भवति ।
वामदेव्यं वाव देवानां मधु ।
मधव्यो भवति य एवं वेद १४४

इमौ वै लोकौ सह सन्तौ व्यैताम् ।
तयोर्न किं चन समपतत् ।
ते देवमनुष्या आशनायन् ।
इतःप्रदानाद्धि ते देवा जीवन्त्यमुतःप्रदानान्मनुष्याः ।
ते बृहद्रथन्तरे अब्रूतां ये नाविमे प्रिये तन्वौ ताभ्यां विवहावहा इति ।
श्यैतं ह वा अग्रे रथन्तरस्य प्रिया तनूरास नौधसं बृहतः ।
ताभ्यां व्यवहेताम् ।
ऊषानेवासावमुतोऽस्यै शुल्कमकरोद्धूममित इयममुष्यै ।
वर्षमेवासावमुतोऽस्यै शुल्कमकरोद्देवयजनमित्यियममुष्यै ।
सवहतू उ हैने वेद य एवं वेद ।
मेनामेनं वाव ते तद्व्यवहेताम् ।
तस्मादाहुर्न मेनामेनं व्यूह्यमिति ।
बृहद्रथन्तरयोर्ह वा एष विवाहमभ्यारोहति ।
स ईश्वरः पराभवितोः ।
ते तन्वावब्रूतामावं नु निधनाभ्यां विवहावहा इति १४५

पदनिधनं ह वा अग्रे श्यैतमास वसुनिधनं नौधसम् ।
ताभ्यां व्यवहेताम् ।
ततो ह वा इदमर्वाचीनमन्योन्यस्य गृहे वसन्ति ।
यथागृहं ह वाव ततः पुरोषुर्यथाज्ञाति वा ।
रथन्तरेण स्तुवन्ति ।

इदं वै रथन्तरम् ।
अथ वामदेव्येन ।
इदं वा अन्तरिक्षं वामदेव्यम् ।
अथ नौधसेन ।
अदो वै नौधसम् ।
अनन्तर्हितानेवेत ऊर्ध्वाँल्लोकाञ्जयति ।
बृहता स्तुवन्ति ।
अदो वै बृहत् ।
अथ वामदेव्येन ।
इदं वा अन्तरिक्षं वामदेव्यम् ।
अथ श्यैतेन ।
इदं वै श्यैतम् ।
अनन्तर्हितानेवामुतोऽर्वाचो लोकाञ्जयति ।
उभयाँल्लोकाञ्जयति ये चोर्ध्वा ये चार्वाञ्चो य एवं वेद १४६

अथ नौधसम् ।
नोधा वै काक्षीवतो ज्योगप्रतिष्ठितश्चरन्सोऽकामयत प्रतितिष्ठेयमिति ।
स ह देवान्ब्रह्म विभजमानानुपावपपात ।
स होवाचर्षिरस्मि मन्त्रकृत्स ज्योगप्रतिष्ठितोऽचार्षं तस्मै म एतद्दत्त येन प्रतितिष्ठेयमिति ।
तस्मै ह ब्रह्मणो रसमददुः ।
तदेव नौधसमभवत् ।
तेनास्तुत ।
ततो वै स प्रत्यतिष्ठत् ।
तदेतत्प्रतिष्ठा साम ।
प्रतितिष्ठति य एवं वेद ।
ब्रह्मणो ह वा एष रसो यन्नौधसम् ।
ब्रह्मणो हास्य रसेन स्तुतं भवति य एवं विद्वान्नौधसेन स्तुते ।
तद्द्व्यक्षरणिधनं भवति प्रतिष्टायै ।
द्विपाद्वै यजमानः प्रतिष्ठित्यै ।

यदु नोधाः काक्षीवतोऽपश्यत्तस्मान्नौधसमित्याख्यायते १४७

श्यैतं पशुकामः कुर्वीत ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
सोऽकामयत न मत्पशवोऽपक्रामेयुरभि मावर्तेरन्निति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तस्य वसु इत्येव निधनमुपैत् ।
तत्पशवो वै वसु ।
ततो वै तं पशवोऽभ्यावर्तन्त ।
ततोऽस्मादनपक्रामिणोऽभवन् ।
सोऽब्रवीच्छ्येती वा इमान्पशूनकृषीति ।
तदेव श्यैतस्य श्यैतत्वम् ।
तदेतत्पशव्यं साम ।
श्येतीकृता एनं पशव उपतिष्ठन्तेऽभ्येनं पशव आवर्तन्ते
नास्मात्पशवोऽपक्रामन्ति य एवं वेद ।
तद्द्व्यक्षरणिधनं भवति प्रतिष्ठायै ।
द्विपाद्वै यजमानः प्रतिष्ठित्यै १४८

गोतमस्य मनार्ये मनोऽपक्रान्तः कुर्वीत ।
गोतमाद्वै मनोऽपाक्रामत् ।
सोऽकामयत न मन्मनोऽपक्रामेत्पुनर्मा मन आविशेदिति ।
स एते सामनी अपश्यत् ।
ताभ्यामस्तुत ।
ततो वै तं पुनर्मन आविशन्नास्मान्मनोऽपाक्रामत् ।
षनं पुनर्मनो विशति नास्मान्मनोऽपक्रामति य एवं वेद ।
तत्पिबा इति रथन्तरसाम्नः पिबाई इति बृहत्साम्नः ।
यदु गोतमोऽपश्यत्तस्माद्गोतमस्य मनार्ये इत्याख्यायेते १४९

वसिष्ठस्य जनित्रे प्रजननकामः कुर्वीत ।
वसिष्ठो वै जीतो हतपुत्रोऽकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एते सामनी अपश्यत् ।
ताभ्यामस्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
ते एते प्रजननी सामनी ।
बहुः प्रजया पशुभिः प्रजायते य एवं वेद ।
तज्जनित्रमिति रथन्तरसाम्नः जानित्रामिति बृहत्साम्नः ।
यदु वसिष्ठोऽपश्यत्तस्माद्वसिष्ठस्य जनित्रे इत्याख्यायेते १५०

पौरुमीढं दक्षणिधनमायुष्कामः कुर्वीत ।
तरन्तपुरुमीढौ वै वैतदश्वी माहेयौ मह्या आर्चनानस्यै पुत्रौ ।
तौ ह यन्तौ स्त्री परेत्योवाच पुत्रस्य वै त्यस्या उपतपति तं स्म मे चिकित्सतमिति ।
तौ ह क्रुध्यन्ताविवोचतुः कथं नावित्थं ब्रूयादिति तं वा अर्वीष उपवपेति ।
सा हेयं स्त्री श्रद्धाय देवर्षी मा मन्त्रकृताववोचतामित्यर्वीष उपोवाप ।
तौ ह पुनरायन्तौ परेत्योवाच यं वै कुमारमवोचतमर्वीष उपवपेत्ययं वै सोऽर्वीष उपोप्तश्शेत इति ।
तौ हासाध्विव कृत्वा मेनाते ।
तावकामयेतामिदित इयाव गातुं नाथं विन्देवहि समयं कुमारो जीवेदिति ।
स एतत्पुरुमीढस्सामाप्श्यत् ।
तेनास्तुत
अग्निमीळिष्वावसे गाथाभिश्शीरशोचिषम् । अग्निं राये पुरुमीढ श्रुतं नरः को नाम कुमार इति ।
सुदीतिर्नामेति ।
तमग्निस्सुदीतये छर्दिः इत्येवाभ्यमृशत् ।
स तान्तो निरवर्तत ।
तमेतेन निधनेन समैरयद्दक्षाया इति ।

प्राणा वै दत्ताः ।
प्राणानेवस्मिंस्तददधात् ।
तदेतद्गातुविन्नाथवित्साम ।
गातुं वै स तन्नाथमविन्दत ।
विन्दते गातुं नाथं य एवं वेद ।
यदु पुरुमीढोऽपश्यत्तस्मात्पौरुमीढं दत्तणिधनमित्याख्यायते १५१

जमदग्नेस्सप्तहमभिचरन्वा भ्रातृव्यवान्वा कुर्वीत ।
जमदग्निर्ह वै महेनानां पुरोहित ग्रास ।
तान्ह वित्तेनात्यादधौ ।
त उ हैनमुपजिहिंसुः ।
स हेत्तां चक्रे कथं न्वहमेषां सप्तसप्तैकाहनि ग्राम्याणां पशूनां हन्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स तेषां सप्तसप्तैकाहनि ग्राम्याणां पशूनामहन् ।
तथो एवैषामेतद्घ्नन्ति ।
तदु भ्रातृव्यहा ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
यदु जमदग्निरपश्यत्तस्माज्जमदग्नेस्सप्ताहमित्याख्यायते ।
तदेषोपगीता
ग्रतिमात्रमवर्धन्त नोदिव दिवमस्पृशन् । भृगुं हिंसित्वा माहेना ग्रसंहेयं पराभवन्
इति ।
ग्रसंहेयं ह वै स पराभवति य एवं विद्वांसं हिनस्ति १५२

देवासुरा यज्ञेऽस्पर्धन्त ।
ते देवा ग्रसुरान्बहिष्पवमानान्निरवाघ्नन् ।
तेऽसुरा ग्राग्नेयमाज्यं पर्यवायन् ।
ते देवा मैत्रावरुणम् ।
तेऽसुरा षन्द्रम् ।

ते देवा षन्द्राग्नम् ।
तेऽसुरा माध्यंदिनं पवमानम् ।
ते देवा रथन्तरम् ।
तेऽसुरा वामदेव्यम् ।
ते देवा नौधसम् ।
तेऽसुराः कालेयम् ।
तान्कालेय एवान्वभ्यवायन् ।
तान्कालेयेनैव कालेयादकालयन्त ।
यदकालयन्त तत्कालेयस्य कालेयत्वम् ।
कालयते वै द्विषन्तं भ्रातृव्यं य एवं वेद ।
ते दिशो व्युदसीदन् ।
तान्कालेयेनैवानुपर्यायमकालयन्त ।
यदनुपर्यायमकालयन्त तच्चैव कालेयस्य कालेयत्वम् ।
अनुपर्यायमेव द्विषन्तं भ्रातृयं कालयते य एवं वेद ।
तरो वै यज्ञस्स्तोमो विदद्वसुः ।
यज्ञेन च वाव ते तान्स्तोमेन चाकालयन्त ।
यज्ञेन चैव स्तोमेन च द्विषन्तं भ्रातृव्यं कालयते य एवं वेद १५३

ऋचा वा असुरा आयन्साम्ना देवाः ।
ते देवा असुरानृच्येव निगृह्य साम्नापीडयन्नेवं पीड्यं द्विषतो भ्रातृव्यस्य वधाय ।
इन्द्रं सबाध ऊताय इ बृहद्गायन्तस्सुतसोमे अध्वारा इति ।
ध्वारा इति रथन्तरसाम्नः धोरो इति बृहत्साम्नः ।
उभे ह वा एते एतदनु ।
तस्मादुभे रूपे गायेद्यच्च राथन्तरं यच्च बार्हतम् ।
नाना वा एतयोर्ब्रह्मसामनी भवतः ।
अथैतदुभे अनु ।
तस्मादुभे एव रूपे गायेत् ।
तदैळं भवति ।
पशवो वा इळा ।

पशुभिर्वाव ते तानकालयन्त ।
तस्माद्यत्पशुमांश्चापशुश्च भ्रातृव्यौ स्पर्धेते य एव पशुमान्भवति स एव तयोरभिभवति ।
एतद्ध वै साम प्रजा इमा अनुव्यास ।
ते तस्यैतां नितताामिळामन्तत उपयन्ति प्रजानां यथायतनादनुद्धाताय ।
तस्मात्प्रजा यथायतनादनुद्धताः ।
देवाः पितरो मनुष्यास्तेऽन्यत आसन्नसुरा रक्षांसि पिशाचा अन्यतः ।
त एषु लोकेष्वस्पर्धन्त ।
अथ ह कलयो गन्धर्वा अन्तस्थां चेरुर्नेतरान्नेतरानाद्रियमाणाः ।
ते देवाः पितरो मनुष्या असुरान्रक्षांसि पिशाचानभ्यभवन् ।
त इमाँल्लोकान्व्यभजन्त देवलोकमेव देवा अभजन्त पितृलोकं पितरो मनुष्यलोकं मनुष्याः ।
तान्कलयो गन्धर्वा एत्याब्रुवन्ननु न एषु लोकेष्वाभजतेति ।
नेत्यब्रुवन् ।
अनाद्रियमाणा वै यूयमचारिष्ट नेतरान्नेतरानाद्रियमाणा इति ।
अथ वै वो मनसान्वाविष्महीत्यब्रुवन्नन्वेव न आभजतेति १५४

नेत्यब्रुवन् ।
साधुविभक्ता नो लोकास्तान्न शक्ष्यामस्संलोभयितुमिति ।
तेऽब्रुवन्यद्वयमिह स्वयं पश्यामस्तदस्माकमस्त्विति ।
तेभ्य एताः कलिन्दाः प्रायच्छन्नेतासु श्राम्यतेति ।
तद्यत्कलिभ्यः कलिन्दाः प्रायच्छंस्तत्कलिन्दानां कलिन्दत्वम् ।
स एतत्कलिर्वैतदन्यस्सामापश्यत् ।
तेनास्तुत ।
तेनेममवान्तरदेशं दुर्यन्तं लोकमपश्यत् ।
तमजयत् ।
तदेतल्लोकवित्साम ।
विन्दते लोकमेतेन तुष्टुवानः ।
गन्धर्वलोकतां ह त्वाव नातिजयति गन्धर्वलोकतामिवैव जयति ।
यदु कलिर्वैतदन्योऽपश्यत्तस्मात्कालेयमित्याख्यायते ।

देवा वै पूर्वाभ्यां सवनाभ्यां तृतीयसवनं प्रवृह्य स्वर्गं लोकमायन् ।
त इमे लोका व्यवृह्यन्त वि यज्ञोऽवृह्यत ।
ते देवा अकामयन्त समिमाँल्लोकान्दध्याम सं यज्ञं दध्यामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनेमाँल्लोकान्समदधुस्सं यज्ञमदधुः ।
तद्यदिमाँल्लोकान्समदधुस्तद्वा अस्य स्वर्ग्यम् ।
तेन गन्धर्वलोकतामतिजयति ।
तरो वै यज्ञस्स्तोमो विदद्वसुः ।
यज्ञेन च वाव ते तत्स्तोमेन चेमाँल्लोकान्समदधुस्सं यज्ञमदधुः ।
यज्ञेन चैवास्य स्तोमेन च यज्ञस्संहितो भवतीमे च लोका य एवं वेद ।
सोमो ह खलु वै राजा कालेयम् ।
सदेवो हास्य यज्ञो भवति ।
यथा ह वा इदं बद्धवत्सा हिंकरी तुरीयत्येवं ह वाव
तमिन्द्रस्सोममागच्छति यस्मिन्कालेयेन स्तुवन्ति ।
तस्मादु हैतस्मात्साम्नो नैव कदा चनेयात्सेन्द्रो मे सदेवो यज्ञोऽसदिति ।
सेन्द्रमेवैतेन सदेवं यज्ञं कुरुते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेव तत्प्रतितिष्ठति १५५

द्वे वावेदमग्रे सवने आस्ताम् ।
द्वाभ्यां वावेदं सवनाभ्यां देवा अग्रे व्यजयन्त ।
तान्विजित्य यथालोकमासीनानिन्द्र एत्याब्रवीत्त्रीणि छन्दांसि त्रयः
प्राणापानव्यानास्त्रय इमे लोकास्त्रिर्देवेष्वित्याहुः ।
एतेमानि त्रीणि सवनानि करवामेति ।
तेऽब्रुवन्न शक्ष्यामोऽनेन न्वाव वयं पूर्वेण कर्मणा परिश्रान्तास्स्म इति ।
स इन्द्रोऽब्रवीत्स वा अहं मदेवाधि तृतीयसवनं निर्मिमा इति ।
स आत्मन एवाधि तृतीयसवनं निरमिमीत ।
तदिन्द्रो ह वा एतद्देवतानां यत्तृतीयसवनम् ।

इन्द्रेण हास्य देवतानां स्तुतं भवति य एवं विद्वांस्तृतीयसवनेन स्तुते ।
धीतं इव वै तृतीयसवनम् ।
जागतं सुपर्ण आहरन्नधयत् ।
तदेतद्पीडितमिव ।
स्वादिष्ठया इति स्वदयन्त्येवैनत्तेन ।
मदिष्ठया इति रसमेवास्मिंस्तन्मदं दधति ।
आशिरमवनयन्ति पशुना चरन्त्यैवैतेन प्याययन्ति ।
रक्षोहा विश्वचर्षणिरभि योनिमयोहतमिति पूर्वयोरेवैष सवनयोरभिसंक्रमः ।
तासु गायत्रमुक्तब्राह्मणम् १५६

अथ संहितं द्व्यक्सरणिधनं प्रतिष्ठायै ।
द्विपाद्वै यजमानः प्रतिष्ठित्यै ।
देवासुरा अस्पर्धन्त ।
तेऽब्रुवन्यन्न इदमुभयं धनं तत्संनिदधामहै ।
तेषां नो यतरे जयन्ति तेषां न एतदुभयं धनं संहितमस्त्विति ।
तद्यदेषामुभयं धनमासीत्तत्संन्यदधत ।
ते देवा अकामयन्तोभयमिदं धनं संहितं जयेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनोभयं धनं संहितमजयन् ।
तद्यदुभयं धनं संहितमजयंस्तत्संहितस्य संहितत्वम् ।
उभयमेव संहितं द्विषन्तं भ्रातृव्यं जयति य एवं वेद ।
तदु होवाचारुणिरश्वो वाव स संहित आसीत् ।
तस्मिन्नेवैषां तद्धनं संहितमासीत्तमेव तदसुराणामवृञ्जत प्रजापतिं वावैषां तदवृञ्जतेति ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद १५७

अथो हैतदवच्छिन्नमिव वै माध्यंदिनात्सवनात्तृतीयसवनम् ।
ते देवा एतद्व्यवेद्याविदुरवच्छिन्नमिव वा इदं माध्यंदिनात्तृतीयसवनमिति

।
त एतत्सामापश्यन् ।
तेनैतत्समदधुः ।
यत्समदधुस्तद्वेव संहितस्य संहितत्वम् ।
संहितं हास्यैतत्तृतीयसवनमनवच्छिन्नं भवति य एवं वेद ।
अथोष्णिक्ककुभौ । उष्णिक्ककुब्भ्यां वा इन्द्रो वृत्राय
वज्रमुदयच्छद्गायत्र्योस्तिष्ठन् ।
ते एनं नोदयच्छताम् ।
तयोश्चतुष्पदः पशूनुपादधाद्गां चाश्वं चाजां चाविं च ।
ते एनमुदयच्छताम् ।
स उष्णिक्ककुभोस्तिष्ठन्सभपौष्कले बाहू कृत्वा प्राहरत् ।
तमहन् ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद १५८

स प्राचान्येन पदा प्राभ्रंशत प्रतीचान्येन ।
येन प्राचा प्राभ्रंशत सा ककुबभवत् ।
तस्मात्ककुभः पूर्वार्धेऽक्षराणि भूयिष्ठानि ।
अथ येन प्रतीचा प्राभ्रंशत सोष्णिगभवत् ।
तस्मादुष्णिहो जघनार्धेऽक्षराणि भूयिष्ठानि ।
ते वा एते छन्दसी धेनुश्चैवानड्वांश्च ।
तस्मात्पशवः पूर्वार्धेन च जघनार्धेन च भूयिष्ठं भुञ्जन्ति ।
वहन्ति पूर्वार्धेन दुह्रे च जघनार्धेन प्र च जनयन्ति ।
उभयं धेनुपयसं चानडुत्पयसं चावरुन्द्धे य एवं वेद १५९

तासु सभं यज्ञस्यैव सभतायै ।
यद्ध वै किं च यज्ञस्य दुःष्टुतं दुश्शस्तं विधुरं तस्य ह वा एतत्सभतायै ।
सभमविभमसदिति ह वा एतेन स्तुवन्ति ।
साभं ह वा एतन्नाम ।
सभेन वै देवा असुराणां तेजो बलमिन्द्रियं वीर्यं पशूनन्नाद्यं सभेन
सभमात्मानमध्यकुर्वत ।

तत्सभस्य सभत्वम् ।
सभेनैव द्विषतो भ्रातृव्यस्य तेजो बलमिन्द्रियं वीर्यं पशूनन्नाद्यं सभेन सभमात्मानमधिकुरुते य एवं वेद ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
सोऽकामयत न मत्पशवोऽपक्रामेयुरभि मावर्तेरन्निति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै तं पशवोऽभ्यावर्तन्त ततोऽस्मादनपक्रामिणोऽभवन् ।
सोऽब्रवीद्सभो वै पशुभिरभूवमिति ।
तद्वेव सभस्य सभत्वम् ।
सभो हाविभः पशुभिर्भवति य एवं वेद ।
तदु काकुभं स्वारं भवति ।
प्राणो वै स्वरः पुरुषच्छन्दसं ककुप् ।
ज्यैष्ठ्यं वै प्राणो ज्यैष्ठ्यं पुरुषः ।
ज्यैष्ठ्येनैव तज्ज्यैष्ठ्यं संदधति ज्यैष्ठ्येन ज्यैष्ठ्ये प्रतितिष्ठन्ति ।
अथो यजमानमेव तत्प्राणेन समर्धयन्ति ।
समस्मा ऋध्यते य एवं वेद ।
तानेकरूपान्न व्यजानात् ।
स एतत्पौष्कलं सामापश्यत् ।
तेनैषां रूपाणि व्यकरोत् ।
ते नानारूपा अभवञ्श्वेतो रोहितः कृष्णः ।
एकरूपा ह वाव ते ततः पुरासू रोहिता एव ।
बहुरूपान्नानारूपान्पशूनवरुन्द्धे बहुपशुर्भवति य एवं वेद ।
अथ पौष्कलम् ।
पुष्कल आङ्गिरसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।

अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु पुष्कल आङ्गिरसोऽपश्यत्तस्मात्पौष्कलमित्याख्यायते ।
तच्चतुरक्षरणिधनं भवति ।
चतुष्पदा वै पशवः ।
पशव इव उष्णिक् ।
अभि पूर्वाणामेव पशूनामवरुद्ध्यै १६०

यद्यथापूर्वं छन्दांस्युपेयुरनुष्टुभ उत्तमाः कुर्युः ।
वाग्वा अनुष्टुप् ।
तां वै यज्ञाद्बहिर्धा कुर्युः ।
तामेवैतद्यज्ञस्य मध्यत आभजन्ति ।
ता एता भवन्ति पुरोजिती वो अन्धसः इति ।
पुरस्ताद्ध वा एताः पाप्मानं जयन्तीः पुरस्तात्पाप्मानमपघ्नत्यो यन्ति ।
जितं ह वा एताभिर्विजितमन्ववस्यन्ति ।
सुताय मादयित्नवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वियमिति ।
दीर्घजिह्वी ह वा असुर्यास ।
सा ह स्म सोमंसोममवलेढि ।
उत्तरे ह समुद्र आस ।
स यो ह स्म दक्षिणे समुद्रे सूयते यः पूर्वे योऽपरे तं ह स्म तत एवालेढि ।
तां हेन्द्रो जिघृक्षन्न शशाक गृहीतुम् ।
स होवाच मा कश्चन यष्टेयं वै दीर्घजिह्वी सोमंसोममेवावलेढीति १६१

अथ ह सुमित्रः कौत्सो दर्शनीय आस ।
स तं होवाच सुमित्र दर्शनीयो वा असि ।
सुलापा वै दर्शनीयेन स्त्रियः ।
इमां दीर्घजिह्वीं लिलापयिषस्वेति ।
तां हेत्योवाच दीर्घजिह्वि कामयस्व मेति ।
सा होवाचैकं तव शेपोऽङ्गेऽङ्गे मम मुष्का न वै तत्संपद्यत इति ।
स ह पुनरेत्योवाचैकं तव शेपोऽङ्गेऽङ्गे मम मुष्का न वै तत्संपद्यत इति वै माम इयमाहेति ।

अङ्गेऽङ्गे वा अहं तव शेपांसि करोमीति होवाच ।
तानि हाभिप्रावृत्येयाय ।
तां होवाच दीर्घजिह्वि कामयस्व मेति ।
सा होवाचैकं तव शेपोऽङ्गेऽङ्गे मम मुष्का न वै तत्संपद्यत इति ।
अङ्गेऽङ्गे वाव मम शेपांसीति होवाच ।
अङ्ग ते पश्यानीति १६२

तानि हास्यै दर्शयां चकार ।
तानि हास्यै छन्दयां चक्रुः ।
सा वा एहीति होवाच ।
को नामासीति ।
सुमित्रो नामेति ।
कल्याणं वै ते नामेति ।
तौ ह संनिपेदाते ।
तस्यां ह यदार्थं चक्रेऽथ हैनां तदेवाभिसंजग्राह ।
सा होवाच नन्वरे त्वं सुमित्रोऽवोचथा इति ।
स होवाच सुमित्रो एवाह सुमित्रायास्मि दुर्मित्रो दुर्मित्रायेति ।
स एतानि सौमित्राणि सामान्यपश्यत् ।
तैरस्तुत ।
तैरिन्द्रमाह्वयत् ।
स इन्द्र एतामनुष्टुभं वज्रमुद्यत्याद्रवत्पुरोजिती वो अन्धसस्सुताय मादयित्नवे
। अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वियमित्येवास्यै प्राहन् ।
ता एता भ्रातृव्यघ्न्यो रक्षोघ्न्य ऋचः ।
हन्ति द्विषन्तं भ्रातृव्यमप रक्षः पाप्मानं हत एताभिर्ऋग्भिस्तुष्टुवानः ।
यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्वियः ।
तं दुरोषमभी नरस्सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः इति ।
पूर्वयोरेवैष सवनयोरभिसंक्रमः ।
तासु श्यावाश्वम् ।
श्यावाश्वं वा आर्चनानसं समिद्धारं परेतं प्रतिसत्त्रिणो हित्वा स्वर्गं
लोकमायन् ।

सोऽकामयतानूत्पतेयं स्वर्गं लोकं प्रतिसत्त्रिभिस्संगच्छेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत १६३

पुरोजिती वो ग्रन्धस एहिया ।
सूताय मादयित्नवा एहिया ।
ग्राप श्वानं श्नाथीष्टाना ।
षहोवा एहिया इत्येव मरुतस्स्वर्गे लोक उपाह्वयन्त ।
ततो वै स प्रतिसत्त्रिभिस्समगच्छत ।
स हैष मरुद्भिरेव सह श्यावाश्वः ।
तदेतत्स्वर्ग्यं साम ।
ग्रश्नुते स्वर्गं लोकं य एवं वेद ।
यदु श्यावाश्व ग्रार्चनानसोऽपश्यत्तस्माच्छ्यावाश्वमित्याख्यायते ।
इन्द्रो वै तृतीयसवनाद्बीभत्समान उदक्रामत् ।
धीतमिव ह्यासीत् ।
तमेतेन विश्वे देवास्साम्नान्वह्वयन्त ग्रोहोइया इति ।
ततो वा इन्द्रस्तृतीयसवनमुपावर्तत ।
ततोऽस्मादनपक्रम्यभवत् ।
तदेतत्सेन्द्रं साम ।
सेन्द्रो हास्य सदेवो यज्ञो भवति ।
ग्रभ्यस्येन्द्रो यज्ञमावर्तते नास्येन्द्रो यज्ञादपक्रामति य एवं वेद ।
तत्स्वारं भवति ।
प्राणो वै स्वरः ।
वीव वा एते प्राणैर्ऋध्यन्ते ये यज्ञीयस्य कर्मणोऽतिपादयन्ति यदि वा नातिपादयन्ति ।
को हि तद्वेद यदि तेऽति वा पादयन्ति न वा ।
तद्यत्स्वारं भवति प्राणैरेव तत्समृध्यन्ते १६४

ग्रथान्धीगवम् ।
मध्येनिधनं भवति प्रतिष्ठायै ।

समुद्रं वा एतेऽनारम्भणं प्रप्लवन्ते य आर्भवं पवमानमुपयन्ति ।
तद्यन्मध्येनिधनं भवति प्रतिष्ठित्या एव ।
तद्यथा वा अदस्समुद्रं प्रस्नाय द्वीपं वित्त्वोपोत्स्नाय विश्राम्यन्नास्त एवं ह वा एतन्निधनमुपेत्य कामं विश्राम्यन्त आसीरन्नस्तुवानाः ।
तदैळं भवति ।
पशवो वा इळा पशवः कृत्स्नमन्नाद्यम् ।
यो वा अनवसोऽध्वानं प्रैति नैनं स समश्नुते ।
अथ यस्सावसः प्रैति स एवैनं समश्नुते ।
अयं वाव समुद्रोऽनारम्भणो यदिदमन्तरिक्षम् ।
तस्य नानवसेनेत्थं गतिरस्ति नेत्थम् ।
तदेतत्पशूनेव कृत्स्नमन्नाद्यमवसं कृत्वा यन्ति ।
शाक्त्या अन्नाद्यकामा अदीक्षन्त ।
स एतदन्धीगुश्शाक्त्यस्सामापश्यत् ।
तेनास्तुत ।
तस्यैतां दशाक्षरां विराजं मध्यत उपैत् ।
दशाक्षरा विराडन्नं विराट् ।
ततो वै ते विराजमन्नाद्यमवारुन्धत ।
तदेतद्विराजोऽन्नाद्यस्यावरुद्धिस्साम ।
अव विराजमन्नद्यं रुन्द्धेऽन्नादश्श्रेष्ठस्स्वानां भवति य एवं वेद ।
यद्वन्धीगुश्शाक्त्योऽपश्यत्तस्मादान्धीगवमित्याख्यायते १६५

अथैता भवन्ति अभि प्रियाणि पवते चनोहितः इति ।
प्रजापतिः प्रजा असृजत ।
ता अप्राणा असृजत ।
ताभ्य एताभिरेवग्भिः प्राणानदधात् ।
अभि प्रियाणि पवते चनोहितः इति ।
प्रजा वै प्रियम् ।
ता अभि इत्येव प्राणेनाभ्यपवत ।
नामानि यह्वो अधि येषु वर्धते इति ।
महा वै प्रजा नामानि ।

ग्रा सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः इति ।
प्राणो वै विष्वङ् ।
सोऽयं विष्वञ्चति ।
ता एता ग्रायुष्या ऋचः ।
सर्वमायुरेत्येताभिर्तुष्टुवानः
तासु कावम् ।
कविर्वै भार्गवो देवेष्वमर्त्यं गन्धर्वलोकमैच्छत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स देवेष्वमर्त्यं गन्धर्वलोकमाश्नुत ।
तदेतल्लोकवित्साम ।
ग्रश्नुते देवेष्वमर्त्यं गन्धर्वलोकमेतेन तुष्टुवानः ।
यदु कविर्भार्गवोऽपश्यत्तस्मात्कावमित्याख्यायते ।
तत्स्वारं भवति ।
स्वरेण वै देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते ।
ऋक्समं पवमानान्ते भवति ।
नर्चा सामातिरेचयन्ति नर्चं साम्ना ।
तद्यदिहेव चेहेव च पवमने न स्तुवन्ति एतस्यैव समतायै समं क्ळ्प्त्यै ।
पदानुस्वारं पुरस्ताद्गायत्रं भवति पदानुस्वारमुपरिष्टात्पवमानान्ते ।
तस्मादुभयतःप्राणाः प्रजा ऊर्ध्वाश्चावाचीश्च ।
यां ह खलु वै पितापुत्रौ नावमजतो न स रिष्यति ।
दैव्येषा नौर्यद्यज्ञः ।
तावेतत्पितापुत्रावेवाजतः ।
ग्रौशनं पुरस्ताद्भवति कावमुपरिष्टाद्यज्ञस्यैवारिष्ट्यै ।
तस्माद्यदाशु नावमधिरोहन्ति पितापुत्रौ हैवाग्रेऽधिरोहतः ।
पञ्चैतानि छन्दांस्यार्भवे पवमाने भवन्ति सप्त सामानि ।
तद्द्वादश संपद्यन्ते ।
द्वादश मासास्संवत्सरः ।
पञ्चो वा एवामूनि सामानि माध्यंदिने पवमाने भवन्ति ।
ऋतव एव ।

मासा एवार्भवे पवमाने कल्पन्त ऋतवो माध्यंदिने ।
स हैष संवत्सर एव व्यूढो यद्यज्ञः १६६

प्रजापतिर्ह खलु वा एष यस्संवत्सरः ।
स ह षरामासोऽन्यतरमन्यतरं पादमुद्ग्राहं तिष्ठति ।
स यदोष्णमुद्गृह्णात्यथ हेदमुपर्युष्णो भवत्यध उ ह तदा शीतो भवति ।
तस्माद्ग्रीष्म उपर्युष्णोऽधश्शीतमधिगम्यते ।
तस्मादु ग्रीष्मे शीताः कूप्या अप उदाहरन्ति ।
अथ यदा शीतमुद्गृह्णात्यथ हेदमुपरि शीतो भवत्यध उ ह तदोष्णो भवति ।
तस्माद्धेमन्नुपरि शीतोऽध उष्णमधिगम्यते ।
तस्मादु हेमन्नुष्णाः कूप्या अप उदाहरन्ति ।
एवं ह वा एष प्रजापतिस्संवत्सरः प्रजा बिभर्ति ।
अथ ह वा एतं सौम्यं चरुमाहरन्ति ।
यद्ध वा उद्गातुर्यज्ञ ऊनं वातिरिक्तं वा कुर्वतो मीयते यमलोकं ह वा अस्य तद्गच्छति ।
तद्धापि मृतोदीरिण आहुर्यमस्यैतत्सभायामपश्याम इति ।
तदेतेन पुनराह्रियते यदेतं सौम्यं चरुमाहरन्ति ।
तं हावेक्षेत

यन्मे मनो यमं गतं यद्वा मे अपरागतम्

राज्ञा सोमेन तद्वयं पुनरस्मासु दध्मसि

मनसि मे चक्षुरधाश्चक्षुषि मे मनः

आयुष्मत्या ऋचो माच्छैत्सि । मा साम्नो भागधेयाद्वियोषम्
इति ।
तद्धापि छायां पर्यवेक्षेतात्मनोऽप्रणाशाय ।
अथो सर्पिषोऽक्ष्योरादधीत चक्षूष आप्यायनाय ।
तदपि विज्ञानमसद् ।

य आत्मानं न परिपश्येदपेतासुः स स्यात् ।
तस्मात्सत्यादप्याज्यं भूय आनीय पर्येवात्मानं दिदृक्षेत सर्वस्यायुषोऽवरुद्ध्यै
१६७

अङ्गिरसां वै सत्रमासीनानां शर्करा अक्षिष्वजायन्त ।
तेऽकामयन्तानन्धास्स्याम प्रपश्येमेति ।
त एतं सौम्यं श्यामं चरुमक्षिष्वादधत ।
तमेतेन मन्त्रेणादधत

येन ह्याजिमजयन्नृचक्षा येन श्येनं शकुनं सुपर्णम्

यदाहुश्चक्षुरदितावनन्तं सोमो नृचक्षा मयि तद्दधातु
इति ।
ततो वै तेऽनन्धा अभवन्प्रापश्यन् ।
अनन्धो हैव भवति प्रपश्यति य एवं वेद ।
तदाहुः प्राश्या३ न प्राश्या३ इति स योऽनूचानस्सन्नयश ऋतस्स्यात्स हि तं प्राश्नीयात् ।
अनूचाना इह वा अलं यशसे ।
स योऽनूचानस्सन्नयश ऋतो भवति - अमुं ह वै तस्य लोकं यशो गतं भवति - तदेतेन पुनराह्वियते यदेतं सौम्यं श्यामं चरुं प्राश्नाति ।
तदु होवाच शाट्यायनिर्नैवैष प्राश्यः कस्ततो यश आहरेद्यत्र भूयसी रात्री वत्स्यन्स्यादिति ।
तस्मादु हैतन्नैव प्राश्नीयात् १६८

यज्ञायज्ञा वो अग्नये ।
तुरीयं वा एतत्साम्नः ।
सामन्नेवैतद्यज्ञं प्रतिष्ठापयन्ति ।
तनूर्वा एषा साम्नाम् ।
सतनून्येवैतद्सामानि कुर्वन्ति ।
यो ह वा एतस्मात्साम्न इयाद्दुश्चर्मा वा स्यात्पापी वैनं कीर्त्तिरभिवदेत् ।

गायत्री वा एषा वयो भूत्वोदेति ।
दिवमपतत् ।
अनुष्टुभि वा एतस्यै सते दिशश्शुल्कमहरन् ।
शुल्कहृता अस्मै प्रजा भवन्ति ।
दिग्भ्योऽस्मै शुल्को ह्रियते य एवं वेद ।
वयो यज्ञा वो अग्नये इति प्रस्तौति ।
ओ यिरा यिरा च दक्षसे पोप्रिं वयममृतं जातोवाहोयि विदोसमिति प्रतिहरति ।
यज्ञा इति द्वे अक्षरे गिरा इति द्वे पोप्रिमिति द्वे ।
तत्षट्संपद्यन्ते ।
षडक्षरस्तूष्णींशंसः ।
तूष्णींशंस एवैतदाग्निमारुते विमुच्यते ।
स ह्यन्तः ।
अग्निर्वैश्वानरः प्रजा अभ्युदतिष्ठत् ।
स इदं सर्वं प्रातपत् ।
तस्य देवाः प्रदाहादबिभयुः तेऽब्रुवन्सर्वं वा अयं इदं प्रधक्ष्यति - १६९

- एतस्य हरोऽपेरयामेति ।
तस्य हरोऽपैरयन् ।
तद्यत्प्रथममपैरयंस्तस्मिन्व्यवदन्त क्वेदं भविष्यतीति ।
यज्ञेयज्ञे नो भविष्यतीत्यब्रुवन् ।
तद्यज्ञायज्ञीयमभवत् ।
तद्यज्ञायज्ञीयस्य यज्ञायज्ञीयत्वम् ।
यद्द्वितीयमपैरयंस्तन्नार्मेधमभवत् ।
यत्तृतीयमपैरयंस्तद्दाशस्पत्यमभवत् ।
यच्चतुर्थमपैरयंस्तद्विशोविशीयमभवत् ।
यत्पञ्चममपैरयंस्तद्वारवन्तीयमभवत् ।
अग्निर्वा एष वैश्वानरो यद्यज्ञः ।
तद्वदेतान्यग्निष्टोमसामानि भवन्ति ।
हरस्येवैतदग्निं वैश्वानरं प्रतिष्ठापयन्ति १७०

नार्मेधं नाथकामः कुर्वीत ।
नृमेधश्च वै सुव्रतश्च भ्रातरौ ।
तौ हाग्निकान्यादधाते ।
स ह नृमेधस्सुव्रतस्योज्जगौ ।
तद्ध यज्ञायज्ञीयेनैवास्तुतमास ।
अथ हैनमासस्त्रुः ।
यजमानस्य वै त उद्गातुः पुत्रौ पुत्रममीमरतामन्तकधृतिं सौव्रतिं नकिरश्च शकपूतश्चेतितं ह बाहू परामृशन्नुवाच ब्राह्मणा एष वो यज्ञस्तेन यं कामयध्वे तं याजयतानेन न्वा अहं तद्यातयिष्य । तद्यातयिष्य इति ।
तं हौदुम्बर्यामनुवेष्ट्य शणशलाकाभिरुपादीपयां चकार ।
सोऽकामयतोदित इयां गातुं नाथं विन्देय न मायमग्निर्दहेदिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स गातुं नाथमविन्दत नैनमग्निरदहत् ।
अपि ह तच्छुल्बकं प्रददाह येनानुवेष्टित आस ।
तदेतद्गातुविन्नाथवित्साम ।
गातुं वै स नाथमविन्दत ।
विन्दते गातुं नाथं य एवं वेद ।
यदु नृमेधोऽपश्यत्तस्मान्नार्मेधमित्याख्यायते १७१

दाशपत्यं श्रैष्ठ्यकामः कुर्वीत ।
देवासुरा अस्पर्धन्त ।
ते देवा इन्द्रमुपाधावंस्त्वयाधिपत्येदं जयामेति ।
स इन्द्रोऽकामयत जयेमासुरानिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै देवा असुरानजयन् ।
तस्मै विजित्यासीनाय दशपतये दशपतय आ इत्येवोद्धारानुदहरन् ।
तदेव दाशस्पत्यस्य दाशस्पत्यत्वम् ।

उद्धारं हरत उद्धार्यो भवति य एवं वेद ।
विशोविशीयमन्नाद्यकामः कुर्वीत ।
अग्निर्वा अकामयत विशोविश एवान्नादश्श्रेष्टोःऽधिपतिस्स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स विशोविश एवान्नादश्श्रेष्ठोऽधिपतिरभवत् ।
तत एनं विशोविशो व्यवाहरन्त ।
तद्यदेनं विशोविशो व्यवहरन्ति तद्विशोविशीयस्य विशोविशीयत्वम् ।
स हैष विशोविश एवान्नादश्श्रेष्ठोऽधिपतिः ।
विशोविश एवान्नादश्श्रेष्ठोऽधिपतिर्भवति य एवं वेद ।
वारवन्तीयं पशुकामः कुर्वीत ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
तान्वारवन्तीयेनैवावारयत ।
यदवारयत तद्वारवन्तीयस्य वारवन्तीयत्वम् ।
तद्यद्वारवन्तीयमग्निष्टोमसाम भवति पशूनामेवोपस्थित्यै पशूनामनपक्रमाय
१७२

यो वै यज्ञस्योधर्वेद प्रत्तं यज्ञं दुहे ।
यज्ञायज्ञीयं वाव यज्ञस्योधः ।
तस्यैते स्तना गायत्रं च रथन्तरं च बृहच्च वामदेव्यं च ।
तद्गायत्रमिव प्रस्तुयात् ।
रथन्तरस्येव स्तोभान्स्तोभेत् ।
बृहत इव रोहान्रोहेत् ।
हिंकारो वामदेव्यं स्वयमेव यज्ञायज्ञीयम् ।
एतद्वै यज्ञं यजमानो दुहे ।
स हेष्ट्वैव श्रेयान्भवति ।
यज्ञायज्ञा वो अग्नये इति भवति ।
एष ह वै यज्ञो यज्ञो यद्यज्ञायज्ञीयम् ।
यज्ञं यज्ञं वहतीति ह वै यज्ञायज्ञीयस्य यज्ञायज्ञीयत्वम् ।

एतेन ह स्म वै पुरा सर्वाणि स्तोत्राणि स्तुवन्ति ।
तदाहुरूर्ध्वा वा एते स्वर्गं लोकं रोहन्ति ये यजन्ते ।
त ईश्वराः पराञ्चोऽतिपत्तोरिति तद्यज्ञायज्ञीयेनोपरिष्टात्स्तुवन्ति ।
इयं वै यज्ञायज्ञीयम् ।
अस्यामेवैतत्प्रतितिष्ठन्ति ।
अप उपनिधाय स्तुवन्ति - अग्निर्वा एष वैश्वानरो यद्यज्ञायज्ञीयं - तस्य शान्त्या अप्रदाहाय ।
ऊरुभ्यां पत्न्युपप्रवर्तयति ।
अग्निमेव तद्वैश्वानरं शमयति ।
नग्नमिवोरुं कृत्वोपप्रवर्तयति ।
नग्नमिव ह्यूरुं कृत्वा पत्नी वीर्यं करोति ।
तां संख्यापयन्ति रेतोधेयाय ।
तदाहुरा वा एतत्पत्न्युद्गातुः प्रजां दत्ते यद्विगीते सामन्संख्यापयन्तीति १७३

तां प्रतिसमीक्षेत वामी नाम संदृशि विश्वा वामानि धीमहि इति ।
प्रजा वै वामम् ।
प्रजामेव तदात्मन्धत्ते ।
वृष्णस्ते वृष्ण्यावतो विश्वारेतांसि धीमहि इतीतरा प्रतिसमीक्षते ।
तदाहुः प्रावृत उद्गायेदग्निर्वा एष वैश्वानरो यद्यज्ञायज्ञीयं - तस्य शान्त्या अप्रदाहायेति ।
ईश्वरो ह तु पितृदेवत्यो भवितोर्यत्प्रावृत उद्गायेत् ।
अथो आहुर्यावदेव श्रोत्रं तावत्प्रावृत्योद्गायेदिति ।
तदु वा आहुः कर्णाभ्यां वै शृणोत्यक्षिभ्यां पश्यति ।
तस्मादात्मानमन्तरियाद्यत्प्रावृत उद्गायेत् ।
अथो आशिरं वै तृतीये सवनेऽवनयन्ति ।
प्रजा वै पशव आशीः ।
तस्मात्सर्वस्मादात्मानमन्तरियाद्यत्प्रावृत उद्गायेत् ।
अप्रावृत एवोद्गायेदिति १७४

वयो वै योज्ञायज्ञीयम् ।

स यं कामयेत यजमानं स्वर्गलोकस्स्यादिति वयो यज्ञा वो अग्नये इत्यस्य प्रस्तुयात् ।
वय एवैनं शकुनो भूत्वा स्वर्गं लोकं वहति ।
तदु तदनायुष्यमिव ।
प्रमथितमिव वा एतद्यद्वयोऽनालयमिव ।
तस्मादेवं न प्रस्तुयात् ।
ओ यिरा यिरा चा दाक्षासा इति ।
यद्गिरा गिरा च इति ब्रूयादग्निर्वैश्वानरो यजमानं गिरेत् ।
अथ यदो यिरा यिरा चा दाक्षासा इत्याह - अन्नं वा इरा - अन्नाद्यमेव तदग्नेर्वैश्वानरस्य मुखतोऽपिदधाति ।
ईश्वरो ह तु रूक्षो भवितोर्यदो यिरा यिरा चा दाक्षासा इति ब्रूयात् ।
ओ यिरा इहा चा दाक्षासा इत्येव ब्रूयात् १७५

तथा ह न रूक्षो भवति ।
एतद्ध स्म वै तत्पूर्वे ब्राह्मणा मीमांसन्ते क उ स्विद्शिंशुमार्यै व्यात्तमतिप्रोष्यत इति ।
एषा ह वा एकायने शिंशुमारी प्रतीपं व्यादाय तिष्ठति यद्यज्ञायज्ञीयम् ।
तस्या एतदन्नाद्यमेव मुखतोऽपिधाय स्वस्त्यत्येति ।
पोप्रिं वयममृतं जातो वा इति ।
यत्प्र प्र वयमिति ब्रूयात्प्रमायुको यजमानस्स्यात् ।
अथ यत्पोप्रिमित्याहैष एवास्मै पोप्रिर्भवति ।
हिं मायि दायिवमिति ।
यद्दासमिति ब्रूयाद्दासुको यजमानस्स्यात् ।
अथ यद्दायिवमित्याह - दिवं संस्तुतो यज्ञो गमयितव्य इत्याहुः - दिवमेवैतत्संस्तुतं यज्ञं गमयन्ति ।
प्रियं मित्रं नु शंसिषमिति ।
यत्प्रियं मित्रं न शंसिषमिति ब्रूयान्न प्रियं मित्रं शंसेत ।
अथ यत्प्रियं मित्रं नु शंसिषमित्याह प्रियमेव मित्रं शंसते १७६

प्रायां मायित्रान्नू शांसीषामूर्जो नपातं स ह्यायुमा इति ।

यन्नायुमा इति ब्रूयान्नायुष्मान्यजमानस्स्यात् ।
अथ यदायुमा इत्याहायुरेवैतदुद्गातात्मंश्च यजमाने च दधाति ।
हिं मायास्मायूः आशेमा हव्यदाताया उ वा इति ।
यद्वाशेम इति ब्रूयाद्दंशुका एनं स्युः ।
अथ यदाशेमा इत्याहाश्नुत एव ।
आशेमा हाव्या दातायायि भुवद्वाजेष्ववविता भूवाद्धिं मायि वार्धा इति ।
वृद्ध इव ह्येतर्हि यज्ञो भवति ।
उत त्राता बहूनामिति ।
यत्तनूनामिति ब्रूयात्तनुरिव यजमानस्स्यात् ।
अथ यद्बहूनामित्याह बहूनामेवैनमेतत्त्रातारं करोति १७७

तदाहुर्यज्ञायज्ञीयस्यैकादशाक्षरादूना ऋचः ।
तद्यज्ञस्य छिद्रम् ।
यत्तदुद्गायन्नापिदधाति यज्ञायज्ञीयं छिद्रं करोति ।
यज्ञायज्ञीयं छिद्रमनु यज्ञस्स्रवति यज्ञमनु यजमानो यजमानमनु प्रजाः ।
तस्मिन्वाचं दध्यात् ।
वाग्वै ब्रह्म ।
उत त्राता वाग्बहूना उ वा इति ।
गौरिति हैके दधति गौर्वै कृत्स्नमन्नाद्यं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ।
तदाहुर्नैतदाद्रियेत ।
यद्वाव वाङ्निधनं भवति तेनैव संधीयत इति ।
तदाहुर्यथापूर्वं यथाज्यैष्ठ्यं छन्दांसि विमुच्यमानानि ।
छन्दसां क्ळ्प्तिं विमुक्तिमनु प्रजाः कल्पान्ता इति ।
यज्ञो वो अग्नये इति षड्भिरक्षरैः प्रस्तौति ।
गिरा च दक्षसे इति षड्भिरक्षरैरादिमादत्ते ।
तद्द्वादश संपद्यन्ते ।
द्वादशाक्षरा जगती ।
जगतीं प्रथमतः पर्यूहन्ति ।
तज्जगत्या विमुच्यन्ते ।
प्र वयममृतं जातवेदसमित्येकादशाक्षराणि संपद्यन्ते ।

एकादशाक्षरा त्रिष्टुप् ।
तत्त्रिष्टुभा विमुच्यन्ते ।
प्रियं मित्रं नु शंसिषमित्यष्टाभिरक्षरैर्निधनमुपयन्ति ।
अष्टाक्षरा गायत्री ।
तद्गायत्र्या विमुच्यन्ते ।
तद्यथापूर्वं यथाज्यैष्ठ्यं छन्दांसि विमुच्यमानानि यन्ति ।
छन्दसां क्ळिप्तं विमुक्तिमनु प्रजाः कल्पन्ते नापरामारी पूर्वो म्रियते १७८

देवासुरा यज्ञेऽस्पर्धन्त ।
ते देवा असुरान्यज्ञान्निरवाघ्नन् ।
तेऽसुरास्त्रयाणां सवनानां रसं वीर्यं प्रवृह्यान्धं तमः प्राविशन् ।
यद्ध वै किं च पराचीनमग्निष्टोमात्तदन्धं तमः ।
यत्पराचीनं संवत्सरात्तदन्धं तमः ।
एतावान्वाव यज्ञो यावनग्निष्टोमः ।
एतावानु संवत्सरः ।
द्वादश वा अग्निष्टोमस्य स्तोत्राणि द्वादश मासास्संवत्सरः ।
द्वादश स्तोत्राणि द्वादश शस्त्राणि ।
द्वादश पूर्वपक्षा द्वादशापरपक्षाः ।
अथ यत्ततः पराचीनं तदन्धं तमः ।
तत्प्राविशन् ।
ते देवा असुरानन्वभ्यवायन् ।
तानसुरानेतैरेवोक्थैः प्रत्युदतिष्ठन् ।
यदुक्थैः प्रत्युदतिष्ठंस्तदुक्थानामुक्थत्वम् ।
तांस्ततो निरेवावाघ्नन् ।
तेऽन्धमेव तमः प्राविशन्रात्रिमेव ।
स इन्द्रोऽब्रवीत्कश्चाहं चेदमन्वभ्यवैष्याव इति १७९

अहं चेत्यब्रवीद्वरुणः ।
अहं वां ज्योतिर्धारयिष्यामीत्यग्निरब्रवीत् ।
तावन्वभ्यवैताम् ।

तावेकं तृतीयमुदाहरताम् ।
तेन प्रातस्सवनमाप्याययन् ।
तस्मादाग्नेयीषु स्तुवन्ति ।
षन्द्रावारुणमनुशस्यते ।
तस्मादु गायत्रीषु स्तुवन्ति ।
गायत्रं हि प्रातस्सवनम् ।
स एवाब्रवीत्कश्चाहं चेदमन्वभ्यवैष्याव इति ।
ग्रहं चेत्यब्रवीद्बृहस्पतिः ।
तावन्वभ्यवैताम् ।
तावेवैकं तृतीयमुदाहरताम् ।
तेन माध्यंदिनं सवनमाप्याययन् ।
तस्मादैन्द्रीषु स्तुवन्ति ।
षन्द्राबार्हस्पत्यमनुशस्यते ।
तस्मादु ककुप्सु स्तुवन्ति ।
काकुभं हि माध्यंदिनं सवनम् ।
स एवाब्रवीत्कश्चाहं चेदमन्वभ्यवैष्याव इति ।
ग्रहं चेत्यब्रवीद्विष्नुः ।
तावन्वभ्यवैताम् ।
तावेवैकं तृतीयमुदाहरताम् ।
तेन तृतीयसवनमाप्याययन् ।
तस्मादैन्द्रीषु स्तुवन्ति ।
षन्द्रावैष्नवमनुशस्यते ।
तस्मादनुष्टुप्सु स्तुवन्ति ।
ग्रानुष्टुभं हि तृतीयसवनम् ।
तान्सर्वस्मादेवान्तरायन् ।
तेऽतो तदभि प्रणयन्तीति प्रवतीभ्यः प्रणयन्त्येहिवतीषु ।
प्रेति च वा इदं सर्वमेति च ।
ततो वै देवा ग्रभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद १८०

तानि वा एतानि त्रीणि सन्ति
द्विदेवत्यान्यैन्द्रावारुणमैन्द्राबार्हस्पत्यमैन्द्रावैष्णवमिति ।
एतावतैषाष्षट्कामदुघा उदाहरन्गां चाश्वं चाजां चाविं च व्रीहिं च यवं च
।
उपैनमेताष्षट्कामदुघास्तिष्ठन्ति य एवं वेद ।
एतावान्वाव यज्ञो यावानग्निष्टोमः ।
तदाहुर्यदेतावानेव यज्ञो यावानग्निष्टोमस्तस्मिन्नन्तगते किमभ्युक्थानि प्रणयन्तीति ।
स ब्रूयाद्यज्ञायज्ञीयस्यैकादक्षरादूना ऋचः ।
तद्यज्ञस्य छिद्रम् ।
यज्ञमेवास्मिंस्तत्सम्यञ्चं दधाति ।
आग्नेयीसु प्रणयन्त्याग्नेयीभ्यः ।
यथाग्नावग्नीनभिसमादध्यात्तादृक्तत् ।
यो वा एकमग्निं सन्तं बहुधा विहरेद्बहवस्स्युः ।
य एनान्बहून्सतस्सार्धं संहरेदेक एव स्यात् ।
स यथाग्नावग्नीनभिसमादध्यात्तादृक्तत् १८१

तासु साकमश्वम् ।
देवा वै स्वर्गमामास्तपोऽपप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनानश्व एव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा साकं वा अश्वेन स्वर्गं लोकमगन्मेति ।
तदेव साकमश्वस्य साकमश्वत्वम् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
प्रमंहिष्ठीयं भ्रातृव्यवान्कुर्वीत ।
इन्द्रो वृत्राय वज्रमुदयच्छत् ।
तं नाशक्नोत्प्रहर्तुम् ।
स यदैव प्र इत्यपश्यदथैनमहन् ।

हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
यदु प्र इत्यपश्यत्तस्मात्प्रमंहिष्ठीयमित्याख्यायते ।
सत्रासाहीयं कुर्वीत यस्य त्वदिवाजितं स्यात् ।
इन्द्रोऽसुरानजयत् ।
तेषां त्वानिव नाजयत् ।
सोऽकामयत सत्रा सर्वानसुरान्सहेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेन सत्रा सर्वानसुरानसहत ।
तद्यत्सत्रा सर्वानसुरानसहत तत्सत्रासाहीयस्य सत्रासाहीयत्वम् ।
सत्रा द्विषन्तं भ्रातृव्यं सहते य एवं वेद ।
दैवोदासं पुरोधाकामः कुर्वीत ।
आग्नेयो ब्राह्मण षन्द्रो राजन्यः ।
आग्नेयैन्द्रमेतत्साम ।
ब्रह्म वा अग्निः क्षत्रमिन्द्रः ।
ब्रह्मणैवैतत्क्षत्रं दधार क्षत्रेण ब्रह्म ।
तथा हास्माद्राष्ट्रमनपक्रामि भवति गच्छति पुरोधां पुर एनं दधते १८२

हारिवर्णं ब्रह्मसाम रक्षोगृहीतः कुर्वीत ।
आङ्गिरसस्स्वर्गं लोकं यत एभ्यो लोकेभ्यो रक्षांस्यन्वसचन्त ।
तेऽकामयन्ताप रक्षांसि हनीमहीति ।
स एतद्धरिवर्ण आङ्गिरसस्सामापश्यत् ।
तेनास्तुत ।
तेनैभ्यो लोकेभ्यो रक्षांस्यपाघ्नत ।
हरिश्रियमित्येवास्माल्लोकाद्विराजसि इत्यन्तरिक्षाद्दिवेदिवे इत्यमुष्मात् ।
ततो वै ते सर्वेभ्य एभ्यो लोकेभ्यो रक्षांस्यपहत्य स्वर्गं लोकमारोहन् ।
सर्वेभ्य एवैभ्यो लोकेभ्यो रक्षांस्यपहत्य स्वर्गं लोकमारोहति य एवं वेद ।
यदु हरिवर्ण आङ्गिरसोऽपश्यत्तस्माद्धारिवर्णमित्याख्यायते १८३

त्रैतं नाथकामः कुर्वीत ।

आप्त्यान्सातेन यतोऽरण्ये पिपासाविन्दत् ।
ते धन्वन्कूपमविन्दन् ।
तन्नैकतोऽवरोढुमकामयत न द्वितः ।
तत्त्रितोऽवारोहत् ।
तौ यदापिबतामतृप्यतामथ हैनं तदेव रथचक्रेणापिधाय गोभिः प्रैताम् ।
सोऽकामयतोदित इयां गातुं नाथं विन्देयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स समिन्दुभिः इत्येव निधनमुपैत् ।
तं पर्जन्यो वृष्ट्योर्ध्वमुदप्लावयत् ।
अभि हि तद्रथचक्रमुत्प्लावयां चकार येनापिहित आस ।
तदेतद्गातुविन्नाथवित्साम ।
गातुं वै स तन्नाथमविन्दत ।
विन्दते गातुं य एवं वेद ।
स पदेनान्वैत् ।
तं प्रतिख्यायायन्तमृक्षोऽन्यो भूत्वा मर्कटोऽन्यो वनमवास्कन्दताम् ।
तदु भ्रातृव्यहा साम ।
भ्रातृव्यतां वाव तस्य तावगच्छतां यावृक्षं च मर्कटं चाकरोत् ।
अथो हास्मै वर्षुक एव पर्जन्यो भवति ।
तदु पशव्य साम ।
केवलान्वै स तान्पशूनकुरुत ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु त्रित आप्त्योऽपश्यत्तस्मात्त्रैतमित्याख्यायते १८४

त्रैककुभमन्नाद्यकामः कुर्वीत ।
इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत् ।
तेषामद्यमानानां त्रयः कुमाराः पर्यशिष्यन्त रायोवाजः पृथुरश्मिर्बृहद्गिरिः ।
त इन्द्रमस्तुवन् ।
तानब्रवीत्किंकामाः कुमारा मा स्तुथेति ।
बिभृह्येव नो मघवन्नित्यब्रुवन् ।

तानन्तरांसयोरध्यास्यत ।
तेऽस्य तिस्रः ककुभोऽलम्बन्त ।
इमे वै लोकाः सह सन्तस्त्रेधा व्यायन् ।
तांस्त्रेधान्नाद्यमनुव्यैत् ।
त उ एषां त्रयाणां लोकानां तिस्रः ककुभोऽन्नाद्यमवालम्बत ।
स षन्नतैषां चेद्वै त्रयाणां लोकानां तिस्रः ककुभोऽन्नाद्यमवरुन्धीय
तेनेमास्तिस्रः ककुभोऽपहरेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेनैषां त्रयाणां लोकानां तिस्रः ककुभोऽन्नाद्यमवारुन्ध ।
तेनेमास्तिस्रः ककुभोऽपाहरत ।
तद्यदेतेषां त्रयाणां लोकानां तिस्रः ककुभोऽन्नाद्यमवारुन्ध तत्त्रैककुभस्य
त्रैककुभत्वम् ।
तदेतदन्नाद्यस्यावरुद्धिः साम ।
अवान्नाद्यं रुन्द्धेऽन्नादश्श्रेष्ठः स्वानां भवति य एवं वेद १८५

त्रीन्द्रियं वा एतत्साम ।
षन्द्रीर्ऋच षन्द्रं साम ।
इन्द्रः इति निधनं भवति ।
त्रीणि पुरुष इन्द्रियाणयात्मा प्रजा पशवः ।
तान्येवैतेनात्मन्परिगृह्णीते ।
तानब्रवीत्किंकामो व एकः किंकाम एकः किंकाम एक इति ।
सोऽब्रवीद्रायोवाजः पशुकामोऽहमस्मीति ।
तस्मा इळां प्रायच्छत् ।
पशवो वा इळा ।
अथाब्रवीत्पृथुरश्मिः न्नत्रकामोऽहमस्मीति ।
तस्मै न्नत्रं प्रायच्छत् ।
स एव पृथुर्वैन्यः ।
अथाब्रवीद्बृहद्गिरिरन्नाद्यकामोऽहमस्मीति ।
तस्मा अथकारं प्रायच्छत् ।

अन्नं वा अथकारः ।
सौभरं प्रजाकामः कुर्वीत ।
हुसिति निधनमुपेयात् ।
सौभरमन्नाद्यकामः कुर्वीत ।
ऊर्गिति निधनमुपेयात् ।
सौभरं वृष्टिकामः कुर्वीत ।
हिसिति निधनमुपेयात् ।
सौभरमुद्गहणकामः कुर्वीत ।
उदिति निधनमुपेयात् ।
सौभरं स्वर्गकामः कुर्वीत ।
ऊ इति निधनमुपेयात् ।
भारद्वाजायनान्ह सत्त्रमासीनान्पप्रच्छुः केन प्रजाकामा अस्तोढ्वमिति ।
सौभरेणेति ।
केनान्नाद्यकामा इति ।
सौभरेणेति ।
केन वृष्टिकामा इति ।
सौभरेणेति ।
केनोद्गहणकामा इति ।
सौभरेणेति ।
केन स्वर्गकामा इति ।
सौभरेणेति ।
एवमिव वा एतत्साम ।
एते वा एतस्मिन्न्कामाः ।
एतानेव कामानवरुन्द्धे ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते १८६

सौभरं ब्रह्मसाम कुर्वीत यः कामयेता मे प्रजायां सूपकाशो दर्शनीयः क्षत्रियरूपः पुरुषरूपो जायेतेति ।
तेजो वै पुरुषस्य प्रजा तेजस्सौभरं बृहतः ।
क्षत्रं बृहत् ।

क्षत्रियस्यो एषा प्रजा ।
आ हैवास्य प्रजायां सूपकाशो दर्शनीयः क्षत्रियरूपं पुरुषरूपो जायते य एवं वेद ।
प्रजापतिः प्रजा असृजत ।
ता अस्य सृष्टाः पराभवन् ।
तदिदं सरीसृपमभवद्यदन्यत्सर्पेभ्यः ।
स द्वितीय असृजत ।
ता अस्य परैवाभवन् ।
ते मत्स्या अभवन् ।
स तृतीया असृजत ।
ता अस्य परैवाभवन् ।
तानि वयांस्यभवन् ।
स चतुर्थीरसृजत ।
स षक्षत कथं नु म इमाः प्रजास्सृष्टा न पराभवेयुरिति ।
स एतत्सामापश्यत् ।
तेनैना ऊर्गित्येवाभ्यमृशत् ।
ता अस्योर्जा समक्ता अवर्धन्त ।
सोऽब्रवीत्सुभृतं वा इमाः प्रजा अभार्षमिति ।
तदेव सौभरस्य सौभरत्वम् ।
सुभृतं प्रजां बिभर्ति य एवं वेद १८७

नार्मेधेनातिरात्रेऽच्छावाकाय स्तुवन्ति ।
इळया रात्रिमभिसंतन्वन्ति ।
तदाहुर्यन्ति वा एतेऽनुष्टुभो य उष्णिह्वच्छावाकसाम कुर्वन्तीति ।
अर्वागुष्णिग्घ खलु वा एतासामेका मध्योष्णिगेका पुरोष्णिगेकानवधृतं छन्दोऽनवधृतं वाग्वदति ।
वागनुष्टुप् ।
तेनानुष्टुभो न यन्ति ।
यैतासामुत्तमा सा प्रत्यक्षानुष्टुप् ।
तेनो वावानुष्टुभो न यन्ति ।

यथा ह वा इदं मधुकृतः पुष्पाणां रसान्संभरन्त्येवं ह वा एता देवताश्छन्दसां रसान्समभरन् ।
छन्दसां हास्य रसेन स्तुतं भवति य एवं वेद ।
अहोरात्रयोर्ह खलु वा एतद्रूपं साम ।
षन्द्रीर्ऋच आग्नेयं साम ।
षन्द्रमहराग्नेयी रात्रिः ।
यो ह वा एतस्मात्साम्नोऽतिरात्र इयादहोरात्रयोर्ह वै स रूपेण विवृह्येत ।
स य एनं तत्र ब्रूयादहोरात्रयोरेनं रूपेण व्यवृह्नदिति तथा हैव स्यात् ।
तस्मादु हैतस्मात्साम्नोऽतिरात्रे नैतव्यम् १८८

ह्नेपीयसी ह खलु वै रात्रिरह्नः ।
एहीळं भवत्यप्रवर्हाय ।
यदृचश्च साम्नश्चात्यरिच्यत तदुद्वंशीयमभवत् ।
स हर्चा च साम्ना च प्रतितिष्ठति य एवं वेद ।
तदनृशंसस्य कुर्यान्न नृशंसस्य - परिमितजीवी हि
नृशंसोऽतिरिक्तजीव्यनृशंसः - अतिरिक्तस्यैवावरुद्ध्यै ।
अथ ह वा एतेन देवास्साम्ना वंशमिवोद्यत्यासुरानभ्यत्यक्रामन् ।
यद्वंशमिवोद्यत्यासुरानभ्यत्यक्रामंस्तदुद्वंशीयमभवत् ।
तदुद्वंशीयस्योद्वंशीयत्वम् ।
अभ्यजितं जयति न जितं पराजयते य एवं वेद ।
सर्वेषां वा एतत्पृष्ठानां रूपं साम गायन्ति त्वा गायत्रिणः इति गायत्रस्य अर्चन्त्यर्कमर्कायिणा इति रथन्तरस्य ब्रह्माणस्त्वा होयि शतक्रताविति बृहतः उद्वंशमिव यायिमिरायि इति वैरूपस्य उद्वंशामि इति पुनर्नितुन्नं वैराजस्य वा या वु वा उबिति महानाम्नीनां मा इरा इति रेवतीनां हा इ इति वामदेवस्य ।
सर्वस्मिन्नेवैतत्पृष्ठरूपे रसे तेजस्यपराजिते छन्दसि यज्ञस्यान्ततः प्रतितिष्ठति १८९

सर्वो ह खलु वै षोडशिमान् ।
यत्रोद्वंशीयं क्रियते उत्तमं पदं पुनरभ्यस्यति ।

षोडश्येव तेन रूपेण क्रियते ।
वज्रो वै भ्रातृव्याय षोडशी ।
वज्रमेवैतद्द्विषते भ्रातृव्याय प्रहरति स्तृत्यै ।
तमो वै देवासुरानन्तरासीत् ।
ते देवा एतमर्धेळं धूयधरा अतिच्चरन्ति ।
अपश्यन् ।
तेनैनद्व्यायन् ।
यं द्विष्यात्तं मनसा ध्यायेत् ।
एतमर्धेळमुपावयन्व्येवैनमेत्य् ।
अध्यर्धेळं स्वरति ।
तस्माद्धूयार्धरा अतिच्चरन्ति ।
अषाढो ह सावयसोऽतिरात्रेणेजे ।
तदु हातिधन्वश्शौनकः प्रसृप्त । आस ।
स होद्वंशीयमतिरात्रे छावाकसाम चक्रे ।
तं होवाच मैवं कुरुत ।
प्रलुप्तेळाः स्वरः परस्तादप्रतिष्ठितः पारिचर्यस्य रूपमिति ।
स होवाच तां वै वयं कृत्स्नामिळामुपेत्य स्वरेणैव संतत्य रात्रिं प्रवत्स्यामहा इति ।
नेति हेतर उवाच ।
इन्द्रो वाव तेन साम्नासुरानन्वभ्यवैत् ।
ते बलं स्वरं विदित्वा प्रत्याद्रवन् ।
तं प्राकुर्वत ।
स प्रकृत एतमर्धेळं न्यहन् ।
त्राणाय वा एष यदर्धेळ । इति १९०

नार्मेधमेव कार्यम् ।
तदैळं भवति ।
पशवो वा इळा ।
पशुभिर्वाव ते तान्रात्रेर्निरवाघ्नन् ।
तस्मान्नार्मेधमेव कार्यमिति ।

आष्टादंष्ट्रे ऋद्धिकामः कुर्वीत ।
अष्टादंष्ट्रो वै वैरूपः पश्चेवान्येभ्य ऋषिभ्य एते सामनी अपश्यत् ।
सोऽबिभेदस्तोत्रीये मे सामनी भविष्यत इति ।
सोऽब्रवीदृध्नवात्स यो मे सामनी सोमस्य तर्पयादिति ।
ऋद्धिप्रागुभिते वा एते सामनी ।
ऋध्नुवन्त्येवैताभ्यां तुष्टुवानाः ।
अष्टादंष्ट्रो वैरूपः पशुकामस्तपोऽतप्यत ।
स एते सामनी अपश्यत् ।
ताभ्यामस्तुत ।
स एतामिळां उपैत् ।
पशवो वा इळा ।
ततो वै स पशूनवारुन्द्ध ।
ते एते पशव्ये सामनी ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यद्वष्टादंष्ट्रो वैरूपोऽपश्यत्तस्मादाष्टादंष्ट्रे इत्याख्यायेते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठति १९१

प्रजापतिर्यद्देवेभ्यस्तन्वो व्यभजत्ततो या हरिवत्यासीत्तामात्मनेऽशिंषत् ।
तामिन्द्राय प्रायच्छत् ।
तयेन्द्रो ज्यैष्ठ्यमगच्छत् ।
तद्यद्धरिवतीषु स्तुवन्ति तद्धयेव ज्यैष्ठ्यम् ।
हरिवतीः परोक्षमनुष्टुभस्संपद्यन्ते ।
तास्संस्तुताश्चतुस्त्रिंशदक्षरा भवन्ति ।
ततो ये चतुस्त्रिंशे अक्षरे साम्नस्ताभ्यां लोको विधीयत इत्याहुः ।
यत्पञ्चत्रिंशदक्षरासु स्तुयुः परं रूपं उपपद्येरन्बार्हतम् ।
यत्त्रयस्त्रिंशदक्षरासु स्तुयुरवरं रूपमुपपद्येरनानुष्टुभम् ।
यत्सप्तदशस्तोमस्स्यात्परमं रूपमुपपद्येरन् ।
यत्पञ्चदशस्तोमः स्यादवमं रूपमुपपद्येरन् ।

यत्षोडशिना षोडशस्तोमेन चतुस्त्रिंशदक्षरासु स्तुवन्ति स्वेनैवैनं तदायतनेन समर्द्धयन्ति ।
तेनैभ्यः समृद्धेन स्वायां जनतायामर्धुकं भवति ।
षोडश स्तोत्राणि षोडश शस्त्राणि ।
तद्द्वात्रिंशत् ।
द्वात्रिंशदक्षरानुष्टुप् ।
आनुष्टुभष्षोडश्यनुष्टुभं संपन्नः ।
देवछन्दसानि वा अन्यान्यासन्नसुरछन्दसान्यन्यानि १९२

एकाक्षरं देवानामवममासीत्सप्ताक्षरं परमम् ।
नवाक्षरमसुराणामवममासीत्पञ्चदशाक्षरं परमम् ।
ते देवा अकामयन्त कनीयसा भूयोऽसुराणां वृञ्जीमहीति ।
त एकाक्षरेण पञ्चदशाक्षरमवृञ्जत ।
ते द्व्यक्षरेण चतुर्दशाक्षरं त्र्यक्षरेण त्रयोदशाक्षरं चतुरक्षरेण द्वादशाक्षरं पञ्चाक्षरेणैकादशाक्षरं षडक्षरेण दशाक्षरं सप्ताक्षरेण नवाक्षरमष्टाक्षरेणाष्टौ ।
तानि यत्षोडशषोडश समपद्यन्त तत्षोडशिनष्षोडशित्वम् ।
तद्गायत्र्येव सप्तदश्युपसमपद्यत ।
तस्मादाहुस्सप्तदशः प्रजापतिरिति ।
इन्द्रो वै वृत्रमजिघांसत् ।
स प्रजापतिमुपाधावद्धनानि वृत्रमिति ।
तस्मा एतं षोडशिनं वज्रं प्रायच्छद्यदस्य वीर्यमासीत्तदादाय शक्वर्यः ।
तं नाशक्नोद्धन्तुम् ।
तं पुनरुपाधावद्धनान्येव वृत्रमिति १९३

तस्मै शक्वर्यः प्रायच्छत् ।
ततो वा इन्द्रो वृत्रमहन् ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
स षक्षत यद्यस्मै दिवा प्रदास्यामि रात्रिमेषां भ्रातृव्यलोकोऽभ्यधिरेक्ष्यते ।
यद्यस्मै नक्तं प्रदास्याम्यहरेषां भ्रातृव्यलोकोऽभ्यधिरेक्ष्यत इति ।
स एतदपश्यत् ।

यावत्येतदादित्यो विषितो भवति तस्मै तावत्येव प्रायच्छत् ।
तेनासुरानुभाभ्यामहोरात्राभ्यामन्तरैत् ।
उभाभ्यामेवाहोरात्राभ्यां द्विषन्तं भ्रातृव्यमन्तरेति य एवं वेद ।
यथा ह वै सूर्म्यत्याधायैवं षोडशी स्तोत्राणां स्वर्गलोकस्य समष्ट्यै ।
प्र स्वर्गं लोकमाप्नोति य एवं वेद १९४

तदाहुस्त्रिवृदेव स्तोमः कार्य इति ।
स त्रिवृद्वै वज्रः ।
वज्रष्षोडशी ।
अथो आहुष्पञ्चदश एव कार्य इति ।
पञ्चदशो वै वज्रः ।
वज्रष्षोडशी ।
अथो आहुष्षोडश एव कार्य इति ।
पञ्चदशो वै वज्रः ।
इन्द्रो वज्रस्योद्यन्ता षोडशः ।
सेन्द्रेण वज्रेण वृत्रं पाप्मानं हनानीति ।
सेन्द्रेण हैव वज्रेण द्विषन्तं पाप्मानं भ्रातृव्यं हन्ति य एवं वेद ।
अथो आहुस्सप्तदश एव कार्य इति ।
पञ्चदशो वै वज्रः ।
इन्द्रो वज्रस्योद्यन्ता षोडशः ।
प्रजापतिरेव सप्तदशः ।
सोऽनुष्ठाता सोऽभिगोप्ता सोऽभिवादयिता प्रहर्जहि मापक्रमीः इति ।
सेन्द्रेण वज्रेण सप्रजापतिकेन वृत्रं पाप्मानं हनानीति ।
सेन्द्रेण हैव वज्रेण सप्रजापतिकेन द्विषन्तं पाप्मानं भ्रातृव्यं हन्ति य एवं वेद ।
अथो आहुरेकविंश एव कार्य इति ।
सर्वाभ्यो वा एतं सप्तभ्यो होत्राभ्य इन्द्रो वज्रं निरमिमीत तिस्रस्तिस्र एव होत्रायै ।
स एकविंशष्षोडशी समपद्यत ।
तेनेन्द्रो वृत्रमहन् ।

हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
तदु होवाच यामनो भ्रातलायनो विराजो वा एष संपदे षोडशी ।
वैराजो वै षोडशी विराजिविराजि प्रतिष्ठितः ।
स यत्रैवैतं विराजं संपद्यमानं मन्येत तदेवैतेन स्तोतव्यम् १९५

अहोरात्रयोर्वै देवासुरा अधि संयत्ता आसन् ।
ते देवा अहरभ्यजयन्नथासुरा रात्रिमभ्युपाधावन् ।
ते देवा अब्रुवन्नर्धिनो वा अस्य भुवनस्याभूम कथं सत्रा
रात्रिमभिजयेमाभिप्रयुनजामहा इति ।
तेऽभ्ययुञ्जत ।
अह्नो जघनार्धेऽयतन्त ।
अथासुरा रात्र्या उदासृत्य पूर्वार्धेऽयतन्त ।
एष ह वा अह्नो जघनार्धो यत्सायम् ।
एष उ वै रात्रेः पूर्वार्धो यत्सायम् ।
स्वायामन्ये मर्यादायामयतन्त स्वायामन्ये ।
छन्दांसि वाव तेषां स्वमासीत् ।
छन्दस्स्वधि संयत्ता आसन् १९६

एकाक्षरं देवानामवममासीत्सप्ताक्षरं परमम् ।
नवाक्षरमसुराणामवममासीत्पञ्चदशाक्षरं परमम् ।
सप्ताक्षरं च नवाक्षरं च संनिहिते आस्तामीद्र्यञ्चयन्यानि
यत्तान्यासन्नीद्र्यञ्चयन्यानि ।
तान्प्रजापतिरानुष्टुभोऽन्तरा विक्रम्यातिष्ठत् ।
ते समीक्षमाणास्संचाकशतोऽतिष्ठन्नन्योन्यस्य रन्ध्रमिच्छन्तः ।
ते देवाः प्रजापतिमुपाधावञ्जयामासुरानिति ।
तेभ्य एतं षोडशिनं वज्रं प्रायच्छत् ।
एतेनैषां छन्दोभिश्छन्दांसि संवृज्य मामुपसंपादयथेति ।
त एकाक्षरेण पञ्चदशाक्षरमवृञ्जत द्व्यक्षरेण चतुर्दशाक्षरम् ।
सानुष्टुबभवत् ।
तां प्रजापतिमुपसमपादयन् ।

त्र्यक्षरेण त्रयोदशाक्षरं चतुरक्षरेण द्वादशाक्षरम् ।
सानुष्टुबभवत् ।
तां प्रजापतिमुपसमपादयन् ।
पञ्चाक्षरेणैकादशाक्षरं षडक्षरेण दशाक्षरम् ।
सानुष्टुबभवत् ।
तां प्रजापतिमुपसमपादयन् ।
सप्ताक्षरेण नवाक्षरमष्टाभिरेवाष्टौ ।
सानुष्टुबभवत् ।
तां प्रजापतिमुपसमपादयन् ।
तेषां छन्दोभिरेवं छन्दांसि संवृयासुरान्निरवाघ्नन् ।
तान्निरवहतान्दारान्यतः प्रजापतिरश्वोऽरुणपिशङ्गो भूत्वा पराप्रोथत् ।
त एत उदन्तेष्वधिगम्यन्त एकैक इव ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद १९७

कनीयस्विन इव वै देवा आसन्भूयस्विनोऽसुराः ।
कनीयसा वै तेषां त्वेतद्भूयोऽवृञ्जत ।
तस्मात्कनीयान्ग्रामो ज्यायांसं ग्रामं प्रतिसंयतते ।
तस्मादु कनीयांसो भूयसोऽमित्राञ्जयन्ति ।
कनीयस्वी भूयस्विनं वृञ्जते य एवं वेद ।
एषा ह खलु वै प्रत्यक्षं पङ्क्तिर्यत्पञ्चाक्षरा पञ्चपदा ।
पङ्क्तिषु षोडशिना स्तुवन्ति ।
पुरुषच्छन्दसं वै पङ्क्तिः ।
यत्पाङ्क्तः पुरुषः पुरुषादेवैतदाप्तां वाचं निर्मिमते ।
तस्मात्पुरुषस्सर्वा वाचो वदति ।
आप्त इव वा एतर्हि सर्ववाक् ।
तद्यदनुष्टुप्सु स्तुवन्ति यथा कुम्भ्यासूपदस्तासु महोदधीनुपधावयेत्तादृक्तत् ।
कनीयांसि छन्दांसि ज्यायस्सु छन्दस्स्वध्यूहन्ति ।
जितदेवत्यानि वा एतानि यत्कनीयांसि ।
तस्माज्ज्यायस्सु छन्दस्स्वध्यूहन्ति ।

एषां ह खलु वै छन्दसां वीर्यवत्तमा या त्र्यक्षरैकपदा ।
ताभिर्यच्छन्दांसि उपसृजन्ति वीर्यस्यैवावरुद्ध्यै ।
निधनमभ्यतिस्वरति ।
अह्नो वै देवा रात्रिमभ्यत्यक्रामन् ।
अभि भ्रातृव्यलोकं जयति य एवं वेद ।
भ्रातृव्यभाजनमिव ह्येषा यद्रात्रिः १९८

अधिकरण्यां सोमं क्रीणन्ति ।
यथा ह वै कर्णे कर्णेऽधिरूढ एवं षोडशी स्तोत्राणाम् ।
सह वै षोडशिनं क्रीणीम इति वदन्तष्षोडशिनं क्रीनन्ति यदधिकर्णी
सोमक्रयणी भवति ।
तेनैवैषां षोडशी क्रीतस्तेनावरुद्धः ।
अधिकरण्यां सोमं क्रीणन्ति ।
सवनात्सवनात्सोममतिरेचयन्ति ।
जनद्वतीषु स्तुवन्ति ।
सर्वाणि रूपाण्यनुशास्यन्ते ।
यदधिकरण्यां सोमं क्रीणन्ति यजमान एनं तेन प्रजनयति ।
यत्सवनात्सवनात्सोममतिरेचयन्त्यध्वर्युरेनं तेन प्रजनयति ।
यज्जनद्वतीषु स्तुवन्त्युद्गातैनं तेन प्रजनयति ।
यत्सर्वाणि रूपाण्यनुशास्यन्ते होतैनं तेन प्रजनयति ।
एतानि वै षोडशिनः प्रजननानि ।
प्र प्रजया पशुभिर्जायते य एवं वेद १९९

इन्द्रं वै हरोऽत्यरिच्यत ।
स देवानब्रवीत्कथं मा हरो नातिरिच्येतेति ।
तं विश्वे देवा अब्रुवन्वयं त्वा हरिवता मन्त्रेण स्तोष्यामस्तथा त्वा हरो
नातिरेक्ष्यत इति ।
तं विश्वे देवा हरिवता मन्त्रेणास्तुवन् ।
ततो वा इन्द्रं हरो नात्यरिच्यत ।
तद्यद्धरिवतीषु स्तुवन्ति इन्द्रमेवैतद्धरसा समर्धयन्ति ।

एषा ह खलु वै यजमानस्य नेदिष्ठं देवता यदिन्द्रः ।
तद्यद्धरिवतीषु स्तुन्वति यजमानमेव तद्धरसा तेजसा समर्धयन्ति ।
समस्मा ऋध्यते य एवं वेद २००

प्रष्टिरिव ह खलु वा एतत्स्तोत्राणां यत्षोडशी ।
यद्वै प्रष्टिरनियुक्तो वहत्यप वा वै स छिनत्ति निर्वा मार्ष्टि ।
अन्त्येन स्तोत्रेण समस्तोमो भवति ।
स यथा प्रष्टिं प्रष्टियुगाय नियुञ्ज्यादेवमेवैतत्पूर्वेषु स्तोत्रेषु
षोडशिनमनुनियुनक्त्यनिर्मार्गाय ।
अन्वीव ह खलु वा एतत्स्तोत्राणां यत्षोडशी ।
अन्त्येन स्तोत्रेण समस्तोमो भवत्यनन्वितायै ।
जामीव ह खलु वा एतत्स्तोत्राणां यत्षोडशी ।
अन्त्येन स्तोत्रेण समस्तोमो भवत्यजामितायै ।
पशवो वा उक्थानि वज्रष्षोडशी ।
यदुक्थानामन्ततष्षोडशिना स्तुवन्ति वज्रेणैव तत्पशून्परिगृह्णन्त्यपरावापाय
।
नास्य वित्तं परोप्यते य एवं वेद २०१

तदाहुर्नोक्थ्ये षोडशी कार्य इति ।
पशवो वा उक्थानि वज्रष्षोडशी ।
वज्रं पशुषु विवर्तयेत् ।
अतिरात्र एव कार्यः ।
आपो वै सर्वस्य शान्तिः ।
अद्भिरेवैनत्तच्छमयन्ति ।
यद्यभिचरणीयस्सोमस्स्याद्धिरण्मयं वज्रं भृष्टिमन्तं कृत्वा यो य एव कर्म
कुर्यात्तस्म तस्मा उपप्रवर्तयेत् ।
स स एवास्मै वज्रं प्रहरति स्तृत्यै ।
संस्थिते सोमे न्यञ्चं द्रोणकलशं पर्यस्य करम्भमयान्वा पुरुषान्कृत्वा हरितानां
वा तृणानां तेषां नामग्रहं ग्रीवा अपिकृन्तेदिदमहममुष्य ग्रीवा
अपिकृन्तामीदममुष्येदममुष्य इति ।

यावतामेव नामानि गृह्णाति तावतां ग्रीवा अपिकृन्तति तं ब्रह्मणे ददाति ।
ब्रह्म वै ब्रह्मा ।
ब्रह्म वज्रः ।
ब्रह्मण्येवैतद्वज्रं प्रतिष्ठापयति २०२

इन्द्रश्च वै बृहच्च समभवताम् ।
इन्द्रं बृहदेकया तन्वात्यरिच्यत ।
तस्या अबिभेदनयैव माभिभविष्यतीति ।
स देवानब्रवीत्षोडश्ययं यज्ञक्रतुरस्त्विति ।
तथेति ।
स षोडश्यभवत् ।
तत्षोडशिनो जन्म ।
अति श्रिया द्विषन्तं भ्रातृव्यं रिच्यते य एवं वेद गायत्रीषु द्विपदासु बृहता षोडशिना तुष्टुवानः ।
उप नो हरिभिस्सुतमित्येता वै गायत्र्यो द्विपदाः ।
इन्द्रो वै वृत्रमजिघांसत् ।
स प्रजापतिमुपाधावद्धनानि वृत्रमिति ।
तस्मा एतामपहरसमनुष्टुभं प्रायच्छत् ।
तया नास्तृणुत ।
स यदस्तृत्वा व्यनदत्तन्नानदमभवत् ।
तन्नानदस्य नानदत्वम् ।
तस्मादाहुर्नानदं षोडशिसामाकार्यं न हि तेनास्तृणुतेति ।
तं पुनरुपाधावद्धनान्येव वृत्रमिति ।
तस्मै सप्तानां होत्राणां हरो निर्माय प्रायच्छत् ।
तिस्र एव होत्रायै ।
स एकविंशष्षोडशी समपद्यत ।
तेनो वृत्रमहन् ।
हन्ति द्विषन्तं भ्रातृव्यं ये एवं वेद ।
एकविंशायतनो ह खलु वै षोडशी ।
सप्त वै होत्राः प्रातस्सवने वषट्कुर्वन्ति सप्त माध्यंदिने सवने सप्त

तृतीयसवने ।
अथो यदेवास्मै हरो निर्माय प्रायच्छत् २०३

गौरीवितिर्वा एतच्छाक्त्योऽतिरिक्तं ब्रह्मणोऽपश्यत् ।
तद्गौरीवितमभवत् ।
अतिरिक्तं वा एतद्ब्रह्मणो यद्गौरीवितमतिरिक्तष्षोडशी स्तोत्राणाम् ।
यद्गौरीवितेन षोडशिना स्तुवन्त्यतिरिक्त एव तदतिरिक्तं दधति यज्ञस्य सलोमतायै ।
औपोदितिर्ह स्माह गौपालयो विशालं लिबुजयाभ्यधादनुष्टुभि नानदमकृद्गौरीवितेन षोडशिनमतुष्टुवन्न श्रिया अवपद्य इति ।
न ह वै श्रिया अवपद्यते य एवं वेद ।
तदु श्वस्तनवदपि प्रजाया उपक्लृप्तम् ।
शक्वरीषु षोडशिसाम कुर्वीत पशुकामः ।
वज्रो वै सोडशी पशवश्शक्वर्यः ।
वज्रेणैव पशूं स्पृणोति पशुमान्भवति ।
शक्वरीषु षोडशिसाम कुर्वीत यः कामयेत वज्री स्यामिति ।
वज्रो वै षोडशी वज्रश्शक्वर्यः ।
वज्रेणैव वज्रं स्पृणोति वज्री भवति ।
विराट्स्वन्नाद्यकामष्षोडशिसाम कुर्वीत ।
वज्रो वै षोडश्यन्नं विराट् ।
वज्रेणैवान्नाद्यं स्पृणोत्यत्त्यन्नमन्नादो भवति ।
तास्त्रयस्त्रिंशदक्षरा भवन्ति ।
ततो यान्येकविंशतिः प्रतिष्ठा सा ।
अथ यानि द्वादश प्रजननं तत् ।
प्रति प्रतिष्ठायां तिष्ठति प्रजायते नो चान्तस्थायां जीयते य एवं वेद २०४

प्र वो महे महेवृधे भरध्वमित्येता वै विराजः ।
अनुष्टुप्सु षोडशिसाम कुर्वीत यः कामयेत न मान्या वागतिवदेदिति ।
वज्रो वै षोडशी वागनुष्टुप् ।
वज्रेणैव वाचं स्पृणोति नैनमन्या वागतिवदति ।

आ तिष्ठ वृत्रहन्रथमित्येता वा अनुष्टुभः ।
अथैतास्त्र्यक्षरा एकपदा भवन्ति ।
विष्णोश्छन्दो भूरिजश्शक्वर्य इति ।
एताभिर्वा इन्द्रो वृत्रमहन्नेताभिश्श्रियामाश्नुतौषमेव ।
द्विषन्तं भ्रातृव्यं हन्त्योषं श्रियमश्नुते य एवं वेद ।
हिरण्यं संप्रदायं षोडशिना स्तुवन्ति ।
षोडशुनमेव तज्ज्योतिष्मन्तं कुर्वन्ति ।
अश्व उपतिष्ठते साम्येक्ष्याय ।
भ्रातृव्यलोकं वावैषां तद्विधमंस्तिष्ठति ।
यस्माज्जातो न परोऽन्यो अस्ति य आ बभूव भुवनानि विश्वा
प्रजापतिः प्रजया संरराणस्त्रीणि ज्योतींषि सचते स षोडशी
इति षोडशिग्रहमवेक्षते ।
इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षयां चक्रतुरग्र एतम्
तयोरहं भक्षमनुभक्षयामि वाग्जुषाणा सोमस्य तृप्यतु इति एकाक्षरं
देवानामवममासीत्सप्ताक्षरं परमम् ।
नवाक्षरमसुराणामवममासीत्पञ्चदशाक्षरं परमम् ।
ते देवा अकामयन्त कनीयसा भूयोऽसुराणां वृञ्जीमहीति ।
त एकाक्षरेण पञ्चदशाक्षरमवृञ्जत द्व्यक्षरेण चतुर्दशाक्षरं त्र्यक्षरेण
त्रयोदशाक्षरं चतुरक्षरेण द्वादशाक्षरं पञ्चाक्षरेणैकादशाक्षरं षडक्षरेण दशाक्षरं
सप्ताक्षरेण नवाक्षरम् ।
अष्टाभिरेवाष्टौ ।
एवं कनीयसा ज्यायसो द्विषतो भ्रातृव्यस्य वृङ्क्ते य एवं वेद २०५

अह्नोऽसुरा नुत्ता रात्रिं प्राविशन् ।
ते देवा एतमनुष्टुप्शीर्षाणं वज्रं समभरन् ।
तेनैनानभ्यवायन् ।
वाग्वा एषा ।
वाचा ज्योतिषान्वभ्यवायन् ।
विराड्वा एषा ।
विराजा ज्योतिषान्वभ्यवायन् ।

न वै सुयज्ञ इवातिरात्रः ।
तद्यत्पान्तं भवति तेनैव यज्ञः क्रियतेऽह्नश्च सुलभो रात्रेश्च संतत्या
अव्यवच्छेदाय ।
यानि छन्दांस्यहर्वहन्ति तानि रात्रिं वहन्ति ।
एषा गायत्र्येषा विराडेषा ककुबेषानुष्टुप् ।
बृहतीषु स्तुवन्ति ।
तेन बृहतीभ्यो न यन्ति ।
तासां यद्द्वादशाक्सराणि पदानि तेन जगतीभ्यो न यन्ति ।
त्रिष्टुभा वषट्करोति ।
तेन त्रिष्टुब्भ्यो न यन्ति ।
तान्संधिनाभिपलायन्त आश्विनेनासंहेयमगमयन् ।
असंहेयं ह वै द्विषन्तं भ्रातृव्यं गमयति य एवं वेद ।
एषा वा अग्निष्टोमस्य संमा यद्रात्रिः ।
द्वादश वा अग्निष्टोमस्य स्तोत्राणि द्वादश रात्रेः ।
एषा वा उक्थस्य संमा यद्रात्रिः ।
त्रीण्युक्थानि त्रिदेवत्यः संधिः ।
एषा वा अग्निष्टोमस्य च संवत्सरस्य च संमा यद्रात्रिः ।
द्वादश वा अग्निष्टोमस्य स्तोत्राणि द्वादश मासाः संवत्सरः ।
रात्र्या त्वाव त्रयोदशो मास आप्यते ।
एषा वै ब्रध्नस्य विष्टपं यद्रात्रिः ।
गच्छति ब्रध्नस्य विष्टपं य एवं वेद २०६

एष वाव सर्वगो यज्ञो यदतिरात्रः ।
न वै रात्र्या ऋतेऽहर्न रात्रिर्ऋतेऽह्नः ।
नैषां लोकानामेक एकः ।
अहोरात्रे वा इदं सर्वमिमे लोकाः ।
भूतं भव्यं प्रजनयतः ।
तदाहुर्न प्रथमं यजमानोऽतिरात्रेण यजेतेति ।
स्वं च ह्यतिमन्यते ।
द्वौ यज्ञक्रतू ।

ब्रह्म वा अग्निष्टोमः ।
ब्रह्म वै ब्राह्मणस्य स्वम् ।
अग्निष्टोमं च ह्यतिमन्यत उक्थं च षोडशिनम् ।
तदु वा आहुरग्निष्टोममात्रं वावाग्निष्टोमेनाभिजयत्युक्थमात्रमुक्थेन
षोडशिमात्रं षोडशिना रात्र्या त्वाव सर्वमवरुन्द्ध इति ।
स यो हैवं विद्वानेकेन यज्ञक्रतुना चतुरो यज्ञक्रतून्संतनोत्यास्य चत्वारो विरा
जयन्ते सर्वेषु पशुषु प्रतितिष्ठति २०७

अह्नोऽसुरा नुत्ता रात्रिं प्राविशन् ।
ते देवा एतानि सामान्यपश्यन्नेतान्पर्यायान् ।
तैरेनानन्वभ्यवायन् ।
तान्पर्यायमघ्नन् ।
यत्पर्यायमघ्नंस्तत्पर्यायाणां पर्यायत्वम् ।
पर्यायमेव द्विषन्तं भ्रातृव्यं हन्ति य एवं वेद ।
ये प्रथमरात्रेण छन्ना आसंस्तान्प्रथमेन पर्यायेणाघ्नन् ।
यत्प्रथमस्य पर्यायस्य प्रथमानि पदानि पुनरादीनि भवन्ति ये प्रथमरात्रेण
छन्ना भवन्ति तानेव तेन घ्नन्ति ।
ये मध्यरात्रेण छन्ना आसंस्तान्मध्यमेन पर्यायेणाघ्नन् ।
यन्मध्यमस्य पर्यायस्य मध्यमानि पदानि पुनरादीनि भवन्ति ये मध्यमरात्रेण
छन्ना भवन्ति तानेव तेन घ्नन्ति ।
येऽपररात्रेण छन्ना आसंस्तानुत्तमेन पर्यायेणाघ्नन् ।
यदुत्तमस्य पर्यायस्युत्तमानि पदानि पुनरादीनि भवन्ति येऽपररात्रेण छन्ना
भवन्ति तानेव तेन घ्नन्ति ।
पुनरभिघातं वावैनांस्तदघ्नन् ।
यथा वै हत्वा पुनर्हन्यात्तादृक्तत् ।
पुनरभिघातमेव द्विषन्तं भ्रातृव्यं हन्ति य एवं वेद २०८

शर्वरी वै नां रात्रिः ।
ते देवा अब्रुवन्नपि वै नः शर्वर्या अभूदिति ।
तदेवापिशर्वराणामपिशर्वरत्वम् ।

अपि ह वा अस्य शर्वर्यां भवति य एवं वेद ।
असुरेषु वा इदमग्र आसीत् ।
तद्देवा अभिजित्याब्रुवन्केन न्वहोरात्रे उपरिष्टात्संदध्यामेति ।
त एतद्राथन्तरं संधिमपश्यन् ।
तेनाहोरात्रे उपरिष्टात्समदधुः ।
यत्समदधुस्तत्संधेर्संधित्वम् ।
आश्विनं ह खलु वै संधेरुक्थम् ।
महति रात्रे संधिना स्तुवन्ति ।
आ सूर्यस्योदेतोराश्विनमनुशस्यतेऽहोरात्रयोरेव संतत्या अहोरात्रयोः समारम्भाय ।
अहोरात्रे देवा अभिजित्य ते वज्रमेव परिधिमकुर्वत पशूनां गुप्त्या असुराणामनभ्यवचाराय ।
तद्यदेता उष्णिहोऽन्ततः क्रियन्ते वज्रो वा उष्णिहो वज्रेणैव तत्पशून्परिगृह्णात्यपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद २०९

असुरेषु वा इदमग्र आसीत् ।
तद्देवा अभिजित्याब्रुवन्वीदं भजामहा इति ।
तस्य विभागे न समपादयन् ।
तेऽब्रुवन्नाजिमस्यायामेति ।
त आजिमायन् ।
अग्नेः प्रथमो रथ आसीदथोषसोऽथाश्विनोः ।
तावश्विनावश्वी अश्वयामत्यकुरुताम् ।
तौ द्रवन्तावग्निः पर्युदतिष्ठत् ।
तावब्रूतामति नौ सृजस्वेति ।
नेत्यब्रवीदनु नु माभजतमिति ।
तृतीयं त इत्यब्रूतामावाभ्यां त्वेवाख्यायतादिति ।
तथेति तावत्यार्जत ।
तौ द्रवन्तावुषाः पर्युदतिष्ठत् ।
तावब्रूतामति नौ सृजस्वेति ।

नेत्यब्रवीदनु नु माभजतमिति ।
तृतीयं त इत्यब्रूतामावाभ्यां त्वेवाख्यायतादिति ।
तथेति तावत्यार्जत ।
तावुदजयताम् ।
स य एवमेतामश्विनोरुज्जितिं वेद यत्र कामयत उदिह जयेयमित्युत्तत्र जयति ।
य उ एवैतामग्नेश्चोषसश्चान्वाभक्तिं वेद यत्र कामयतेऽन्वाभक्त इह स्यामित्यन्वाभक्तस्तत्र भवति ।
तस्मान्नानादेवत्यासु संस्तुवन्ति ।
अथाश्विनमित्येवाख्यायते ।
वारेवृतं हि तत्तयोः २१०

अहोरात्रयोर्वै देवासुरा अधिसंयत्ता आसन् ।
ते देवा अहरभ्यजयन् ।
अथासुरा ऋचं च रात्रिं च प्राविशन् ।
ते देवा अब्रुवन्नर्धिनो वा अस्य भुवनस्याभूम कथं सत्रा रात्रिमभिजयेम रत्नैरन्वभ्यवायामेति ।
तव छन्दसेत्यग्निमब्रुवन् ।
तव स्तोमेनेतीन्द्रम् ।
तव संपदेति प्रजापतिम् ।
युष्माकमायतनेनेति विश्वान्देवान् ।
यदग्निमब्रुवंस्तव छन्दसेति तस्माद्गायत्रीषु स्तुवन्ति ।
यदिन्द्रमब्रुवंस्तव स्तोमेनेति तस्मात्पञ्चदशस्तोमो रात्रेः ।
यत्प्रजापतिमब्रुवंस्तव संपदेति तस्मादनुष्टुभं संपद्यते ।
यद्विश्वान्देवानब्रुवन्युष्माकमायतनेनेति तस्माज्जगत्योऽनुशंस्यन्ते ।
तान्संधिनाभिपलायन्त आश्विनेनासंहेयमगमयन् ।
असंहेयं ह वै द्विषन्तं भ्रातृव्यं गमयति य एवं वेद २११

अहोरात्राभ्यां वै देवा असुरान्निर्हत्य तांस्त्रिवृतैव वज्रेणाभिन्यदधुः ।
इमे वै लोकास्त्रिवृतः ।

एभिरेवैनांस्तल्लोकैरभिन्यदधुः ।
तस्मादाहुर्नैव तावदसुरा अन्वाभवितारो यावदिमे लोका भवितार इति ।
एभिर्हि लोकैरभिनिहिताः-
एषा वा अग्निष्टोमस्य च संवत्सरस्य च संमा यद्रात्रिः ।
चतुर्विंशत्यर्धमासः संवत्सरश्चतुर्विंशति रात्र्या उक्थामदानि ।
त्रीणि सवनानि त्रयः पर्यायाः ।
रात्रिमेव तत्त्रिषवणां कुर्वन्ति ।
अथो एनां तदह्न इव समुत्कल्पयन्ति ।
अहोरात्रे देवा अभिजित्य तेऽमुमादित्यं सवनैरेव प्रत्यञ्चमनयन् ।
तं पर्यायैः पुनः प्राञ्चम् ।
तमाश्विनेन पुरस्तादुदस्तभ्नुवन् ।
तस्मादाहुर्नोदिते सूर्य आश्विनमनुशस्यमिति ।
वि हैनं गमयन्ति ।
स य एतदेवं वेद नीतोऽस्य सवनैरसावादित्यः प्रत्यङ्भवत्यानीतः पुनः पर्यायैः प्राङुत्तब्धः पुरस्तादाश्विनेन ।
उभे अस्याहोरात्रे स्पृते अवरुद्धे भवतो भोगायास्मा आदित्यः केतूंश्चरति
२१२

अथैष राथन्तरः संधिर्भवति ।
प्रजापतिरुषसं स्वां दुहितरं बृहस्पतये प्रायच्छत् ।
तस्या एतत्सहस्रमाश्विनं वहतुमन्वाकरोत् ।
स देवानब्रवीदियमेव मम युष्माकमेतदितरदिति ।
तस्माद्यदानृशंसो जायां विन्दते व्येव वहतुमादिशति ।
ते देवा अब्रुवन्वीदं भजामहा इति ।
तस्य विभागे न समपादयन् ।
तेऽब्रुवन्नाजिमस्यायामेति ।
त आजिमायन् ।
अग्नेः प्रथमो रथ आसीदथोषसोऽथाश्विनोः ।
तावश्विनावश्वी अश्वयामाश्वश्वयमत्यकुरुताम् ।
तौ देवा अब्रुवन्वारोऽयं वामथ नः सहास्त्विति ।

तस्मान्नानादेवत्यासु स्तुवन्ति ।
अथाश्विनमित्य् एवाख्यायते ।
अग्नये प्रथमाय स्तुवन्त्यथोषसेऽथाश्विभ्याम् ।
एवं ह्येषामेता उज्ञितयः ।
एकं साम द्वे छन्दसी ।
द्विपदमेव तच्चतुष्पत्सु पशुष्वध्यूहति ।
तस्माद्द्विपाच्चतुष्पदः पशूनधितिष्ठति ।
अनुदिते सूर्ये परिदध्याद्यं कामयेत पापीयान्स्यादिति ।
पापीयानेव भवति ।
व्युषिते परिदध्याद्यं कामयेत नार्वाङ्न परः स्यादिति नैवार्वाङ्न परो भवति ।
बहुवर्षी ह तु पर्जन्यो भवति ।
उदिते परुदध्याद्यं कामयेत श्रेयान्स्याद्रुचमश्नुवीतेति ।
श्रेयानेव भवति रुचमश्नुते २१३

पान्तमा वो अन्धसः इत्यन्धस्वतीर्भवन्ति ।
अहर्वा अन्धो रात्रिः पान्तम् ।
अहोरात्रयोरेव संतत्या अहोरात्रयोः समारम्भाय ।
तास्वोकोनिधनं वैतहव्यम् ।
ओकोनिधनेन वै वैतहव्येन देवा असुरानोकस ओकसोऽनुदन्त ।
ओकस ओकस एव द्विषन्तं भ्रातृव्यं नुदते य एवं वेद ।
प्राणा ह खलु वा ओकः ।
प्राणानेवैतद्द्विषतो भ्रातृव्यस्य वृङ्क्ते प्राणानात्मन्धत्ते ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते येऽतिरात्रमुपयन्तीति ।
तद्यदोकोनिधनं भवति - अयं वै लोकः पुरुषस्यौकः - अस्मिन्नेवैतल्लोके प्रतितिष्ठति ।
वीतहव्य आश्रायसो ज्योगपरुद्धश्चरन्सोऽकामयताव स्व ओकसि गच्छेयमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।

स ओकाः इत्येव निधनमुपैत् ।
ततो वै सोऽव स्व ओकस्यगच्छत् ।
एतत्कामसनि साम ।
एतं वै स काममकामयत ।
सोऽस्मै कामः समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते ।
यदु श्रीरेव राज्यं वै स तदगच्छत् ।
अश्नुते श्रियं गच्छति राज्यं य एवं वेद ।
यदु वीतहव्य आश्रायसोऽपश्यत्तस्माद् ओकोनिधनं वैतहव्यं इत्याख्यायते
२१४

प्र व इन्द्राय मादनमिति मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतेवैषा यद्रात्रिः पीडितेव ।
नाभिषुन्वन्ति ।
यदेवादस्तृतीयसवनादृजीषमतिरेचयन्ति तेनास्यां चरन्ति ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्यामेतद्दधति ।
आइवैनामेतेन प्याययन्ति ।
तासु शाक्त्यम् ।
शाक्त्येन वै शाक्त्याः पशूनवारुन्धत ।
तच्छाक्त्यस्य शाक्त्यत्वम् ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
शाक्त्या अन्नाद्यकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तेऽन्नाद्यमरुन्धत ।
तस्य वा एतस्यास्ति यथैव गौरीवितस्यैवम् ।
अन्नं वै गौरीवितम् ।
अन्नमु वै श्वस्तनम् ।

अन्नमु ह वा इदं सर्वमतिरिरिचे ।
अतिरिक्तेवैषा यद्रात्रिः ।
अतिरिक्तं रात्र्यामन्नाद्यं दधति ।
तत्स्वारं भवति ।
प्राणो वै स्वरः ।
अन्नमु वै प्राणाः ।
तदेतदभिपूर्वस्यैवान्नाद्यस्यावरुद्धिः साम ।
अवान्नाद्यं रुन्द्धेऽन्नादः श्रेष्ठः स्वानां भवति य एवं वेद ।
यदु शाक्त्या अपश्यंस्तस्माच्छाक्त्यमित्याख्यायते २१५

वयमु त्वा तदिदर्थाः इति काण्वम् ।
कण्वो वै नार्षदो ज्योगप्रतिष्ठितश्चरन्सोऽकामयत प्रतितिष्ठेयमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स रन्ताया इत्येव निधनमुपैत् ।
अरत इव वा एष भवति यो न प्रतितिष्ठति ।
लेलेवलेलयेव वै रात्री रतिर्वा एषा ।
ततः स प्रत्यतिष्ठत् ।
तदेतत्प्रतिष्ठा साम ।
प्रतितिष्ठति य एवं वेद ।
यदु कण्वो नार्षदोऽपश्यत्तस्मात्काण्वमित्याख्यायते ।
इन्द्राय मद्वने सुतमिति मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतेवैषा यद्रात्रिः पीडितेव ।
नाभिषुन्वन्ति ।
यदेवादस्तृतीयसवनादृजीषमतिरेचयन्ति तेनास्यां चरन्ति ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्यामेतद्दधति ।
षवैनामेतेन प्याययन्ति २१६

तासु श्रौतकक्षम् ।

श्रुतकक्षः काक्षीवतः पशुकामः तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतामिळां उपैत् ।
पशवो वा इळा ।
ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
पुनर्नितुन्नछन्दो भवति ।
यत्र यत्र वै देवाश्छन्दसां रसमन्वविन्दंस्तत्पुनर्नितुन्नमकुर्वन् ।
तत्पुनरभ्याघ्नन् ।
धीतेवैषा यद्रात्रिः ।
तद्यत्पुनर्नितुन्नछन्दो भवति रसमेवास्यामेतद्दधति ।
रसस्यैवैषानुवृत्तिः ।
यदु श्रुतकक्षः काक्षीवतोऽपश्यत्तस्माच्छ्रौतकक्षमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठति २१७

अयं ते इन्द्र सोमः इति ।
पुनःप्रोक्तिर्ह वा एषा हविषः ।
अयं नु ते परो यज्ञः इति ह वा एतदिन्द्राय प्राहुः ।
द्वितीयं ह्येतद्धविः क्रियते यद्रात्रिः ।
तास्वौर्ध्वसद्मनम् ।
और्ध्वसद्मनेन वै देवा एषु लोकेषूर्ध्वा असीदन् ।
यदेषु लोकेषूर्ध्वा असीदंस्तदौर्ध्वसद्मस्यौर्ध्वसद्मनत्वम् ।
तदेतत्स्वर्ग्यं साम ।
ऊर्ध्व एवैतेन स्वर्गे लोके सीदति य एवं वेद ।
और्ध्वसद्मनेन वै देवा असुराणां सुवृक्तिभिः इति पशूनवृञ्जत नृमादनमिति वज्रं प्राहरन्भरेष्वा इति स्वर्गं लोकमारोहन् ।

श्रौर्ध्वसद्मनेनैव द्विषतो भ्रातृव्यस्य सुवृक्तिभिः इत्येव पशून्वृङ्क्ते नृमादनमिति वज्रं प्रहरति भरेष्वा इति स्वर्गं लोकमारोहति ।
तान्याहुर्नानोपेत्यानि ।
नानेव वा इमे लोकाः ।
एषां लोकानां विधृत्या इति ।
सुवृक्तिभिः इति वा श्रयं लोकः नृमादनमित्यन्तरिक्षं भरेष्वा इत्यसौ ।
तस्मान्नानोपेत्यान्येषां लोकानां विधृत्यै २१८

तदु होवाच जानश्रुतेयो वीर्यं वा एतत्साम्नो यन्निधनम् ।
तद्विक्षुभ्नुयुस्तद्वियुञ्ज्युर्यन्नानोपेयुः ।
सार्धमेवोपेत्यानि साम्नः सवीर्यत्वायेति ।
तानि चतुरक्षराणि भवन्ति ।
याश्चतस्रो दिशोऽस्मिँल्लोके तासु सर्वासु प्रतितिष्ठाम याश्चतस्रो दिशोऽन्तरिक्षे लोके तासु सर्वासु प्रतितिष्ठाम याश्चतस्रोऽमुष्मिँल्लोके तासु सर्वासु प्रतितिष्ठामेति ।
श्रौर्ध्वसद्मनेन ह खलु वै रात्रिः पृष्ठिनीदं वै रथन्तरमन्तरिक्षं वामदेव्यमद एव बृहत् ।
य उ ह वा एषां लोकानां श्रेष्ठास्ते पृष्ठानि ।
तेषामेको भवति य एवं वेद ।
प्रजातिर्ह खलु वा ऊर्ध्वसम ।
श्रश्नुते प्रजापतितां य एवं वेद २१९

श्रा तू न इन्द्र क्षुमन्तमिति वैणवम् । वेणुर्वै वैश्वामित्रोऽकामयताग्र्यो मुख्यो ब्रह्मवर्चसी स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽग्र्यो मुख्यो ब्रह्मवर्चस्यभवत् ।
श्रग्र्यो मुख्यो ब्रह्मवर्चसी भवति य एवं वेद ।
यद्वेणुर्वैश्वामित्रोऽपश्यत्तस्माद्वैणवमित्याख्यायते ।
तद्वेवाचक्षत श्रापालमिति ।

अपाला ह वा आत्रेयी तिलका वारुश्छविर्वाप्यास ।
साकामयताप पापं वर्णं हनीयेति ।
सैतत्सामापश्यत् ।
तेनास्तुत ।
सा तीर्थमभ्यवयती सोमांशुमविन्दत् ।
तं समखादत् ।
तस्यै ह ग्रावाण इव दन्ता ऊदुः ।
स इन्द्र आद्रवद्ग्रावाणो वै वदन्तीति ।
साभिव्याहरत्
कन्या वारवायती सोममपि स्रुताविदत्
अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा
इति ।
अस्यै वा इदं ग्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङावर्तत ।
तमब्रवीद्
असौ य एषि वीरको गृहं-गृहं विचाकशत्
इमं जम्भसुतं पिब धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्
इति ।
अनाद्रियमाणैवैतमब्रवीद्
आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसि
इति ।
पुरा मा सार्धयर्चापाला स्तौतीत्यपपर्यावर्तत ।
शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रव
इत्येवास्यै मुखात्सोमं निरधयत् ।
सोमपीथ इव ह वा अस्य स भवति य एवं विद्वान्स्त्रियै मुखमुपजिघ्रति
२२०

तामब्रवीदपाले किंकामासीति ।
साब्रवीद्
इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय
शिरस्ततस्योर्वरामादिदं म उपोदिरे

सर्वा ता रोमशा कृधि
इति ।
खलतिर्हास्यै पितास ।
तं हाखलतिं चकार ।
उर्वरा हास्य न जज्ञे ।
सो ह जज्ञे ।
उपस्थे हास्यै रोमाणि नासुः ।
तान्यु ह जज्ञिरे ।
तां खे रथस्यात्यबृहत् ।
सा गोधाभवत् ।
तां खेऽनसोऽत्यबृहत् ।
सा कृकलास्यभवत् ।
तां खे युगस्यात्यबृहत् ।
सा संश्लिष्टिकाभवत् ।
तदेषाभ्यनूच्यते
खे रथस्य खेऽनसः खे युगस्य शतक्रतो
अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम्
इति ।
तस्यै ह यत्कल्याणतमं रूपाणां तद्रूपमास ।
तदेतत्कामसनि साम ।
एतं वै सा काममकामयत ।
सोऽस्यै कामः समाध्र्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते ।
यद्वपालात्रेय्यपश्यत्तस्मादापालमित्याख्यायते २२१

अभि त्वा वृषभा सुते इत्यार्षभम् ।
इन्द्रो वा अकामयतर्षभः सर्वासां प्रजानां स्यामृषभतां गच्छेयमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स ऋषभः सर्वासां प्रजानामभवदृषभतां अगच्छत् ।

तदेवार्षभस्यार्षभत्वम् ।
ऋषभ एव स्वानां भवत्यृषभतां गच्छति य एवं वेद ।
तद्वेवाचक्षते दैवोदासमिति ।
दिवोदासो वै वाध्र्यश्विरकामयतोभयं ब्रह्म च क्षत्रं चावरुन्धीय राजा सन्नृषिः स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स उभयं ब्रह्म च क्षत्रं चावारुन्द्ध राजा सन्नृषिरभवत् ।
उभयमेव ब्रह्म च क्षत्रं चावरुन्द्धे राजा सन्नृषिर्भवति य एवं वेद ।
यदु दिवोदासो वाध्र्यश्विरपश्यत्तस्माद्दैवोदासमित्याख्यायते २२२

इदं वसो सुतमन्धः इति गारम् ।
देवेभ्यो वा असुरा गरान्प्राकिरन् ।
तानविद्वांसोऽगिरन्नन्नमेव मन्यमानाः ।
ते गरगिरोऽमन्यन्त ।
तेऽकामयन्तापेमान्गरान्गीर्णान्हनीमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनेमान्गरान्गीर्णानपाघ्नत ।
त एवेमे गिरयोऽभवन् ।
तद्यद्गरान्गीर्णानपाघ्नत तदेव गारस्य गारत्वम् ।
स यो गरगीर्मन्येताप्रतिगृह्यस्य प्रतिगृह्यानाश्यान्नस्यान्नमशित्वा स एतेन स्तुवीत ।
अप हैव तं गरं गीर्णं हते ।
यदेनेन किं च पापं कृतं भवति तदपहते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठति २२३

इदं ह्यन्वोजसा इद्धृतश्चुन्निधनम् ।

घृतश्चुता च वै मधुश्चुता च देवा यत्र यत्रैषां यज्ञस्योपादस्यत्तदाप्याययन्त ।
तस्मादाहुः सोमस्यैवांशुराप्यायस्वेति ।
उपदस्तेवैषा यद्रात्रिः ।
तद्यद्घृतश्चुन्निधनं भवत्यैवैनमेतेन प्याययन्ति ।
घृतश्चुच्च वै मधुश्चुच्चाङ्गिरसां स्वर्गं लोकं यतामहीयेताम् ।
तावकामयेतामनूत्पतेव स्वर्गं लोकमिति ।
तौ तपोऽतप्येताम् ।
तावेते सामनी अपश्यताम् ।
ताभ्यामस्तुवाताम् ।
तौ स्तुत्वैव घृतश्चुते मधुश्चुत इत्येव स्वर्गं लोकमनूदपतताम् ।
अन्तो वै पयसां घृतमन्तः स्वर्गो लोकानाम् ।
अन्तो वै रसानां मध्वन्तः स्वर्गो लोकानाम् ।
अन्त्याभ्यां वाव तौ तत्सामभ्यामन्त्यं स्वर्गं लोकमाश्नुवाताम् ।
अन्त्याभ्यामेवैतत्सामभ्यामन्त्यं स्वर्गं लोकमश्नुते य एवं वेद ।
पशवो ह खलु वै घृतश्चुतः पशवो मधुश्चुतः ।
पशून्वाव तौ तदेताभ्यामवारुन्धाताम् ।
तैरु पशुभिरिष्ट्वा स्वर्गमेव लोकमगच्छताम् ।
ते एते पशव्ये स्वर्ग्ये सामनी ।
अव पशून्रुन्द्धे गच्छति स्वर्गं लोकं य एवं वेद २२४

यज्ञस्तनौ वा एते सामनी ।
एताभ्यां वा इन्द्रो यज्ञं सर्वान्कामानदुग्ध ।
दुहे ह वै यज्ञं सर्वान्कामान्य एवं वेद ।
यजुर्निधनं वा एतयोरन्यतरत्सामनिधनमन्यतरत् ।
तद्यद्घृतश्चुन्निधनं तद्यजुर्निधनमथ यन्मधुश्चुन्निधनं तत्सामनिधनम् ।
या यजुषश्च साम्नश्चर्धिर्ऋध्नोति तामृद्धिमाप्नोति तान्कामान्य एवं वेद ।
तदाहुर्यदाज्येन दिवा चरन्त्यथ केनैषां रात्रिराज्यवती भवतीति ।
घृतश्चुन्निधनेनेति ब्रूयात् ।
एतेन ह वै रात्रिराज्यवती भवति ।
यदु घृतश्चुच्च मधुश्चुच्चाङ्गिरसावपश्यतां तस्मादेवमाख्यायते २२५

अथ मैधातिथम् ।
काण्वायनाः सत्त्रादुत्थायायन्त आयुञ्जानाः ।
काण्वायनाः सत्त्रादुत्थायायन्त आयुञ्जानाः ।
ते होद्गीथा इति किमुद्गत्यैतद्गनामुर्वारुबहुवृत्तमशनायन्त उपेयुः ।
तेऽकामयन्तेमानेव पशून्भूतानुत्सृजेमहीति ।
स एतन्मेधातिथिः काण्वः सामापश्यत् ।
तेनोपन्यषीदन्
आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः
पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते
स घा नो योग आ भुवत्स राये स पुरन्ध्याम्
इति ।
पशवो वै रयिः ।
ततो वै ते तान्पशून्भूतानुदसृजन्त ।
हिंकारेण हैवैनानुत्ससृजिरे ।
ते हैतेऽत्र पश्चादुर्वारुपृश्नय इति पशवः ।
तदेतत्पशूनामुत्सृष्टिः साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु मेधातिथिः काण्वोऽपश्यत्तस्मान्मैधातिथमित्याख्यायते २२६

अथ सौमेधम् ।
देवा वा असुरान्हत्वापूता इवामेध्या अमन्यन्त ।
तेऽकामयन्त पूता मेध्याः स्यामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै पूता मेध्या अभवन् ।
तेऽब्रुवन्सुमेध्या वा अभूमेति ।
तदेव सौमेधस्य सौमेधत्वम् ।
पूतो मेध्यो भवति य एवं वेद ।
तद्वेवाचक्षते पौर्वतिथिमिति ।

पूर्वतिथिर्वा ग्रार्चनानसश्श्यावाश्वात्कनीयान् ।
सोऽकामयताव पशूनृन्धीय भूमानं पशूनां गच्छेयमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत
ग्रा घा गमद्यदि श्रवत्सहस्त्रिणीभिरूतिभिः
इति ।
सहस्त्रमेव पशूनवारुन्द्ध भूमानं पशूनामगच्छत् ।
तदेतत्पशव्यं साम ।
ग्रव पशूनृन्द्धे भूमानं पशूनां गच्छति य एवं वेद ।
यदु पूर्वतिथिरार्चनाससोऽपश्यत्तस्मात्पौर्वतिथिमित्याख्यायते ।
इन्द्र सुतेषु सोमेषु इत्युष्णिहो भवन्ति ।
देवपुरा वा एषा यदुष्णिहः ।
ता यदन्ततः क्रियन्ते देवपुरामेवैतदन्ततः परिहरन्ति पशूनां गुप्त्या
ग्रसुराणामनभ्यवचाराय २२७

तासु कौत्सम् ।
कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताम् ।
स कुत्सस्य हवमागच्छत् ।
तं शतेन वार्ध्रीभिराण्डयोरबध्नात् ।
तं लुशोऽभ्यवदत्
स्ववृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनम्
प्र मुञ्चस्व परि कुत्सादिहा गहि किमु त्वावान्मुष्कयोर्बद्ध ग्रासते
इति ।
ताः सर्वाः संलुप्य लुशमभि प्राद्रवत् ।
तं कुत्सः इन्द्र सुतेषु सोमेषु इत्यन्वाह्वयत् ।
तमभ्यावर्तत ।
तं लुशः इन्द्रा होयी हावे होयी इति ।
तावन्तरातिष्ठत् ।
तावब्रवीदंशमाहरेथामात्मना वामन्यतरस्य पास्यामि महिम्नान्यतरस्येति ।
तथेति ।

तावंशमाहरेतामात्मानमन्यतर उदजयन्महिमानमन्यतरः ।
आत्मानं कुत्स उदजयन्महिमानं लुशः ।
आत्मनान्यतरस्यापिबन्महिम्नान्यतरस्य ।
आत्मना कुत्सस्यापिबन्महिम्ना लुशस्य ।
उभा उ ह त्वाव तस्य तावात्मानाउ यदात्मा च महिमा च ।
तदेतत्सेन्द्रं साम ।
सेन्द्रो हास्य सदेवो यज्ञो भवत्यभ्यस्येन्द्रो यज्ञमावर्तते नास्येन्द्रो
यज्ञादपक्रामति य एवं वेद ।
यदु कुत्सोऽपश्यत्तस्मात्कौत्समित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठति २२८

तदाहू रथन्तरमेव प्रथमे तृचे स्याद्वामदेव्यं द्वितीये बृहत्तृतीय एषां लोकानां समारोहायेति ।
इमे वै लोका एतानि सामानि ।
अयमेव लोको रथन्तरमन्तरिक्षं वामदेव्यमसावेव बृहत् ।
तस्मादेवमेव कार्यमेषां लोकाणां समारोहायेति ।
प्राणव्यानोदाना ह खलु वा एतानि सामानि ।
प्राण एव रथन्तरं व्यानो वामदेव्यमुदानो बृहत् ।
तस्मादेवमेव कार्यं प्राणव्यानोदानानां संतत्या अव्यवच्छेदायेति ।
अथ यः कामयेत प्रजा मे श्रेयसी स्यादिति रथन्तरमेव प्रथमे तृचे कुर्याद्वामदेवमुत्तरयोः ।
प्रजापतिर्वै वामदेव्यम् ।
प्रजापतिमेव तत्स्वरमन्तत उपयन्ति प्रजननाय ।
बृहता श्रीकामः स्वर्गकामः स्तुवीत ।
श्रीर्वै स्वर्गो लोकः ।
बृहदश्नुते श्रियं गच्छति स्वर्गं लोकं य एवं वेद ।
अथो ह भ्रातृव्यलोकमेव नावजहाति ।
भ्रातृव्यभाजनमिव ह्येषा यद्रात्रिः ।

रथन्तरेण प्रतिष्ठाकामः स्तुवीत ।
प्रतिष्ठा वै रथन्तरम् ।
प्रत्येव तिष्ठति ।
गायत्रीषु संधिना ब्रह्मवर्चसकामः स्तुवीत ।
ब्रह्म वै गायत्री ।
ब्रह्मवर्चस्येव भवति ।
ककुप्सु पुरुषकामः ।
पुरुषो वै ककुप् ।
पुरुषवानेव भवति ।
उष्णिक्षु पशुकामः ।
पशवो वा उष्णिक् ।
पशुमानेव भवति ।
विराट्स्वन्नाद्यकामः ।
अन्नं वै विराट् ।
अन्नाद एव भवति ।
अनुष्टुप्सु प्रतिष्ठाकामः ।
प्रतिष्ठा वा अनुष्टुप् ।
प्रत्येव तिष्ठति ।
पङ्क्तिषु यज्ञकामः ।
यः कामयेत पुनर्मा यज्ञ उपनमेदिति ।
यज्ञो वै पङ्क्तिः ।
पुनरेवैनं यज्ञ उपनमति ।
त्रिष्टुप्स्वोजस्कामो वीर्यकामः ।
ओजो वै वीर्यं त्रिष्टुप् ।
ओजस्व्येव वीर्यवान्भवति ।
जगतीषु पशुकामः ।
पशवो वै जगती ।
पशुमानेव भवति ।
तदाहुरेकस्मिन्वावैतस्य छन्दस्येकस्मिन्कामे स्तुतं भवति य एवं स्तुते ।
अथैतस्य सर्वेषु छन्दस्सु सर्वेषु कामेषु स्तुतं भवति यो बृहतीषु स्तुते ।

बृहतीं ह्येवैतानि सर्वाणि छन्दांस्यभिसंपद्यन्त इति ।
गायत्री च जगती च ते द्वे बृहत्यौ ।
उष्णिक्च त्रिष्टुप्च ते द्वे बृहत्यौ ।
अनुष्टुप्च पङ्क्तिश्च ते द्वे बृहत्यौ ।
बृहत्येव बृहती ।
तस्माद्बृहतीष्वेव स्तोतव्यमेतेषां सर्वेषां छन्दसां सर्वेषां कामानामुपाप्त्यै
२२९

तदाहुर्यत्त्रिवृदेव स्तोमानां लघिष्ठो रथन्तरं साम्नामाश्विनमु वै शस्त्राणां गरिष्ठमथ कस्मात्त्रिवृदेव स्तोमानां रथन्तरं साम्नामाश्विनस्य शस्त्रं प्रत्युद्यन्तुमर्हत इति ।
स ब्रूयात्प्राणो वै त्रिवृतः ।
प्राणेष्विदं सर्वं प्रतिष्टिःतम् ।
प्राणा इदं सर्वं प्रत्युद्यच्छन्ति ।
प्राणा इदं सर्वं प्रतिप्रति ।
इमे वै लोकास्त्रिवृतः ।
एष्विदं लोकेषु सर्वं प्रतिष्टिःतम् ।
इम इदं लोकाः सर्वं प्रत्युद्यच्छन्ति ।
इम इदं लोकाः सर्वं प्रतिप्रति ।
वाग्वै रथन्तरम् ।
वाचीदं सर्वं प्रतिष्ठितम् ।
वागिदं सर्वं प्रत्युद्यच्छति ।
वागिदं सर्वं प्रतिप्रति ।
इयं वै रथन्तरम् ।
अस्यामिदं सर्वं प्रतिष्ठितम् ।
इयमिदं सर्वं प्रत्युद्यच्छति ।
इयमिदं सर्वं प्रतिप्रति ।
तस्मात्त्रिवृदेव स्तोमानां रथन्तरं साम्नामाश्विनस्य शस्त्रं प्रत्युद्यन्तुमर्हत इति
२३०

तदाहुर्यत्पवमानवन्तोऽन्ये यज्ञक्रतवोऽथ केनैषां रात्रिः पवमानवती भवतीति ।
रथन्तरेण संधिनेति ब्रूयात् ।
एतेन ह वै रात्रिः पवमानवती भवति ।
तेन सकृद्धिंकृतेन पराचा स्तुवते ।
सकृद्ध्येव पुरस्तात्त्रिवृते हिंउर्वन्ति यत्प्रायणं तदुदयनमसदिति ।
रेतःसिक्तिर्ह त्वै पूर्वस्त्रिवृत्प्रजापतिरुत्तरः ।
आत्मा वै प्रजा पशव एतानि तृचानि ।
प्रजापतिर्वै रथन्तरम् ।
यथा रेत एव सिक्तं स्यान्न प्रजायते तादृक्तद्यत्सकृद्धिंकृतैः स्तुवीरन् ।
तद्यत्तृचाय तृचाय हिंकुर्वन्ति प्रजात्या एव ।
बहुर्भवति प्रजायते य एवं वेद ।
अथो हैषामेक एव पर्याय आयतनवान्स्यादनायतनौ द्वौ स्यातां यत्सकृद्धिंकृतैः स्तुवीरन् ।
तद्यत्तृचाय तृचाय हिंकुर्वन्ति तेनैवैषां सर्वरात्रिरायतनवती पवमानवती भवति ।
यथा वा अहस्तथा रात्रिर्यथा रात्रिस्तथाहः ।
पूर्वाह्णो मध्यंदिनोऽपराह्णः पूर्वरात्रो मध्यरात्रोऽपरात्रः ।
तद्यत्तृचाय तृचाय हिंकुर्वन्त्यहोरात्रयोरेव विधृत्यै २३१

तदाहुर्यदेकविंशमनु सर्वे यज्ञक्रतवः संतिष्ठन्तेऽत्यु वा एकविंशान्युक्थानि रात्रिरेत्यथ केनैषामेकविंशमनु रात्रिः संतिष्ठत इति ।
स ब्रूयाद्यदेवैत एकविंशतिश्च त्रिवृतो भवन्ति नव चैकविंशा इति ।
अथ ह स्माह भाल्लवेयः क उ स्विदद्योभयतोज्योतिषा यज्ञक्रतुना यक्ष्यत इति ।
एष ह वा उभयतोज्योतिर्यज्ञक्रतुर्यदतिरात्रः ।
त्रिवृत्पुरस्ताद्बहिष्पवमानं भवति त्रिवृदुपरिष्टाद्राथन्तरः संधिः ।
अग्निर्वै पूर्वस्त्रिवृदादित्य उत्तरः ।
अग्निना वा अयं लोको ज्योतिष्मानादित्येनासौ ।
उभयतोज्योतिषास्य यज्ञक्रतुनेष्टं भवति ज्योतिष्मानस्मिंश्च लोकेऽमुष्मिंश्च

भवति य एवं वेद ।
तौ वा एतौ ब्रह्म चैव क्षत्रं च ।
ब्रह्म वै त्रिवृत्क्षत्रं पञ्चदशः ।
तदेतद्ब्रह्म च क्षत्रं च संधाय रात्रिं वहतः ।
तदेतद्ब्रह्म च क्षत्रं च संधायान्ततः पाप्मानमपहतः ।
तद्यदेतौ स्तोमावन्ततः क्रियेते पाप्मान एवापहत्यै ।
अप पाप्मानं हते य एवं वेद ।
तौ यद्गायत्रीं संपद्येते - तेजो वै ब्रह्मवर्चसं गायत्री - तेजस्येव तद्ब्रह्मवर्चसे प्रतितिष्ठति ।
अथो यजमानमेव तदायुषि प्रतिष्ठापयति सर्वायुष्ट्वाय ।
प्राणो हि गायत्री ।
सर्वमायुरेति य एवं वेद २३२

द्वितीयो भागः
विराट्संपदैव यज्ञेन यजेतेत्याहुः ।
अन्नं वै विराट् ।
अन्नं ह वै देवानां सोमो राजा ।
अन्नमेव तत्कृत्वा देवेभ्यः सोमं राजानं प्रयच्छति ।
न ह वा एषोऽनभिषुतो देवानामन्नम् ।
तमेतदभिषुत्यान्नं कृत्वा देवेभ्यः प्रयच्छति ।
यद्ध वा इह देवेभ्यः करोति तदस्मै देवाः कुर्वन्ति ।
त एनं समृद्धाः प्रजया पशुभिरन्नाद्येन समर्धयन्ति ।
विराजनातियष्टव्येत्याहुः ।
यो ह वै विराजमतियजते पुनर्ह सोऽमुष्मिँल्लोके यजमान आस्ते ।
स रूक्षः परुषो विराजं संपिपादयिषन्नीप्सन्ननाप्नुवन्नास्ते ।
क्व हि तदाप्स्यति यदितोऽनाप्त्वा प्रैति ।
परुषानिव हासीनानसितो दैवल उवाच क एत आसत इति ।
ये विराजमत्ययजामहीति होचुः ।
तान्हाभ्युवाद । स रथादवपद्यते - २३३

पुरश्चक्रं पथो बिले
तं चक्रमभिवर्तते योऽसंपन्नेन यजते
पाको यज्ञेन देवयुर्यद्ददाति तदेवास्यलोकमभिगच्छति
इति ।
पाकाः सन्तोऽविजानन्तोऽदेवायतेति हैनांस्तदुवाच ये
विराजमत्ययजध्वमिति ।
तदाहुः कुतो यज्ञमतथाः क्वैनं प्रत्यतिष्ठिप इति ।
यत एवैनमतसीति ब्रूयात्तदेवैनं प्रत्यतिष्ठिपमिति ।
पुरुषाद्ध वै यज्ञस्तायते पुरुषे प्रतितिष्ठति ।
अथ ह हत्स्वाशया आल्लकेयो महावृषो राजा पुत्रं दीक्षयां चकार ।
तस्य ह सोमशुष्मः सात्ययज्ञिरुद्गीथायोढ आस ।
तमु ह महावृषाणां दूता आसस्तुरागच्छ समितिर्वा इयमिति ।
तद्ध प्रधावयन्नुवाचोद्गातरेतं ते पुत्रं परिददानीति ।
स हेष्ट्वा पुनराजगाम ।
स होवाचोद्गातः क्व यज्ञं प्रत्यतिष्ठिपः क्व यजमानं क्वास्य पशूनिति ।
तद्ध न प्रत्युवाच ।
स होवाच पुनर्मे पुत्रं दीक्षयत न वै विद्म यत्र मे पुत्रमकृदिति ।
तमु ह पुनर्दीक्षयां चक्रुः ।
तस्य ह स्वयमेवोज्ञगौ ।
स यत्प्रत्यवद्न्यद्यजमान एव यज्ञं प्रत्यतिष्ठिपं यजमानं वामदेव्ये रथन्तरेऽस्य
पशूनिति २३४

एतद्ध वै परमं वाचः क्रान्तं यद्दशेति ।
एतावद्ध परमं वाक्चक्रमे ।
तद्यत्परमं वाचः क्रान्तं तत्सर्वमाप्नवानीति ।
अथ यदत ऊर्ध्वं विंशतिश्शतं सहस्रमित्यङ्गान्येवास्यै तानि पर्वाणि ।
वाच एव सा प्रभूतिः ।
तदु हात्रैव सर्वां विराजमाप्नोति ।
पुरुषसंपद्ध खलु वा एषा दशाक्षरा विराट् ।
दश पुरुषे प्राणाः ।

सा वा एषैतासामेव नवतिशतस्य स्तोत्रियाणां प्रशंसा ।
नवतिशतं ह्येवैषोऽग्निष्टोमः संस्तुतो भवति ।
कृतं तद्यदशीतिशतम् ।
कृतमिदु दश कृतं सत् ।
तदु ह कुरव आहुर्द्वापर एष यन्नवतिशतं स्तोत्रियास्त्रयाणामयानामधमः ।
कृतं वै त्रेताद्वापरम् ।
द्वे स्तोत्रिये उपप्रस्तुत्ये ।
स कृतस्तोमः संपद्यते ।
कृतेन तज्जयति यज्जिगीषति ।
कृतेनोद्भिनत्ति ।
अथो पक्षावेतौ यत्पवमानौ ।
तावेव तत्समौ करोति ।
अथो विश्वज्योतिरेव यज्ञक्रतुर्भवति ।
अथो द्व्यतिष्टुतः ।
तावेव विराजः स्तनौ ।
स द्विपाद्यजमानः प्रतिष्ठित्यै २३५

तदु ह स्माह कहोळः कौषीतकेयो दीर्घस्तनी बत तेषां विराडयेषां स्तोत्रिये विराजः स्तनाविति ।
अपि नूनमेतां विराजं प्रतिवेशतो दुह्रे इति ह स्माह ।
अन्तर्यामेवैतां संपदं देवा उपासत ।
तामृषय उपासत ।
तामु एव वयं परोऽवर उपास्महे ।
एतासामेव नवतिशतस्य स्तोत्रियाणां पञ्च च सहस्राण्या चत्वारिंशतान्या द्वासप्ततिरक्षराणि ।
तद्ये एव ते द्वासप्ततितमे अक्षरे तावेव विराजः स्तनौ ।
स द्विपाद्यजमानः प्रतिष्ठित्या इति ।
तदाहुर्यद्द्वापरः स्तोमोऽथ केन कृतस्तोम इति ।
अक्षरैरिति ब्रूयात् ।
अथो स्तोत्रैरिति ।

अथो स्तुतशस्त्रैरिति ।
अथो यद्दशकृतमिति ब्रूयात्तेनो एव कृतस्तोम इति ।
अयमयं ह वाव दशकृतं उपाप्नोति २३६

आपो वा इदमग्रे महत्सलिलमासीत् ।
तदपामेवैश्वर्यमासीत् ।
यदपामेवैश्वर्यमासीदपां राज्यमपामन्नाद्यं तदग्निरभ्यध्यायन्ममेदमैश्वर्यं मम राज्यं ममान्नाद्यं स्यादिति ।
स एतामग्निष्टोमसंपदमपश्यत् ।
तयेमा अपो व्युदौहदूर्ध्वश्चावाचीश्च ।
स एतमेव दिनंदिनं स्तोमं गायन्केवलीदमन्नाद्यमकुरुत ।
स नवभिरेकविंशैरमूरूर्ध्वा उदतभ्नोत् ।
ताः परेण दिवं पर्यौहत् ।
ता एताः पर्यूढा ऋतुशो वर्षन्तीस्तिष्ठन्ति ।
एकविंशत्या त्रिवृद्भिरिमा अवाचीरभ्यतिष्ठत् ।
ताः परेण पृथिवीं पर्यौहत्ता एताः पर्यूढा अनुखायैक उपजीवन्ति - २३७

तिष्ठन्तीरेके स्रवन्तीरेके ।
स एवमेता अपो व्यूह्य विनुद्यास्मिँल्लोकेऽन्नमादत् ।
तन्नाल्पकं न मध्यमं न महदिवान्नाद्यमभ्यत्यरिच्यत ।
एवमेव द्विषन्तं भ्रातृव्यं व्यूह्य विनुद्यास्मिँल्लोकेऽन्नमत्ति तन्नाल्पकं न मध्यमं न महदिवान्नाद्यमभ्यतिरिच्यते य एवं वेद ।
तमेतमन्नं जिगीवांसं सर्वे देवा अभिसमगच्छन्त ।
ते वै तन्नाविन्दन्त ।
या ह्यसौ यज्ञायज्ञीयस्यैकविंशी तामासु बहिष्पवमानीसु नवसु प्रत्युपधाय शयेऽनन्तो भूत्वा परिगृह्यैतदन्नाद्यम् ।
अथो यथा पात्रेऽङ्गारा ओप्ताः स्युरेवमेवैषु लोकेष्वदृश्योऽनन्त आस ।
तानविन्दमानानब्रवीत्स्तुत मेति २३८

तं वसवो गायत्र्या छन्दसा गायत्रेण साम्ना प्रातःसवनेनास्तुवन् ।

तांस्तस्मिन्नेव सवन उपाह्वयत ।
तं रुद्रास्त्रिष्टुभा छन्दसा त्रैष्टुभेन साम्ना माध्यंदिनेन सवनेनास्तुवन् ।
तांस्तस्मिन्नेव सवन उपाह्वयत ।
तमादित्या जगत्या छन्दसा जागतेन साम्ना तृतीयसवनेनास्तुवन् ।
तांस्तस्मिन्नेव सवन उपाह्वयत ।
तं विश्वे देवा वाङ्मनश्च प्रजापतिरनुष्टुभा छन्दसा यज्ञायज्ञीयेन साम्नास्तुवन् ।
तांस्तस्मिन्नेव स्तोत्र उपाह्वयत ।
एवमेते देवा एतं यज्ञक्रतुमन्वायतन्त अथ य एनं नान्वायतन्त - २३९

शश्वद्ध ते पराभूता देवानामशनया ।
अथ य एनमन्वायतन्त इम एतर्हि परिशिष्टाः ।
त उ एवापर्युषि ता भवितारः ।
स हैष वैश्वदेवः स्तोमः ।
विश्वेषां हैव देवानां पुरा स्तोम आस ।
तेन यदग्निमस्तुवन्सास्याग्निष्टोमता ।
अग्निं हैनेनास्तुवन् ।
स्तुवते हैनेन स्वा स्तुवतेऽरणा ।
स्तुवते हैनेन जने स्वा य एवं वेद ।
स हैष नवैकविंशानभिसंपद्यते द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एका स्तोत्रियातिरिच्यते ।
यजमानो हैव सोऽतिरिच्यते यो वैवं वेद ।
यथा ह गिरौ ज्योतिर्भायादेव तस्यां जनतायां भाति यस्यां भवति य एवं वेद ।
स उ एवैकविंशतिस्त्रिवृतोऽभिसंपद्यते ।
अग्निर्वै त्रिवृत् ।
तद्यद्वै किं च त्रिवृत्तत्सर्वमग्निमेवाभिसंपद्यते ।
याश्च ह महत्यः संपदो याश्च क्षुल्लकास्ता ह सर्वा एवंविदमभिसंपद्यन्ते ।
सर्व एनं कामा अभिसंपद्यन्ते य एवं वेद ।
स एष एकविंशत्या त्रिवृद्भिरमुष्मिन्नादित्ये प्रतिष्ठितो

नवभिरसावेकविंशैरस्मिन् ।
तावेतावेवमन्योऽन्यस्मिन्प्रतिष्ठितौ ।
प्रतितिष्ठति य एवं वेद २४०

नासावस्तमेति नायमनुगच्छति ।
इममेवासावभ्यस्तमेति ।
तदस्यास्तत्वम् ।
इमं ह्येवासावभ्यस्तमेत्यमुमेवायमभ्यनुगच्छति ।
तदमुष्यामुत्वम् ।
अमुं ह्येवायमभ्यनुगच्छति ।
न हास्तमेति नानुगच्छति य एवं वेद ।
ते हैते सवासिन्यौ देवते ।
गच्छति हैताभ्यां सवासित्वम् ।
अथो हास्यैते एव देवते ।
एषु लोकेषु सर्वपाप्मानमपघ्नत्यौ तिष्ठतः ।
यावदु ह वा अयमग्निरस्मिँल्लोके दीप्यते तावदमुष्मिँल्लोक आदित्यः ।
न हैव तावदेवंविदो लोकः क्षय्यः ।
यथा ह वा इदमायतनमायतनी प्रेप्सेदेवमिमं लोकमापः प्रेप्सन्ति
याश्चामूर्याश्चेमाः ।
ता यन्न संभिन्दन्त्येतस्यैव स्तोमस्य कर्तोः ।
एष एवैनाः स्तोमो विददते ।
स यो न्वावैकस्य राज्यस्य त्राता द्वयोर्यस्त्रयाणां लोकी वाव स तेन मन्येत
।
अन्त्ये तु स लोक्यसद्यस्तेषामेकोऽसद्येऽस्य लोकस्य त्रातारः ।
अस्य ह स लोकस्य त्रातृणामेको भवति य एवं वेद ।
तेन लोकी सः ।
यावद्ध वा अप्येवंविदो ब्राह्मणा भवितारो न हैव तावद्याश्चामूरापो
यश्चेमास्ता उभयीः संपद्येमं लोकं निर्मृरष्टारः २४१

तस्य वा एतस्याग्निष्टोमस्य गायत्रीमेव प्रातःसवनं संपद्यते त्रिष्टुभं माध्यंदिनं

सवनं जगतीं तृतीयसवनम् ।
तदेतत्स्वयंसंपन्नं प्रातःसवनम् ।
गायत्रमेव सर्वम् ।
अथ चत्वारि छन्दांसि माध्यंदिनं सवनं गायत्री बृहती ककुप्त्रिष्टुप् ।
तस्या एतस्यै ककुभोऽष्टाविंशत्यक्षरायै विंशतिमक्षराणि गायत्र्यामुपदधाति ।
सा त्रिष्टुप्संपद्यते ।
अथ यान्यष्टावतिरिच्यन्ते तानि बृहत्यामुपदधाति ।
सा त्रिष्टुप्संपद्यते ।
त्रिष्टुबेव त्रिष्टुप् ।
अथ षट्छन्दांसि तृतीयसवनं गायत्र्युष्णिक्ककुभावनुष्टुब्जगती बृहती ।
तस्या एतस्यै गायत्र्यै चतुर्विंशत्यक्षरायै विंशतिमक्षराणि ककुभ्युपदधाति ।
सा जगती संपद्यते ।
अथ यानि चत्वार्यतिरिच्यन्ते तान्युष्णिह्युपदधाति ।
सा द्वात्रिंशदक्षरानुष्टुप्संपद्यते ।
अनुष्टुबेवानुष्टुप् ।
तां द्वेधा व्यूहति ।
तस्यै षोडशाक्षराण्यनुष्टुभ्युपदधाति ।
सा जगती संपद्यते ।
स्वयमेव परस्ताज्जगती ।
अथ यानि षोडशातिरिच्यन्ते तानि यज्ञायज्ञीयस्य बृहत्यामुपदधाति ।
सा द्वापञ्चाशदक्षरा जगती संपद्यते ।
चत्वार्यक्षराणि जगतीमतियन्ति य एते चतुष्पादाः पशवः ।
अथो स्तना एव विराजो दोहः ।
अथो प्रतिष्ठैव ।
यथा चतुष्पदी प्रति तिष्ठात्तथा ।
तद्वत्रैवानुव्येति ।
न किं चनातिरिच्यते वामदेव्यस्यून्यूने त्रीण्युपदधाति - २४२

यज्ञायज्ञीय एकम् ।
गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनम् ।
ब्रह्मणोऽस्य सतः क्षत्रस्येव प्रकाशो भवति वैश्यस्येव रयिः पुष्टिर्य एवं वेद ।
तस्यो एवाक्षरशो गायत्रीमेव प्रातःसवनं संपद्यते त्रिष्टुभं माध्यंदिनं सवनं जगतीं तृतीयसवनम् ।
एकान्नसप्ततिः प्रातःसवनस्य स्तोत्रियाष्षष्टिस्त्रिष्टुभो माध्यंदिनं सवनं चतुर्विंशतिश्च जगतीस्तृतीयसवनम् ।
एका व ककुप् ।
पुरुषो वै ककुप् ।
स ह स यजमान एवैतस्यां संपद्यध्यूढः ।
तद्वत्रैवानुव्येति ।
न किं चनातिरिच्यते ।
एकस्यै ककुभोऽष्टाविंशत्यक्षरायै चत्वार्यक्षराण्यादाय वामदेव्यस्य न्यूने त्रीण्युपदधाति यज्ञायज्ञीय एकम् ।
अथ या गायत्री परिशिष्यते तामद एकान्नसप्तत्यां प्रातःसवनस्य स्तोत्रियासु प्रत्युपदधाति ।
तदु हानन्तम् ।
अनन्तां श्रियं जयति य एवं वेद २४३

तस्यो एव द्वे सवने बृहतीं संपद्येते ।
यथैव पुरा तृतीयसवनं तथा तृतीयसवनम् ।
एकान्नसप्ततिः प्रातःसवनस्य स्तोत्रियाः ।
ताष्षट्चत्वारिंशद्बृहत्यः संपद्यन्ते ।
या हि तिस्रो गायत्र्यस्ते द्वे बृहत्यौ ।
न ताष्षट्चत्वारिंशद्बृहत्यः संपद्यन्ते ।
तदेतदायदेव प्रातःसवनं बृहतीमभिसंपद्यते ।
यस्मादायदेव प्रातःसवनं बृहतीमभिसंपद्यते तस्माद्ब्राह्मणो जायमान एव लोकी जायते ।
तं वा त्वै चरणेन भूयांसं कुरुते तं वा कनीयांसम् ।

अथैतद्द्वौ माध्यंदिनं सवनं संपादयत उद्गाता च होता च ।
चत्वारि छन्दांस्युद्गाता युनक्ति ।
तानि च होतानुशंसत्युप च त्रीण्याहरत्यनुष्टुभं पङ्क्तिं जगतीम् ।
गायत्री च जगती च ते द्वे बृहत्यौ ।
उष्णिक्च त्रिष्टुप्च ते द्वे बृहत्यौ ।
अनुष्टुप्च पङ्क्तिश्च ते द्वे बृहत्यौ ।
बृहत्येव बृहती ।
यस्मादेतद्द्वौ माध्यंदिनं सवनं संपादयतस्तस्माद्राजन्यस्य कार्यो लोक इष्टापूर्तेन श्रद्धया ब्रह्मण्यतया ।
अथ यस्माद्यथैव पुरा तृतीयसवनं तस्मादु ब्राह्मणाच्च राजन्याच्च वैश्यो लोकी ।
इतरो न हि तथा लोकी यथा ब्राह्मणश्च राजन्यश्च २४४

कृत्स्नं ह वै लोकं यजमानोऽभिजायते ।
अप एव प्रथमस्य तृचस्य प्रथमया स्तोत्रियया जयति भूमिं द्वितीयाग्निं तृतीयया ।
अन्तरिक्षमेव द्वितीयस्य च तृचस्य प्रथमया स्तोत्रियया जयति वायुं द्वितीयया प्राणं तृतीयया ।
दिवमेव तृतीयस्य तृचस्य प्रथमया स्तोत्रियया जयति आदित्यं द्वितीयया नक्षत्राणि तृतीयया ।
नवैता बहिष्पवमान्यो भवन्ति नव देवलोकाः ।
तानेवैताभिराप्नोति ।
ता एतास्तिस्रो विराजो दैवी यज्ञिया मानुषी ।
एतासु ह सुचित्तिश्शैलनो जनकं वैदेहं समूदेस होवाच श्रद्धा माविददृत्विजो मे ह्वयन्त्विति ।
तस्मै ह कुरुपञ्चालानृत्विज ऊहुः ।
तेषु हागतेषु शैलनो बिभयां चकार गच्छद्ब्राह्मणा इवोदन्त्यान्वाहिनो लघूयेदिति ।
स होवाच सम्राड्वाक्यं मेऽस्तीति ।
तिस्रो वा इमा विराजो तृप्यन्तीः सर्वकामा अन्नाभिधानाः ।

तासु स्म त्वा योऽन्तरवदधाति तं स्मैवोद्गातारं वृणीष्व ।
स वाव तेषां कामानामभिवोढा य एतासु कामाः ।
स उ एव पुनर्मृत्योरतिवोढा य एवं वेदेति २४५

अथ ह प्रधावयां चकार ।
तस्मिन्न प्रेष्यन्नैमान्ह स्म पृच्छत्यासां विराजामृद्धिम् ।
ते ह स्म नाभ्यापयन्ति ।
य उ ह स्माभ्यापयन्तीति यां ह स्मैकामभ्यापयन्ति ।
स ह स्मरते ब्राह्मणं बताहं ब्राःमणमेतासु मीमांसमानमपश्यमच्छ धावत शैलनमिति ।
तद्व्यचनं हास यथा शैलन इयेष ।
ता एतास्तिस्रो विराजो दैवी यज्ञिया मानुषी ।
सैषा दैवी विराड्यदिमे लोकाः ।
सा न्यूना ।
यजमानावधानायैव तन्नयूना ।
तदन्तर्यजमानमवदधाति ।
तस्या एतस्यै चन्द्रमा एवापिधानम् ।
एतद्धि देवानां प्रत्यक्षमन्नाद्यं यच्चन्द्रमाः ।
अथैषा यज्ञिया विराड्यदेता बहिष्पवमान्यः ।
सा न्यूना ।
यजमानावधानायैव तन्नयूना ।
तदन्तर्यजमानमवदधाति ।
तस्या एतस्यै हिंकार एवापिधानम् ।
हिंकारेण ह्येव देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते ।
अथैषा मानुषी विराड्यदिमे पुरुषे प्राणाः ।
सा न्यूना ।
स उ एव यजमानप्रत्यक्षम् ।
तन्नयूना ।
तस्या एतस्या अन्नमेवापिधानम् ।
नाभिर्वा एतास्तिस्रो विराजः ।

अभि ह तान्कामानाप्नोति य एतासु कामा ।
अपि त्विह तेषु भवत्यति ह पुनर्मृत्युं मुच्यते ।
बहुपुरुषमस्मिँल्लोकेऽन्नमत्ति ।
न ह्येतदेकपुरुषायान्नाद्यं यदेतासु ।
यद्ध वै किं चेदमस्मिँल्लोक आत्मन्वत्तद्ध सर्वं मृत्युरेवाभिव्यादाय तिष्ठति ।
स यो ह स मृत्युः संवत्सर एव सः ।
तस्य हर्तव एव मुखानि ।
तद्यद्धै किं च म्रियते न हास्यानृतौ म्रियते य एवं वेद ।
ऋतुषु वाव प्रजायते प्रजया पशुभिर्य एवं वेद २४६

ता एता नव बहिष्पवमान्यः ।
ताष्षड्बृहत्यः ।
षड् मृत्योर्मुखान्यृतव एव ।
अथ ह वा एतानि मृत्योर्मुखानि बृहत्येव प्रतिविभवितुमर्हति नान्यच्छन्दः ।
स बृहत्यैवर्तोर्मुखमपिदधाति बृहत्यर्तोर्बृहत्यर्तोः ।
स यथा समेन विषममतीत्य प्रत्यवेक्षेतैवमेवैतं मृत्युं पराङतीत्य प्रत्यवेक्षते ।
तमेव तं त्रिवृतं वज्रमुपप्रवर्तयति ।
स एषोऽहरहरिमाँल्लोकाननुवर्तते ।
तद्ध स्माह नगरी जानश्रुतेयो न हैव तावद्देवासुरं भविता यावदेष त्रिवृद्वज्रोऽहरहरिमाँल्लोकाननुवर्तत ।
ऊर्ध्वो ह्ययमग्निर्दीप्यते तिर्यङ्ङयं वायुः पवतेऽर्वाङसावादित्यस्तपति ।
त एतेऽनिमेषमन्योन्यमीक्षन्ते ।
कथमेतेष्वेवं सत्सु देवासुरं स्यादिति ।
एष उ एवास्य त्रिवृद्वज्रोऽहरहरिमाँल्लोकाननुवर्तमानः सर्वं पाप्मानमपघ्नन्पल्ययते य एवं वेद २४७

तदाहुः स वाद्य यजेत स वान्यं याजयेद्यश्चतुःष्टोमेन याजयन्सर्वस्तोमेन याजयति ।

नवैता बहिष्पवमान्यो भवन्ति ।
तासां सप्तविंशतिः पदानि ।
तेन त्रिणवं स्तोमं नान्तर्यन्ति ।
नवैवैता बहिष्पवमान्यो भवन्ति ।
चतुर्विंशत्यक्षरा गायत्री ।
तत्त्रयस्त्रिंशत् ।
तेन त्रयस्त्रिंशं स्तोमं नान्तर्यन्ति ।
एतद्वै चतुःष्टोमेन याजयति ।
यो वै स्तोमानामवमं परमं वेद गच्छति परमताम् ।
त्रिवृद्वाव स्तोमानामवमस्त्रिवृत्परमः ।
तदु होवाच बर्कुर्वार्ष्णस्त्रिवृतं स्तोमं त्रयस्त्रिंशं भवन्तमपश्यं तस्मादहं परमतामगच्छमिति ।
गच्छति परमतां य एवं वेद ।
अथ ह स्माहारुणिः किं सोऽभिचरेत्किं वाभिचार्यमाण आद्रियेत य एतं त्रिवृतं वज्रं त्रिभृष्टिमच्छिद्रमच्छम्बट्कारिणमहरहरिमाँल्लोकाननुवर्तमानं वेद ।
स्वयमभिचरितो वाव स यमेवंविद्द्वेष्टि यो वैवंविदं द्वेष्टीति ।
एष उ एवैनं त्रिवृद्वज्रस्त्रिभृष्टिरच्छिद्रोऽच्छम्बट्कार्यहरहरिमाँल्लोकाननुवर्तमानोऽभिवर्तते ।
तस्य न भूत्या अल्पिकेव चनाशास्ति परापरैव भवतीति ।
२४
तदु ह स्माहोपजीवः खाळायनोऽहमेवैतं त्रिवृतं वज्रं प्रत्यक्षं वेद तस्माद्यमहं द्वेष्मि यो मां द्वेष्टि तावुभौ श्वः श्व एव पापीयांसौ भवत इति ।
अग्निर्वा अस्य लोकस्य वज्रो वायुरन्तरिक्षस्यादित्यो दिवः ।
तदिदमध्यात्मम् ।
योऽग्निर्वागेव सा यो वायुः प्राण एव स य आदित्यश्चक्षुरेव तत् ।
तस्माद्यदहं द्विषन्तमभिवदामि यदभिप्राणिमि यदभिवीक्षे वज्रमेवाहं तस्मै तं प्रहरामि ।
तस्य न श्रेम्णोऽल्पिकेव चनाशास्ति ।

एता उ एवैनं देवता धूर्वन्ति य एवं विद्वांसं धूर्वतीति ।
अथ ह स्माह श्वेतकेतुरारुणेयो यथाश्वस्य श्वेतस्य कृष्णकर्णस्येत्थादानीतस्य रूपं स्यादेवमेवाहमेतस्य स्तोमस्य रूपं वेद ।
तावद्दृशेन्यं तावद्वपुषेण्यम् ।
तस्मान्मां य एव पूर्वाह्णे दिदृक्षन्ते तेऽपराह्णे दिदृक्षन्ते नैव सुदृशेन्यमिव सन्तम् ।
नाह कदा चन चक्षुष्मन्तं पर्येमीति ।
तदु होवाच शाट्यायनिः कोऽश्वश्श्वेतः किमेकमिति ।
यथैवास्याग्ने रूपं यथा त्विषिर्यथास्य वायोर्यथामुष्यादित्यस्यैवमेवैतस्य स्तोमस्य रूपमेवं त्विषिः ।
तदेवैतत्प्रजा अभिपरिवार्य दिदृक्षमाणास्तिष्ठन्ति ।
तस्माद्बहिष्पवमाने ये च विजानन्ति ये च न ते सर्वेऽनीशाना अभिपरिवार्य दिदृक्षमानास्तिष्ठन्तीति ।
अथो हैता यश एवाप्यन्यासां देवतानाम् ।
तासामेतदिन्द्रियं वीर्यं रसस्तेजः संभृतं यदेता बहिष्पवमान्यः ।
स य एवमेतद्देवतानामिन्द्रियं वीर्यं रसं तेजः संभृतं वेदेन्द्रियवानेव वीर्यवान्यशस्वी त्विषिमान्भवति २४९

तदाहुर्यत्पुरुषो योषां संभविष्यन्परोक्षं निलयनमिच्छतेऽन्त एवान्ये पशवोऽन्योन्यस्य स्कन्दन्ति किं तद्यज्ञे क्रियते यस्मात्तत्तथेति ।
स ब्रूयाद्यस्मात्त्रिवृत्स्तोमो बहिष्पवमाने प्राङिवोत्क्रम्य धिष्ण्येभ्यो निलीय गायत्रीं स्कन्दति मध्य एवान्य ऋत्विजो धिष्ण्यानां यदन्त आसते तस्मात्तत्तथेति ।
त्रिवृतं हि स्तोमं पुरुषोऽन्वायत्तो धिष्ण्यानन्ये पशव इति ।
तद्वेवाहुर्यत्स त्रिवृत्स्तोमो गायत्रीं स्कन्दति किं सा ततः प्रजनयतीति ।
इळान्तं यज्ञं सप्तनाभिमिति ब्रूयात् ।
गायत्री गर्भं धत्ते ।
सा पुरोनुवाक्यां प्रजनयति पुरोनुवाक्या याज्यां याज्या वषट्कारं वषट्कार आहुतीराहुतयो दक्षिणा दक्षिणाः स्वर्गं लोकम् ।
तद्यथा वित्तं प्रवाहं क्षिप्रं प्रवहेदेवमेवैनमेता देवताः स्वर्गाय लोकाय

प्रवहन्ति ।
त्रिवृदेवैनं स्तोमो गायत्र्यै प्रयच्छति गायत्री पुरोनुवाक्यायै पुरोनुवाक्या याज्यायै याज्यावषट्काराय वषट्कार आहुतीभ्य आहुतयो दक्षिणाभ्यो दक्षिणाः स्वर्गं लोकं गमयन्ति ।
स एष इळान्तो यज्ञः सप्तनाभिः ।
तस्य ह त्रिवृदेव स्तोमो नाभिर्गायत्री नाभिः पुरोनुवाक्या नाभिर्याज्या नाभिर्वषट्कारो नाभिराहुतयो नाभिर्दक्षिणा नाभिः ।
उप हैनं यज्ञो नमति य एवं वेद २५०

पञ्चदशान्याज्यानि भवन्ति पञ्चदशापूर्यमाणस्यार्धमासस्य रात्रयः ।
तदेव तेनाप्नोति ।
दश हस्त्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि यदूर्ध्वं नाभेस्तत्पञ्चदशम् ।
तदेवात्रोपसंदधाति ।
पञ्चदशो माध्यंदिनः पञ्चदशापोच्छतोऽर्धमासस्य रात्रयः ।
तदेव तेनाप्नोति ।
दश पद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि यदवाचीनं नाभेस्तत्पञ्चदशम् ।
तदेवात्रोपसंदधाति ।
सप्तदशानि प्र्ष्ठानि ।
द्वादश मासाः पञ्चर्तवः ।
तदेव तेनाप्नोति ।
दश हस्त्या अङ्गुलयः सप्त शीर्षन्प्राणाः ।
तत्सप्तदशम् ।
तदेवात्रोपसंदधाति ।
सप्तदशार्भवः ।
द्वादश मासाः पञ्चर्तवः ।
तदेव तेनाभिपूर्वमाप्नोति ।
दश पद्या अङ्गुलयश्चत्वार्यूर्वष्ठीवानि त्रयोऽवाचः प्राणाः ।
तत्सप्तदशम् ।
तदेवात्रोपसंदधाति ।
एकविंशमग्निष्टोमसाम ।

द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
तदेव तेनाप्नोति ।
दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविंशः ।
तदेवात्रोपसंदधाति २५१

स हैवं विद्वानहोरात्रयोरर्धमासशो मासश ऋतुशः संवत्सरश एतस्मिन्सर्वस्मिन्नात्मानमुपसंधाय तं मृत्युं तरति यः स्वर्गे लोके ।
न हैवंवित्पुनर्म्रियते ।
तस्य हर्ङ्गयान्यस्थानि भवन्ति साममयानि मांसानि ।
स एषोऽपहतपाप्मा धूतशरीरोऽतीत्यैतं मृत्युं शरीरं धूनुते ।
अथैते दैवी च मानुषी च विराजौ ।
तयोरेष एतदादित्योऽध्यूढस्तपति ।
चतस्रो दिशश्चत्वारोऽवान्तरदेशा द्वाविमौ लोकौ ।
एषा दैवी विराट् ।
अथ मानुषी ।
चत्वारोऽत्तारष्षडाद्याः ।
ब्राह्मणश्च राजन्यश्च वैश्यश्च शूद्रश्चैतेऽत्तारः ।
गौश्चाश्वश्चाजाश्चाविश्च व्रीहिश्च यवश्चैत आद्याः ।
एतयोरेष एतदादित्योऽध्यूढस्तपति ।
तन्न शोको न हिमो नाशनायति न पिपासति नास्य का चनावृत्तिरस्ति ।
न ह वा अशनायति न पिपासति नास्य का चनावृत्तिर्भवति य एवं वेद २५२

यजमानं ह वा एतदुद्गाता रेतो भूतं सिञ्चति यद्बहिष्पवमानं गायति ।
मन एव रेतस्यया समीरयति प्राणं गायत्र्या चक्षुस्त्रिष्टुभा श्रोत्रं जगत्या वाचमनुष्टुभा ।
आत्मानमेव पङ्क्त्या प्रत्युपदधाति ।
अथ यदेतदुत्तमं तृचं जन्मैव तत् ।
प्रैव तेन जनयति ।
यस्मादेतद्घोषीवोपब्दिमदिव गायते तस्माद्घोषीवोपब्दिमदिव गर्भा जायन्ते

।
तदुवा आहुरघोषमेव गेयम् ।
यदा वै विजायमाना क्रूरिकुरुतेऽथ सा घोषं करोति ।
अथो शनैरिव वा अघोषमिव महाहृष्टिर्विजायते ।
अथो हैतत्सत्यं यद्गायत्रम् ।
तस्य संपदं लोभयेद्यद्रथन्तरवर्णां अभ्यस्येत् ।
तस्मादघोषमेव गेयमिति ।
अथाग्नेयमाज्यमेकदेवत्यम् ।
प्रेतिरेव सा ।
अथ मैत्रावरुणं द्विदेवत्यम् ।
प्रतिष्ठितिरेव सा ।
अथैन्द्रमेकदेवत्यम् ।
प्रेतिरेव सा ।
अथैन्द्राग्नं द्विदेवत्यम् ।
सा वा एषा प्रेतिश्चैव प्रतिष्ठितिश्च ।
प्रतितिष्ठति य एवं वेद ।
त्रिवृत्पञ्चदशाभ्यां पुरुषोऽस्मिँल्लोके प्रतिष्ठितः ।
स यमेव हरति स त्रिवृद्येन प्रतितिष्ठति स पञ्चदशः ।
तौ वा एतावुभावेव त्रिवृतावुभौ पञ्चदशौ ।
तेजो वै ब्रह्मवर्चसं त्रिवृत्स्तोम ओजो वीर्यं पञ्चदशः ।
ओजसैव तद्वीर्येण प्रतिष्ठाय तेजो ब्रह्मवर्चसं हरति य एवं वेद २५३

अथ माध्यंदिनस्य पवमानस्य गायत्री ।
योऽयमवाङ्प्राण एष एव सः ।
तस्यां द्वे सामनी ।
तस्मादेतेन द्वयं प्राणेन करोति भस्म च करोति वातं च ।
नाना प्रस्तावौ नाना निधने हिंकारोऽन्तरेण ।
तस्मान्नेतर इतरमनुनिनर्दति नेतर इतरम् ।
एतेन हि तद्विहृतम् ।
अथ बृहती ।

योऽयं प्राङ्प्राण एष एव सः ।
तस्यां द्वे सामनी ।
तस्मादेतेन द्वयं प्राणेन करोति रेतश्च सिञ्चति मेहति च ।
नाना प्रस्तावौ नाना निधने हिंकारोऽन्तरेण ।
तस्मान्नेतर इतरमनुनिनर्दति नेतर इतरम् ।
एतेन हि तद्विहृतम् ।
अथ त्रिष्टुप् ।
नाभिरेव सा ।
तस्यामेकं साम ।
तस्मादेतेनैकमेव प्राणेन करोति यदेव प्राणानुदनतोऽनूदनिति ।
अथ पृष्टाःनि ।
इन्द्रियं वै वीर्यं पृष्ठानि ।
तस्माद्ये के चानूकभाजो गोरश्वस्य पुरुषस्य तेषामनूकमेव बलिष्ठम् ।
इन्द्रियं ह्येतद्वीर्यं यत्पृष्ठानि ।
तानि बृहतीषु भवन्ति ।
तस्मादिमा बृहतीरिव कीकसा बृहतीरिव पशवः पृष्ठमभिसमायन्ति ।
अथार्भवस्य पवमानस्य गायत्री ।
योऽयं प्राण एष एव सः ।
तस्यां द्वे सामनी ।
तस्माद्द्वयं प्राणेन करोति प्राणयापानिति ।
नाना प्रस्तावौ नाना निधने हिंकारोऽन्तरेण ।
तस्मान्नेतर इतरमनुनिनर्दति नेतर इतरम् ।
एतेन हि तद्विहृतम् ।
अथोष्णिक्ककुभौ ।
चक्षुषी ते ।
समानं छन्दः ।
द्वे सामनी ।
तस्माद्द्वे अक्ष्यौ समानं पश्यतः ।
त्रिपदोर्भृचोर्भवतः ।
तस्मात्त्रिवृच्चक्षुश्शुक्लं कृष्णं कनीनिका ।

परोवरी यस्योर्त्र्यृचोर्भवतः ।
तस्मात्परोवरीयः पुरुषः पश्यति ।
नाना प्रस्तावो नाना निधने हिंकारोऽन्तरेण ।
तस्मान्नानावीर्ये चक्षुषी ।
अथानुष्टुभ् ।
वागेव सा ।
तस्यां द्वे सामनी ।
तस्माद्द्वयं वाचा करोत्यन्नं चैनयात्ति वदति च ।
नाना प्रस्तावो नाना निधने हिंकारोऽन्तरेण ।
तस्मान्न सर्वं सत्यं वाचा वदति न सर्वमनृतम् ।
एतेन हि तद्विहृतम् ।
अथ जगती ।
श्रोत्रमेव तत् ।
तस्यामेकं साम ।
तस्मादेतेनैकमेव श्रोत्रेण करोति यदेव श्र्णोति ।
चतुष्पदायामृचि भवति ।
तस्मात्समानत्र सन्सर्वा अनु दिशश्शृणोति ।
अपि पराङ्चन्पश्चाद्वदतश्शृणोति ।
अथ यज्ञायज्ञीयम् ।
शिर एव तत् ।
अध्यूढं वा एतदन्येष्वङ्गेषु यच्छिरः ।
अध्यूढमन्येषु स्तोत्रेषु यज्ञायज्ञीयम् ।
अध्यूढोऽन्येषु स्वेषु भवति य एवं वेद ।
उपरि वा एतदन्येभ्योऽङ्गेभ्यो यच्छिरः ।
उपर्यन्येभ्यः स्तोत्रेभ्यो यज्ञायज्ञीयम् ।
उपर्यन्येभ्यः स्वेभ्यो भवति य एवं वेद ।
स एषोऽपहतपाप्मा यज्ञ एव प्रत्यक्षम् ।
तस्य ह नोपवदंश्च न पापं कर्तास्ति ।
यद्येनं बहिष्पवमानेऽनुव्याहरेद्यज्ञस्य रेतः सिक्तमचीकॢपं यज्ञमारोऽरेतस्का
ते प्रजा भविष्यतीत्येनं ब्रूयात् ।

यद्येनमेकदेवत्य स्राज्येऽनुव्याहरेद्यज्ञस्य प्रेतिमचीकॢपं यज्ञमारः प्रेत्य जने मरिष्यसीत्येनं ब्रूयात् ।
यद्येनं द्विदेवत्य स्राज्येऽनुव्याहरेद्यज्ञस्य प्रतिष्ठामचीकॢपं यज्ञमारोऽप्रतिष्टिःतो भविष्यसीत्येनं ब्रूयात् ।
यद्येनं माध्यंदिनस्य पवमानस्य गायत्र्यामनुव्याहरेद्यज्ञस्यावाञ्चं प्राणमचीकॢपं यज्ञमारो विघातस्त्वा हनिष्यतीत्येनं ब्रूयात् ।
स्रथो ह ब्रूयादवस्त्रावस्त्वा हनिष्यतीति ।
यद्येनं बृहत्यामनुव्याहरेद्यज्ञस्य शिश्नमचीकॢपं यज्ञमारो मूत्रग्राहस्त्वा हनिष्यतीत्येनं ब्रूयात् ।
स्रथो ह ब्रूयादरेतस्को भविष्यसीति ।
यद्येनं त्रिष्टुभ्यनुव्याहरेद्यज्ञस्य नाभिमचीकॢपं यज्ञमार उदावर्तस्त्व हनिष्यतीत्येनं ब्रूयात् ।
यद्येनं पृष्ठेष्वनुव्याहरेद्यज्ञस्येन्द्रियं वीर्यमचीकॢपं यज्ञमारो वज्रस्त्वा हनिष्यतीत्येनं ब्रूयात् ।
स्रथो ह ब्रूयादनाज्ञातवधस्त्वा हनिष्यतीति २५४

यद्येनमार्भवस्य पवमानस्य गायत्र्यामनुव्याहरेद्यज्ञस्य प्राणमचीकॢपं यज्ञमारः प्राणस्त्वा हास्यतीत्येनं ब्रूयात् ।
स्रथो ह ब्रूयात्प्रमायुको भविष्यसीति ।
यद्येनमुष्णिक्ककुभोरनुव्याहरेद्यज्ञस्य चक्षुषी स्रचीकॢपं यज्ञमारोऽन्धो भविष्यसीत्येनं ब्रूयात् ।
यद्येनमनुष्टुभ्यनुव्याहरेद्यज्ञस्य वाचमचीकॢपं यज्ञमारो वाक्तेऽपक्रमिष्यतीत्येनं ब्रूयात् ।
स्रथो ह ब्रूयादशनया मरिष्यसीति ।
यद्येनं जगत्यामनुव्याहरेद्यज्ञस्य श्रोत्रमचीकॢपं यज्ञमारो बधिरो भविष्यसीत्येनं ब्रूयात् ।
यद्येनं यज्ञायज्ञीयेऽनुव्याहरेद्यज्ञस्य शिरोऽचीकॢपं यज्ञमारश्शिरस्ते विपतिष्यतीत्येनं ब्रूयात् २५५

एते ह वै प्रतिव्याहाराः ।

न हैवंविद्यज्ञियामार्तिमार्छति ।
य एवैनमुपवदति स आर्तिमार्छति ।
स य एनमुपवदेत्तं ब्रूयात्पूर्णमेवाहमेतं साङ्गं सतनुं सर्वं यज्ञं वेद स
यत्त्वमत्रोनं वेत्थ तत्त्वयैवापिदधानीति ।
स एवार्तिमार्छति य एवं विद्वांसमुपवदति ।
स एष प्रजापतिरग्निष्टोमोऽमूमेकविंशीं यज्ञायज्ञीयस्यासु बहिष्पवमानीसु
नवसु प्रत्युपधाय शय एता द्विष्टना विराजो दुहानः पञ्च पञ्चदशानि पञ्च
सप्तदशानि ।
ता एव पञ्च द्वात्रिंशिनीर्विराजः ।
दुह्रे ह वै विराजं सर्वान्कामान्य एवं वेद ।
न हैवंविदोऽनृतं चन वदतो यज्ञः स्रवति ।
स्रवति ह वा अनृतं वदतो यज्ञोऽथो ह पूयति ।
नो ह त्वेवंविदो यज्ञः स्रवति न पूयति ।
तस्मात्कुरुपञ्चाला द्विष्टनां दुह्रे ।
प्रजापतेर्हि सा ।
तस्माद्वन्य उदन्ता न दुह्रे ।
न हि ते तां विदुः ।
तस्माद्वन्य उदन्ता अशनायुकतरा इव स एष प्रजापतिरग्निष्टोमः - २५६

- परिमण्डलो भूत्वानन्तो भूत्वा शये ।
तदनुकृतीदमप्यन्या देवता परिमण्डलाः ।
परिमण्डल आदित्यः परिमण्डलश्चन्द्रमाः परिमण्डला द्यौः
परिमण्डलमन्तरिक्षं परिमण्डलेयं पृथिवी ।
अपि यदिदं पुरुषे दिव्यं तत्परिमण्डलम् ।
एतस्यैव न्यङ्गमनुन्यञ्चानः परिमण्डलां महतीमनन्तां श्रियं जयति य एवं
वेद ।
स एष यज्ञ ऊर्ध्व एव पुरुषमन्वायत्तः ।
तस्य पादावेव बहिष्पवमानम् ।
इमान्येव चत्वार्यूर्वष्ठीवान्याज्यानि ।
यदर्वाचीनं नाभेः स त्रिछन्दा माध्यंदिनः ।

पृष्ठान्येव पृष्ठानि ।
अयमार्भव इदमग्निष्टोमसाम ।
तद्ध नगरिणं दाल्भ्यं ब्राह्मणः पप्रच्छ कद्र्यङ्यज्ञ इति ।
स होवाचोर्ध्व एव पुरुषमन्वायत्त इति ।
एवं ह तदुवाच ।
स य एवमेतदूर्ध्वमात्मन्यज्ञं तायमानं वेदोर्ध्व एव प्रजया पशुभी रोहन्नेति ।
य उ एनं प्रत्यञ्चं वेद प्रत्यङ्भूतिर्भवति ।
तस्येदमेव बहिष्पवमानमिमान्याज्यान्ययं माध्यंदिनः पृष्ठान्येव
पृष्ठान्ययमार्भवः प्रतिष्ठैव यज्ञायज्ञीयम् ।
प्रत्यङ्भूतिर्भवति ।
य एवमेतावात्मन्यज्ञौ तायमानौ वेदोप हैनं यज्ञौ नमतः २५७

तस्यैष श्लोकः

यदस्य पूर्वमपरं तदस्य

यद्वस्यापरं तद्वस्य पूर्वम्

अहेरिव सर्पणं शाकलस्य

न विजानामि यतरत्पुरस्तात्
इति ।
शकलो ह गौपायनो यज्ञं मिमान इयाय ।
स ह स्मैतन्न विजानाति कतरद्यज्ञस्य पूर्वं कतरदपरं कतरदणीयः
कतरद्स्थवीय इति ।
तदाहुः कुतो यज्ञस्यानिष्ठमिति ।
यतो वरिष्ठमिति ।
कुतो वरिष्ठमिति ।
यतोऽणिष्ठमिति ।
बहिष्पवमानं वाव प्रति यज्ञोऽणिष्ठः ।

तदिदं पादाववोचत् ।
पादौ वै प्रति पुरुषोऽणिष्ठः ।
तद्वै वरिष्ठः ।
पद्भ्यां ह्येति ।
कुतो वरिष्ठ इति ।
यतोऽणिष्ठ इति ।
यज्ञायज्ञीयं वाव प्रति यज्ञोऽणिष्ठः ।
तदिदं शिरोऽवोचत् ।
शिरो वै प्रति पुरुषोऽणिष्ठः ।
तद्वै वरिष्ठः ।
अक्षिभ्यां हि पश्यन्नेति ।
तदाहुर्यदूर्ध्वो यज्ञस्तायेत देवा एव जीवेयुर्न मनुष्याः ।
यदर्वाङ्तायेत मनुष्या एव जीवेयुर्न देवा इति ।
ऊर्ध्वश्च ह वै यज्ञस्तायतेऽर्वाङ्चाथो ह तिर्यङ् ।
तद्यत्पृच्छेयुः कद्र्यङयज्ञ इत्यूर्ध्व इति ब्रूयादथो अर्वाङित्यथो तिर्यङ्ङिति
।
सर्वा एव दिश इति ब्रूयात् ।
सर्वा उ ह वै एवंविदो यज्ञस्ततो भवति ।
कुरुपञ्चाला ह ब्रह्मोद्यमूदिरे ।
ते ह श्वानं संवेष्टितं शयानमुपेयुः ।
ते होचुरस्मिन्न्वेव नो विजयोऽध्यस्त्विति ।
ते ह पञ्चालाः कुरून्पप्रच्छुः किमस्य यज्ञस्येवेति ।
तद्ध न प्रत्यूचुः ।
स होवाच वसिष्ठश्चैकितानेयो यथा वा असावदोऽमूमेकविंशीं
यज्ञायज्ञीयस्यासु बहिष्पवमानीषु नवसु प्रत्युपधाय शय एवं वा अयमिद-
मुभावन्तौ संधाय शये ।
तस्य वा अयं यज्ञक्रतोरनया शय्ययो रूपं निगच्छतीति ।
तस्मादिदमनर्थ्यं सन्तं बिभृतेति ।
तेन ह जिग्युः २५८

द्विर्ह वै यजमानो जायते मिथुनादन्यद्यज्ञायते यज्ञादन्यत् ।
तद्यन्मिथुनाज्जायते तदस्मै लोकाय जायते ।
अथ यद्यज्ञाज्जायते तदमुष्मै लोकाय जायते गन्धर्वलोकाय जायते
देवलोकाय जायते स्वर्गलोकाय जायते ।
यज्ञो वै यजमानो यज्ञः सोमो राजा ।
तद्यद्धविर्धाने ग्रावभिस्सोमं राजानमभिषुरावन्ति यजमानमेव तद्रेतः कुर्वन्ति
।
प्रजापतिरेष यदुद्गाता ।
स त्वष्टा स रेतसः सेक्ता स रूपाणां विकर्ता ।
तद्यद्बहिष्पवमाने रेतस्यां गायति यजमानमेव तद्रेतो भूतं सिञ्चति ।
यदृचमसाम्नीं गायेदस्थ्येव जायते न मांसम् ।
यत्सामानृचं गायेन्मांसमेव जायते नास्थि ।
ऋचं साम्नाभिलिप्तां गायति ।
तस्माल्लोम्ना त्वचा मांसेन पुरुषोऽभिलिप्तो जायते ।
तस्यां न हिंकुर्यात् ।
यद्धिंकुर्याद्वज्रेण हिंकारेण रेतो विच्छिन्द्यात् ।
यो हि तदपि वालेन वीयात्स एवैनद्विच्छिन्द्यात् ।
तामधीयन्गायेत् ।
यदनधीयन्गायेदरेतस्का गर्भा जायेरन् ।
अरेतस्का ह वै दुरुद्गातुर्वर्तन्यां गर्भा जायन्ते २५९

गायत्रीं गायति ।
प्राणो वै गायत्री ।
तस्यै द्वे अक्षरे व्यतिषजति ।
प्राणापानावेव तद्व्यतिषजति ।
तस्मात्प्राणापानौ तद्व्यतिषक्तौ प्रजा अनुसंचरत आ च परा चायातयामानौ
।
तामधीयन्गायेत् ।
यदनधीयन्गायेन्मृता गर्भा जायेरन् ।
मृता ह वै दुरुद्गातुर्वर्तन्यां गर्भा जायन्ते ।

त्रिष्टुभं गायति ।
चक्षुर्वै त्रिष्टुप् ।
तस्यै द्वे अक्षरे द्योतयति ।
चक्षुषी एव तद्दधाति ।
तस्माद्युक्ते इव चक्षुषी ।
तामधीयन्गायेत् ।
यदनधीयन्गायेदन्धा गर्भा जायेरन् ।
अन्धा ह वै दुरुद्गातुर्वर्तन्यां गर्भा जायन्ते ।
जगतीं गायति ।
श्रोत्रं वै जगती ।
तस्यै चत्वार्यक्षराणि द्योतयति ।
श्रोत्रमेव तद्दधाति ।
श्रोत्रे द्वे परिश्रवणे द्वे ।
तस्मात्समानत्र सन्सर्वा अनुदिशश्शृणोति ।
अपि पराङ्यन्पश्चाद्वदतश्शृणोति ।
तामधीयन्गायेत् ।
यदनधीयन्गायेद्बधिरा गर्भा जायेरन् ।
बधिरा ह वै दुरुद्गातुर्वर्तन्यां गर्भा जायन्ते ।
अनुष्टुभं गायति ।
वाग्वा अनुष्टुप् ।
तामर्वाचीमभिनुदन्गायति वाचोऽनपक्रामाय ।
यत्पराचीमपनुदन्गायेद्वाचं प्रधमेद्वागस्मादपक्रामुका स्यात् ।
तां यदर्वाचीमभिनुदन्गायत्यात्मन्नेव तद्वाचं प्रतिष्ठापयति ।
तस्यै निरुक्तं चानिरुक्तं च पदे गायति ।
निरुक्तेन वै वाचो भुञ्जतेऽनिरुक्तमस्या उपजीवनीयम् ।
भुङ्क्ते वाचोप चैनं जीवति य एवं वेद ।
स यन्निरुक्तमेव गायेद्वदेयुरेव प्रजा न तूष्णीमासीरन् ।
अथ यदनिरुक्तं गायेत्तूष्णीमेव प्रजा आसीरन्न वदेयुः ।
यस्मान्निरुक्तं चानिरुक्तं च पदे गायति तस्मात्प्रजा वदन्ति च तूष्णीं चासते
२६०

तां बलवदुपब्दिमतीं निघातं गायेत् ।
निघ्नदिव ह खलु वा एतच्छन्दो यदनुष्टुप् ।
अनुष्टुभा वै वाचा छन्दसा देवा असुरानवाचोऽवाघ्नन् ।
तां यद्बलवदुपब्दिमतीं निघातं गायति - भ्रातृव्यो वै पाप्मा -
भ्रातृव्यमेतत्पाप्मानमवाचमवहन्ति श्रियमात्मनाश्नुते ।
तामधीयन्गायेत् ।
यदनधीयन्गायेदजिह्वा गर्भा जायेरन् ।
अजिह्वा ह वै दुरुद्गातुर्वर्तन्यां गर्भा जायन्ते ।
पङ्क्तिं गायति ।
ऋतवो वै पङ्क्तिः ।
तां गायत्रीमेव प्रसृतां गायति ।
तस्माद्गर्भा जायमानाः प्रसार्यन्ते ।
तामधीयन्गायेत् ।
यदनधीयन्गायेत्सामि गर्भाः पतेयुः ।
सामि ह वै दुरुद्गातुर्वर्तन्यां गर्भा पतन्ति ।
अथ यदेतदुत्तमं तृचं जन्मैव तत् ।
प्रैव तेन जनयति ।
मनो वै रेतस्या प्राणो गायत्री चक्षुस्त्रिष्टुप्श्रोत्रं जगती वागनुष्टुप् ।
स यो मनो रेतस्येति विद्वानुद्गायति महामना मनस्व्यस्मादाजायते ।
अथ यः प्राणो गायत्रीति विद्वानुद्गायति सर्वमायुरेति ।
अथ योऽस्मादाजायते स सर्वमायुरेति ।
अथ यश्चक्षुस्त्रिष्टुबिति विद्वानुद्गायत्यह्वीतमुखी पश्यो दृष्ट्यास्मादाजायते दर्शनीयः ।
अथ यश्श्रोत्रं जगतीति विद्वानुद्गायति शुश्रूषुश्श्रोत्रियोऽस्मादाजायते श्रवणीयः अथ यो वागनुष्टुबिति विद्वानुद्गायति शंस्तोद्गाता वाचाराध्यस्मादाजायते - २६१

- सभेयः ।
एवं ह्येतत्कुरुपञ्चाला अविदुः ।

तस्मात्कुरुपञ्चालेषु सर्वैर्वीरैः सह वीर आजायते ।
अथ यर्ह्येतदुदन्ताः पुरा नावेदिषुस्तस्मादुदन्तेषु पुरा सर्वैर्वीरैः सह वीरो नाजनि ।
अथ यत इदमुदन्तानेवंविदश्च सचन्त एवंविदश्चैनान्याजयन्ति ततो हार्वाचीनमुदन्तेषु सर्वैर्वीरः सह वीर आजायते ।
कुरुपञ्चाला ह ब्रह्मोद्यमूदिरे ।
ते ह पञ्चालाः कुरून्पप्रच्छुः किं वयं तद्यज्ञेऽकुर्म येनास्मासु सर्वैर्वीरैः सह वीर आजायत इति ।
तद्ध न प्रत्यूचुः ।
तेन हैनाञ्जिग्युः ।
ते यत्प्रत्यवन्द्यन्यस्माद्वयमेवंविदश्च स्म एवंविदश्च नो याजयन्ति तेनास्मासु सर्वैर्वीरैः सह वीर आजायत इति ।
सर्वैर्ह वा अस्माद्वीरैः सह वीर आजायते य एवं वेद ।
तदाहुर्विगेया ३ धुरा ३ धूरो न विगेया ३ इति विगेया ३ इत्याहुः - ।
२६२

कुरवः ।
गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनम् ।
तदेवानुष्टुबन्वायत्ता ।
स यद्गायत्रे सति प्रातःसवने गायत्रीं गायति - ब्रह्म वै गायत्री ब्रह्म प्रातःसवनं - स्व एव तदायतने ब्रह्म दधाति ।
अथ यत्त्रिष्टुभं गायति - क्षत्रं वै त्रिष्टुप् ।
एतानि वै क्षत्रे शिल्पानि हस्ती निष्कोऽश्वतरीरथोऽश्वरथो रुक्मः कंसः - तान्येव तदाहृत्य ब्रह्मण्यनक्ति ।
अथ यज्जगतीं गायति - विड्वै जगती ।
एतानि वै विशि शिल्पानि गोऽश्वं हस्तिहिरण्यमजाविकं व्रीहियवास्तिलमाषाः सर्पिः क्षीरं रयिः पुष्टिस्- तान्येव तदाहृत्य ब्रह्मण्यनक्ति ।
तदेवानुष्टुबन्वायत्ता ।
अथ यदनुष्टुभं गायति - आनुष्टुभो वै शूद्रः - शूद्रादेव तदाहृत्य

ब्रह्मण्यनक्ति २६३

तद्यथा तूष्णीं कशनैर्विहन्यादेवमेवैतानि सर्वाणि शिल्पान्याहृत्य ब्रह्मण्यनक्ति ।
तस्माद्विगेया इति ।
यतो ह वा इदमेता विगीयन्ते ततो हेदं ब्राह्मणा जीयन्ते ।
अथ यर्हि एता न विजगुरन्नाद्या ह ब्राह्मणा आसुः ।
एकापञ्चादेवा हर्वाशित एकशकटे वशे हस्मदमथित्वा सत्ययज्ञः पौलुषिर्याति ।
अथ यत इदमेता विगीयन्ते ततो हैतानि शिल्पानि ब्राह्मणेष्वधिगम्यन्ते ।
गायत्रीं पुरस्ताद्गायति गायत्रीमुपरिष्टात् ।
ब्रह्म वै गायत्री ।
ब्रह्मणैव तदेतान्य् उभयतश्शिल्पानि परिगृह्णाति ।
ब्रह्मणा हैनमेतान्युभयतश्शिल्पानि परिगृहीतान्युपतिष्ठन्ते य एवं वेद ।
न विगेया इत्याहुः पञ्चालाः ।
स्वयं विगीता वा एता यद्धुरः ।
अनुसवनं वा एता विगायन्नभ्यारोहति ।
अथ यदेनान्पापी कीर्त्तिरनूत्तिष्ठति व्यगासिषुरिति ।
यौ वै युध्येते यावृतीयेते तावाहुर्व्यगासिष्टामिति अथो ये राष्ट्रे व्यवबिन्धाने - २६४

तिष्ठत इति ।
गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनम् ।
तदेवानुष्टुबन्वायत्ता ।
स यद्गायत्रे सति प्रातःसवने गायत्रीं गायति - ब्रह्म वै गायत्री - ब्रह्मैव तद्ब्राह्मणस्य स्वेऽन्वाभजति ।
सोऽस्यादित्सत उपजिहीर्षते ।
अथो अस्यैव तत् ।
स्वेऽनु ह्येनमाभजति ।
अथ यत्त्रिष्टुभं गायति - क्षत्रं वै त्रिष्टुप्क्षत्रियमेव तद्ब्राह्मणस्य

स्वेऽन्वाभजति ।
सोऽस्यादित्सत उपजिहीर्षते ।
अथो अस्यैव तत् ।
स्वेऽनु ह्येनमाभजति ।
अथ यज्जगतीं गायति – विड्वै जगती – वैश्यमेव तद्ब्राह्मणस्य
स्वेऽन्वाभजति ।
सोऽस्यादित्सत उपजिहीर्षते ।
अथो अस्यैव तत् ।
स्वेऽनु ह्येनमाभजति ।
तदेवानुष्टुबन्वायत्ता ।
अथ यदनुष्टुभं गायति – आनुष्टुभो वै शूद्रः – शूद्रमेव तद्ब्राह्मणस्य
स्वेऽन्वाभजति ।
सोऽस्यादित्सत उपजिहीर्षते ।
अथो अस्यैव तत् ।
स्वेऽनु ह्येनमाभजति ।
यद्याविर्नाथो पाकेनैव लिप्सते ।
तस्मान्न विगेया इति ।
यतो ह वा इदमेता विगीयन्ते ततो हेदं ब्राह्मणा जीयन्ते ।
अथ यर्ह्येता न विजगुरज्येया ह ब्राह्मणा आसुः २६५

गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनम् ।
तदेवानुष्टुबन्वायत्ता ।
स यद्गायत्रं सत्प्रातःसवनं सर्वमेव गायत्रं गायति ब्रह्मण एव तं
केवलमुद्धारमुद्धरति ।
सोऽस्य ब्रह्मणः केवल उद्धार उद्धृतो भवति ।
अथ यत्त्रैष्टुभं सन्माध्यंदिनं सवनं गायत्रेणैवानुप्रतिपद्यते ब्राह्मणमेव
तत्क्षत्रियस्य स्वेऽन्वाभजति ।
सोऽस्मै दित्सति श्रद्धया कर्मणोपचारेण ।
यदा वै क्षत्रियं श्रद्धा विन्दति ब्राह्मणं वाव स तर्हीच्छति ।
सोऽस्मै ददाति ।

अथ यज्ञागतं सत्तृतीयसवनं गायत्रेणैवानुप्रतिपद्यते ब्राह्मणमेव तद्वैश्यस्य स्वेऽन्वाभजति ।
सोऽस्मै दित्सति श्रद्धया कर्मणोपचारेण ।
यदा वै वैश्यं श्रद्धा विन्दति ब्राह्मणं वाव स तर्हीच्छति ।
सोऽस्मै ददाति ।
तदेवानुष्टुबन्वायत्ता ।
अथ यदनुष्टुभं गायति - आनुष्टुभो वै शूद्रः - ब्राह्मणमेव तच्छूद्रस्य स्वेऽन्वाभजति ।
सोऽस्मै दित्सति श्रद्धया कर्मणोपचारेण ।
यदा वै शूद्रं श्रद्धा विन्दति ब्राह्मणं वाव स तर्हीच्छति ।
सोऽस्मै ददाति ।
केवलं स्वं कुरुतेऽपित्वी क्षत्रे भवत्यपित्वी विशि ।
यात्यन्तःस्थां नान्तःस्थायां जीयते ।
उप हैनं शतं परिस्कन्दास्तिष्ठन्तेऽथो भूयांसो य एवं विद्वान्धुरो न विगायतीति ।
स यदि विगायेददो विद्वान्विगायेत् ।
यद्यु न विगायेदिदं विद्वान्न विगायेत् ।
आर्तिः सा योऽन्यतरदेव वेदेति ह स्माह शाट्यायनिः २६६

रेतस्यां गायति ।
रेतस्तत्सिञ्चति ।
तद्रेतः सिक्तं गायत्र्योद्वर्धयति वर्षीयसा छन्दसा ।
तत्त्रिष्टुभोद्वर्धयति वर्षीयसा छन्दसा ।
तज्जगत्योद्वर्धयति वर्षीयसैव छन्दसा ।
तद्यद्वर्षीयसा वर्षीयसा छन्दसोद्वर्धयति तस्माद्वर्धमानस्य भूयो भूयो वीर्यं भवति ।
अनुष्टुभा निष्ठं गच्छति ह्रसीयसैव छन्दसा ।
तस्मादुत्तरवयसे प्रतितरामिवाववर्धते ।
पङ्क्त्या निष्ठां गच्छति ।
तस्मात्पञ्चमे मासि गर्भा विक्रियन्ते ।

अनुष्टुभा वाचा निष्ठां गच्छति ।
तस्मादु जीर्णस्य वाचं शुश्रूषन्ते ।
शिरो वा एतद्यज्ञस्य यद्बहिष्पवमानम् ।
तद्वै तत् ।
रेतस्यैवापि सर्व आत्मा स यद्बहिष्पवमाने - २६७

- गायत्रीं गायति ।
प्राणो वै गायत्रः ।
गायत्रं शिर एव ।
तदायतनो वै प्राणो यच्छिरः ।
स्व एव तदायतने प्राणं दधाति ।
त्रिष्टुभं गायति ।
चक्षुर्वै त्रिष्टुप् ।
तामेव तदाहृत्य शीर्षन्नियुनक्ति ।
यन्नियुनक्ति तस्मान्नियुक्तमिव चक्षुः ।
तामन्यत्रायतनां सतीं नियुनक्ति ।
तस्मादुत जीवत एव चक्षुरपक्रामति ।
जगतीं गायति ।
श्रोत्रं वै जगती ।
तामेव तदाहृत्य शीर्षन्नियुनक्ति ।
यन्नियुनक्ति तस्मान्नियुक्तमिव श्रोत्रं ।
तामन्यत्रायतनां सतीं नियुनक्ति तृतीयसवनायतनाम् ।
तां यदन्यत्रायतनां सतीं नियुनक्ति तस्मादुत जीवत एव श्रोत्रमपक्रामति ।
अनुष्टुभं गायति ।
वाग्वा अनुष्टुप् ।
तामेव तदाहृत्य शीर्षन्नियुनक्ति ।
यन्नियुनक्ति तस्मान्नियुक्तेव वाक् ।
तामन्यत्रायतनां सतीं नियुनक्ति तृतीयसवनायतनां वा सर्वायतनां वा ।
तां यदन्यत्रायतनां सतीं नियुनक्ति तस्मादुत जीवत एव वागपक्रामति ।
अपान्ये प्राणाः क्रामन्ति न प्राणः २६८

तदाहुः किं तद्यज्ञे क्रियते यस्माज्जीवत एवान्ये प्राणा अपक्रामन्ति न प्राण इति ।
स ब्रूयाद्यस्मात्स्व आयतने गायत्रीं गायति तस्माद्यावज्जीवति तावत्प्राणो नापक्रामतीति ।
अथ ह वै धुरां विज्ञाश्च संज्ञाश्च ।
मनो वै रेतस्या प्राणो गायत्री चक्षुस्त्रिष्टुप्श्रोत्रं जगती वागनुष्टुप् ।
मनसा सुहार्दसं च दुर्हार्दसं च विजानाति ।
प्राणेन सुरभि चासुरभि च विजानाति ।
चक्षुषा दर्शनीयं चादर्शनीयं च विजानाति ।
श्रोत्रेण श्रवणीयं चाश्रवणीयं च विजानाति ।
वाचा स्वादु चास्वादु च विजानाति ।
एता इह विज्ञाः ।
वि ह वै ज्ञायते श्रेयान्भवति य एवं वेद ।
ता उ एव संज्ञाः ।
मनो वै रेतस्या प्राणो गायत्री चक्षुस्त्रिष्टुप्श्रोत्रं जगती वागनुष्टुप् रेतस्यायां प्रस्तुतायां यस्य कामयेत - २६९

तस्य मनसा मनो ध्यायेत् ।
गायत्र्यां प्रस्तुतायां यस्य कामयेत तस्य प्राणेन प्राणं ध्यायेत् ।
त्रिष्टुभि प्रस्तुतायां यस्य कामयेत तस्य चक्षुषा चक्षुर्ध्यायेत् ।
जगत्यां प्रस्तुतायां यस्य कामयेत तस्य श्रोत्रेण श्रोत्रं ध्यायेत् ।
अनुष्टुभि प्रस्तुतायां यस्य कामयेत तस्य वाचा वाचं ध्यायेत् ।
एता उ ह संज्ञाः ।
सं ह वै तेन जानीते येन कामयतेऽनेन संजानीयेति य एवं वेद ।
अथैता देवधुरश्च मनुष्यधुरश्च संदधाति ।
मनो वै मनुष्यधूरापो देवधूः ।
रेतस्यायां प्रस्तुतायां मनसापः संदध्यात् ।
तदन्तरा यजमानस्य मनोऽवयातयेत् ।
प्राणो वै मनुष्यधूर्वायुर्देवधूः ।

गायत्र्यां प्रस्तुतायां प्राणेन वायुं संदध्यात् ।
तदन्तरा यजमानस्य प्राणमवयातयेत् ।
चक्षुर्वै मनुष्यधूरादित्यो देवधूः ।
त्रिष्टुभि प्रस्तुतायां चक्षुषादित्यं संदध्यात् ।
तदन्तरा यजमानस्य चक्षुरवयातयेत् ।
श्रोत्रं वै मनुष्यधूर्दिशो देवधूः ।
जगत्यां प्रस्तुतायां श्रोत्रेण दिशः संदध्यात् ।
तदन्तरा यजमानस्य श्रोत्रमवयातयेत् ।
वाग्वै मनुष्यधूर्पृथिवी देवधूः ।
अनुष्टुभि प्रस्तुतायां वाचा पृथिवीं संदध्यात् ।
तदन्तरा यजमानस्य वाचमवयातयेत् ।
एतद्वै देवधुरश्च मनुष्यधुरश्च संदधाते ।
तद्वै देवधुरश्च मनुष्यधुरश्च संधाय तं मृत्युं तरति यः स्वर्गलोके ।
न हैवंवित्पुनर्म्रियते ।
देवतास्वात्मानमुपसंदधाति २७०

अथैतेषां महतां ब्राह्मणानां समुदितमारुणेर्जीवलस्य कारीरादेरषाढस्य सावयस्येन्द्रद्युम्नस्य भाल्लवेयस्येति ।
जीवलश्च ह कारीरादिरिन्द्रद्युम्नश्च भाल्लवेयस्तौ हारुणेराचार्यस्य सभागावाजग्मतुः ।
ते हाषाढस्य गृहेषु शिश्यिरे ।
स होवाचाषाढ आमारुणे यत्सहैव ब्रह्मचर्यमचराव सहान्वब्रवीवह्यथ केनेदं त्वमस्मानत्यनूचिषे ।
यदिदं त्वमियत्प्रियः कीर्तेरियत्प्रियश्चक्षुषः इयत्प्रियः सनेरसि केन त्वमिदं प्रापिथेति ।
स होवाच धूर्ष्वेवाहं तदुपास इति ।
किं त्वं तद्धूर्षूपास्स इति ।
प्रियमिति ।
य आसां प्रियमुपास्ते किं स भवतीति ।
प्रिय एव स कीर्तेर्प्रियश्चक्षुषः प्रियः सनेर्भवतीति ।

एवमेव त्वमसीति होचुः ।
अथ होचुर्जीवलं कारीरादिं यदिदं त्वमेव तस्यार्धस्य श्रेष्ठोऽसि
यस्मिन्नस्यपि त्वा राजानोऽधस्तादुपासते केन त्वमिदं प्रापिथेति ।
स होवाच धूर्ष्वेवाहं तदुपास इति ।
किं त्वं तद्धूर्षूपास्स इति ।
श्रियमिति ।
य आसां श्रियमुपास्ते किं स भवतीति ।
यस्मिन्नेवार्धे भवति तस्य श्रेष्ठो भवत्यप्येनं राजानोऽधस्तादुपासत इति ।
एवमेव त्वमसीति होचुः ।
अथ होचुरषाढं सावयसं यत्त्वं शार्कराक्षाणां वाव ग्रामण्येवासि केन
त्वमिदं प्रापिथेति ।
स होवाच धूर्ष्वेवाहं तदुपास इति ।
किं त्वं तद्धूर्षूपास्स इति ।
जातमिति ।
य आसां जातमुपास्ते किं स भवतीति ।
यत्रैव सजातो भवति तद्ग्रामणीर्भवतीति ।
एवमेव त्वमसीति होचुः ।
अथ होचुरिन्द्रद्युम्नं भाल्लवेयं यदिदं तवोपर्युपर्यन्यान्कीर्तिश्चरति विवचन-
मेवासि केन त्वमिदं प्रापिथेति ।
स होवाच धूर्ष्वेवाहं तदुपास इति ।
किं त्वं तद्धूर्षूपास्स इति ।
यश इति ।
य आसां यश उपास्ते किं स भवतीति ।
उपर्युपर्येवान्यान्कीर्तिश्चरति विवचनमेव भवतीति ।
एवमेव त्वमसीति होचुः ।
ते होचुरित्थं चेदिदमभूदेतेदं संप्रब्रवामहा इति २७१

ते हारुणिमूचुस्त्वं वै नो आचार्योऽसि त्वं प्रथमो ब्रूष्वेति ।
स होवाच गायत्रीमेवाहं प्रियमुपास इति ।
प्राणो वै गायत्री प्राणो वै प्रियम् ।

न वै प्राणात्प्रेयः किं चनास्ति ।
स य एवमेतां गायत्रीं प्रियमुपास्ते यथा प्रिय एव प्राण आत्मनेवं प्रिय एव स कीर्तेरेवं प्रियश्चक्षुष एवं प्रियः सनेर्भवतीति ।
अथ होवाच जीवलः कारीरादिस्त्रिष्टुभमेवाहं श्रियमुपास इति ।
क्षत्रं वै त्रिष्टुप्क्षत्रं वै श्रीः ।
स य एवमेतां त्रिष्टुभं श्रियमुपास्ते यस्मिन्नेवार्धे भवति तस्य श्रेष्ठो भवत्यप्येनं राजानोऽधस्तादुपासत इति ।
अथ होवाचाषाढः सावयसो जगतीमेवाहं भूमानं प्रजातिमुपास इति ।
भूमा वै प्रजातिर्जगती छन्दसाम् ।
स य एवमेतां जगतीं भूमानं प्रजातिमुपास्ते भूमानमेव प्रजया पशुभिर्गच्छति यत्रैव सजातो भवति तद्ग्रामणीर्भवतीति ।
अथ होवाचेन्द्रद्युम्नो भाल्लवेयोऽनुष्टुभमेवाहं यश उपास इति ।
वाग्वा अनुष्टुब्वागु वै यशः ।
वागुपर्युपर्यन्यान्कीर्तिश्चरति ।
स य एवमेतामनुष्टुभं यश उपास्त एषैवास्य वागनुष्टुबुपर्युपर्येवान्यान्कीर्तिर्विहरन्त्येति विवचनमेव भवतीति २७२

ते ह वै ते तथैकैकेनैवासुः ।
अथ य एवमेतानि सर्वाण्येकधा वेदैवं ह्येतानि सर्वाण्येकधा भवन्त्येकधैव श्रेष्ठः स्वानां भवति ।
तदु होवाच वासिष्ठश्चैकितानेयः पश्चैवानुबुध्य धुरो ह वा इमे ब्राह्मणा मीमांसमानास्तामेव धुरं नावाग्मन्यस्यामेता धुरि सर्वा अधीति ।
रेतस्यां ह वै स तदुवाच ।
यां ह वा आहुरेका धूरिति रेतस्या ह वै सा धुरां धूरन्नं तद् ।
धुरामलंकरणम् ।
सुरभिर्गन्धो गायत्र्यै दर्शनीयं त्रिष्टुभश्श्रवणीयं जगत्यै ।
यदेव वाचा पुण्यं वदति तदनुष्टुभः ।
स ह वा एना अन्नमादधाति य एना एतैः समर्धयति ।
ता एनमन्नाद्यमाना अन्नादं श्रेष्ठं स्वानां कुर्वन्ति ।
अन्नादः श्रेष्टः स्वानां भवति य एवं वेद २७३

त्रयो ह वा एते समुद्रा यत्पवमाना अग्निर्वायुरसावादित्यः ।
तैश्छन्नैरुद्गायेत् ।
स यर्हि वै प्रजापतिः प्रजाभ्यो वृष्टिमन्नाद्यं प्रयच्छति छाद्यन्त एते तर्हि ।
प्रजापतिरेष सः ।
यदुद्गास्यन्पवमानैश्छन्नैरुद्गायति छादयत्येव यजमानमन्नाद्येन छादयत्यात्मानं छादयति प्रजाः ।
बहुवर्षी तत्र पर्जन्यो भवतीति ह स्माह कूटः शैलनो यत्राहमुद्गायामीति ।
यत्र वै बहुवर्षी पर्जन्यो भवति कल्याणो वै तत्र बलीवर्दोऽश्वतरो हस्ती निष्कः पुरुषः ।
रूपं रूपं वाव तत्र कल्याणमाजायत इत्येतद्ध तद्विद्वानुवाच ।
यो वै देवांश्च मनुष्यांश्च व्यावर्तयति वि पाप्मना वर्तते ।
देवा वै पवमानाः प्रजाः पृष्ठोक्थानि ।
तैश्छन्नैः परोक्षमनिरुक्तैः पवमानैरुद्गायेत् ।
छन्ना इव हि परोक्षमनिरुक्ता इव देवाः ।
प्रजाः पृष्ठोक्थानि ।
तैरच्छन्नैः प्रत्यक्षं निरुक्तैरुद्गायेत् ।
अच्छन्ना इव हि प्रत्यक्षं निरुक्ता इव मनुष्याः ।
एतद्वै देवांश्च मनुष्यांश्च व्यावर्तयति वि पाप्मना वर्तते य एवं वेद २७४

दैवीं ह वा एष संसदमेति यः पवमानैरुद्गायति ।
स यथा श्रेयांसमभ्यायन्नेवं शिक्षन्निवोपशिक्षन्निवोपनमस्यन्निव ।
संसिद्धैः शक्नुवन् अनुपहन्यमान उद्गायेत् ।
यथायन्तमामीवेद्यथा यद्याचेत्तद्दद्यात्तादृक्तत् ।
अथ य एतैरसंसिद्धैरशक्नुवन्नुपहन्यमान उद्गायेद्यथायन्तं प्रतिमीवेद्यथा यद्याचेत्तन्न दद्यात्तादृगु तत् ।
तदु हात्रैव यज्ञस्य समृद्धं च व्यृद्धं च विज्ञायते ।
अतिहार्या ह वा एषा यत्पवमानाः ।
यो वा अतिहार्यामसंवीतोऽतिगाहते मृदा वै स लिप्यत आयति वा ।
अथ यः संवीतोऽतिगाहते न मृदा लिप्यते नायती ।

एवमिव वै पवमाना उपचार्याः ।
तदाहुर्यदन्यानि स्तोत्राणि स्तोत्रियप्रतिपदोऽथ कस्मात्पवमाना अस्तोत्रियप्रतिपद इति ।
स ब्रूयात्प्राणा वै पवमानाः प्राणा उ पावमान्यः ।
तद्यत्पवमानान्पावमानीभिरेवानुप्रतिपद्येरन्पराञ्च एव प्राणान्निर्मृज्युरिति ।
तान्यदनुष्टुभानुप्रतिपद्यन्ते वाग्वा अनुष्टुब्वाच्यपानो नियतो वाचैव तदपानं दाधार २७५

६ ।
तदाहुरशान्तमिव वा एतत्स्तोत्रं यत्स्तोत्रियेण नानुप्रतिपद्यन्ते ।
केनैषां स्तोत्रियप्रतिपदोऽनितं भवतीति ।
स ब्रूयाद्वाग्वा अनुष्टुब्वाच्यु वै सर्वाणि छन्दांसि ।
यदाग्नेयमैन्द्रं पवमानं तेनैषां स्तोत्रियप्रतिपदोऽनितं भवति ।
जया ह वै नामैतेते स्तोमा यत्पवमानाः ।
पवमानैर्वै देवा असुरान्पराञ्च एव जयन्त आयन् ।
तद्यत्पवमानाः पराञ्च एव भवन्ति यथा पराङेव जयन्नियात्तादृक्तत् ।
तान्यदनुष्टुभानुप्रतिपद्यन्ते वाग्वा अनुष्टुब्वागु वै वाचयित्री वाचा वा आह प्रेहि जयाभिक्राम मापक्रमीरिति ।
स यथा वाचा ब्रूयाद्प्रेहि जयाभिक्राम मापक्रामीरिति तादृक्तत् ।
देवा वै पवमानाः ।
तानि देवानां स्तोत्राणि ।
तानि देवा अन्वायत्ताः ।
प्रजाः पृष्ठोक्थानि ।
तानि प्रजानां स्तोत्राणि ।
तानि प्रजा अन्वायत्ताः ।
तद्यत्पवमानैः पराचीनैरेव स्तुवते तस्मात्पराञ्चो देवाः ।
पराङादित्य एति पराङ्चन्द्रमाः पराञ्चि नक्षत्राणि पराङग्निर्दहन्नेति ।
अथ यस्मात्पृष्ठोक्थैः पराचीनैश्चार्वाचीनैश्च स्तुवते तस्मादु पराचीश्चार्वाचीश्च प्रजाः ।
पराञ्चः प्रातः प्रेरते ते सायं समावर्तन्ते ।

परागेतस्सिक्तं तदर्वाक्प्रजायते २७६ । ।

पृथुर्ह वैन्यो दिव्यान्व्रात्यान्पप्रच्छ यज्ञस्य धाम परमं गुहा सन्निर्मितं महतोऽन्तरिक्षात् । कस्माद्यन्ति पवमानाः पराञ्चः कस्मादुक्थ्याः पुनरभ्याकनिक्रदति इति ।
देवा अन्यां वर्तनिमध्वरस्य मानुषास उपजीवन्त्यन्याम् । तस्माद्यन्ति पवमानाः पराञ्चस्तस्मादुक्थ्याः पुनरभ्याकनिक्रदति इति ह प्रत्यूचुः ।
यो वै देवान्मनुष्येष्वाभक्तान्वेद मनुष्यानु देवेष्वाभक्त एव देवेषु भवत्याभक्तो मनुष्येषु ।
गच्छति तं लोकं यत्र देवा नास्माद्देवता अपक्रामन्ति ।
देवा वै पवमानाः प्रजा पृष्ठोक्थानि ।
साम वै देवाः प्रजाश्छन्दांसि ।
तद्यत्पवमानसामानि पराञ्च्येव भवन्त्यथेयमृगनुनिवेष्टते तेन देवा मनुष्येष्वाभक्ताः ।
अथ यदभ्यावर्तिष्वृचं निवेष्टमानां सामानुनिवेष्टते तेनो मनुष्या देवेष्वाभक्ताः ।
स य एतदेवं वेदाभक्त एव देवेषु भवत्याभक्तो मनुष्येषु ।
गच्छति तं लोकं यत्र देवा नास्माद्देवता अपक्रामन्ति २७७

यो वै देवरूपं च मनुष्यरूपं च व्यावर्तयति वि पाप्मना वर्तते ।
देवा वै पवमानाः प्रजाः पृष्ठोक्थानि ।
तद्यत्पवमानान्पावमानीष्वेव स्तुवते तस्माद्देवा एकरूपाः सर्वे शुक्लाः ।
अथ यस्मात्पृष्ठोक्थैर्नानारूपासु नानादेवत्यासु स्तुवते तस्मादु प्रजा नानारूपाः श्वेतो रोहितः कृष्णः ।
एतद्वै देवरूपं च मनुष्यरूपं च व्यावर्तयति वि पाप्मना वर्तते य एवं वेद ।
यो वै देवानामुद्धारं वेदोदुद्धारं हरत उद्धार्यो भवति ।
बहिष्पवमानं वाव देवानामुद्धारः ।
तेन सकृद्धिंकृतेन पराचा स्तुवते ।
तस्मात्पराङुद्धारः ।
स एष एव देवानां श्रेष्ठः ।

तस्योद्धारः प्रजाः ।
प्रजापतेरेवोदुद्धारं हरत उद्धार्यो भवति य एवं वेद ।
तमेतं यज्ञस्यरसं प्रवृह्य पराङ्यस्मात्प्रजापतये प्रयच्छति तस्माद्बहिष्पवमानेन स्तोष्यन्तः प्रह्वारा इव प्रकुपिता इव सर्पन्ति ।
एवमिव वै श्रेयस उपचारः ।
तस्मादु तस्य स्तोत्रे न व्याहरेत् ।
को हि श्रेयसः परिवेषणमववदितुमर्हति ।
यो वै श्रेयसः परिवेषणमववदति यया वै स तमार्त्या कामयते तयैनं निनयति ।
अथ यत्ततोऽध्वर्युः संप्रैषान्वदति प्रजापतय एव तद्यज्ञस्य रसं प्रदाय तमाप्याययति ।
तेनास्यापीतेन रसवता स्तुतं भवति २७८

यो वै देवयशसं च मनुष्ययशसं च वेद यश एव देवेषु गच्छति यशो मनुष्येषु ।
पवमाना वै देवयशसम् ।
ते ह ते प्राणा एव ।
त एनं देवेषु निवेदयन्ते ।
अभ्यावर्ता मनुष्ययशसम् ।
ते ह तेऽपाना एव ।
त एनं मनुष्येषु निवेदयन्ते ।
एतद्वै देवयशसं च मनुष्ययशसं च ।
स य एवमेतद्देवयशसं च मनुष्ययशसं च वेद यश एव देवेषु गच्छति यशो मनुष्येषु ।
यो वै मितं चामितं च वेद मितं च हास्यामितं च बहु भवति ।
देवा वै पवमानाः प्रजाः पृष्ठोक्थानि ।
साम वै देवाः प्रजाः शस्त्राणि ।
तदेव एतत् ।
एत एवापि सर्वे देवा यत्स्तोत्राणि ।
तद्यन्मितानि स्तोत्राणि भवन्ति तस्मान्मिता देवाः ।

अष्टौ वसव एकादश रुद्रा द्वादशादित्याः ।
अथ यस्मादमितानि शस्त्राणि तस्माद्बमिताः प्रजाः ।
न तान्विद्म यावन्तो ब्राह्मणा यावन्तो राजन्या यावन्तो वैश्या यावन्तः शूद्रा इति ।
एतद्वै मितं चामितं च ।
मितं हास्यामितं च बहु भवति य एवं वेद ।
ये अर्वाञ्चस्तं उ पराच आहुर्ये पराञ्चस्तं उ अर्वाच आहुः । इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति इति ।
पवमाना वै पराञ्चः ।
तेषां चमसा अर्वाञ्चः ।
ते ह ते प्राणा एव ।
तस्मात्प्राणयापानितुं शक्नोति ।
अभ्यावर्ता अर्वाञ्चः ।
तेषां पराञ्चश्चमसाः ।
ते ह तेऽपाना एव ।
तस्माद्बपान्य प्रानितुं शक्नोति २७६

यो वै सवनानां ज्यैष्ठ्यं वेद गच्छति ज्यैष्ठ्यं न ज्यैष्ठ्यादवरोहति ।
गायत्री वै प्रातःसवनस्य ज्यैष्ठ्यम् ।
तद्यत्तत्रान्यदन्यच्छन्दः क्रियतेऽथ तद्गायत्रमित्याख्यायते ।
त्रिष्टुम्माध्यंदिनस्य सवनस्य ज्यैष्ठ्यम् ।
तद्यत्तत्रान्यदन्यच्छन्दः क्रियतेऽथ तद्त्रैष्टुभमित्याख्यायते ।
जगती तृतीयसवनस्य ज्यैष्ठ्यम् ।
तद्यत्तत्रान्यदन्यच्छन्दः क्रियतेऽथ तज्जागतमित्याख्यायते ।
एतद्वै सवनानां ज्यैष्ठ्यम् ।
स य एवमेतत्सवनानां ज्यैष्ठ्यं वेद गच्छति ज्यैष्ठ्यं न ज्यैष्ठ्यादवरोहति ।
यो वै देवानां गृहान्वेद गृही भवति विन्दते गृहान् ।
छन्दांसि वाव देवानां गृहाः ।
अष्टाक्षरा गायत्र्यष्टौ वसवः ।
गायत्र्यैव वसवो गृहिणः ।

एकादशाक्षरा त्रिष्टुबेकादश रुद्राः ।
त्रिष्टुभैव रुद्रा गृहिणः ।
द्वादशाक्षरा जगती द्वादशादित्याः ।
जगत्यैवादित्या गृहिणः ।
अनुष्टुभैव विश्वे देवाः ।
सवनैरिन्द्राग्नी ।
स य एवमेतान्देवानां गृहान्वेद गृही भवति विन्दते गृहान् ।
यो वै देवानां तृप्तिर्वेद तृप्यत्यात्मना तृप्यत्यस्य प्रजा २८०

तदु ह स्माहेयपिः सौमापः स वाद्य यजेत स वान्यं याजयेद्यो यथा महति तीर्थे सिकते गा असंबाधमानाः संतर्पयेदेवं सर्वा देवता अनुसवनं छन्दःसु अक्षरमक्षरमनु असंबाधमानाः संतृप्यन्तीर्विद्यादिति ।
अष्टाक्षरा गायत्र्यष्टौ वसवः ।
वसूनां गायत्रं प्रातःसवनम् ।
तत्ते प्रातःसवने छन्दःस्वक्षरमक्षरमनु असंबाधमानाः संतृप्यन्ति ।
एकादशाक्षरा त्रिष्टुबेकादश रुद्राः ।
रुद्राणां त्रैष्टुभं माध्यंदिनं सवनम् ।
तत्ते माध्यंदिने सवने छन्दःस्वक्षरमक्षरमनु असंबाधमानाः संतृप्यन्ति ।
द्वादशाक्सरा जगती द्वादशादित्याः ।
आदित्यानां जागतं तृतीयसवनम् ।
तत्ते तृतीयसवने छन्दःस्वक्षरमक्षरमनु असंबाधमानाः संतृप्यन्ति ।
स य एवमेता देवानां तृप्तीर्वेद तृप्यत्यात्मना तृप्यत्यस्य प्रजा २८१

तद्यत्र ह वा एवंविद्यजत एवम्विद्वा याजयति न हैव तस्य देवा ईशते ।
यत्तन्नागच्छेयुर्यदि च ह भक्षयिष्यन्तो भवन्ति यदि च नाथ हैव गच्छन्ति ।
यदि ह शुचिर्भवति भक्षयन्ति यद्यशुचिर्प्रेक्षयन्ति ।
तद्धापि पणाय्यं यस्य प्रेक्षीवायन् ।
यो वै देवानां पात्रं वेद पात्र्यः स्वानां भवति ।
ब्राह्मणो ह वाव देवानां पात्रम् ।
पात्र्यः स्वानां भवति य एवं वेद ।

तद्यथा ह वै शुद्धेन शुचिना पात्रेण पिपासन्त्येवं ह वाव देवा ब्राह्मणेन शुद्धेन शुचिना पिपासन्ति ।
तस्मादु ह ब्राह्मणेन शुद्धेनैव शुचिना बुभूसितव्यम् २८२

प्रजापतिर्देवानसृजत ।
तान्मृत्युः पाप्मान्वसृज्यत ।
ते देवाः प्रजापतिमुपेत्याब्रुवन्कस्मा उ नोऽसृष्ठा मृत्युं चेन्नः पाप्मानमन्वस्त्रक्ष्यन्नासिथेति ।
तानब्रवीच्छन्दांसि संभरत तानि यथायतनं प्रविशत ततो मृत्युना पाप्मना व्यावर्त्स्यथेति ।
वसवो गायत्रीं समभरन् ।
तां ते प्राविशन् ।
तान्साच्छादयत् ।
रुद्रास्त्रिष्टुभं समभरन् ।
तां ते प्राविशन् ।
तान्साच्छादयत् ।
आदित्या जगतीं समभरन् ।
तां ते प्राविशन् ।
तान्साच्छादयत् ।
विश्वे देवा अनुष्टुभं समभरन् ।
तां ते प्राविशन् ।
तान्साच्छादयत् ।
मरुतः पङ्क्तिं समभरन् ।
तां ते प्राविशन् ।
तान्साच्छादयत् ।
साध्याश्चाप्त्याश्चातिच्छन्दसं समभरन् ।
तां ते प्राविशन् ।
तान्साच्छादयत् २८३

सवनान्येवेन्द्राग्नी अनुप्राविशताम् ।

ततो वै तान्मृत्युः पाप्मा न निरजानात् ।
कुतो हि तस्य मृत्युः पाप्मेशिष्यते यं न निर्जानाति ।
न हैनं मृत्युः पाप्मानुविन्दति य एवं वेद ।
छन्दांसि वाव तान्मृत्योः पाप्मनोऽच्छादयन् ।
तद्यदेनाञ्छन्दांसि मृत्योः पाप्मनोऽच्छादयंस्तच्छन्दसां छन्दस्त्वम् ।
छादयन्त्येवैनं छन्दांसि मृत्योः पाप्मनो य एवं वेद ।
तद्येन येन ह वै छन्दसैवंविदार्त्विजं करोति तत्तदेव स तर्हि प्रपन्नो भवति ।
येन येन ह्येवैनं छन्दसा कुर्वन्तमुपवदति तस्मादावृश्च्यते ।
तस्य हैतस्य नैव का चनार्तिरस्ति य एवं वेद ।
य एवैनमुपवदति स आर्तिमार्च्छति ।
अथ होर्जो जानायनः कपिवनं भौवायनं पप्रच्छ यद्गायत्रं प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनमथ केयमनुष्टुबयातयाम्नी सवनमुखान्युपापतत्यान्ताद्यज्ञं वहतीति ।
स होवाच वाग्वा अनुष्टुब्वाचो यज्ञस्तायते ।
तद्यथा वा अदो भद्रबलीवर्देन रज्ज्वभिहितेन पुनः पुनः प्रतिधावन्ति प्रतिकूलाय वा गुरवे वोढ्वोढ व एवं वा एतं वाचमनुष्टुभं सवनमुखेषु पर्याणाय युञ्जन्ति ।
प्रतिकूलानीव वा एतानि यत्सवनमुखानि ।
सैषा वागेवायातयाम्नयान्ताद्यज्ञं वहति ।
यो वा अनुष्टुभं सर्वत्रापीं वेद सर्वत्र हास्यापि पुण्ये भवति ।
अष्टाक्षरा गायत्र्येकादशाक्षरा त्रिष्टुब्द्वादशाक्षरा जगती वागिति यज्ञायज्ञीयस्य निधनम् ।
तद् द्वात्रिंशत् । द्वात्रिंशदक्षरानुष्टुप् ।
अपि वा एतस्यै प्रातःसवनेऽपि माध्यंदिने सवनेऽपि तृतीयसवनेऽपि वा एतस्यै ब्रह्मण्यपि क्षत्रेऽपि विश्यपि वा एतस्या अस्मिँल्लोकेऽप्यन्तरिक्षेऽप्यमुष्मिन्स य एवमेतां अनुष्टुभं सर्वत्रापीं वेद सर्वत्र हैवास्यापि पुण्ये भवति २८४

अथ हाहीनसमाश्वत्थिं केशी दार्भ्यः केशिनः सात्यकामिनः पुरोधाया अपरुरोध ।

स ह स्थविरतरोऽहीना आस कुमारतरः केशी ।
तं होवाचां केशिन्किं मे विद्वान्राजन्यमुपाहृथा इति ।
स होवाच दहेदनुष्टुभमेव सर्वाणि छन्दांष्युपास्महे बृहतीं पशून्यज्ञं स्वर्गं लोकमिति ।
तं हास्त्रं विवेद ।
स ह कृपयां चक्रे ।
तं होवाच मा कृपयथाः ।
यदि राजन्यकाम्या कृपयस एष ते राजन्यः ।
अपि वै वयमन्यं राजन्यमेषिष्यामहा इति ।
स होवाच नैतत्केशिन्राजन्यकाम्या ब्रह्मचर्यमेव वै मा तदनुसम्स्मृत्यास्त्रमविदत् ।
चचार वै ब्रह्मचर्यम् ।
उपजरसं वावेदमश्रृणम यदयमियत्कुमारकोऽभिवेदयत इति ।
एवमेवैतदनुसम्स्मृत्यास्त्रमविददिति ।
स यदनुष्टुभं सर्वाणि छन्दांस्युवाचाष्टाक्षरा गायत्र्येकादशाक्षरा त्रिष्टुब्द्वादशाक्षरा जगती वागिति यज्ञायज्ञीयस्य निधनम् ।
तद्द्वात्रिंशत् ।
द्वात्रिंशदक्षरानुष्टुप् ।
एतदनुष्टुभं सर्वाणि छन्दांस्युवच ।
बृहतीं पशूनिति ।
या वा अनुष्टुप्सा बृहती ।
चतुष्पात्सु वा एषा पशुषूपहितेषु बृहत्यभवत् ।
यज्ञमिति ।
यो ह्येव पशुमान्भवति तं यज्ञ उपनमति ।
स्वर्गं लोकमिति ।
बृहती ह्येव स्वर्गो लोकः ।
अथ ह संगमन क्षैमिः सत्ययज्ञं पौलुषिं पप्रच्छाचार्येण प्रहित आरुणिना सत्ययज्ञ पौलुषे यत्स्तुता गायत्री भवति स्तूयते त्रिष्टुबस्तुता जगती कथं ताः सर्वाः संपद्य माध्यंदिनं सवनमुद्यच्छन्तीति ।
तद्ध न प्रत्युवाच ।

तेन हैनं जिगाय ।
स यत्प्रत्यवद्त्यद्यस्माद्ब्राह्मणश्च वैश्यश्च क्षत्रियमधस्तादुपासाते अथो यदस्याद्यावभवतामथो यदेवैतद्द्वादशाक्षरं पदमिति २८५

छन्दांसि यदिमाँल्लोकान्व्यभजन्तेममेव लोकं गायत्र्यभजतान्तरिक्षं त्रिष्टुबमुं जगती ।
ब्रह्म वै गायत्री क्षत्रं त्रिष्टुब्विड्जगती ।
सेयं त्रिष्टुबस्मिन्नन्तरिक्षे नालमनेनोत्पादनेनारारण्यत ।
सेमां गायत्रीम्प्राङभ्यविध्यत् ।
तां अभ्यतपत् ।
तस्या अबिभेदायतनं म उपहरिष्यत इति ।
तामब्रवीन्नमस्तेऽस्तु किंकामा माभिविध्यसीति ।
प्रदानं मे प्रयच्छेत्यब्रवीत् ।
तस्यै द्वे अष्टाक्षरे पदे प्रायच्छत् ।
सामूं जगतीमुपपल्यायत ।
तामभ्यविध्यत् ।
तां अभ्यतपत् ।
तस्या अबिभेदायतनं म उपहरिष्यत इति ।
तामब्रवीन्नमस्तेऽस्तु किंकामा माभिविध्यसीति ।
प्रदानं मे प्रयच्छेत्यब्रवीत् ।
तस्यै द्वादशाक्षरं पदं प्रायच्छत् ।
सेमामेव गायत्रीं पुनरुपपल्यायत ।
तामब्रवीद्यत्ते प्रदानं प्रादां किमु न्वेवेच्छसीति ।
सर्वमेव म आत्मानं प्रयच्छेत्यब्रवीद् ।
अथ किमु मे भविष्यतीति ।
समानं नावन्नाद्यं भविष्यति पुरस्त्वा धास्य इति ।
तथेति ।
तां पुरोऽधत्त ।
तस्यै सर्वमात्मानं प्रायच्छत् ।
तद्यद्गायत्री सर्वमात्मानं प्रायच्छत्तस्माद्ब्राह्मणः सर्वेणात्मना क्षत्रियमभ्येति

।
अथो यज्ञगती न सर्वमिवात्मानं प्रायच्छत्तस्मादु क्षत्राद्विडपक्राममिव चरति
।
यां यां एव तां गायत्री च जगती च संप्रायच्छतां सैवैषा बृहत्यभवत् ।
तस्माद्बृहत्यै त्रीणि चाष्टाक्षराणि पदानि द्वादशाक्षरं च ।
सैषा गायत्री प्रथमतो युजते उच्चा ते जातमन्धसा इति ।
एषा पुरोहितावसाने ।
विन्दते पुरोधां वा पुरोधामात्रं वा य एवं वेद २८६

अथ बृहत्यथ त्रिष्टुप् ।
तदेतद्ब्रह्मणा च क्षत्रेण चोभयतोऽन्नाद्यं परिगृहीतम् ।
ब्रह्मणा च ह वा एनं क्षत्रेण चोभयतोऽन्नाद्यं परिगृहीतमुपतिष्ठते य एवं वेद
।
तस्माद्ब्राह्मणेन क्षत्रियाय न द्रोग्धव्यं न क्षत्रियेण ब्राह्मणाय ।
समानं ह्येनयोरन्नाद्यम् ।
तस्माद्यद्ब्राह्मणो महदिव गच्छति क्षत्रियमेव स तस्यान्नाद्यस्य द्वितीयं गोप्तारमिच्छते ।
यत्क्षत्रियो ब्राह्मणमु एव ।
चतुरक्षराणि ह वा अग्रे छन्दांस्यासुरयज्ञवाहानि ।
अथ हेन्द्रस्य त्रिदिवे सोम आस ।
तं हाग्नयो गन्धर्वा जुगुपुरेत एव धिष्णयाः ।
त उ एवाशीविषाः ।
स हिरण्मय्योः कुश्योरास ।
ते ह स्म निमेषमात्रमभिसंपततः ।
तानीमानि छन्दांस्यब्रुवन्सोममाहराम यज्ञं तनवामहा इति ।
सा जगती प्रथमोदपतदोजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा मन्यमाना ।
तस्यै परेतायै सोमपालास्त्रीण्यक्षराण्यविन्दन्त ।
सैकाक्षरा पुनरागच्छद्दीक्षां च पशूंश्चाहरन्ती ।
तस्माद्य एव पशुमान्भवति तं दीक्षोपनामुका ।
अथ त्रिष्टुबुदपतत् ।

तस्यै परेतायैसोमपाला एकमक्षरमविन्दन्त ।
सा त्र्यक्षरा पुनरागच्छत्तपश्च दक्षिणाश्चाहरन्ती ।
तस्मात्त्रिष्टुभो लोके दक्षिणा नीयन्ते तस्मादु तमेव तपस्तप्यमानं मन्यन्ते -
२८७

- यो ददत् ।
अथ गायत्र्युदपतत् ।
तामनुष्टुम्माता प्रत्यन्वैक्षत ।
तस्मान्माता पुत्रं जनं यन्तं प्रत्यन्वीक्षेत जीवन्नाहरन्नागच्छेति ।

ऋच्वागेषा यत्पृष्ठानि ।
तामेतां विप्रयुञ्जते ।
तां विहरन्ति ।
सा प्रथममहः प्राप्य रथन्तरं भवति ।
इयमेव पृथिवी ।
वाग्वै रथन्तरम् ।
सैषावदति ।
सा द्वितीयमहः प्राप्य बृहती भवति यामिमां श्रेष्ठी वाचं वदतीत्यवोचदिति
।
सा हि दूराच्छ्रूयते ।
सा तृतीयमहः प्राप्य वैरूपा भवति यदिदं तिर्यग्वाच एहि
प्रेह्याहरोपाहराशय पाययेति ।
सा चतुर्थमहः प्राप्य विराड्भवति ।
तूष्णीं निषद्यम् ।
एतद्ध वै वैराज्यं वाचो यत्तूष्णींनिषद्यं यामिमां श्रेष्ठिनस्तूष्णीमासीनस्यैव
जिज्ञासन्ते ।
सा पञ्चममहः प्राप्य शक्वरी भवति यया प्रशिष्टश्शक्नोति ।
सा षष्ठमहः प्राप्य रेवती भवति ययान्नाद्यं प्रदीयते ।
सा न मासि-मास्यात्तव्या ।
लेलिभस्यैतदाजानं यामिमां लेलिभा वाचं वदन्ति ।

इमां वा अयं ह्योऽवददिमां पूर्वेद्युरिमां पूर्वसमाम् ।
समानीं बत वाचं वदति न बतैनं पर्येतीति ।
एवं तद्यन्मासि-मासि पृष्ठान्युपयन्ति १

ऽचथ यथा तूष्णीमासित्वा यदेव कल्याणं यत्पुण्यं तद्व्याहरेत् ।
सा व्याहृतं बत व्याहार्षीद्व्याहर्ता बतेति ।
एवं तद्यदुपरिष्टात्संवत्सरस्य पृष्ठान्युपयन्ति ।
अभ्येव रथन्तरेण क्रन्दति रेत एव बृहता सिञ्चति गर्भानेव वैरूपेण दधाति
जनयत्येव वैराजेन वर्धयत्येव शक्वरीभिरन्नाद्यमेव रेवतीभिः प्रदीयते ।
तत्कुतो मासि-मासि जनिष्यते ।
यो वै मास्यो गर्भोऽवपद्यतेऽस्रावीदिति वै तमाहुः ।
स यथा सामि गर्भाः पतेयुर्यथा वामा ओषधीर्दायुस्ताः किं दिता
स्युश्शुष्येयुरेवैवं तद्यन्मासि-मासि पृष्ठान्युपयन्ति २

ऽचथ यथो संवत्सरं भृत्वा गर्भं जनयेदृतौ पक्वा ओषधीः प्रचिनुयुस्तासां
कामान्कुर्वीरन्नेवं तद्यदुपरिष्टात्संवत्सरस्य पृष्ठान्युपयन्ति ।
अथ ह स्माह चित्रो गाङ्ग्यायनि स्पन्दनैषा बहुदोहिनी यत्पृष्ठानि ।
कोऽहरह स्पन्दनायै धारयितृनेषिष्यति ।
न वा एतान्यव्यूढे दुह्रे नो वा एतान्युपरिष्टाद्व्यूढे दशरात्रे गायत्र्या
परिहृतानि दुह्रे ।
स यथा स्पन्दनां रज्जुभिर्व्यपतत्य दुह्युरेवमेतान्युपरिष्टाद्व्यूढे दशरात्रे गायत्र्या
परिहृतानि दुह्रे ।
स यथा उपसृजेदेवं तद्यद्गायत्रमुखस्त्र्यहो यथाभिदध्यादेवं तद्यद्गायत्रमध्यो
यथापहृत्य दुह्यादेवं तद्यद्गायत्रोत्तमः ।
तस्मादुपरिष्टादेवोपेत्यानीति ।
तदु होवाच शाट्यायनिर्यो वा एष चन्द्रमा एष वाव संवत्सर एष
प्रजापतिरेष मास इति ।
एतावान्वावैष यावान्मासः ।
एतं वावैष आप्त्वा पुनः पल्ययते ।
स पञ्चदश रात्रीरूर्ध्व एति पञ्चदशार्वाङ् ।

या आपूर्यते ता ऊर्ध्वं एत्यथ या अपोछंस्ता अर्वाङ् ।
स आपूर्यमाणोऽमुं लोकं गच्छति ।
सोऽमुना लोकेन संस्पृश्यान्नं भवति ।
स यदस्य तत्र स्वद्यं तत्स्वद इत्यपोछन्निमं लोकं आगच्छति ।
स इमा अप ओषधीः प्रविशति ।
स इमा अप ओषधीः प्रविश्यास्वप्स्वोषधीष्वात्मानं न्युद्यापूर्यमाणोऽमुं लोकं गच्छति ३

ऽच्स एवमेव पुनः पल्ययमानस्संवत्सरमाप्नोति ।
स यावद्ध वै द्वादशभिस्संवत्सरैरवरुन्द्धे तावदेकेनैव संवत्सरेणावरुन्द्धे य एवं विद्वान्मासि-मासि पृष्ठान्युपैति ।
तानेतांश्चतुरोऽभिप्लवानुपयन्ति ।
तेषां चतुर्विंशती रात्र्यः ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
तदेषामुपरिष्टात्संवत्सरस्य मासि-मासि संवत्सर आप्तो भवति ।
पृष्ट्यं पञ्चममुपयन्ति ।
तदेषां उपरिष्टात्संवत्सरस्य मासि-मासि पृष्ठान्युपेतानि भवन्ति ।
अथ ह स्माह महित्थश्शैन्मिषिर्यं वा इममाहुरपृष्टोऽध्रुवकोष्णीषः कुलस्य कुलस्योद्भिदा वेष्टत इत्येष ह वाव सोऽपृष्ठोऽध्रुवकोष्णीषो य एव निर्हृतपृष्ठ्यष्षडहः ।
ते किं तत्पृष्ठ्यस्य षडहस्य स्तोमानेव कुर्वन्त आद्रियेरन् ।
अभिप्लवानेवैतान्पञ्चोपेत्योपरिष्टादेव पृष्ठान्युपेत्यानीति ४

ऽचसौ वा आदित्योऽत्राग्र आसीद्यत्रैतच्चात्वालम् ।
स इदं सर्वं प्रातपत् ।
तस्य देवाः प्रदाहादबिभयुः ।
तेऽब्रुवन्सर्वं वा अयमिदं प्रधक्ष्यति ।
एतेमूर्ध्वमुदूहामेति ।
तं षड्भिर्मासैरूर्ध्वमुदौहन् ।
तमेकविंशे विषुवत्यध्यादधुः ।

स एष एकविंशे विषुवत्यध्याहितस्तपति ।
तद्ये च ह वा इत ऊर्ध्वा लोका ये चामुतोऽर्वाञ्चस्तेषामेष एतदुभयेषां
विषुवति ।
तद्यदुभयेषां विषुवति तस्माद्विषुवान्सः ।
यथा वै रथनाभावरास्समग्रा एवं हैतस्मिन्सर्वे लोकास्समग्राः ।
तान्वा एतानेके परस्ताद्विषुवत ऊर्ध्वानिव षडहानुपयन्ति ।
यथैवैत आ विषुवत उपयन्त्येवमेवापि पराञ्चः ।
पराङ्वै स्वर्गो लोकः ।
पराञ्च एतं स्वर्गं लोकं रोहाम ।
प्रत्यवरोहस्स यदर्वाञ्च उपेयाम ।
अथैवमप्रत्यवरूढमिति वदन्तस्ते ये ह ते तथोपयन्ति य एवं
तस्मादादित्यादर्वाञ्चो लोकास्तानेवाप्नुवन्ति ।
यद्यपि बहून्संवत्सरानुपयन्त्यथ तानेवाप्नुवन्ति ।
अथ य एवैतान्पराचश्चार्वाचश्च षडहानुपयन्ति त
एवैतानुभयाँल्लोकानाप्नुवन्ति पराङियानर्वाङिति ५

ऽच्स इमं लोकमन्तिकादभ्यतपत् ।
ते वायुमवस्तात्पर्यौहन् ।
तेनैनमशमयन् ।
अपो ह वा एष एतद्बिभर्ति ।
तेऽद्भिरेवैनं तदशमयन् ।
सोऽमुं परं लोकं प्रातपत् ।
ते चन्द्रमसं परस्तात्पर्यौहन् ।
तेनैनमशमयन् ।
प्रजापतिर्वै चन्द्रमाः ।
प्रजापतिनैवैनं तदशमयन् ।
त्रिषु ह वा अयमिदं लोकेषु पवते ।
त्रिषु तत आदित्यस्त्रिषु नक्षत्राणि तस्मात्तान्यणिष्ठाणि पराध्यानि ह्येते ह वाव
द्वादश देवलोकाः ।
अथ यथोषसो वा यद्वैवमेवान्ये लोकाः ।

स इमं लोकमोकं प्रजानन्नभ्यवाविध्यत्तन्त्रिभिः ।
स्वरसामभिरवस्तादुपादधुः ।
सोऽमुं परं लोकं प्रापश्यत् ।
तमुदेवाविध्यत्तन्त्रिभिः ।
स्वरसामभिः परस्तादुपादधुः ।
तमेतदत्रास्पृणवन् ।
यदस्पृणवंस्तत्स्वराणां स्वरत्वम् ।
सप्तदशा स्वरसामानो भवन्ति ।
अन्नं वै सप्तदशम् ।
अन्नाद्य एवैनं तदध्यादधुः ।
अथो प्रजापतिर्वै सप्तदशः ।
प्रजापतिनैवैनं तदन्नाद्येऽध्यादधुः ।
स एषो हि पूर्वेऽन्नाद्येऽध्याहितस्तपति ।
ते वा एते स्वरसामान एकपञ्चाशत्सत्रिंशिनीर्विराजस्संपद्यन्ते
पञ्चविंशतिरवस्तात्पञ्चविंशतिः परस्तात् ।
अथ यैकपञ्चाशी तस्यामेष एतन्मध्ये व्यूह्याध्याहितस्तपति ।
तन्न शोको न हिमो नाशनायति न पिपासति नास्य का चनावृत्तिरस्ति ।
न ह वा अशनायति न पिपासति नास्य का चनावृत्तिर्भवति य एवं वेद ६

ऽच्स यथा सर्पिषः कुम्भं वा मधुकुम्भं वा जालोद्दिताशयं ह्रियेरन्नेवमेवैष
एताभिर्विराड्भिः परिगृहीतः ।
प्राञ्च प्रत्यञ्च यत एताभिर्धृतः ।
तान्वा एतानेके स्वरसाम्नोऽग्निष्टोमानेव कुर्वन्ति स्तोत्रबृहतीमिदं कुर्म इति
वदन्तः ।
ये वै त्रयोऽग्निष्टोमाष्षट्त्रिंशत्तानि स्तोत्राणि ।
द्वादशैकस्य द्वादशैकस्य द्वादशैकस्य तत्षट्त्रिंशत् ।
षट्त्रिंशदक्षरा वै बृहती ।
बृहती स्वर्गो लोकः ।
सैतं स्पृशति ।
ते बृहत्यैतं स्वर्गं लोकं गच्छामेति ।

ते ह ते गच्छन्त्येव यथा त्वृतेऽन्नाद्गच्छेदेवम् ।
अथ यदुक्थ्या भवन्ति ।
पशवो वा उक्थानि ।
अन्नं पशवः ।
स यथान्नेन सह श्रेयांसं प्रतिनन्दन्तमुपेयादेवमेवैनमेतदुक्थ्यै स्वरसामभिरुपयन्ति ।
अथो हैतौ देवतत्त्वावेव यद्विश्वजिदभिजितौ ।
अन्नमेतद्यत्स्वरसामानः ।
स यथा सूनायामन्नमाधाय श्रेयस उपहरेदेवमेवास्मा एतद्विश्वजिदभिजिद्ध्यामेतदन्नमुपहरति ।
अथो हैषा शान्तिरेव क्रियते ।
अग्निष्टोमसाम स्यादाग्निमारुतं शस्त्रं विषुवान् ।
क एतांस्त्रीनग्नीनभ्युपेत्य शोभयतः प्रदग्धो हैव शयीत ।
तद्यदुक्थान्यन्तरेण भवन्ति ।
पशवो वा उक्थानि ।
अन्नं पशवः ।
अन्नेनैतमशमयन् ।
नार्मेधेनैवैनं तच्छमयित्वान्तत उपयन्ति ७

ऽच्ता उ वा एतौ विश्वजिदभिजितौ ।
अष्टावन्यस्सत्रिंशिनीर्विराजस्संपद्यन्तेऽष्टावन्यः ।
अयं वै लोकोऽभिजिदसौ विश्वजित् ।
पशव स्वरसामानः ।
तद्यदभिजिता स्तुत्वा स्वरसामभि स्तुवतेऽस्मिन्नेवैतल्लोके पशून्प्रतिष्ठापयन्ति ।
अथ यत्स्वरसामभि स्तुत्वा विश्वजिता स्तुवते तस्मादमुतःप्रदानात्पशवो जीवन्ति ।
तस्य वा एतस्य वैषुवतस्याह्नो दश च पञ्चविंशानि स्तोत्राणि भवन्ति द्वे च स्तोत्रिये ।
ततो यानि दश पञ्चविंशानि स्तोत्राणि महाव्रतं तत् ।

तैरस्य वैषुवतेऽहनि महाव्रतमुपेतं भवति ।
अथ ये द्वे स्तोत्रिये आदित्य एव स एतस्मिन्नहन्प्रतिष्ठितः ।
अथ ह स्म वा एतत्पुरा त्रिर्महाव्रतमुपयन्त्यारम्भणीयेऽहन्वैषुवते महाव्रतीये ।
तस्य वा एतस्यारम्भणीयस्याह्नश्चतुर्दश च पञ्चविंशानि स्तोत्राणि भवन्ति दश च स्तोत्रियाः ।
ततो यानि चतुर्दश पञ्चविंशानि स्तोत्राणि महाव्रतं तत् ।
तैरस्यारम्भणीयेऽहनि महाव्रतमुपेतं भवति ।
अथ या दश स्तोत्रिया दशाक्षरा विराट् ।
अन्नं विराट् ।
तेनो हावसेन यन्त्या वैषुवतादह्नः ।
अथ ये द्वे स्तोत्रिये विषुवतोऽतिरिच्येते तदु हान्नपानम् ।
द्वयमु ह वा अन्नस्य रूपं यच्चैवाश्नाति यच्च पिबति ।
स यथाश्नंश्च पिबंश्चेयादेवमेवैतदेताभ्यां यन्त्या महाव्रतीयादह्नः ।
त एतं स्वर्गं लोकमागच्छन्ति ।
एतन्महाव्रतीयमहः ।
एष वाव स्वर्गो लोको यन्महाव्रतीयमहः ।
स य एतदेवं वेद त्रिरुपेतमस्य महाव्रतं भवति गच्छति स्वर्गं लोकम् ८

ऽच्तदाहुस्तमीं हिन्वन्त्यग्रुव इत्येवैतस्याह्नः प्रतिपत्कार्येति ।
तमर्केभिस्तं सामभिरिति शीर्ष्णस्तदिदास भुवनेषु ज्येष्ठमित्यात्मनः ।
तत्तदितीव वा एतेनाह्ना चरन्ति ।
ततो ह वै प्रजापतिः ।
ततो ह वा एष सर्वासां देवतानाम् ।
तत्पितैतदहः प्रजेतराणि ।
स यथा पुत्रः पितरमागत्य तत ततेति ह्वयेत्तादृक्तत् ।
सो वा उभयरूपा भवति ।
तमिति वै पुंसो रूपमग्रुव इति स्त्रियै ।
उभयमु ह वा एतद्भूत्वा प्रजापतिः प्रजज्ञे ।
तदाहुरभ्युदिते वैषा प्रतिपत् ।

योगे त्वागते पवस्व वाचो अग्रिय इत्येव प्रतिपत्कार्येति ।
मनो वै प्रजापतिः ।
मनो वै वाचोऽग्रम् ।
तदेनं तत्स्वेनैव रूपेणारभन्ते ।
सो वै मिथुना-भवति ।
पवस्वेति वै पुंसो रूपं वाच इति स्त्रियै ।
तदेतन्मिथुनं प्रजननं क्रियते ।
मिथुनेन जायते य एवं वेद ।
तस्मादेषैव प्रतिपत्कार्या ।
उपास्मै गायता नर इति द्वितीया ।
तदेतस्मादह्नो न यन्ति ।
दविद्युतत्या रुचेति तृतीया प्रत्यक्षमेतस्याह्नो रूपम् ।
तमीं हिन्वन्त्यग्रुव इति चतुर्थी याभ्युदिता प्रतिपत्तां नेदन्तरयामेति ९

सना च सोम जेषि चेति दशर्चं भवति ।
ऋषयो वा एतदृद्धिकामा उपोत्थानं प्रियं वाचोऽपश्यन् ।
अथा नो वस्यसस्कृध्यथा नो वस्यसस्कृधीति तेनास्तुवत ।
ततो वै ते सर्व एवार्ध्नुवन् ।
सर्वे हैवर्ध्नुवन्ति य एवं विद्वांस एतेन दशर्चेन स्तुवते ।
तस्मिन्ह स्माह शक्तिर्विराजं गेयां सना च सोम जेषि च पवमान महि श्रव
एकं द्वे त्रीणि चत्वारिपञ्च षट्सप्ताष्टौ नव दश हुंभा ओइ भूरिति ।
तदाहुः कृत्रिमेवैषा विराडुपाकार्येव ।
संपदं लोभयति ।
ओमित्येतदेवाक्षरं गेयमिति ।
एतद्ध वा इदं सर्वमक्षरम् ।
यथा सूच्या पलाशानि संतृण्णानि स्युरेवमेतेनाक्षरेणेमे लोकास्संतृण्णाः ।
दशधा वा एतदतिविध्येमान्क्षरति शतधेमान्सहस्रधेमान् ।
तस्मादेतदेवाक्षरं गेयमिति पर्यासो भवति ।
यः पर्यासो कामस्स न उपाप्तोऽसदिति ।
ताः पञ्चविंशति स्तोत्रियास्संपद्यन्ते ।

पञ्चविंशो वै प्रजापतिः ।
प्राजापत्यं महाव्रतं तत्तत्सलक्ष्म क्रियते १०

अथ ह स्माहार्यकचित्सर्वमेवैतदहश्चतुर्विंशं कार्यम् ।
एकमेवैतत्स्तोत्रं पञ्चविंशं कुर्युः ।
अभ्यारोहो वा एष एकस्य स्तोत्रस्य यत्सर्वं पञ्चविंशं कुर्वन्ति ।
तथैतत्स्तोत्रमनभ्यारूढं भवतीति ।
तदु होवाच शाट्यायनिः कर्तपत्यमिवैतद्यन्वावैकस्यै स्तोत्रियायै छिद्यते यद्द्वाभ्यां यत्तिसृभ्यः ।
तस्य न्वेव प्रायश्चित्तिं विन्दन्ति वा न वाथ किं यदेकादशभ्यश्छिद्यते ।
को तस्य प्रायश्चित्तिः ।
एकदेवत्यं वा एतदहः प्राजापत्यमेव ।
प्रजापतिं वावैतेनाह्ना परिवेविषति ।
तस्मात्सर्वमेवैतदहः पञ्चविंशं कार्यमिति ।
तस्य त्रीणि शतानि स्तोत्रिया भवन्ति द्वाषष्टिश्च ।
ततो यानि हि त्रीणि शतानि विराट्सा ।
अथ या षष्टिरूधस्तत् ।
अथ ये द्वे स्तनावेव तावेतस्यैवाह्नो दोहाय ११

सुषमिद्धो न आ वहेत्याप्रीराज्यं भवति ।
यत्र ह वै क्व चाप्रीराज्यं प्रजापतेरेव तत् ।
प्रजापतिमेव तेनाप्रीणन्ति ।
ता नश्शक्तं पार्थिवस्येति मैत्रावरुणम् ।
तद्वदह भवति ।
अनिरुक्तमु वै प्राजापत्यम् ।
प्राजापत्येऽहंस्तत्तत्सलक्ष्म क्रियते ।
महं इन्द्रो य ओजसेत्यैन्द्रं भवति ।
निष्कस्य हैतन्मणे रूपम् ।
तस्मान्निष्कं मणिं स्रजं पुरस्ताद्बिभ्रति ।
तदिदास भुवनेषु ज्येष्ठमिति रथस्य हैतद्रूपम् ।

तस्मात्तमभिहायैव तिष्ठन्ति ।
मह स्तवानो अद्रिव इति हस्तिनो हैतद्रूपम् ।
तस्मात्तं पार्श्वत इवाधिरोहन्ति ।
तानि वा एतानि महद्रूपाणि संपद्यन्ते ।
महद्रूपो वै प्रजापतिः ।
प्राजापत्यं महाव्रतं तत्तत्सलक्ष्म क्रियते ।
उप हैनमेतानि रूपाण्यक्रीतानि तिष्ठन्ते य एवं वेद ।
इयं वामस्य मन्मन इत्यैन्द्राग्नं भवति ।
इन्द्राग्नी पूर्व्यस्तुतिरभ्राद्वृष्टिरिवाजनीति ।
अजनीति वा आहुर्जातम् ।
जायत उ एतेनाह्ना ।
यथा ह वा इदमाण्डान्निर्भिद्येरन्नेवमेवैतस्मादह्नो निर्भिद्यन्ते ।
शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः
ईशाना पिप्यतं धियः
मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये
मा नो रीरधतं निदे
इति पाप्मन एवैषोपहतिः १२

उच्चा ते जातमन्धसेति माध्यंदिनस्य पवमानस्यान्धस्वतीर्गायत्र्यो भवन्ति प्राजापत्याः ।
प्राजापत्येऽहंस्तत्तत्सलक्ष्म क्रियते ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथामहीयवं प्राजापत्यं साम प्राजापत्येऽहन्क्रियते ।
अहरेव तद्रूपेण समर्धयन्ति ।
तेनैभ्यः समृद्धेन स्वायां जनतायामर्धुकं भवति ।
अथ दोहादोहीयं दुग्ध्या एव एतस्याह्नो दोहाय ।
अथ हरिश्रीर्निधनम् ।
श्रीर्वै हरिश्रीर्निधनम् ।
एतेन वा इन्द्रस्सर्वेषां देवानां श्रियमगच्छत् ।
श्रियमेवैतेन गच्छन्ति ।

ता दश स्तोत्रिया गायत्र्यां संपद्यन्ते ।
दशाक्षरा विराट् ।
अन्नं विराट् ।
मुखं गायत्री छन्दसाम् ।
मुखत एवैतदात्मनोऽन्नाद्यं दधते ।
पुनानस्सोम धारयेत्युभयरूपा बृहती भवति ।
एषा ह वा उभे सामनी उद्यथाम ।
तस्मादेतां कुर्वन्त्येव बृहत्साम्नः कुर्वन्ति रथन्तरसाम्नः ।
आ पृच्छ्येन सधस्थेन प्रत्नेन धरुणेन च
पिबाच्युदिन्द्र त्वं सोममृचोर्गर्भे अध्याहितः
इति यत्र ह वै क्व चैषा बृहती क्रियते न हैव तस्येन्द्र ईशेत तं नागच्छेत्
१३

तासु रौरवं प्रज्ञातमग्निष्टोमसाम ।
प्रज्ञातमग्निष्टोमसाम नेदन्तरयामेति ।
अथार्कपुष्पमन्नं वा अर्कः ।
तस्यैतत्पुष्पं यदारण्यम् ।
तद्ध्यरण्ये जायत आरण्यस्यैवान्नाद्यस्यावरुद्ध्यै ।
अथाभीशवं तृप्त्या एव ।
तर्पयन्त्येवैनमेतेन ।
अथ पञ्चविंशत्यक्षरनिधनमाङ्गिरसम् ।
अङ्गिरसो वा ऋद्धिकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते सर्व एवार्ध्नुवन् ।
सर्वे हैवर्ध्नुवन्ति य एवं विद्वांस एतेन साम्ना स्तुवते ।
तत्पञ्चविंशत्यक्षरनिधनं भवति ।
पञ्चविंशो वै प्रजापतिः ।
प्राजापत्यं महाव्रतं तत्तत्सलक्ष्म क्रियते ।
अथ नौधसं प्रज्ञातं ब्रह्मसाम ।

प्रज्ञातं ब्रह्मसाम नेदन्तरयामेति ।
अथ पृश्नि अन्नं वै पृश्नि अन्नाद्यस्यैवावरुद्ध्यै ।
अथ रौहिणकम् ।
एतेन वै प्रजापतिरेकशफानां पशूनां काममारोहत् ।
तद्यत्काममारोहत्तद्रौहिणकस्य रौहिणकत्वम् ।
कामं पशूनां रोहति य एवं वेद ।
यथा ह वा इम आरण्याः पशवो मृगा एवमेतेऽग्र एकशफाः पशव आसुः
।
तानेतैरेव रौहिणकस्य किट्किटाकारैर्ग्राममुपानयत् ।
तत्त्रयोदशनिधनं भवति त्रयोदशस्य मास उपाप्त्यै ।
तद्वा अशीतिभिस्संपन्नम् ।
आशयन्त्येवैनमेतेन ।
अथ दैर्घश्रवसमन्नं वै दैर्घश्रवसमन्नाद्यस्यैवावरुद्ध्यै ।
अथ समन्तं समन्ताः प्रजापशुभिरसामेति ।
अथ यौधाजयं त्रिणिधनं सवनानां कॢप्त्यै ।
अथौशनमन्त्यं साम ।
अन्त्येन साम्नान्त्यं स्वर्गं लोकमश्नवामहा इति १४

तदाहुस्तवश्शाव्यमेवैतस्याह्नः पृष्ठं कार्यमिति ।
तस्यैषा कल्याण्येव प्रशंसा न त्वेवास्मिन्द्वौ संपादयतः ।
वामदेव्यमेवेत्याहुः ।
वामदेव्यं हि ।
तद्ध वै प्रत्यक्षं वामदेव्यं यद्राजनम् ।
तस्य प्राणेन प्रस्तौति ।
ऋचा वै वामदेव्यस्य प्रस्तौति ।
प्राणेनैतस्य हिं हिं हिं प्राणोऽसदिति वै हिंकुर्वन्ति ।
यथा ह वै वयस आशय एवं राजनस्य वामदेव्यम् ।
प्रजापतिर्वै पितादित्यः पुत्रः ।
प्रजापतिर्वामदेव्यमादित्यो राजनम् ।
तस्मादेष एतयोराभावत्तरं तपति ।

एतद्धयस्मात्तेजो निर्भिन्नम् ।
तद्वा अशीतिभिस्संपन्नम् ।
एकैकस्यां स्तोत्रियायां द्वे द्वे अशीत्यौ संपद्येते ।
ताः पञ्चाशदशीतयस्संपद्यन्ते ।
द्वे ह वा अशीत्यावहश्चैव रात्रिश्च ।
ताभ्यामेनमाशयन्ति ।
आशयन्त्येवैनमेताभ्याम् ।
तस्य यन्निधन पृष्ठान्येव तानि १५

वागिति रथन्तरम् ।
इळेति वैरूपम् ।
तच्छक्वर्यस्तद्रेवतयः ।
स्वरिति वैराजम् ।
बृहदिति बृहत् ।
भा इत्यसौ वा आदित्यः ।
भा इत्येतदेवास्य निधनम् ।
एतस्य सलोमतामश्नुते य एवं वेद ।
तदेतत्सर्वाणि पृष्ठान्यभिवदत्येतेन सामनिधनेन ।
त उ वै पञ्च पञ्चविंशास्सामनिधनानां संस्तुतानां संपद्यन्ते ।
तानु एतान्निधनैरेव होतानुशंसति ।
तदाहुरात्मनाग्रे प्रतिपद्यमथ शीर्ष्णा ।
आत्मा वा अग्रेऽथ शिर इति ।
तदु ह तद्यथा कर्तं पतेत्तादृक्तद्यत्पञ्चविंशादात्मनस्त्रिवृच्छिरोऽभि
प्रत्यवरोहेयुः ।
शीर्ष्णैव प्रतिपद्यम् ।
सर्वा ह वा एतद्देवता स्तोत्रं प्रत्युपतिष्ठन्ति मया प्रतिपत्स्यते मया मयेति ।
स यदि शीर्ष्णा प्रतिपद्येत यैव शिरःप्रतिपद्देवता भवति तामेव तेनर्ध्नोति ।
यदि पक्षेण यैव पक्षौप्रतिपद्देवता भवति तामेव तेनर्ध्नोति ।
यदि पुच्छेन यैव पुच्छंप्रतिपद्देवता भवति तामेव तेनर्ध्नोति ।
यद्यात्मना यैवात्मनःप्रतिपद्देवता भवति तामेव तेनर्ध्नोति ।

अन्तरिता इतरा देवता भवन्ति ।
सर्वा उ ह वै देवताश्शीर्षन्नेवेमे वै वसवः १६

इमे रुद्रा इम आदित्या इमे विश्वे देवाः ।
अयमेवायं लोक इदमन्तरिक्षमयमसौ लोक इमा दिश श्रोत्रमिदं रथन्तरमिदं वामदेव्यमिदं बृहदिदं यज्ञायज्ञीयम् ।
तदेतच्छीर्ष्णा प्रतिपद्यमानस्सर्वाभिर्देवताभिस्सर्वैरेभिर्लोकैस्सर्वैस्सामभिरनन्तरायं प्रतिपद्यते ।
स यदितोऽन्येनाङ्गेन प्रतिपद्येत यैव तत्प्रतिपद्देवता स्यात्तामेवर्ध्नुयात् ।
अन्तरिता इतरा देवता स्युः ।
अथैतच्छीर्ष्णा प्रतिपद्यमानस्सर्वाभिरेव देवताभिरनन्तरायं प्रतिपद्यते ।
अथो हैतद्देवतानां प्रियं यच्छीर्ष्णा प्रतिपद्यते सर्वा नो नापरात्सीदिति १७

रेतो वा एतदग्रे प्रविशति यद्गायत्रम् ।
ततोऽन्यान्यङ्गानि विक्रियन्ते ।
प्राणो वा एष प्रविशति यद्गायत्रम् ।
तमन्यान्यङ्गान्युपसंसीदन्ति ।
स इमान्प्राणानाकाशानभिनिर्मन्थति ।
प्राणो वै गायत्रः ।
गायत्रं शिर एव ।
तदायतनो वै प्राणो यच्छिरः ।
तस्मात्त्रिवृतैव शीर्ष्णा प्रतिपद्यमथ पञ्चदशेन पक्षेणाथ सप्तदशेनाथैकविंशेन पुच्छेनाथ पञ्चविंशेनात्मना ।
तदूर्ध्वाः कीर्तिमूर्ध्वा श्रियमूर्ध्वा स्वर्गं लोकं रोहन्ति ।
अथो हैषां तैरेव ज्योतिष्टोमस्य स्तोमैश्शिवैश्शान्तैरेतदहः परिष्टुतं भवति ।
अथो हैषामेत एव ज्योतिष्टोमस्य स्तोमाश्शिवाश्शान्ताः परिमाद्भ्राजनं भवन्ति १८

तदेतत्सर्वपृष्ठं सर्वस्तोममहः ।

तद्यदेतेन सामनिधनेन सर्वाणि पृष्ठान्यभिवदति तेन सर्वपृष्ठम् ।
अथ यदेते ज्योतिष्टोमस्य स्तोमाश्शिवाश्शान्ताः परिमाद्भाजनं भवन्ति तेन सर्वस्तोमम् ।
संपदा हैव त्रिणवत्रयस्त्रिंशौ स्तोमावभिसंपद्येते ।
सर्वपृष्ठेन हास्य सर्वस्तोमेनैतेनाह्ना स्तुतं भवति य एवं वेद ।
तेन हैतेनैकेऽपि तृतीयं कृत्वा स्तुवत एकं वावेदं सामेति वदन्तः ।
तेषां ह तेषाममुष्मिँल्लोके नैव शिरश्चान्यानि चाङ्गानि विज्ञायन्ते १९

पिण्डाः पिण्डा इव हि भवन्त्यक्रताः ।
यथाङ्गमेव स्तोतव्यम् ।
ते हैवामुष्मिँल्लोके साङ्गास्सतनवोऽमृतास्संभवन्ति ।
अथ हैके सकृदेव शीर्ष्णो हिंकुर्वन्ति पराङेतद्यच्छिर इति वदन्तः ।
त्रिस्त्रिरितरेभ्योऽङ्गेभ्यः ।
ते त्रयोदश हिंकारास्संपद्यन्ते ।
एवं त्रयोदशस्य मास उपाप्तिरिति ।
तदु ह शश्वन्न तथा ।
त्रिरेव शीर्ष्णो हिंकुर्वन्तस्त्रिस्त्रिरितरेभ्योऽङ्गेभ्यः ।
ते पञ्चदश हिंश्रारास्संपद्यन्ते ।
पञ्चदशो वा इन्द्रः ।
षन्द्रं महाव्रतं तत्तत्सलक्ष्म क्रियते २०

तदाहुर्नौधसमेवैतस्याह्नो ब्रह्मसाम कार्यमिति ।
तद्ध तत्पक्षमनुवदति ।
रथन्तरमेव श्यैतमेव कार्यमिति ।
तदु ह तत्पक्षमेवानुवदति ।
बृहदेव पञ्चनिधनमेव वामदेव्यं कार्यमिति ।
आत्मानं हैव तदनुवदति ।
श्रायन्तीयमेव कार्यमिति न ह वै किं चन श्रायन्तीयमनुवदति ।
महावैष्टम्भमव कार्यम् ।
तद्दिङ्निधनं भवति ।

दिशो वै पृष्ठानि ।
इयमेव प्राची दिग्रथन्तरमियं बृहदियं वैरूपमियं वैराजममूर्महानाम्नीरिमा रेवतयः ।
दिग्भ्यो वा एतस्मा अन्नाद्यं हरन्ति ।
दिग्भ्यो वा अस्मा अन्नाद्यं ह्रियते य एवं वेद ।
अथो हैषामेतेनैव सर्वाणि पृष्ठानि ब्रह्मसामवन्ति भवन्ति ।
तस्मादु हैतत्सामैतस्मादह्नो नान्तरित्यम् ।
तदु सतोबृहतीषु भवत्युत्क्रान्त्या एवानपभ्रंशाय २१

तदाहुरिलान्दमेवैतस्याह्नो अग्निष्टोमसाम कार्यमिति ।
तस्यैषा कल्याण्येव प्रशंसा ।
अतिरिच्यते यद्व्यवच्छिन्द्युरामणीयं तद्यददः पद्मम् ।
इलान्दं तदार्भवस्य पवमानस्यानुष्टुभि कार्यं यदभ्युदितं तन्नेदन्तरयामेति ।
वारवन्तीयमेव कार्यमिति ।
तस्यैषा कल्याण्येव प्रशंसा ।
निषिद्धमिव तु यावद्धैव कृत्वो यजते तावद्बुभूषति तावत्कामयते श्रेयान्स्यां श्रेयान्स्यामिति ।
तदार्भवस्यैव पवमानस्य गायत्र्यां कार्यं यदभ्युदितं तन्नेदन्तरयामेति ।
तदु वा आहुर्यद्वावान्या वाङ्नातिवदति तदेतस्याह्नोऽग्निष्टोमसाम कार्यम् ।
यज्ञायज्ञीयं वावान्या वाङ्नातिवदति ।
वाग्वै यज्ञायज्ञीयम् ।
कुतो हि वाग्वाचमतिवदिष्यति ।
तस्मादेतस्याह्नो यज्ञायज्ञीयमेवाग्निष्टोमसाम कार्यमिति ।
अथैतच्चतुस्त्रिंश-संमितमनुष्टुभि कुर्वन्ति ।
त्रयस्त्रिंशद्वै देवताः ।
प्रजापतिश्चतुस्त्रिंशः ।
सप्रजापतिका एवैतेन देवा ऋध्नुवन्ति ।
अथ यदारम्भणीयेऽहंस्त्रयस्त्रिंशत्संमितं भवति देवता एव तेनर्ध्नुवन्ति ।
अथैतेन सप्रजापतिका एवैतेन देवता अन्तत ऋद्ध्वाप्त्वोत्तिष्ठन्ति २२

तदाहुः कां देवतां दीक्षमाणा अनुनिषीदन्ति कामनूत्तिष्ठन्तीति ।
स ब्रूयादग्निं देवतानां दीक्षमाणा अनुनिषीदन्त्यादित्यमनूत्तिष्ठन्तीति ।
तस्माद्दीक्षितान्सत आहुरासत इति यद्यपि ते शयीरन्नथोत्तिष्ठेयुः ।
अग्निर्हि देवानामासीनानां श्रेष्ठः ।
अग्निदेवत्या हि तर्हि भवन्ति ।
तस्मादुत्थितान्सत आहुरुदस्थुरिति यद्यपि त आसीरन्नथो शयीरन् ।
आदित्यो हि देवानामुत्थितानां श्रेष्ठः ।
आदित्यदेवत्या हि तर्हि भवन्ति ।
तदाहुः के भूत्वोत्तिष्ठन्तीति ।
स ब्रूयान्मनुष्या भूता दीक्षन्ते देवा भूत्वोत्तिष्ठन्तीति ।
त एतदृग्रेतसं यजूरेतसं ब्रह्मणि योनौ रेतो दधतो यन्ति ।
अग्नावेव तदाहुतीभिरभिजुह्वतो यन्ति ।
तस्माद्दीक्षोपसत्सु वीव ग्लायन्ति ।
तरुणमिव तर्हि रेतो भवति ।
तस्मादु स्त्री दुर्हृदिनी वीव ग्लायति ।
तरुणमिव हि तर्हि रेतो भवति ।
तान्स्तुतिशस्त्रैस्त्रिर्वर्धयन्तोऽभिशृण्वन्तो यन्ति ।
तस्माद्गर्भा अनश्नतस्संभवन्ति २३

त ऋङ्मया यजुर्मयास्साममया ब्रह्ममया हिरण्मया अमृतास्संभवन्ति ।
ऋङ्मयो ह वै यजुर्मयस्साममयो ब्रह्ममयो
हिरण्मयोऽमृतस्संभवत्यृङ्मयान्यस्यास्थानि भवन्ति य एवं वेद ।
तानुद्गाता पुरस्तात्संवत्सरस्य जनयित्वा होत्रे प्रयच्छति ।
तान्होता सूक्तैस्सूते ।
तत्सूक्तानां सूक्तत्वम् ।
ताञ्छस्त्रैः प्रशास्ति ।
तच्छस्त्राणां शस्त्रत्वम् ।
तानुक्थैरुत्थापयति ।
तदुक्थानां उक्थत्वम् ।
तेभ्य एतद्देव्यं मध्वशीतिभिरन्नाद्यं प्रयच्छति ।

मधु हास्यास्मिंश्च लोकेऽमुष्मिंश्चान्नं भवति य एवं वेद ।
अक्षरेणाक्षरेणो हास्मै विद्यास्सर्वान्कामान्दुह्रे ।
तस्मात्संवत्सर एव शस्यं संवत्सरे प्रोच्यम् ।
तस्माद्ब्राह्मणो हतो न स्तायाद्भवति ।
तस्माद्रेतस्सिक्तं न स्तायाद्भवति ।
तस्मादु हैवं विद्वान्न स्तायाद्भवति ।
अशीतिभिर्वै देवा इमाँल्लोकानिमानध्वन आश्नुवत ।
तदशीतीनामशीतित्वम् ।
तिसृभिरेवेमं लोकमाश्नुवत तिसृभिरन्तरिक्षं तिसृभिरमुं चतसृभिरेव दिश आश्नुवत चतसृभिरवान्तरदेशानेकयामूमूर्ध्वां द्वानवाशीतयोऽभवन् ।
नव प्राणाः ।
अश्नुते प्राणान् ।
सप्राणस्संभवति ।
सर्वमायुरेति ।
नाकामो म्रियते २४

अथैषौदुम्बरी राजासन्दी ।
तस्यै बृहद्रथन्तरे पूर्वौ पादौ वैरूपवैराजे अपरौ शाक्वररैवते अनूच्यानि ऋचः प्राचीनमाताना यजूंषि तिरश्चीनं सामान्यास्तरणं वाकोवाक्यमतीरोका श्रीरुपबर्हणम् ।
तस्यै प्रजापतिश्च बृहस्पतिश्च पूर्वौ पादावधारयेतां सोमश्च वरुणश्चापरौ ।
तस्यामेतमादित्यमभ्यषिञ्चन्त ।
वसवो राज्याय रुद्रा वैराज्यायादित्या स्वाराज्याय विश्वे देवास्साम्राज्याय मरुतस्सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय ।
तन्न हैतावत्कयाचन देवतया जितं यावदादित्येन ।
ये हि सुता देवानामासंस्त एनमसुवत ।
तस्मिन्दिशो अपित्वमैच्छन्त यथा राजनि विजितिन्यपित्वमिच्छन्त एवम् ।
ता अब्रवीद्प्रदानं मे प्रयच्छतेति ।
सेयं प्राची दिक्प्रायच्छन्मदुदयेत्यहश्च सत्यं च ।
मामभ्युदयेत्यूर्ध्वा दिक्प्रायच्छत्क्षत्रं च राष्ट्रं च ।

मामभ्यपक्रामेति दक्षिणा दिक्प्रायच्छदन्नं च रथं च ।
मामभ्यपक्रामेत्युदीची दिक्प्रायच्छद्रूपं च वर्णं च ।
समया मामयेत्यन्तरिक्षं प्रायच्छत्प्रकाशं चासंबाधं च ।
मामभ्यस्तमयेति प्रतीची दिक्प्रायच्छदृतं च रात्रिं च अनु मामातपेति
पृथिवी प्रायच्छत् २५

- क्षेमं च विमोकं च ।
अथ हाप श्रेयसीर्मेनिरे ।
ताः प्रति त्वा वयमातपाम इति यात्रां च प्रयां च प्रायच्छन् ।
अद्भिर्ह वा एष एतदेत्यपामेवायनेन ।
तासामेतासामूर्ध्वाश्छायाः प्रति हैनं तदातपन्ति ।
स एवमेता दिश उपाप्नोति ।
अस्यै प्राच्यै दिश उदेति ।
अभ्युदेतीमामूर्ध्वां दिशम् ।
षडित्थं मास एति षडित्थम् ।
समयान्तरिक्षमेति ।
अभ्यस्तमेतीमां अपरां दिशम् ।
अन्विमां पृथिवीमातपति ।
तद्यथा पतिर्जाया अनुसंचरेदेवमेवैना एष एतदनुसंचरति ।
स षक्षताहमेवेदं सर्वं संवृणजा इति ।
स वशमेव दिव आदत्त क्षत्रं नक्षत्राणामात्मानमन्तरिक्षस्य रूपं वायोराज्ञां
मनुष्याणां चक्षुः पशूनामूर्जमपां रसमोषधीनां चरथं वनस्पतीनां शिश्नं
वयसामर्चिषमग्नेर्हृदयं पृथिव्यै गन्धं हिरण्यस्य स्तनयित्नुं वाचस्सङ्गमं
पितॄणां भां चन्द्रमसः ।
तद्यदेतेषां भूतानामादत्त तदादित्यस्यादित्यत्वम् ।
स य एतदेवं वेदैष एवादित्यो भूत्वैतस्यां राजासन्द्यामास्ते २६

न ह ब्रूयात्सत्त्रमासिष्य इति ।
अमिष्यामीत्येव वक्तव्यम् ।
द्वे ह वाव देवते सत्त्रमासाते प्राणापानावेव ।

तयोस्सोऽभ्यारोहः ।
तद्यत्ताविदं सत्त्रायेते तस्मात्तौ सत्त्रसदौ ।
तस्मादु श्रमिष्यामीत्येव वक्तव्यम् ।
तस्यैष श्लोकः
सप्तर्षयः प्रतिहितास्सुभूते
सप्त पश्यन्ति बहुधा निविष्टौ
सप्तैतं लोकमुपयन्त्यापो
ऽस्वप्नजौ सत्त्रसदौ यत्र देवा
इति ।
सप्तर्षयः प्रतिहितास्सुभूत इति पुरुषो वै सुभूतम् ।
त इमे सप्तर्षयः प्रतिहिताः प्राणा एव ।
स्पत पश्यन्ति बहुधा निविष्टाविति बहुधा ह्येतौ निविष्टौ पश्यन्ति यत्प्राणापानौ ।
सप्तैतं लोकमुपयन्त्याप इतीमा द्वयीराप इमा द्वयीरिमा एका इमा द्वयीरवाचीः ।
अस्वप्नजौ सत्त्रसदौ यत्र देवा इत्येते एव ते देवते स य एतदेवं वेद - २७

यदि च स ह सत्त्रमास्ते यदि च नाथ हास्यासितमेव सत्त्रं भवति ।
य उ एवं विद्वाञ्छ्रममुपपरैत्येते एवास्य देवते भागास्सत्त्रमासाते सोऽनार्तस्संवत्सरस्योदृचं गच्छति ।
असावेव संवत्सरो योऽसौ तपति ।
तस्य यद्भाति तत्संवद्यन्मध्ये कृष्णं मण्डलं तत्सर इत्यधिदेवतम् ।
अथाध्यात्मम् ।
अयमेव संवत्सरो योऽयं चक्षुषि पुरुषः ।
तस्य यच्छुक्लं तत्संवद्यन्मध्ये कृष्णं मण्डलं तत्सरः ।
तस्यैष श्लोकः
मदेवोदेति सूर्योऽस्तं मदु च गच्छति
मां सर्वे देवा अन्वायत्ता मामु नात्येति किं चन
इति ।
मदेवोदेति सूर्य इत्येवंविदो ह वाव सूर्य उदेति ।

अस्तं मदु च गच्छतीत्येवंविदो ह वावास्तमेति ।
मां सर्वे देवा अन्वायत्ता इत्येवंविदं ह वाव सर्वे देवा अन्वायत्ताः ।
मामु नात्येति किं चनेत्येवंविदं ह वाव न किं चनात्येति २८

तदाहुः किं संवत्किं सरं किमयनमिति ।
स ब्रूयात्त्रय्येव विद्या संवत् ।
तां हि सर्वे देवास्संवान्ताः ।
अहोरात्रे एव सरः ।
ते हीदं सर्वं सरतः ।
आदित्य एवायनम् ।
स ह्येषु लोकेष्वेति ।
इत्यधिदेवतम् ।
अथाध्यात्मम् ।
अन्नमेव संवत् ।
तद्धीदं सर्वं संवान्तम् ।
वागेव सरः ।
वाचा हि पुरुषस्सरति ।
प्राण एवायनम् ।
स ह्यस्मिन्सर्वस्मिन्नेति ।
स य एवमेतदधिदेवतं चाध्यात्मं च संवत्सरायणं वेदानार्त एव संवत्सरस्योदृचं गच्छति तदाहुः कथं संवत्सर एकच्छन्दा बार्हतो भवतीति - २९

अहोभिरिति ब्रूयात् ।
कथमहोभिरिति ।
अतिरात्रावारम्भणीयमहाव्रतीये अहनी पृष्ठ्याभिप्लवावभिजित्त्रय स्वरसामानः प्रत्यञ्चस्त्रय स्वरसामानो विश्वजिद्गोआयुषी दशरात्रो वैषुवतमेव सप्तत्रिंशमेतस्मिन्स्वर्गे लोकेऽध्यूढम् ।
तस्यैष श्लोकः
तां विंशतिस्सप्तशतानि चाहुष्

षट्त्रिंशिनीं बृहतीं कल्पमानाम्
सानुष्टुब्भूत्वा पशुभिस्सयोनिर्
देवान्पितॄन्ददते मनुष्यांश्च
इति ।
तां विंशतिस्सप्तशतानि चाहुरित्यहोरात्रा एव ते ।
षट्त्रिंशिनीं बृहतीं कल्पमानामित्येवं ह तदहोभिष्षट्त्रिंशिनी बृहती कल्पते
।
सानुष्टुब्भूत्वा पशुभिस्सयोनिरितीयमेव
दिग्गामाहरदियमश्वमियमजामियमविम् ।
अनुष्टुभे वा एतस्यै सत्यै दिशश्शुल्कमाहरन्नित्येवं ह तत् ।
देवान्पितॄन्ददते मनुष्यांश्चेति ।
वाग्वा अनुष्टुप् ।
वाचो वा इदं सर्वं यतम् ।
एवं वै संवत्सर एकच्छन्दा बार्हतो भवतीति ३०

अयमेव स्पृष्ट्यो योऽयं पवते ।
एतेन हीदं सर्वं स्पृष्टम् ।
स्पृष्ट्यो ह वै नामैषः ।
तं पृष्ठ्य इति परोक्षमाचक्षते ।
सर्वान्कामान्स्पृशति य एवं वेद ।
असावेवाभिप्लवो योऽसौ तपति ।
एष हीदं सर्वमभिप्लवते ।
तदाहुर्यत्पृष्ठ्याभिप्लवावित्याचक्षतेऽभिप्लवमु वै पूर्वमुपयन्ति ।
कथं पृष्ठ्यः पूर्व उपेतो भवतीति ।
स ब्रूयाद्यदेवायमवरो वायुः पवते पर आदित्यस्तेनेति ।
अथो यत्परं सन्तमभिप्लवमवरमुपयन्ति व्यतिषङ्गायानिर्मार्गाय सर्वायुष्टायै
।
तदाहुर्यच्चत्वारोऽभिप्लवस्य स्तोमाष्षट्पृष्ठ्यस्य कथं तत्सभारमिति ।
स ब्रूयाद्यदेवैते सदृश्यौ देवते वायुश्चादित्यश्च तेन सभारमिति ।
अथो यद्ब्रह्माभिप्लवः क्षत्रं पृष्ठ्यस्तेनो एवेति ३१

तदाहुर्यदेते पृष्ठ्यस्य विषमा स्तोमास्त्रिवृत्पञ्चदशस्सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इति कथमेतत्समात्सममुपेतं भवतीति ।
स ब्रूयाद्ब्रह्म वै त्रिवृत् ।
क्षत्रं पञ्चदशः ।
ब्रह्म वै क्षत्राज्ज्यायः ।
तेन समात्सममुपेतं भवति ।
विट्सप्तदशः ।
क्षत्रमु वै विशो ज्यायः ।
तेन समात्सममुपेतं भवति ।
एकविंशं स्तोममनु शूद्रः ।
वैश्यो वै शूद्राज्ज्यायान् ।
तेन समात्सममुपेतं भवति ।
त्रिणवं स्तोममनु ग्राम्याः पशवः ।
शूद्रो वै ग्राम्येभ्यः पशुभ्य श्रेयान् ।
अत्ता हि स तेषाम् ।
तेन समात्सममुपेतं भवति ।
त्रयत्रिंशं स्तोममन्वारण्याः पशवः ।
ग्राम्या वै पशव आरण्येभ्यः पशुभ्य श्रेयांसः ।
बिभ्यत इतरे चरन्त्यधिगन्तेतरेषां हन्ता ।
तेन समात्सममुपेतं भवति ।
तदाहुः कस्मादेकरूपोऽभिप्लवो द्विरूपः पृष्ठ्यस्समान एव सन्व्यूढश्च समूढश्चेति ।
स ब्रूयाद्यस्मादिदं ब्रह्म ब्रह्मैव ।
अथ यस्मादु क्षत्रियस्सन्ब्राह्मणो भवति तस्मादेकरूपोऽभिप्लवो द्विरूपः पृष्ठ्य इति ।
तद्धैतदेकेऽभिप्लवस्य षष्ठमहरुक्थ्यं कुर्वन्त्येवं सभारमिति ।
तदु होवाच शाट्यायनिर्मोहयन्ति तेऽभिप्लवं ये तथा कुर्वन्ति ।
अब्रह्म तर्हि भवति ।
तस्मात्तथा न कार्यमिति ।

अथ हैके पृष्ठ्यस्य षष्ठादह्नो द्विपद उद्धरन्त्येवं सभारमिति ।
तदु होवाच शाट्यायनि स्वर्ग एष लोको यत्पृष्ठ्यषडहः ।
यजमान एष निदानेन यद्द्विपदः ।
तमायतनाच्च्यावयन्ति ।
स य एनांस्तथा चक्रुषो ब्रूयादायतनाद्वा च्योष्यन्तेऽस्माद्वा लोकादिति तथा हैव स्युः ।
तस्मात्तथा न कार्यमिति ३२

तदाहुर्यदिदं प्रायणीयमहस्त्रिवृदाचक्षते प्रायणीयमित्यदश्चतुर्विंशं कथमेतत्त्रिवृता प्रयतं भवतीति ।
स ब्रूयाद्यदेवैते चत्वारिंशत्त्रिवृतस्संपद्यन्ते तेन त्रिवृता प्रयतं भवतीति ।
अथो यच्चतुर्विंशत्यक्षरा गायत्री तेनो एवेति ।
तदाहुः कथमेतद्वैषुवतीयमहश्छन्दोम्यं भवतीति ।
स ब्रूयाद्यावन्ति सप्तानां चतुरुत्तराणां छन्दसामक्षराणि तावत्येतस्याह्न स्तोत्रियाः ।
तेन छन्दोम्यं भवतीति ।
तदाहुर्यदुपरिष्टाद्विषुवतश्छन्दोमानुपयन्ति कथं पुरस्ताद्विषुवतश्छन्दोमा उपेता भवन्तीति ।
स ब्रूयाद्य एवैष आरम्भणीयस्याह्नश्चतुर्विंशश्छान्दोमिकस्तोमस्तेन पुरस्ताद्विषुवतश्छन्दोमा उपेता भवन्तीति ।
अथो यदेव पृष्ठ्यस्य द्वे द्वे अहनी समस्ते छन्दोमास्संपद्यन्ते तेनो एवेति ३३

तदाहुर्यत्षट्कृत्वः पुरस्ताद्विषुवतः पृष्ठ्यान्युपयन्ति विष्वजिति सप्तममुपरिष्टात्कथं तत्सभारमिति ।
स ब्रूयाद्यद्वा अर्वाचीनं विषुवतस्तदयं लोको यदूर्ध्वं विषुवतस्तदसौ लोकः ।
आसन्न इव वा अयं लोकः ।
प्ररिक्त इवासावन्यः ।
द्वितीयो ह्ययं लोकः ।
तद्यद्विश्वजिति सप्तममुपरिष्टात्पृष्ठ्यान्युपयन्त्येवं सभारमिति ।

अथो य एवं विश्वजित्पृष्ठमयमेव ।
गौर्वै रथतरमश्वो बृहदजा वैरूपमविर्वैराजं व्रीहयश्शक्वर्यो यवा रेवतयः ।
स एष रथस्संसक्तो यत्पृष्ठानि ।
तस्यैषोऽक्षो यद्गायत्रीषु बृहदग्निष्टोमसाम भवत्येतस्य रथस्यानपव्याथाय ।
अथ य एतन्निर्हृतपृष्ठमुपयन्ति विषक्तरथं ते विश्वजितं शून्यमुपयन्ति ।
ते न किं चन व्यश्नुवते ।
तस्मात्पृष्ठमय एव विश्वजित्कार्य इति ३४

तद्धैतदेके स्वरसाम्नां स्वराण्येव पृष्ठानि कुर्वन्ति ।
पृष्ठेन वा अहराख्यायते स्वरसामान इत्येत आख्यायन्ते ।
तस्मात्स्वरसाम्नां स्वराण्येव पृष्ठानि कार्याणीति ।
ते चेत्स्वराणि पृष्ठानि कुर्युर्यानि ष्टं भवन्ति तान्येकबृहतीषु कुर्युः ।
तदु होवाच शाट्यायनिर्वयं वाव प्रत्यक्षं स्वराणि पृष्ठानि कुर्मो ये
बृहद्रथन्तरे कुर्मः ।
इदं वै रथन्तरमदो बृहत् ।
आभ्यामु वै लोकाभ्यामिदं सर्वं स्पृतम् ।
तस्माद्बृहद्रथन्तरे एव पृष्ठे कार्ये इति ।
अथो हैते विच्छिन्नान्स्वरसाम्न उपयन्ति ये त्रीण्युपयन्ति ।
सर्वाण्येव कार्याणि ।
तथा द्वाभ्यां द्वाभ्यामहस्तायते ।
एवं संगृहीता स्वरसामानो भवन्त्यविच्छिन्नाथो पापवस्यसस्य व्यावृत्त्या
इति तद्धैतदेके विषुवतो बृहतीष्वेव बृहत्पृष्ठं कुर्वन्ति - ३५

- बार्हतो विषुवान्बार्हतो वासावादित्यः ।
बृहत्यामेष एतदध्यूढस्तपति ।
तस्माद्बृहतीष्वेव बृहत्पृष्ठं कार्यमिति ।
अथ हैके बृहतीष्वेव दिवाकीर्त्यं पृष्ठं कुर्वन्ति ।
बृहत्यायतनानि पृष्ठानि ।
इदं वा अन्तरिक्षं बृहती ।
तस्यामयं वायुरन्तः पवते ।

तत्पृष्ठं तस्या उ एव यद्द्वादशाक्षरं पदं तेन जगतीषु कृतं भवति ।
एवं तृतीयसवनमयातयाम क्रियत इति ।
तदु होवाच शाट्यायनिर्जागतो विषुवान् ।
जागतमेतत्साम ।
जागतोऽसावादित्यः ।
यदा ह्येष उदेत्यथ जगदेतस्यैव प्रयाणमनु प्रैति ।
तस्माज्जगतीष्वेव दिवाकीर्त्यं पृष्ठं कार्यमिति ।
ततो यास्तिस्त्रो जगत्यश्चतस्त्रस्ता बृहत्यः ।
तेन बृहतीषु कृतं भवति ।
तास्संस्तुता अष्टाविंशतिर्बृहत्यस्संपद्यन्ते ।
तेनो एव बृहत्यन्तरिता भवति ।
अथो हैतत्प्राणस्यैव रेतो निर्मितं यद्दिवाकीर्त्यम् ।
प्रजननं जगती ।
सोऽसावादित्यः ।
तद्यज्जगतीषु दिवाकीर्त्यं पृष्ठं कुर्वन्ति स्वेनैवैनं तदायतनेन समर्धयन्ति ।
तेनैभ्यः समृद्धेन स्वायां जनतायामर्धुकं भवति ३६

तदेतत्पृच्छन्ति किं तद्दिवाकीर्त्येऽहन्क्रियते येन प्रजाः प्रजनयति येन च प्रजा दाधारयति ।
स ब्रूयात्प्राणस्यैव रेतो निर्मितं यद्दिवाकीर्त्यम् ।
प्रजननं जगती ।
तेन प्रजाः प्रजनयति ।
अथ यत्प्राणो भूत्वा पराणि चावराणि चाहानि दाधर्ति तेनो एव प्रजा दाधारयति ।
प्राण एव दिवाकीर्त्यम् ।
चक्षुषी भ्राजाभ्राजे ।
श्रोत्रं विकर्णम् ।
वाग्दशस्तोभम् ।
त इमे प्राणा मध्यतो हिताः ।
तद्धैतदेक उदित एवाज्यग्रहान्गृह्णन्ति ।

उदिते प्रातरनुवाकमुपाकुर्वन्ति ।
दिवाकीर्त्यं वै नामैतदहः ।
तन्न रात्र्या संसृजेयुरिति ।
तदु होवाच शाट्यायनिस्सामभिर्वा ग्रहान्यभिष्टुतान्यृग्भी रात्रयः ।
सैषां रात्रिरनभिष्टुता शून्या भवति ।
ग्रथो प्रजापतिरेष यत्प्रातरनुवाकः ।
तमायतनाच्च्यावयन्ति ।
स य एनांस्तथा चक्रुषो ब्रूयादायतनाद्वा च्योष्यन्तेऽस्माद्वा लोकादिति तथा हैव स्युः ।
तस्माद्यथैवेतरेषामह्नां तथा कार्यम् ।
प्राणापानावुपांश्वन्तर्यामौ ।
उदितेऽन्यं जुह्वत्यनुदितेऽन्यम् ।
बहिर्वै सन्तं प्राणमुपजीवन्त्यन्तस्सन्तमपानम् ।
तद्यदुदितेऽन्यं जुह्वत्यनुदितेऽन्यं बहिस्सन्तं प्राणमुपजीवामान्तस्सन्तमपानमिति ।
ग्रथ य एतावुदिते जुह्वति प्राणापानावुत्खिदन्ति ।
स य एनांस्तथा चक्रुषो ब्रूयात्प्राणापानावुदखात्सुर्मरिष्यन्तीति तथा हैव स्युः ।
तस्माद्यथैवेतरेषामह्नां तथा कार्यम् ३७

तानि वा एतानि दीक्षमाणादुत्क्रामन्त्यग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः पितृयज्ञो गृहमेधो ब्रह्मौदनो मिथुनम् ।
तद्यद्दीक्षोपसत्सु स्वाहेति व्रतयति तेनास्य दीक्षोपसत्स्वनन्तरितमग्निहोत्रं भवति ।
यदुपांश्वन्तर्यामावुदितेऽन्यं जुह्वत्यनुदितेऽन्यं तेन सुत्यायाम् ।
यत्पुरोडाशस्तेन पौर्णमासम् ।
यद्दधि तेनामावास्यम् ।
यत्पयस्या तेन चातुर्मास्यानि ।
यत्पशुमालभन्ते तेन पशुबन्धः ।
यदुपासनान्युपास्यति तेन पितृयज्ञः ।

यद्धानाः करम्भो भवति तेन गृहमेधः ।
यत्सौम्यमाहरति तेन ब्रह्मौदनः ।
यत्पत्नीस्संख्यापयति तेन मिथुनम् ।
तद्धैक आहुः प्राणेन त्वा संभवामनीत्येव प्रतिष्णामभिप्राणयानीति ।
तदु होवाच शाटचायनिरवकीर्णरूपमिवैतत् ।
एको वाव पुमान्प्राणावे विद्ययैवैतदनन्तरितमथो यदेव यज्ञायज्ञीयस्य स्तोत्रे संख्यापयन्ति ३८

तदाहुर्यदन्यैरन्यैः सामभि स्तुवतेऽन्या अन्या अनुशंसन्त्यथ कस्मात्समाना गृहा इति ।
स ब्रूयादन्नं वै साम ।
अन्नमृक् ।
प्राणा गृहाः ।
अन्यदन्यद्वै प्राणेभ्योऽन्नमाहरन्ति ।
तस्मादन्यैरन्यैः सामभि स्तुवतेऽन्या अन्या अनुशंसन्ति समाना एव गृहा इति ।
प्राणा एव साम ।
तन्मूलम् ।
अथ यथा वृक्षस्य स्कन्धांसि वा शाखा वा पलाशानि वैवमन्यानि सामानि ।
स य एतदेवं वेद सर्वाण्येवास्य सामानि विदितानि भवन्ति ।
वागेवर्क् ।
तन्मूलम् ।
अथ यथा वृक्षस्य स्कन्धांसि वा शाखा वा पलाशानि वैवमन्या ऋचः ।
स य एतदेवं वेद सर्वा एवास्यर्चो विदिता भवन्ति ।
मन एव यजुः ।
तन्मूलम् ।
अथ यथा वृक्षस्य स्कन्धांसि वा शाखा वा पलाशानि वैवमन्यानि यजूंषि ।
स य एतदेवं वेद सर्वाण्येवास्य यजूंषि विदितानि भवन्ति ३९

तदाहुः किं नातिष्टुवन्ति किं नातिशंसन्ति किं नातिगृह्णन्तीति ।
स ब्रूयात्प्राणमेव नातिष्टुवन्ति ।
स्तुते वै प्राण एव परिशिष्यते ।
वाचमेव नातिशंसन्ति ।
शस्ते वै वागेव परिशिष्यते ।
मन एव नातिगृह्णन्ति ।
गृहीते वै मन एव परिशिष्यते ।
नातिष्टुतं नातिशस्तं नातिगृहीतमेवंविदस्संपन्नमेव भवति ।
अथ ह वै समृद्ध एव यज्ञ उपासितव्यः ।
यदधीयन्ननुपहन्यमानः करोति तत्स्वर्ग्यम् ।
स्वर्ग्यं म एतत्स्वर्गलोक एतेन भविष्यामीत्येव तद्विद्यात् ।
अथ यद्दुरधीयन्नुपहन्यमानो विषिञ्चन्करोति पुष्टिस्सा प्रजननम् ।
पुष्टिर्म एषा प्रजननं बहुर्भविष्यामि प्रजनिष्य इत्येव तद्विद्यात् ४०

अथ ह वै त्रयः पूर्वेऽग्नय आसुर्भूपतिर्भुवनपतिर्भूतानां पतिः ।
अयं वै लोको भूपतिरन्तरिक्षं भुवनपतिरसावेव लोको भूतानां पतिः ।
अथ हायं भूतिर्नाम ।
तेषां ह वषट्कारश्शीर्षाणि चिच्छेद ।
त इमास्तिस्रः पृथिवीः प्रविविशुः ।
तस्माद्यदग्निहोत्रस्य वाज्यस्य वावस्कन्देत्तदभिमृशेद्भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति ।
एतेषु हैवास्याग्निषु हुतमस्कन्नं भवति ।
अथ ह वै त्रयः पूर्व ऋषय आसुश्शूर्पयवमस्ह्लाना अन्तर्वान्कृषिस्सोल्वालाः
।
ते ह यज्ञस्य कृन्तत्राणि ददृशुः ।
तस्यैताः प्रायश्चित्तीर्ददृशुः शं च म उप च म आयुश्च मे भूयश्च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति ।
तस्मादेता दर्शपूर्णमासाभ्यां वा चातुर्मास्यैर्वा पशुबन्धेन वा सौम्येन वाध्वरेणेष्ट्वोपरिष्टाज्जपेत् ।

यदेवात्र यज्ञस्य विधुरं भवति तदेव तेन शमयति ।
प्राण एवाविषुवतो व्यानो विषुवानपानो यदूर्ध्वं विषुवतः ।
अपानो वा इदं सर्वमाहरति ।
तस्माद्वयं परस्ताद्विषुवतोऽर्वाचष्षडहानुपैमः ४१

तद्ध क्रतुजिज्ञानकिरियपिं सौमापं पप्रच्छ प्राणेन स्वी३दपानेना३
अस्मिञ्जीवति मर्त्यः ।
तद्ब्रूतात्संगतेभ्यः कुरूणां ब्राह्मणेभ्य इति ।
स होवाचेहैवाहं त्वां प्रतिवक्ष्यामीति ।
तं ह प्रत्युवाच न प्राणेन नापानेन ।
अस्मिञ्जीवति मर्त्ये व्यानोऽध्यक्षः पशोस्स तं विष्वञ्चं ईर्यत इति ।
पुरुषो वै पशुः ।
पशुरुत्पशुस्सः ।
व्यानो ह वा एतं विष्वञ्चमीर्यते ।
तान्वा एतानेके परस्ताद्विषुवत ऊर्ध्वानिव षडहानुपयन्ति ।
यं वावैतं पृष्ठ्यं पूर्वमुपैमस्तेन व्यावृत्ता भवन्ति ।
अथो एवमजामीति ।
तदु होवाच शाट्यायनिरुभये वा एत ऊर्ध्वा भवन्ति ये चोर्ध्वा ये चार्वाञ्चः
।
सवनैर्वा एत ऊर्ध्वा भवन्त्याप्नुम उ तं कामं य आवर्तेष्विति ।
तदाहुर्यद्यथापां विवर्त एवमेते यद्गोआयुषी ।
कतरेषामेते अह्नाम् ।
परेषामवरेषामिति ।
उभयेषामेवेति ब्रूयात् ।
उभयानि ह वा एते अहानि संगृह्य तिष्ठतः पराणि चावराणि च ।
तस्मात्त्र्यहेणान्यत्तनुमहे त्र्यहेणान्यत् ।
स द्व्यहस्सन्षडहो भवति ।
तदूर्ध्वे गोआयुषी भवत ऊर्ध्वो दशरात्रः ।
तद्धैतदेके विहृते गोआयुषी उपयन्त्युपरिष्टाद्विश्वजित आयुः पुरस्ताद्दशरात्रस्य
गाम् ।

एवमजामीति ।
अथो एवमेवैतयोः पुरोपाययनम् ।
तत्प्रमत्ता नैमिशीया अतीयुः ।
तेऽत्र पुरस्ताद्दशरात्रस्य सहोपेयुः ।
तत इदमर्वाचीनमेवोपयन्ति ।
तदु होवाच शाट्यायनिः प्राणापानावेतौ यद्गोआयुषी ।
अन्नपाने ते विच्छिन्दन्ति ये विहरन्ति ।
अथो एष वाव देवयानः पन्था यद्गोआयुषी ।
स्वर्ग एष लोको यद्दशरात्रः ।
त एतेन देवयानेन पथैतं स्वर्गं लोकं गच्छन्ति ।
अथ य एते विहरन्त्येतं देवयानं पन्थानं विच्छिन्दन्ति ते न किं चन व्यश्नुवते ।
तस्मात्सहैवोपेत्ये इति ४२

गोबलं ह वार्ष्णं शाट्यायनिरुवाच पितृमानसि भगवः पितामहवान् ।
संवत्सराय दीक्षिष्येऽनु मा शाधीति ।
तथेति होवाच ।
अयनं ते वक्ष्यामि यद्विद्वाननार्तस्संवत्सरस्योदृचं गच्छत्युत्थायो योगक्षेमी पणाय्यो भवतीति ।
तान्वा एतान्द्वादश मासो यन्तीति होवाच ।
ततो यांश्चतुरो मासो यन्त्यग्नेरेव तानयनेन यन्ति ।
अग्निं चैव तेन देवतानामुपाप्नुवन्तीमं च लोकं इति ।
अथ यानपरांश्चतुरो मासो यन्ति वायोरेव तानयनेन यन्ति ।
वायुं चैव तेन देवतानामुपाप्नुवन्त्यन्तरिक्षलोकं चेति ।
यानपरांश्चतुरो मासो यन्त्यादित्यस्यैव तानयनेन यन्ति ।
आदित्यं चैव तेन देवतानामुपाप्नुवन्त्यमुं च लोकमिति ४३

एतद्वा अयनमिति होवाच ।
तद्यद्वा इदमाहुरनयनेनागादिति ।
य एवैतदविद्वांसस्संवत्सराय दीक्षन्ते तेऽनयनेन यन्ति ।

अथ य एतदेवं वेदानार्त एव संवत्सरस्योदृचं गच्छत्युत्थायो योगक्षेमी पण्याय्यो भवति ।
त एतं स्वर्गं लोकमागच्छन्ति ।
एतन्महाव्रतीयमहः ।
एष वाव स्वर्गलोको यन्महाव्रतीयमहः ।
तत्पञ्चविंशं भवति ।
ततो या विंशतिर्विराट्सा ।
अथ याश्चतस्र इमा एव ताश्चतस्रो दिशः ।
अथ या पञ्चविंशीयमेव सोर्ध्वा दिक् ।
दिशो वै यत्र समुदश्रयन्त तदेषोऽत्यग्रो नाम लोकोऽभवद्य एष तपति ।
एतमेवैतत्पञ्चविंश्याभ्यारोहन्ति ।
एतस्य सलोकतां गच्छन्ति ।
तदाहुर्यदेतेनाह्ना भूयिष्ठमीप्सन्ति यन्महाव्रतीयेनाथ कस्मादयं वारणः पञ्चविंशस्तोमः क्रियत इति ।
कृत्स्नस्यान्नाद्यस्यावरुद्ध्या इति ब्रूयात् ।
पुरुषमेव पञ्चभि स्तोत्रियाभिरवरुन्द्धे गां पञ्चभिरश्वं पञ्चभिरजां पञ्चभिरविं पञ्चभिः ।
स एष कृत्स्नसैवान्नाद्यस्यावरुद्ध्या अन्ततः पञ्चविंशस्तोमः क्रियत इति ।
अथ यावतिरात्रौ प्रतिष्ठैव सा ।
अस्मिन्नेव लोके प्रायणीयेनातिरात्रेण प्रतिष्ठाय प्रयन्ति ।
अमुष्मिँल्लोक उदयनीयेनातिरात्रेण प्रतिष्ठायोद्यन्ति ।
ते हाप्यबुभूषन्त इव भवन्ति प्रत्यिव तिष्ठन्ति ४४

अथैषौदुम्बरी राजासन्दी ।
तां हैके प्राचीमेव निदधति ।
उदीचीमेव निदध्यात् ।
तस्या इमाववान्तरदेशौ पूर्वौ पादाविमावपराउ ।
तां हैके प्राचीमेवाधिरोहन्ति ।
तदु होवाच शाट्यायनिरुदञ्चो वै सामार्त्विज्यं कुर्वन्ति ।
उदीचिनदेवत्या उद्गातारः ।

उदीच्यैवारुह्येति ।
तां हैके नमस्कारेणैवाधिरोहन्ति नमस्तेऽस्तु भगवति विद्म त्वा सा नश्शिवैधीति ।
तूष्णीं हैवैकेऽधिरोहन्ति ।
मनो वै प्रजापतिः ।
प्राजापत्यमेतदहरिति ।
तामनेनाग्रेऽधिरोहेदथानेनाथानेनाथानेनामृतं गमयेयमिति ।
अथास्मा आरूढाय वाणं शततन्त्रीमाहरन्ति ।
तमेतेन संतानेन संतनोति
भूर्भुव स्वर्
वदा वदा वदा वदी वदा वदोरुः
पृथुस्सुगस्सुगन्तुः
कर्मः करणः करः करिष्यन्
षन्द्रीं वाचं बृहतीं विश्वरूपाम्
शतायुषं प्रवद देव वाण
इति ।
अथेन्द्रणतया चेषीकया वेतसशाखया चोल्लिखति मनो ज्योतिरिति वाक्सत्यमिति मनो भद्र इति ।
तं प्रयच्छति ४५

अथैता अन्याः परिमादः कुरुते ।
अथ स्तुते ।
अथ शीर्ष्णाग्रे स्तुतेऽथ दक्षिणेन पक्षेनाथोत्तरेणाथ पुच्छेनात्मनोत्तमेन ।
तत्सलोमाय ।
शीर्ष्णोद्गाता प्रतिपद्यत आत्मना होता ।
यां ह्येव प्राह तया प्रतिपद्यते ।
अथ यदन्यां प्राहान्यया प्रतिपद्यते विलोम तत् ।
अथ हैक आत्मनैवाग्रे प्रतिपद्यन्ते ।
तदु होवाच शाट्यायनिर्यथान्धो द्वारमृच्छेत्तादृक्तदिति ।
अथ हैके स्तुत्वाइवोपावरुह्यैतदहश्शस्यमानमीक्षमाणा आसते ।

तदु होवाच शाट्यायनिरीश्वरः पापीयान्भवितोर्यस्तथा करोति ।
क्षत्रं वै साम ।
विट्छस्त्रम् ।
उपर्येवासीत ।
राजानमेवाह्वियमाणं प्रत्यवरोहेत् ।
तथास्य राजा प्रत्यवरूढो भवति ।
तस्यै प्रत्यवरोहो
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्
पिपृतां नो भरीमभिः
इति ।
तामेतामासन्दीमुत्तरतः पर्याहृत्य निदधति ४६

तदाहुर्यद्विहृतमेतदहश्शस्यते विहृतासु स्तुध्वा३ अविहृतासू३ इति ।
विहृतास्विति ब्रूयात् ।
य एता राजन्यस्य देवतास्ताभिर्विहृतं भवति ।
तद्यद्गायत्रीषु शिरो भवति बृहतीषु च ककुप्सु च पक्षौ द्विपदासु च पुच्छं त्रिष्टुप्स्वात्मा कथमतो विहृतं भवतीति ।
एतस्यात्मनः पञ्चविंशं शतं त्रिष्टुभो भवन्ति ।
ततो यच्छतमायुष्टत् ।
अथ याः पञ्चविंशतिः पुरुषस्सः ।
पञ्चेमाः पञ्चेमाः पञ्चेमाः पञ्चेमाश्चत्वारि प्राङ्गानि ।
आत्मा पञ्चविंशः ।
स एष शतायुः पुरुषः ।
तदाहुर्यदन्यास्त्रिष्टुभस्संपूर्णाक्षरासु स्तुवत इति ।
स ब्रूयात्त्रैष्टुभो वै पुरुषस्त्रिष्टुब्योनिः ।
तानीमानि पुरुषस्यान्यूनानि ।
तस्माद्व्यूनाक्षराः ।
अथ यद्विषमेण समस्तेनो संपूर्णाक्षरा इति ।
तदाहुर्यत्पञ्चविंशः पुरुषः पुरुषस्यैतत्स्तोत्रमित्याहुः ।
अथ कस्मादेतानि विषमाणि सामानि क्रियन्ते पुरुषस्य सर्वताया इति ।

स ब्रूयान्मनो वै प्रजापतिः ।
प्रजापतिः पुरुषः ।
तस्यैषो ऋन्तरात्मा यदेताः पञ्चविंशति स्तोत्र्याः ।
ऋथो यथा पुरुषस्य केशा नखा लोमानि श्मश्रूणि तादृक्तत् ।
यदेतानि विषमाणि सामानि क्रियन्ते पुरुषस्य सर्वताया इति ४७

तदाहुर्यद्बृहत्यायतनानि पृष्ठानि कथमतो बृहतीषु कृतं भवतीति ।
एतस्यात्मनो द्वापञ्चाशं शतं बृहतयो भवन्त्येका च ककुप् ।
तेन बृहतीषु कृतं भवति ।
तेनो एव ककुप्पृष्ठेभ्यो न च्यवत इति ।
तदाहुः किंछन्दाः पञ्चविंश स्तोम इति ।
पङ्क्तिछन्दा इति ब्रूयात् ।
एतद्ध वै प्रत्यक्षं पञ्चविंशस्य स्तोमस्य छन्दो यत्पङ्क्तिः ।
एतस्यात्मनस्सप्तत्रिंशं शतं पङ्क्यो भवन्त्यर्धपङ्क्तिश्च ।
तेन पङ्क्तिश्छन्दाः ।
ता उ एव द्वानवतिरतिछन्दसः ।
ऋतिछन्दा वै सर्वाणि छन्दांस्यभिभवति ।
तद्वा ऋस्य तत्सर्वाण्येव छन्दांस्युपेतानि भवन्ति ।
तदाहुः कथमेतत्सर्वमहः पञ्चविंशं भवतीति ।
संपदेति ब्रूयात् ।
कथं संपदेति ।
पद्येति नव शीर्ष्णो गायत्र्यः ।
तासां सप्तविंशतिः पदानि ।
षट्छतं पक्षयोर्द्वाचत्वारिंशत्पुच्छस्य ।
तद्यानीमानि सप्तविंशतिश्शीर्ष्णः पदानि ततो द्वे ऋादाय षट्छत उपदधति
।
ऋथ पञ्चविंशः परिशिष्यते ।
ततो यच्छतं चत्वारस्ते पञ्चविंशाः ।
ऋथ यान्यष्टावतिरिच्यन्ते तानि द्वाचत्वारिंशत्युपदधति ।
तौ द्वौ पञ्चविंशौ ।

पञ्चविंश एव पञ्चविंशम् ।
सर्वं पञ्चविंशं भवतीति ४८

एष वाव यज्ञानां विषुवान्यदग्निष्टोमः ।
ते ये प्राञ्चो हविर्यज्ञा औपवसथात्तेऽपियन्ति ।
अथ य उत्तरे यज्ञक्रतवस्सुत्यायां तेऽपियन्ति ।
यत्त्रिवृद्बहिष्पवमानं ये त्रिवृत स्तोमास्तेन तेऽपियन्ति ।
यत्पञ्चदशान्याज्यानि पञ्चदशो माध्यंदिनो ये पञ्चदशा स्तोमास्तेन तेऽपियन्ति
।
यत्सप्तदशानि पृष्ठानि सप्तदश आर्भवो ये सप्तदशा स्तोमास्तेन तेऽपियन्ति
।
यदेकविंशमग्निष्टोमसाम य एकविंशा स्तोमास्तेन तेऽपियन्ति ।
यदेकविंशं सर्वे स्तोमा अभिसंपद्यन्ते तेन सर्वे स्तोमा अपियन्ति ।
अयमेवाग्निष्टोमो योऽयं पवते ।
ते ये प्राञ्चो यज्ञक्रतवोऽग्निस्ते निदानेन ।
अथ य उत्तरे यज्ञक्रतव आदित्यस्ते निदानेन ।
यदा वा अग्निरुद्वायति वायुमेवाप्येति ।
यदा आदित्योऽस्तमेति वायुमेवाप्येति ।
तस्य वा एतस्य तथैव वाग्निष्टोमस्य चतुर्विंशति स्तुतशस्त्राणि ।
एवं चतुर्विंशतिः पुरोवातो दक्षिणतोवातः पश्चात्वात उत्तरतोवात
ऊर्ध्वतोवात इति ।
प्राण एवाग्निष्टोमस्तोमः ।
ते ये प्राञ्चो यज्ञक्रतवो वाक्ते निदानेन अथ य उत्तरे यज्ञक्रतवश्चक्षुस्ते
निदानेन - ४९

- यदा वै तूष्णीमास्ते प्राणमेव वागप्येति ।
यदा स्वपिति प्राणमेव चक्षुरप्येति ।
तद्यदेवंविद्वदति हविर्यज्ञैरस्य तदिष्टं भवति ।
यत्प्राणित्यग्निष्टोमेनास्य तदिष्टं भवति ।
यद्वीक्षत उत्तरैरस्य तद्यज्ञक्रतुभिरिष्टं भवति ।

तद्यदेवंविद्ददति यत्प्राणिति यद्वीक्षत एतैर्हास्य तत्सर्वैर्यज्ञक्रतुभिरिष्टं भवति ।
स एष समानप्रायणस्समानसंबन्धनस्संवत्सरः ।
तस्य मन एव प्रायणं वाक्संबन्धनम् ।
स एष संवत्सरोऽग्निष्टोमानेवाभिसंपद्यते ।
षडतिरात्रस्यातियन्ति त्रीण्युक्थानि त्रिदेवत्यस्सन्धिः ।
त्रीण्यारम्भणीयस्याह्नोऽतियन्ति ।
अथ यत्र ह क्व चाभिप्लवस्सप्त तेऽग्निष्टोमाः ।
षट्कृत्वः पृष्ठ्यमुपयन्ति ।
द्वयोष्षडतियन्ति द्वयोष्षट् ।
सोऽग्निष्टोमः ।
द्वयोष्षट् ।
तदमूनि षडुपदधाति ।
सोऽग्निष्टोमः ।
अग्निष्टोमोऽभिजित् ।
नव स्वरसाम्नामतियन्ति ।
तदमूनि त्रीण्युपदधाति ।
सोऽग्निष्टोमः ।
अग्निष्टोमो विषुवान् ।
प्रतीचां स्वरसाम्नां नवातियन्ति ।
पञ्चकृत्वः पृष्ठ्यमुपयन्ति ।
द्वयोष्षडतियन्ति द्वयोष्षट् ।
सोऽग्निष्टोमः ।
एकस्य त्रीणि ।
तान्येषु नवसूपदधाति ।
सोऽग्निष्टोमः ।
अग्निष्टोमो विश्वजित् ।
गोआयुषोष्षडतियन्ति ।
द्वादशाग्निष्टोमा दशरात्रः ।
अग्निष्टोमो महाव्रतीयमहः ।

षडतिरात्रस्यातियन्ति ।
तदमूनि षडुपदधाति ।
सोऽग्निष्टोमः ।
द्वादशकृत्वष्षोडशिनमुपयन्ति ।
सोऽग्निष्टोमः ।
यद्यु वा अतिरात्रे षोडशिनमुपयन्ति मोहयन्त्यमूं विराजस्संपदम् ।
ईमामग्निष्टोमसंपदं रिच्यते ।
स ह सोऽनिधानो वज्रो हिनस्ति ।
अथ वा अनिधानो वज्रः ।
स एष समानप्रायणस्समानसंबन्धनस्संवत्सरः ।
तस्य मन एव प्रायणं वाक्संबन्धनम् ।
स एष संवत्सरोऽग्निष्टोमानेवाभिसंपद्यते ।
संपदा हाग्निष्टोमायनं भवति ।
उपाप्तान्यु तान्यहानि भवन्ति यानि संवत्सरे चित्रियाणि ।
तेन हैतेनायनेनोभौ कामावुपाप्नोति यश्चाग्निष्टोमायने यश्च मासि पृष्ठे ५०

महाव्रतत्रयं समाप्तम्

द्वया ह वै पूर्व ऋतव आसुः प्राणर्तवो देवर्तवः ।
अथेम एतर्ह्यृतव एव ।
प्राण एव वसन्त आस ।
वाग्ग्रीष्मः ।
चक्षुर्वर्षाः ।
आर्द्रमिव वै चक्षुरार्द्रा इव वर्षाः ।
श्रोत्रं शरत् ।
मनो हेमन्तः ।
या इमाः पुरुष आपस्स शिशिरः ।
अथ देवर्तवः ।
वायुरेव वसन्त आस ।
अग्निर्ग्रीष्मः ।

पर्जन्यो वर्षाः ।
आदित्यश्शरत् ।
चन्द्रमा हेमन्तः ।
या अमूर्दिव्या आपस्स शिशिरः ।
स यस्स प्राणो वसन्त आस यो वायुर्वसन्तस्सोऽयमेतर्हि वसन्तः ।
अथ या वाग्ग्रीष्म आस योऽग्निर्ग्रीष्मस्सोऽयमेतर्हि ग्रीष्मः ।
अथ यश्चक्षुर्वर्षा आसुर्याः पर्जन्यो वर्षास्ता इमा एतर्हि वर्षाः ।
अथ यच्छ्रोत्रं शरदास य आदित्यश्शरत्सेयमेतर्हि शरत् ।
अथ यन्मनो हेमन्त आस यश्चन्द्रमा हेमन्तस्सोऽयमेतर्हि हेमन्तः ।
अथ या इमाः पुरुष आपश्शिशिर आसुर्या अमूर्दिव्या आपस्स
शिशिरस्सोऽयमेतर्हि शिशिरः ५१

त एते षडृतवष्षड्दिशः ।
त एत ऋतवो दिग्भिर्मिथुना वसन्तेनेयं प्राची दिङ्मिथुना ग्रीष्मेणेयं
वर्षाभिरियं शरदेयं हेमन्तेनासौ शिशिरेणेयम् ।
तद्यथा पतिं जाया अनिमेषमीक्षेरन्नेवमेवैना एवंविदं दीक्षमाणमीक्षन्ते ।
तद्यद्दिग्भिरीक्षितस्तस्माद्दीक्षितः ।
स दीक्षिष्यमाण आदित्यमुपतिष्ठेत त्वं देवता दीक्षितासि ।
सा दीक्षमाणस्य तेज इन्द्रियं वीर्यं यश आदत्से ।
मा मे तेज इन्द्रियं वीर्यं यश आदिथाः ।
तव दीक्षामनु दीक्ष इति ।
अथर्तूनन्वारोहति ।
य ऋतव ऋतुभ्योऽध्यासन्
पुरा सूर्याच्चन्द्रमसश्च पूर्वे
येभिः प्रजानन्प्रदिशो दिशश्च
तानन्वारोहामि तपसा ब्रह्मणा च
इति प्राणर्तूनन्वारोहति ।
य ऋतवश्चन्द्रमसोऽधि पूर्व
ऋचं वाचं ब्रह्माणमाबभूवुः
इत्येवंविदं ह्याभवन् ।

येभिः प्रजानन्प्रदिशो दिशश्च
तानन्वारोहामि तपसा ब्रह्मणा च
इति देवर्तूनन्वारोहति ।
य एक ऋतुस्त्रय ऋतवश्च
ये षट्चतुर्विंशतिर्ऋतवो ये
द्वादश सप्तदशान्युत विंशतिश्च
तानन्वारोहामि तपसा ब्रह्मणा च
इतीमानृतूनन्वारोहति ।
स एवमेतैस्तैर्ऋतुभिः परिगृहीतः ।
स यथा तैर्ऋतुभिः परिगृहीत एवमेवानार्तस्संवत्सरस्योदृचं गच्छति ।
ऋतुर्ऋतुर्हैवंविदे कल्पते ५२

केशी ह दार्भ्यो दर्भपर्णयोर्दिदीक्षे ।
अथ ह सुत्वा याज्ञसेनो हंसो हिरण्मयो भूत्वा यूप उपविवेश ।
तं ह केशी३निति नाम्नाभ्युवाद ।
स ह चुक्रोध स्थविरोऽस्मि पञ्चालानां राजा ।
स उ वै दीक्षितोऽस्मि ।
को नु मा३ हेयन्नाम्नैवाभिवदितुमर्हतीति ।
स होवाच मा क्रुधः ।
अभिवदिता ते तेनास्मि यदहमेतस्यै विशस्त्वत्पूर्वो राजासम् ।
अभिवदितो वाव ते तेनास्मि यददीक्षितोऽसि ।
इष्टापूर्तस्य त्वमक्षितिं वेत्थ ।
दीक्षामहं वेद ।
संप्रब्रवावहा इति ।
स होवाच अग्निर्दीक्षितः पृथिवी दीक्षा वायुर्दीक्षितोऽन्तरिक्षं दीक्षा
आदित्यो दीक्षितो द्यौर्दीक्षा प्रजापतिर्दीक्षितो मनो दीक्षा ।
स दीक्षेत यया दीक्षयाग्निर्दीक्षितस्तया दीक्षया दीक्षे यया दीक्षया
वायुर्दीक्षितस्तया दीक्षया दीक्षे यया दीक्षयादित्यो दीक्षितस्तया दीक्षया
दीक्षे यया दीक्षया प्रजापतिर्दीक्षितस्तया दीक्षया दीक्ष इति ५३

अथ हेतर उवाच ।
ब्रह्मणे ददद्ब्रूयाद्ब्रह्मन्मनस्ते ददानि तदनेन निष्क्रीणानि ब्रह्मन्निदं ददानीति यद्वास्यन्स्यात् ।
स यन्मनो ददाति चन्द्रमा वै मनश्चन्द्रमसमेवास्मै तद्ददाति ।
तद्यावच्चन्द्रमा न क्षीयते तावदस्य तद्दत्तं न क्षीयते ।
होत्रे ददद्ब्रूयाद्धोतर्वाचं ते ददानि तामनेन निष्क्रीणानि होतरिदं ददानीति यद्वास्यन्स्यात् ।
स यद्वाचं ददात्यग्निर्वै वागग्निमेवास्मै तद्ददाति ।
तद्यावदग्निर्न क्षीयते तावदस्य तद्दत्तं न क्षीयते ।
अध्वर्यवे ददद्ब्रूयादध्वर्यो प्राणं ते ददानि तमनेन निष्क्रीणान्यध्वर्यो इदं ददानीति यद्वास्यन्स्यात् ।
स यत्प्राणं ददाति वायुर्वै प्राणो वायुमेवास्मै तद्ददाति ।
तद्यावद्वायुर्न क्षीयते तावदस्य तद्दत्तं न क्षीयते ।
उद्गात्रे ददद्ब्रूयादुद्गातश्चक्षुस्ते ददानि तदनेन निष्क्रीणान्युद्गातरिदं ददानीति यद्वास्यन्स्यात् ।
स यच्चक्षुर्ददात्यादित्यो वै चक्षुरादित्यमेवास्मै तद्ददाति ।
तद्यावदादित्यो न क्षीयते तावदस्य तद्सत्तं न क्षीयते ।
सदस्याय ददद्ब्रूयात्सस्यात्मानं ते ददानि तमनेन निष्क्रीणानि सदस्येदं ददानीति यद्वास्य स्यात् ।
स यदात्मानं ददात्याकाशो वा आत्माकाशमेवास्मै तद्ददाति ।
तद्यावदाकाशो न क्षीयते तावदस्य तद्दत्तं न क्षीयते ।
होत्रकेभ्यो ददद्ब्रूयाद्धोत्रका श्रोत्रं वो ददानि तदनेन निष्क्रीणानि होत्रका इदं ददानीति यद्वास्यन्स्यात् ।
स यच्छ्रोत्रं ददाति दिशो वै श्रोत्रं दिश एवैभ्यस्तद्ददाति ।
तद्यावद्दिशो न क्षीयन्ते तावदस्य तद्दत्तं न क्षीयते ।
प्रसर्पकेभ्यो ददद्ब्रूयात्प्रसर्पका लोमानि वो ददानि तान्यनेन निष्क्रीणानि प्रसर्पका इदं ददानीति यद्वास्यन्स्यात् ।
स यल्लोमानि ददात्योषधिवनस्पतयो वै लोमान्योषधिवनस्पतीनेवैभ्यस्तद्ददाति ।
तद्यावदोषधिवनस्पतयो न क्षीयन्ते तावदस्य तद्दत्तं न क्षीयते ।

सैषेष्टापूर्तस्याक्षितिः ।
स य एवमेतामिष्टापूर्तस्याक्षितिं वेद न हास्येष्टापूर्तं क्षीयते ।
तदु वा आहुर्वाग्वाव दीक्षितो वाग्दीक्षा वागिदं सर्वं क्षियति ।
वाचि वावेदं सर्वं क्षितमिति वाव तौ तत्संप्रोचाते ।
तदु होवाच शाट्यायनी रथन्तरेण दीक्षे वामदेव्येन दीक्षे बृहता दीक्ष इत्येव दीक्षेत ।
अथ विमुञ्चेत बृहता विमुञ्चे वामदेव्येन विमुञ्चे रथन्तरेण विमुञ्च इति ।
सैषा दीक्षायै युक्तिश्च विमुक्तिश्च ।
स य एवमेतां दीक्षायै युक्तिं च विमुक्तिं च वेद वसीयानेव भवति ५४

हृत्स्वाशया आल्लकेयो दन्तालस्य धौम्यस्यान्तेवास्यास ।
अथ ह दन्तालो धौम्यस्त्रयं वेदमाप्रपदं विदां चकार ।
तस्माद्ध सामवेदमनूच्य व्याजहारसंवत्सराय दीक्षिष्य इति ।
अथ ह स्म ततः पुरो विपृच्छमानाश्चरन्ति संवत्सराय दीक्षिष्यामह इति ।
अथो ह स्म समवसायान्योऽन्यस्य वरणमाक्रोशमाना निभृत्यमनुपृच्छन्त आसते ।
ते ह स्म यावन्तस्संपादयन्ति ते ह स्म दीक्षन्ते ।
शश्वद्धैषा तदाशीरेव ।
तत्सत्त्रं भवति यत्तमेव ब्राह्मणं कृत्वोत्तिष्ठन्ति येनाब्राह्मणोक्तेन सह दीक्षन्ते ।
तस्मादब्राह्मणोक्तेन सह दीक्षेत ।
तस्य ह स्मास्य राजन्यबन्धोश्शार्दूलाजिनं मणिं हिरण्यमुपावहितं भवति ।
तद्ध स्म श्रोत्रियायोपप्रहित्याह संवत्सराय दीक्षिष्येऽनु मा शाधीति ।
तस्मै ह स्म राजन्यबन्धवे वक्तव्यं मन्यन्ते ५५

स ह तथैव पल्ययमानस्सोमशुष्मं सात्ययज्ञिमाजगाम ।
तं होवाच प्राचीनयोग्य संवत्सराय दीक्षिष्ये ।
भगवोऽनु नश्शाधीति ।
तथेति ।
तं ह वदन्नभिराधयां चकार ।

तं होपेयाय ।
तस्मै यदेमां क्ळिप्सं प्रोवाचाभ्यूहमनुजगौ प्रस्तावप्रतिहारान्विदधावथ हैन-
मनुशशास ।
अयं वाव संवत्सर इति होवाच ।
तस्यायमेव देवयानः पन्था इमे वर्तन्याविय़ं गतिरिति ।
स यदेतदेवं वेदानार्त एवं संवत्सरस्योदृचं गच्छति ।
पुरुषो वै प्रजापतिः ।
प्रजापतिस्संवत्सरः ।
स यो ह पुरुषो य एवायमन्तरिक्ष आकाश एष एव स पुरुषः ।
तद्यद्दृश्वदन्तरिक्षे न रमते पूर्णत्वैतन्न रमते ।
अर्थो यदस्मिन्सर्वस्मिनन्तरीक्षते तस्मादन्तरिक्षम् ।
अथो यदिदं सर्वं युते तस्माद्वायुः ।
अथो यदिदं सर्वं वाति तस्माद्वातः ।
तस्यैतस्याकाशस्यात्मा दमुमूढो यदसावादित्यः ।
स एष आदित्ये पुरुषः ।
अथ यत्ततः पर आकाशस्तस्यैष आत्मा समुमूढो यच्चन्द्रमाः ।
स एष चन्द्रमसि पुरुषः ।
स न नाना मन्तव्य इति ह स्माह शाट्यायनिः ।
य एवायं चक्षुषि पुरुष एष एवादित्य एष चन्द्रमसीति ।
तमनयैव पुरुषविधयाप्नोति ५६

प्राण एव प्रायणीयोऽतिरात्रः ।
प्राणो हीदं सर्वं प्राणयत ।
तद्यत्प्राणयत तस्मात्प्राणः ।
वागेवारम्भणीयमहः ।
वाचा हि सर्वस्संवत्सरस्सर्वे यज्ञक्रतव आरब्धाः ।
तस्मादारम्भणीयेऽहन्सर्वाणि रूपाणि क्रियन्ते ।
सर्वाणि ह रूपाणि वाचि ।
अयमेकोऽभिप्लवोऽयमेकोऽयमेकोऽयमेकः ।
तस्यास्याभिप्लवस्येदं प्रथममहः ।

तस्येदमेव प्रातस्सवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनम् ।
इदमेव द्वितीयमहः ।
तस्येदमेव प्रातस्सवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनम् ।
इदमेव वैरूपं तृतीयमहः ।
तस्येदमेव प्रातस्सवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनम् ।
इदमेव शाक्वरं पञ्चममहः ।
तस्मादनेनोपसंगृह्य शक्नोति ।
तस्येदमेव प्रातस्सवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनम् ।
इदमेव रैवतं षष्ठमहः ।
तस्मादनया प्राश्नाति ।
तस्येदमेव प्रातस्सवनमिदं माध्यन्दिनं सवनमिदं तृतीयसवनम् ।
एवमस्याभिप्लवस्यैवमस्यैवमस्य ।
अयमेवात्मा पृष्ठ्यः ।
इम एव नव प्राणाः ।
त्रिवृत्प्रायणीयमहर्यत्प्राण इदं सर्वं प्राणयत ।
तद्यत्प्राणयत तस्मादप्येतत्प्रायणीयमहः ।
इमा एव ग्रीवाः पञ्चदशमहः ।
ओजो वै वीर्यम् ।
ग्रीवा ओजः ।
वीर्यं पञ्चदशः ।
तस्मात्पशवो ग्रीवाभिर्भारं वहन्ति ।
अष्टाविमे जत्रवोऽष्टाविम ऊर्ध्वो जत्रुस्सप्तदशः ।
तदेव सप्तदशमहः ।
इदमेवोदरमेकविंशमहः ।
सर्वे वै स्तोमा एकविंशमभिसंपन्नाः ।
सर्वमन्नाद्यमुदरे प्रतिष्ठितम् ५७

त्रयोदशेमाः परिशवस्त्रयोदशेमा अराडपरिशुस्सप्तविंशती ।
तदेव त्रिणवमहः ।
त्रयस्त्रिंशदिमानि पृष्टिकाराडानि सह किंकालुकाभिः ।

तदेव त्रयस्त्रिंशमहः ।
अयमभिजिदयं विश्वजिच्छुक्लं कृष्णं कनीनिका ।
त इमे त्रय स्वरसामान इमे त्रयोऽयं विषुवान् ।
प्राणापानावेव गोआयुषी ।
इम एव दश प्राणा दशरात्रः ।
मन एव महाव्रतीयमहः ।
उदान एवोदयनीयोऽतिरात्रः ।
त एते दश प्राणा दश स्तोमा दश छन्दांसि ।
इमे ह सप्त मुख्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः ।
इमे ह पृष्ठ्यस्य षडहस्य स्तोमाः ।
छन्दोमाः पञ्चविंशः ।
चतुर्धा इमान्यु ह सप्त चतुरुत्तराणि छन्दांसि सद्विपदाविराडतिच्छन्दाः ।
प्राण एव गायत्री चक्षुषी उष्णिक्ककुभौ श्रोत्रं जगती वागनुष्टुब्मनो
बृहत्यात्मा पङ्क्तिर्बलं त्रिष्टुप् ।
प्रतिष्ठा द्विपदा मांसानि विराट्शरीराण्यतिच्छन्दाः ।
तेषामेषां सप्तानां चतुरुत्तराणां छन्दसां द्वादशैकविंशास्संपद्यन्ते ५८

गायत्र्या उष्णिहोऽनुष्टुभश्चतुरशीतिरक्षराणि ।
ते चत्वार एकविंशाः ।
पङ्क्तेश्च त्रिष्टुभश्च चतुरशीतिरक्षरानि ।
ते चत्वार एकविंशाः ।
बृहत्यै च जगत्यै च चतुरशीतिरक्षराणि ।
ते चत्वार एकविंशाः ।
अथ त्रयाणां छन्दसां दशशतमक्षराणि ।
विंशत्यक्षरा द्विपदा ।
त्रिंशदक्षरा विराट् ।
षष्ट्यक्षरातिच्छन्दाः ।
तानि दशशतमक्षराणि संपद्यन्ते ।
ततो द्वे आदत्ते ।
अथ द्वादश त्रिवृतस्संपद्यन्ते ।

तानिमान्द्वादश त्रिवृतो द्वादशस्यैकविंशेषूपदधाति ।
ते द्वादश सत्रिंशिनो मासास्संपद्यन्ते तदेतच्छन्दांसि त्रिवृतं चैव स्तोममभिसंपद्यन्ते - ५९

- एकविंशं च वा पञ्च प्राणं चाग्नीञ्चादित्यं च ।
अथ ये द्वे अक्षरे ते बृहद्रथन्तरे ते अहोरात्रे ।
सोऽर्धमासस्स मासस्स ऋतुस्स संवत्सरः ।
तदाहुर्यत्प्राणाश्छन्दांसि छन्दांसि स्तोमा इत्याहुः कथं यजमानः प्राणैश्छन्दांस्यप्येति ।
छन्दोभि स्तोमाण्स्तोमैर्बृहद्रथन्तरे बृहद्रथन्तराभ्यामहोरात्रे अहोरात्राभ्यामर्धमासमर्धमासेन मासं मासेनर्तुमृतुना संवत्सरम् ।
कुतस्संवत्सरो जायते क्व प्रतिष्ठित इति ।
स विद्यादहमेव संवत्सरोऽस्मि मयि प्रतिष्ठित इति ।
एवंविदो ह वाव संवत्सरो जायत एवंविदि प्रतिष्ठितः ।
अथो आहुरादित्य एव संवत्सरः ।
एतं हि सर्वा श्रीस्सर्वं यशस्सर्वे देवास्समेतास्तस्मादादित्य एव संवत्सर इति ।
तस्य यद्भाति तत्संवद्यन्मध्ये कृष्णं मण्डलं तत्सर इत्यधिदेवतम् ।
अथाध्यात्मम् ।
अयमेव संवत्सरो योऽयं चक्षुषि पुरुषः ।
तस्य यच्छुक्लं तत्संवद्यन्मध्ये कृष्णं मण्डलं तत्सरः ।
अथो आहुरादित्य एव संवच्चन्द्रमास्सरः ।
तमेष सरति ।
तं पौर्णमास्यामाप्नोतीति ।
तदु वा आहुः प्राण एव संवद्वाक्सरः ।
एताभ्यां हि समश्नुत इति तस्य वा एतस्य संवत्सरस्याग्निष्टोमसामान्येव देवयानः पन्थाः - ६०

- तानि वा एतानि रौहिणकानि नाम ।
एतैर्वै देवा स्वर्गं लोकमारोहन् ।

यदरोहंस्तस्माद्रोहिणकानि ।
तस्माद्वयमन्वहमेवाग्निष्टोमसामानि कुर्मः ।

अथ वर्तन्यौ बृहद्रथन्तरे ।
एताभ्यां ह वा एष एतद्वर्तते ।
तस्माद्वयमतिरात्र उभे बृहद्रथन्तरे कुर्मः कृत्स्नं नस्साम युक्तं यज्ञं
वहत्कृत्स्नेन साम्नोदृचमश्नवामहा इति ।
अथ गतिः ।
यश्चैवासावादित्ये पुरुषो
यश्चायमध्यात्मंस्तदेतत्प्रजापत्ययनमित्येवोपासितव्यम् ।
एतेन वा अयनेन प्रजापतिरिमामृद्धिमार्ध्नोदिमां व्यष्टिं व्याश्नुत ।
तद्यामेव प्रजापतिर्ऋद्धिमार्ध्नोद्यां व्यष्टिं व्याश्नुत तामेवर्द्धिमृध्नोति तां व्यष्टिं
व्यश्नुते य एवं वेद ६१

एष वाव दीक्षितो य एष तपति ।
स एष इन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यमभि दीक्षितः ।
तस्य येऽर्वाञ्चो रश्मयस्तानि श्मश्रूणि य ऊर्ध्वास्ते केशाः ।
अहोरात्रे एव कृष्णाजिनस्य रूपम् ।
अहरेव शुक्लस्य रूपं रात्रिः कृष्णस्य ।
अथ यदेतन्मण्डलं ता आपस्तदन्नं तदमृतम् ।
तस्मिन्नेतस्मिन्मण्डले तेजोमयश्छन्दोमयपुरुषः ।
स प्राणस्स इन्द्रस्स प्रजापतिस्स दीक्षितः ।
तदेतद्दीक्षयैव संगृहीतम् ।
तत आभ्यः प्रजाभ्योऽन्नाद्यं विसृजते ।
तस्येमा एव दिशः पत्नय आसन् ।
तं हेमास्तिस्रो दिशोऽतिचेरुः ।
इयं हैवास्यानुव्रततमास येयं दक्षिणा दिक् ।
तस्मादेष एतामेवाभ्युपावर्तते ।
यद्यप्युत्तरत उदेत्यथैतामेवाभ्युपावर्तते ।
तस्माद्यास्य प्रिया जाया स्यात्तां दक्षिणार्ध्यां कुर्यात् ६२

प्रथमां संनह्यति प्रथमां वाचयति प्रथमां पूर्णपात्र आगच्छत्यनन्तरिताः पक्षय स्थ ।
उदगु यज्ञीयं कर्म संतिष्ठते ।
इति न्वधिदेवतम् ।
अथाध्यात्मम् ।
अयमेव दीक्षितो योऽयं चक्षुषि पुरुषः ।
तस्य यान्यर्वाञ्चि पक्ष्माणितानि श्मश्रूणि यान्यूर्ध्वानि ते केशाः ।
यदेव शुक्लं च कृष्णं च तत्कृष्णाजिनस्य रूपम् ।
शुक्लमेव शुक्लस्य रूपं कृष्णं कृष्णस्य ।
अथ यदेतन्मण्डलं ता आपस्तदन्नं तदमृतम् ।
तस्मिन्नेतस्मिन्मण्डले तेजोमयश्छन्दोमयः पुरुषः ।
स प्राणस्स इन्द्रस्स प्रजापतिस्स दीक्षितः ।
स हैवंविद्दीक्षमाणो यथैवैष एतदिन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यमभि दीक्षित एवमेवेन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यमभि दीक्षितो भवति ।
तस्मादु हैवंविदि दीक्षित ईश्वरो राष्ट्राणि समुत्कम्पितोः क्षामरन्ध्र इव हि समाभवति ।
एवं ह्येतदिन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यमभि दीक्षितो भवति ।
तस्मादु सर्वमेवाभिवदत्याचार्यं पितरं क्षत्रियम् ।
एवं ह्येतदिन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यमभि दीक्षितो भवति ६३

विचक्षणवतीं वाचं वदति ।
अन्नं वै विचक्षणम् ।
अन्नवतीमेव तद्वाचं वदति ।
विचक्षणवतीं वाचं वदति ।
सोमो वै विचक्षणः ।
अन्नमु सोमः ।
अन्नवतीमेव तद्वाचं वदति ।
विचक्षणवतीं वाचं वदति ।
प्राणो वै विचक्षणः ।

तस्य वागेव मिथुनम् ।
मिथुनवतीमेव तद्वाचं वदति ।
विचक्षणवतीं वाचं वदति ।
अन्नं वै विचक्षणम् ।
अन्नेन हीमाः प्रजा विपश्यन्ति ।
तत आभ्यः प्रजाभ्योऽन्नाद्यं प्रयच्छति ।
स यदास्मै व्रतं प्रयच्छेत्सर्वमेव व्रतयेत्सर्वस्यान्नाद्यस्यावरुद्ध्यै ।
यद्यु परिशिंष्याद्व्रतप्रदं ब्रूयादशान वा पिब वेति ।
यद्य उ व्रतप्रदोऽनुच्छिष्टाशी वा स्यात्परि वा शिंष्यात्तदद्भिरभ्युक्ष्य छायायां निषेक्तवै ब्रूयात् ।
तदोषधीभिरभिसंछादयितवै ब्रूयात् ।
तदोषधीनां मूलान्युपसिञ्चति ।
वर्षुकः पर्जन्यो भवति यत्रैवंविद्वान्दीक्षिते ।
दीक्षिता ऊदशूशुषन्नितीहाहुः ।
स यदा दीक्षणीयेष्टिस्संतिष्ठेत यदैनमध्वर्युरभ्यञ्जयेद्यदा संपवयेदथैतमादित्यमुपतिष्ठेत त्वं देवता दीक्षितासि ।
सा दीक्षमाणस्येन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यं यश आदत्से ।
मा म इन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यं यश आदिथाः ।
तव दीक्षामनु दीक्ष इति ।
तस्यैषा देवता दीक्षमानस्येन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यं यशो नादत्ते ६४

तमध्वर्युरभ्यज्य प्रपाद्यौद्ग्रहणानि जुहोति ।
यदौद्ग्रहणानि जुहोति यदस्मा औदुम्बरदण्डं प्रयच्छत्यथैतमाहवनीयमुपतिष्ठेत वाचा मे वाग्दीक्षितामग्नये समष्टवा उ प्राणेन मे प्राणो दीक्षितां वायवे समष्टवा उ चक्षुषा मे चक्षुर्दीक्षितां सूर्याय समष्टवा उ मनसा मे मनो दीक्षितां प्रजापतये समष्टवा विति ।
तदेताभिरनार्ताभिर्देवताभिरिमा स्वा देवता दीक्षयति ।
अथाह अग्निर्दीक्षितः पृथिवी दीक्षा सा मा दीक्षा दीक्षेत तया दीक्षया दीक्षे ।
वायुर्दीक्षितोऽन्तरिक्षं दीक्षा सा मा दीक्षा दीक्षेत तया दीक्षया दीक्षे ।

आदित्यो दीक्षितो द्यौर्दीक्षा सा मा दीक्षा दीक्षेत तया दीक्षया दीक्षे ।
प्रजापतिर्दीक्षितो मनो दीक्षा सा मा दीक्षा दीक्षेत तया दीक्षया दीक्षे ।
वाचं म ऋचोऽनु दीक्षन्तां मनो यजूंषि प्राणं सामानि ।
श्रद्धां मे सोमो राजानु दीक्षताम् ।
ऋचा दीक्षे यजुषा दीक्षे साम्ना दीक्षे पृथिव्या दीक्षेऽन्तरिक्षेण दीक्षे दिवा दीक्ष इत्यत्र कृत्स्नो दीक्षितः अथ यस्यादीक्षिता इमे लोका अदीक्षितानि छन्दांस्यदीक्षितस्सोमो राजा - ६५

- तं सकाममभ्यश्नुवीत ।
अथ हैवंविद्दीक्षमान एव सर्वान्कामानुपाप्नोति ।
तस्माद्दीक्षासु न राजानं परिवेविष्यात् ।
यद्व्रतो ह्येवैष भवति तद्व्रता इमे लोकास्तद्व्रतानि छन्दांसि तद्व्रतस्सोमो राजा ।
अथाह भूर्भुव स्वस्सुपोषः पोषैस्सुवीरो वीरैस्सुप्रजः प्रजयासमिति ।
तदेतामपरिमितामाशिषमन्त आशास्ते तपो मे प्रतिष्ठेति ।
तत्तपः प्रतिष्ठां कुरुते ।
श्रद्धा मेऽक्षितिरिति तच्छ्रद्धामक्षितिं कुरुते ।
सत्यं मे गृहपतिरित्येष वै सत्यम् ।
सत्यं य एष तपति ।
सैषानार्ता देवता ।
तदेतामनार्तां देवतां गृहपतिं कुरुते ।
स वा एष सुव्रतः ।
यद्धयेषा खला स्यात्सर्वमिदं प्रदहेत् ।
तस्माद्गृहपतिस्सुव्रत स्यात् ।
स यद्वदीक्षितव्रतं चरेदपापवद्यं वा पापं वदेन्मिथुनं वा चरेदन्यद्वा मिथ्याकुर्यादेतमेवादित्यमेतैस्सर्वैर्जपैरुपतिष्ठेत ।
ततो हैव दीक्षितः ।
स वा एष एतर्ह्यदीक्षितः ।
यद्वेवास्मिन्दीक्षिते यश आसीत्तद्वेवास्मिन्नप्येतर्हि यशः ।
तदाहुस्स वाद्य दीक्षेत स वान्यं दीक्षयेद्य एतस्य दीक्षितयशसस्य

व्यवच्छित्तिं विद्यादिति ।
कृष्णाजिनं वाव दीक्षितयशसम् ।
एतद्धि सर्वेषां वेदानां रूपम् ।
यानि शुक्लानि तानि साम्नां रूपं यानि कृष्णानि तान्यृचाम् ।
यदि वेतरथा ।
यान्येव बभ्रूणीव हरीणि तानि यजुषाम् ।
तस्माद्यद्यप्येनददृष्टो वस्ते दिदृक्षन्त एवैनम् ।
एतद्धयस्मिन्दीक्षितयशसं भवति ६६

ते ये सकृष्णाजिना अपोऽभ्यवयन्ति य एतस्माद्दीक्षितयशसादवच्छिद्यन्ते ते सर्वमात्मानं प्रप्लाव्य पाप्मना सहोदायन्ति ।
स यदावभृथेष्टिस्संतिष्ठेताथोन्मुच्य
कृष्णाजिनमद्भिरभ्युक्षेदिन्द्रियाज्ञैष्ठ्याच्छ्रैष्ठ्यान्मा योषमिति अथ यं रातिं मन्यते तस्मै प्रयच्छति ।
अथाप आचामति भक्षस्यावभृथोऽसि भक्षणस्यावभृथोऽसि भक्षितस्यावभृथोऽसीति ।
स यदेवात्रर्जीषि किं चित्सक्तं भवति तस्यैष भक्षः ।
अथापः प्रविशति ।
न्यञ्चनं वा एतत्प्रपदनं यदापः ।
न्यञ्चनमेवैतत्प्रपदनं प्रपद्यते पाप्मनोऽनन्ववायाय ।
यद्याप स्यन्देरन्प्रतिस्रोतं गाहेत पाप्मानं मे निर्वहानिति ।
सर्वा उ ह त्वा आप स्यन्दन्ते ।
या उ ह स्थावरा अवाचीस्ता स्यन्दन्तेऽवाञ्चमेवास्य ताः पाप्मानं निर्वहन्ति ।
अन्योऽन्यस्य जायापती पृष्ठं प्रधावतः ।
वज्रो वा आपः ।
वज्रेणैव तत्सर्वं पाप्मानमपहनाते ।
अथो द्वन्द्वमेव तन्मिथुनं प्रजननं कुर्वाते प्रजात्यै ।
स्नात्वा क्षिप्र उदेयात्क्षिप्रे पाप्मनो व्यावृत्त्या इति ६७

उन्नेतरुन्मा नयेत्याह ।
विष्णुर्वा उन्नेता यज्ञो वै विष्णुः ।
यज्ञ एवैनं तत्सर्वस्मात्पाप्मनो विमुच्योन्नयति ।
उद्वयं तमसस्परि सुवः पश्यन्तो ज्योतिरुत्तरम्
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्
इत्येतां जपन्नुदैति ।
एतद्वै ज्योतिरुत्तमं य एष तपति ।
सैषानार्ता देवता ।
तदेतामनार्तां देवतामारभ्योदैति ।
औदुम्बरीरार्द्रास्सपलाशास्समिधः कुर्वत एधोऽस्येधिषीमहीति गत्वाहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहि स्वाहेति ।
अभ्याधायोपतिष्ठते
अपोऽन्वचार्षं रसेन समसृक्ष्महि
पयस्वं अग्न आगमं तं मा संसृज वर्चसा
इति ।
एवमेव पत्नी गार्हपत्येऽभ्याधायोपतिष्ठते ।
आज्यस्थालीं सस्रुवामादायोत्तरेणाग्नीध्रं च सदश्च परीत्यापरेण गार्हपत्यमुपविश्योपस्थे कृष्णाजिनमाधाय चतुर्गृहीतमाज्यं गृहीत्वा जुहोति मयीन्द्रियं ज्यैष्ठ्यं श्रैष्ठ्यमग्निर्दधातु स्वाहेति ।
स यदेवास्मिन्दीक्षिते यशो भवति तदस्मिन्नुत्थिते यशो भवति ।
तत्कृष्णाजिनं नातिपादयेत्स्रुगवधानं वैनत्कुर्वीत हविषो वाधिपेषणं पुनर्दीक्षितायै वैनन्निदधीत ।
एषा वै कैशिनी दीक्षा ।
एतां ह केशी दार्भ्यो दीक्षामुपनिषसाद ६८

मृत्युप्रजापती यदयजेतां तौ यज्ञाभ्यामेवास्पर्धेताम् ।
अथ ह तर्हि यज्ञायुधान्यासुर्यथेमान्येतर्हीष्टीष्वायुधानि ।
तद्यद्यज्ञे स्तूयते यच्छस्यते यत्प्रचर्यते सा प्रजापतेस्सेनास ।
अथ यद्वीणायां गीयते यन्नृत्यते यद्वृथाचर्यते सा मृत्योस्सेनास ।
तयोर्ह समावत्यावेव सेने आसतुर्यावत्येवेतरस्य तावतीतरस्य ।

तौ ह ज्योगेवाविजयमानौ चेरतुर्बहून्येव वर्षाणि ।
स प्रजापतिरकामयत जयेयं मृत्युमिति ।
स एतां यज्ञे संपदमपश्यदेतत्संख्यानम् ।
तेन मृत्युमजयत् ।
तस्य पराजितस्य राजाशुच्यत् ।
स प्रत्यङ्पतित्वा पत्नीशालां प्रापद्यत ।
तस्मात्पत्नीभ्य हय च यस्संपदासुत इत्यसुत इति हैतन्न हि सोऽसूयत तस्य यानि स्तुतशस्त्राण्यासन्यदेवैतद्वीणायां गीयते यन्नृत्यते यद्वृथाचर्यते तान्येव तानि - ६९

- अथ यो यूप आसीद्य एवैष वीणायै दण्डस्स एव सः ।
अथ या रशना आसन्यान्येवैतानि वीणाया उपवाणानि ता एव ताः ।
अथ यो द्रोणकलश आसीद्यैवैषा वीणायै सूना स एव सः ।
अथ यदधिषवणं चर्मासीद्यदेवैतद्वीणायै चर्म तदेव तत् ।
अथ य उपरवा आसन्य एवैते वीणाया आकाशास्त एव ते ।
अथ ये ग्रावाण आसन्यान्येवैतानि वीणायै वादनानि त एव ते ।
अथ यानि सप्त चतुरुत्तराणि छन्दांस्यासन्या एवैतास्सप्त वीणायै तन्त्रयस्तान्येव तानि ।
अथ ये दशरात्रे स्तोमा आसन्या एवैता दशाङ्गुलयस्त एव ते ।
तदाहुर्नैतर्हि संसवोऽस्ति ।
यो हि द्वितीयो यज्ञ आसीदशुच्यत्सः ।
एक एव यज्ञः ।
प्रजापतिर्यज्ञ एवेति ७०

अथ वा अतस्संख्यानस्यैव ।
तस्य वा एतस्य संवत्सरस्य सप्त विंशतिशतान्यहोरात्राणां भवन्ति ।
ता नवाशीतयः ।
अथास्य सवनानामशीतिश्च सहस्त्रं च त्रीणि च ।
तावन्तः पवमानाः ।
तदेतच्छ्लोकेनाभिगीतम्

अष्टावेता नवतयो भवन्त्यहोरात्राणां परिवत्सरस्य
अशीतिरस्मिन्सवनानि त्रीणि च सहस्त्रं च पवमानाश्च सर्वे
इति ।
अथास्य स्तुतशस्त्राणां षष्टिशते च द्वे दश च सहस्त्राणि ।
अथास्मिन्धिष्णिया य अग्नयो विह्रियन्ते दश चैव सहस्त्राण्यष्टौ च शतानि त्रिंशतं च ।
तदेतच्छ्लोकेनाभिगीतम्
षष्टिशते द्वे मासि षट्च स्तुतशस्त्राणामा शतं चा शतानि
दश सहस्त्राणि शतान्यष्टौ संवत्सरे धिष्णियास्त्रिंशतं च
इति ७१

तावन्ति तारकनक्षत्रानि तावन्ति ज्योतींषि तावन्तोऽर्काः ।
आप्नोति ह वा एतानि तारकनक्षत्राण्याप्नोति ज्योतींष्याप्नोत्यर्कान्य एवं वेद ।
अथास्य स्तोत्र्याणां नवतिश्च सहस्त्राणि त्रीणि च शतानि षण्णवतिश्च ।
तदेतच्छ्लोकेनाभिगीतम्
स्तोत्र्या अस्य नवतिस्सहस्त्रा त्री च शता नवतिश्चोप षट्च
ताभिस्संस्तुतो विवसान एति भूतं भविष्यद्भुवनं प्रजापतिः
इति ।
अथास्य पदानां चत्वारि च सहस्त्रा त्रिंशं चायुतानि सप्त शतानि पञ्चाशतं पदानि ।
तदेतच्छ्लोकेनाभिगीतम्
चत्वारि सहस्त्रा त्रिंशं चायुतानि सप्त शतानि पञ्चाशतं पदानि
संवत्सरस्य कविभि स्तुतस्यैतावती मध्यमा देवमात्रा
इति ७२

अथास्याक्षराणामयुतमेकं प्रयुतानि षष्टिर्नियुते द्वे नव चाक्षराणि सप्त सहस्त्राणि दशतो दश ।
तदेतच्छ्लोकेनाभिगीतम्
अयुतमेकं प्रयुतानि षष्टिर्नियुते द्वे नव चाक्षराणि

सप्त सहस्राणि दशतो दशैतावानात्मा परमः प्रजापतेः
इति ।
तदेतदनन्तं यत्संख्यानम् ।
तदेतदमृतं यत्संख्यानम् ।
स एष सुकृतस्सो यत्संख्यानम् ।
अथ यदसंख्यानं मर्त्यं तत् ।
तस्मादु समेव चक्षीत ।
सा हैषा देवानां सेना यत्संख्यानम् ।
मनुष्यसेनया वाव नु तं स्तृणुते यं तिस्तीर्षते ।
तादृगिह तं स्तृणवातै यं देवसेनया तिस्तीर्षाता इति ।
अथैते त्रयः पन्थानस्सुकृता देवयाना अक्षर्यः पद्य ऋक्म्यश्च ।
ते विद्वांसोऽभिवहन्ति ब्राह्मणं यत्र मृत्युर्भवत्यन्नमस्य ।
तदेतच्छ्लोकेनाभिगीतम्
त्रयः पन्थानस्सुकृता देवयाना अक्षर्यः पद्य ऋक्म्यश्च
ते विद्वांसोऽभिवहन्ति ब्राह्मणं यत्र मृत्युर्भवत्यन्नमस्य

अक्षरशः पच्छोऽमृतं लिहानाः - ७सुवरायन्देवता देवसत्रात्
तपसा कर्म कवयोऽनुगत्य
आह्नाय मृत्युमति मेधयायन्

विजानन्तो दहन्तो यन्ति शोकम्
मनीषिणो यदपक्षाः पतन्ति
यत्रामृतं विद्यते नोत मृत्युस्
तत्र विद्वांसः कवयः क्षियन्ति
इति ।
एवंविद्वांसो यजमानमृत्विजो लोकान्पशूनभि कामान्वहन्ति ।
स यज्ञेषु स्तुतशस्त्रमश्नुतेऽक्षय्या यस्य भवन्त्यृत्विजोऽध्वर्युर्होतोत सामगः
।
तस्मै छन्दांसि मधुधाराः क्षरन्ति ।
स यज्ञेषु स्तुतशस्त्रमश्नुतेऽक्षय्या यस्य भवन्त्यृत्विजोऽध्वर्युर्होतोत सामगः

।
तस्मै छन्दांस्यमृतकुल्या अभिवहन्ति ऊर्मिणी स्तोत्रशस्त्रैरिति ७४

एकैकमु ह वा एतेषामक्षराणां यावतीयं पृथिवी तावत् ।
ऊर्जोऽन्नाद्यस्य मधुनोऽमृतस्य कामस्य-कामस्य पिब्दमानं तिष्ठति ।
तद्धैवंविद्वान्ब्राह्मणस्सहस्रं-सहस्रं देवयुगान्युपजीवति ।
तद्यदाप्यतेऽथेतरदुपसंक्रामत्यथेतरत्पुनराख्यायते ।
तस्मादु हैवंविदे ब्राह्मणाय दित्सन्त्यस्योर्जोऽन्नाद्यस्य मधुनोऽमृतस्य
कामस्य-कामस्य लिप्सामहा इति ।
यथा ह वा इदं क्षेत्रपादं वा क्षेत्ररज्जुं वावक्रीयासत एवमेवैवंविदो
ब्राह्मणाल्लोकमवक्रीणते ।
स यथा क्रये पर्यवेते क्षेत्रिणमेव क्षेत्राण्यपियन्त्येवं लोकिनमेव लोका
अपियन्ति ।
स यद्ध वा अप्येवंविद्वान्ब्राह्मणः पूर्णां पृथिवीं प्रतिगृह्णीयादेकमेव तस्याक्षरं
ज्यायः ।
तस्मादु हैवंविद्वान्ब्राह्मणो दद्याच्चैव प्रतिगृह्णीयात् ७५

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे ।
ते तदु ह कुरुपञ्चालानां ब्राह्मणा अभिसमाजग्मुः ।
स ह सहस्रं गवामवरुन्धान उवाच ब्राह्मणा एता वो यो ब्रह्मिष्ठस्स
उदजतामिति ।
स होवाच वाजसनेयोऽर्वाचीरेतास्सोम्येति ।
तं होचुस्त्वं नु नो ब्रह्मिष्ठोऽसी३ इति ।
स होवाच नमो वो ब्रह्मिष्ठायास्तु ।
गोकामा एव वयं स्म इति ।
ते होचुः को न इमं प्रक्ष्यतीति ।
स होवाच विदग्धश्शाकल्योऽहमिति ।
तं ह पुरस्कृत्येयुः ।
तं ह प्रतिख्यायायन्तमुवाच त्वां स्विच्छाकल्य ब्राह्मणा
उल्मुकावक्षयणमक्रता३ इति ।

स होवाच यदि तेनोल्मुकावक्षयणं स्मः प्रक्ष्यामो न्वै त्वामिति ।
तं ह पप्रच्छ कति देवा याज्ञवल्क्येति ।
स होवाच त्रयश्च त्रिंशच्च त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा यावन्तो निविदाभ्याहूता इति ।
ओमिति होवाच ७६

कत्येव देवा इति ।
त्रय इति ।
ओमिति होवाच ।
कत्येव देवा इति ।
द्वाविति ।
ओमिति होवाच ।
कत्येव देवा इति ।
एक इति ।
ओमिति होवाच ।

कतमे त्रयश्च त्रिंशच्च त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ।
महिमान एवैषां त इति होवाच ।
त्रयस्त्रिंशद्वावेति ।
कतमे त्रयस्त्रिंशदिति ।
अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति ।
कतमे वसव इति ।
अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः ।
एतेषु हीदं सर्वं वसु हितमिति ।
तस्माद्वसव इति ।
कतमे रुद्रा इति ।
दश पुरुषे प्राणा इति होवाच ।
आत्मैकादशः ।

ते यदोत्क्रामन्तो यन्त्यथ रोदयन्ति ।
तस्माद्रुद्रा इति ।
कतम आदित्या इति ।
द्वादश मासास्संवत्सर इति होवाच ।
एत आदित्याः ।
एते हीदं सर्वमाददाना यन्ति ।
तस्मादादित्या इति ।
कतमे त्रय इति ।
इम एव लोका इति ।
कतमौ द्वाविति ।
अहोरात्राविति ।
कतम इन्द्रः कतमः प्रजापतिरिति ।
वागेवेन्द्रो मनः प्रजापतिरिति ।
कतमैका देवतेति ।
प्राण इति ।
स होवाचानतिप्रश्न्यां वै मा देवतामत्यप्राक्षीः पुरैतावतिथ्या मर्तासि ।
न ते शरीराणि चन गृहान्प्राप्स्यन्तीति ।
तद्ध तथैवास ।
स ह तथैव ममार ।
तस्य हापहारिणोऽनन्तरेण शरीराण्यपजह्रुरन्यन्मन्यमानाः ।
तस्मादु ह नोपवदेत् ।
अपि ह्येवंवित्परो भवतीति ७७

ब्रह्म च ह वै सुब्रह्म चैषु लोकेष्वासतुरस्मिन्भुवने ।
ततस्सुब्रह्मोच्चक्राम ।
असौ वा आदित्यो ब्राह्माथो वागेव सुब्रह्म ।
ते देवा इहैव वेद्या अन्तर्वेदि यज्ञेन ब्रह्म पर्यगृह्णन् ।
तदिदमप्येतर्हि वेद्या अन्तर्वेदि यज्ञेन ब्रह्म परिगृहीतम् ।
तदाहुर्यदन्या होत्रा अन्तर्वेदि कुर्वन्त्यथ कथं सुब्रह्मण्यो बहिर्वेदि करोतीति
।

स ब्रूयादेष वेद्या आत्मा यदुत्कर एतत्प्रत्यक्षं ब्रह्म यत्सुब्रह्मण्या ।
यदुत्करमास्याथ सुब्रह्मण्यामाह्वयति तेनास्यान्तर्वेदि कृतं भवतीति ।
सुब्रह्मण्योऽ३ सुब्रह्मण्योऽ३ सुब्रह्मण्यो३मिति त्रिराह ।
वाग्वै सुब्रह्मण्या ।
तदेतां वाचं प्रथमत आरभते ।
अथो ब्रह्म वाग्रस ओंकारः ।
तामेतां वाचं रसेन प्रीणाति तद्धैतदेक ओं सुब्रह्मण्येत्याह्वयन्ति - ७८

प्राणो ह्यग्रेऽथ वागिति ।
तद्ध तन्न तथा ।
यथा मध्वासिच्य लाजानावपेत्तदन्यधेव स्यात्तादृक्तत् ।
तस्मात्सुब्रह्मण्यो३मित्येवाह्वयेत् ।
इन्द्रागच्छेति ।
इन्द्रमेव तद्यज्ञ आह्वयति ।
हरिव आगच्छेति ।
हरिभ्यामायाहीति वावैनं तदाह ।
प्रानापानौ वास्य हरी ।
तौ हीदं सर्वं हर्तारौ हरतः ।
अथो अहोरात्रौ वास्य हरी ।
तौ हीदं सर्वं हर्तारौ हरतः ।
मेधातिथेर्मेषेति ।
मेहृदातिथेर्ह मेषो भूत्वा राजानं पपौ ।
वृषणश्वस्य मेन इति ।
वृषणश्वस्य ह मेना भूत्वा मघवा कुल उवास ।
गौरावस्कन्दिन्निति ।
ततो हैव गौरो भूत्वार्णवमवचस्कन्द ।
अहल्यायै जारेति ।
अहल्यायै ह मैत्रेय्यै जार आस ।
कौशिक ब्राह्मण कौशिक ब्रुवाणेति ।
यद्ध वा आसुरैर्महासंग्रामं संयेते तद्ध वेदान्निराचकार ।

तान्ह विश्वामित्रादधिजगे ।
ततो हैव कौशिक ऊचे अथ ह वा एके कौशिक ब्राह्मण गौतम ब्रुवाणेत्याह्वयन्ति - ७९

- तदु ह वा आरुणिनैव यशस्विनोपज्ञातम् ।
तस्मादु तस्याशां नेयात् ।
तस्मात्कौशिक ब्राह्मण कौशिक ब्रुवाणेत्येवाह्वयेत् ।
देवा ब्रह्माण आगच्छतागच्छतेति देवांश्चैव तद्ब्राह्मणांश्च समामन्त्रयन्ते ।
ते हास्मै समामन्त्रितास्सुमतिमिच्छन्ते ।
तस्मादु ह समामन्त्य मापराध्नुयान्नेन्मोपवदादिति ।
तदाहुः किंछन्दस्सुब्रह्मण्येति ।
त्रिष्टुबिति ब्रूयात् ।
षन्द्री हि त्रिष्टुबिति ।

तदाहुः किंदेवत्या सुब्रह्मण्येति ।
षन्द्रीति ब्रूयात् ।
इन्द्रं ह्येनयाह्वयतीति ।
अथो ह ब्रूयाद्वैश्वदेवीति ।
विश्वान्ह्येनया देवानाह्वयतीति ।
तदाहुर्यदन्या होत्रा स्तोत्रवत्यश्शस्त्रवत्योऽथ क्व सुब्रह्मण्यायै स्तोत्रं क्व शस्त्रमिति ।
स ब्रूयादेतस्यामेवैतत्सर्वं यदृक्साम यजुः ।
तेनास्य सुब्रह्मण्या स्तोत्रवती शस्त्रवती भवतीति ।
तदाहुः किमिव स्वित्सुब्रह्मण्यर्गिव स्वी३त्सामेवा३ उताहो यजुरिवा३ इति ।
स ब्रूयान्नैवैषर्ङ्न यजुर्न साम ।
सर्वमिवैव ।
सर्वमिव ह्येव ब्रह्मेति ।
अथ यां क्रीते राजनि सुब्रह्मण्यामाह्वयति यामेतां दक्षिणासु नीयमानासूत्करे तिष्ठन्सुब्रह्मण्यामाह्वयति सैवेयम् ।

अथो यत्प्रायणं तदुदयनमसदिति ।
अथो आगत एवेन्द्रस्तं मा निर्वोचामेति ।
एषा ह वै धेनुः पञ्चवत्सा पञ्चपदा ।
यद्ध वा इदमाहुः पाङ्क्ताः पशव इत्येतद्ध तत् ।
तां ह वा एके यथादेवतमाह्वयन्ति ।
सर्वाग्नेयीमग्निष्टुत षन्द्रीमिन्द्रस्तोमस्य वैश्वदेवीं वैश्वदेवस्य
अनिरुक्तामनिरुक्तस्य ।
तदु ह शश्वन्न तथा ।
नो हि ब्रह्मणो व्यापादोऽस्ति ।
यथानिपतितमेवाह्वयेद्यथानिपतितमेवाह्वयेत् ।
८
एकाहाः

अथैष उपशदः ।
कश्यपो वा अकामयत उपोप मा प्रजाः पशवः शीयेरन्नुपोप प्रजया पशुभिः
प्रजायेयेति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै तमुपोप प्रजाः पशवोऽशीयन्त उपोप प्रजया पशुभिः प्राजायत ।
उपोप ह वा एनं प्रजाः पशवः शीयन्त उपोप प्रजया पशुभिः प्रजायते य
एवं वेद ।
तस्य त्रिवृद्बहिष्पवमानं भवति ।
न्यूनं वै त्रिवृत् ।
न्यूनं प्रजननम् ।
तद्यत्प्रजननं तन्मा प्रजनयादिति ।
तस्यैकोत्तरा स्तोमा भवन्ति ।
अनन्तर्हितात्प्रजननात्प्रजाया इति ।
यद्वेवैषैकैका स्तोत्र्योपशीयते तस्मादुपशदः ।
तस्योभये स्तोमा भवन्त्ययुजश्च युग्मन्तश्च ।

एतद्वै दैव्यं मिथुनं प्रजननं यदुभये स्तोमाः ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ८१

तस्य वसिष्ठस्य जनित्रे आदिष्टसामनी पवमानयोर्भवतः ।
एतद्वै दैव्यं मिथुनं प्रजननं यद्वसिष्ठस्य जनित्रे ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्य सविंशमग्निष्टोमसाम भवति ।
सा विराट् ।
अन्नम्विराट् ।
विराज्येव तदन्नाद्ये यज्ञस्यान्ततः प्रतितिष्ठति ।
तदाहुरप्रजननी स्तोमो विराजमभि सम्पन्नो नैनेन यजेतेति ।
तदु वा आहुः प्रजनन एव ।
अन्नं वै विराट् ।
अशिताद्वै रेतस्सिच्यते ।
रेतसः प्रजाः प्रजायन्ते ।
तस्मात्प्रजनन एवेति ।
अथो आहुरष्टादशमेवाच्छावाकस्य कृत्वा
सविंशमार्भवमेकविंशमग्निष्टोमसाम कुर्यादिति ।
तदु प्रज्ञात एकविंशे स्तोमेऽन्तत स्तोत्राणां प्रतितिष्ठति ।
अथैष शदः ।
आदित्यो वा अकामयत अवशात्यैव सर्वं पाप्मानं स्वर्गं
लोकमभ्युत्क्रामेयमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै सोऽवशात्यैव सर्वं पाप्मानं स्वर्गं लोकमभ्युदक्रामत् ।
स एषोऽपहतपाप्मा तपति ।

अवशात्य हैव सर्वं पाप्मानं स्वर्गं लोकमभ्युत्क्रामति य एवं वेद ।
यद्वेवैषैकैका स्तोत्र्यावशीयते तस्माच्छदः ८२

अथैष पुनस्तोमः ।
स हायमृषिरागत्य न शशाकोत्थातुमसुराशनेन ।
गरो हैनमाविवेश यद्वा मित्राय दुद्रोह यद्वा विद्विषाणानामशनमाश ।
स हेन्द्रमुवाच न वै शक्नोम्युत्थातुमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनैनमयाजयत् ।
तस्य त्रिवृत्प्रातस्सवनं भवति त्रिवृत्तृतीयसवनम् ।
न्यूनं वै त्रिवृन्नयूनान्निर्ह्नरति ।
तमेताभ्यां त्रिवृद्भ्यां सवनाभ्यां यथा दृतिमुभयत आदृत्य निर्ह्नालयेदेवं हैवास्य सर्वं पाप्मानं निर्ह्नालयां चकार ।
इतश्च ह वै स तदूर्ध्वं इतश्चावाञ्चं पाप्मानं अपजघ्ने ।
इतश्च हैवोर्ध्वमितश्चावाञ्चं पाप्मानमपहते य एवं वेद ।
स इहातिप्ररिक्तो न शशाकोत्थातुम् ।
स हेत्तां चक्रे कथं न्वहमिमं पुनस्संश्रीणीयामिति ।
तमेतेनैव पुनरयाजयत् ।
तेनैनं पुनस्समश्रीणात् ।
सास्य पुनस्तोमता ।
तस्य द्वादशं माध्यंदिनं सवनं भवति ।
द्वादश मासास्संवत्सरः ।
संवत्सरेणैवास्य तद्रिक्तमात्मानं मध्यतः पुनस्समश्रीणात् ।
स यथा जात्वप्रतिजगृहिवान्स्यादेवमास ।
यथा द्विदतः कुमारस्य सातं स्यादेवं हैवास्य सातमास ।
स यो गरगीर्मन्येताप्रतिगृह्यस्य प्रतिगृह्यानाश्यान्नस्यान्नमशित्वा स एतन यजेत ।
एताभ्यामेव त्रिवृद्भ्यां सवनाभ्यामितश्चोर्ध्वमितश्चावाञ्चं विष्वञ्चं गरं व्यस्यते ८३

तस्य बृहत्पृष्ठं भवति ।
इदं वै रथन्तरमदो बृहत् ।
आसन्नमिव वा इदं प्ररिक्तमिवादः प्ररिक्त्या एव ।
तस्य प्र यो रिरिक्षे ओजसेत्येतासु गारं ब्रह्मसाम भवति गरस्यैवापहत्यै ।
तदु वा आहुर्या इद्वै ताः कामदुघा आसन्नेतेन वाव ता यज्ञेन परिगृह्याहरतामिति ।
तस्य त्रिवृत्प्रातस्सवनं भवति त्रिवृत्तृतीयसवनं द्वादशं माध्यंदिनं सवनम् ।
द्वादशाक्षरा वै जगती ।
पशवो जगती पशवः कामदुघाः ।
ब्रह्म वै त्रिवृत् ।
ब्रह्मणा वै एनास्तदुभयतः परिगृह्याजह्रतुः ।
तासामेका श्रवणा दुहे ।
तां भूमावुपोपतुः ।
तामेतां वक्रेण दारुणान्विच्छन्ति लाङ्गलेन विश एका तां वणिज्यया ब्रह्मैका तां ब्रह्मचर्येण क्षत्रमेका तां राजानुचर्येण ।
अथ यास्तिस्रः परिशिष्टा आसुस्तानि हैवोक्थानि चक्रतुः ।
स एष उक्थ्यो यज्ञः ।
शश्वद्धैष एव प्रथम उक्थ्यानामथ ततोऽग्निष्टोमा एव पराञ्चः ।
स यः पशुकाम स्यात्स एतेन यजेत ।
तस्मिन्नु ह तर्ह्युभे बृहद्रथन्तरे कुर्युः ।
द्वया उ ह वै पशवः ।
राथन्तरा अन्ये बार्हता अन्ये ।
ये ह वा अन्यतोदन्ताः पशवस्ते राथतरा य उभयतोदन्तास्ते बार्हताः ।
उभयेषामेव पशूनामवरुद्ध्यै ।
स उक्थ्यो भवति पशवो वा उक्थानि पशूनामेवावरुद्ध्यै ।
तस्योद्वंशीयमच्छावाकसाम भवति सर्वपृष्ठरूपं पृष्ठानि वै पशवोऽभिपूर्वाणामेव पशूनामवरुद्ध्यै ८४

अथैतौ विराट्स्वराजौ ।

देवा वा अकामयन्त विराजमन्नाद्यमवरुन्धीमहि विराज्यन्नाद्ये प्रतितिष्ठेमेति ।
त एतं विराजं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै ते विराजमन्नाद्यमवारुन्धत विराज्यन्नाद्ये प्रत्यतिष्ठन् ।
विराजमेवान्नाद्यमवरुन्द्धे विराज्यन्नाद्ये प्रतितिष्ठति य एवं वेद ।
स ह वै विराड्यत्रान्यस्य लोकं नाभिध्यायति ।
तमेवैतेन जयति ।
तस्य दश त्रिवृन्ति स्तोत्राणि भवन्ति तास्तिस्रो विराजः पञ्चदशे द्वे ।
सो विराट् ।
ताश्चतस्रो विराजस्संपद्यन्ते ।
अन्नं विराट् ।
विराज एवान्नाद्यस्यावरुद्ध्यै ।
तस्य रथन्तरं पृष्ठं भवति ।
इयं वै रथन्तरम् ।
इयमु वै विराट् ।
य उ वा अस्यै भूयिष्ठं परिगृह्णाति स विराजति ।
अन्नं विराट् ।
विराज एवान्नाद्यस्यावरुद्ध्यै ।
तस्येन्दुस्समुद्रमुर्विया विभातीत्येतदादिष्टसाम माध्यंदिने पवमाने भवति पृथिव्यै साम ।
स्तोममेव तद्रूपेण समर्धयन्ति ८५

त उ वा अकामयन्त विराजमन्नाद्यमवरुध्य स्वराज्यं लोकं गच्छेमेति ।
त एतं स्वराजं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै ते विराजमन्नाद्यमवरुध्य स्वराज्यं लोकमगच्छन् ।
विराजमेवान्नाद्यमवरुध्य स्वाराज्यं लोकं गच्छति य एवं वेद ।

स ह वै स्वराड्यत्रान्यस्य लोकं नाभिध्यायति ।
तमेवैतेन जयति ।
तस्य दश त्रिवृन्ति स्तोत्राणि भवन्ति ।
तास्तिस्रो विराजः ।
पञ्चदशं च सप्तदशं च द्वे ।
सोऽनुष्टुप् ।
एषो ह वै छन्दसां स्वाराज्यं लोकमानशे यदनुष्टुप् ।
प्रजापतिर्वा अनुष्टुप् ।
प्रजापतिर्वै स्वाराज्यम् ।
अन्नमु वै विराट् ।
विराज्येव तदन्नाद्ये प्रतिष्ठाय स्वाराज्यं लोकमगच्छन् ।
विराज्येव तदन्नाद्ये प्रतिष्ठाय स्वाराज्यं लोकं गच्छति य एवं वेद ।
तस्य बृहत्पृष्ठं भवति ।
अदो वै बृहत् ।
अदो वै स्वाराज्यम् ।
अमुमेवैतेन स्वाराज्यं लोकमगच्छन् ।
अमुमेवैतेन स्वाराज्यं लोकं गच्छति य एवं वेद ।
तस्येन्दुस्समुद्रमुर्विया विभातीत्येतदादिष्टसामार्भवे पवमाने न भवतीति दिवस्सामैकारवद्भवति ।
अर्वाङिव ह्यसौ लोकः ।
स्तोममेव तद्रूपेण समर्धयन्ति ।
अथो यदेकारवद्भवति स्वर्गाल्लोकान्नेत्पराञ्चोऽतिपद्यामहा इति ८६

अथैष ऋषभः ।
इन्द्रो वा अकामयत ऋषभस्सर्वासां प्रजानां स्यामृषभतां गच्छेयमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स ऋषभस्सर्वासां प्रजानामभवदृषभतामगच्छत् ।
ऋषभ एव स्वानां प्रजानां भवत्यृषभतां गच्छति य एवं वेद ।

तच्छ्रीर्वा ऋषभः ।
श्रियं वै स तदगच्छत् ।
ऋषभो वै राजा मनुष्याणाम् ।
ऋषभ ऋषभः पशूनाम् ।
ऋषभोऽश्ववृषो वळवानाम् ।
ऋषभो बस्तोऽजानाम् ।
ऋषभो वृष्णिरवीनाम् ।
ऋषभः कृष्ण एणीनाम् ।
ऋषभ ऋष्यो रोहिताम् ।
एते ह वा आसाणश्रियः ।
श्रियं ह गच्छति य एवं वेद ।
स पञ्चदशो भवति ।
वज्रो वै पञ्चदशः ।
वज्र इन्द्रः ।
षन्द्र एष यज्ञस्तत्तत्सलक्ष्म क्रियते ।
तस्यैकविंशो माध्यंदिनो भवति ।
सा हास्य ककुप् ।
य उ ह वा एषां लोकानां श्रेष्ठास्ते ककुभः ।
अग्निर्वा अस्य लोकस्य ककुब्वायुरन्तरिक्षस्य आदित्यो दिवः ।
ककुभामेको भवति य एवं वेद ।
तस्य बृहत्पृष्ठं भवति ।
इन्द्रो वै बृहत् ।
श्रीः पृष्ठानि ।
इन्द्रमेव तच्छ्रिया समर्धयन्ति ।
तस्य ऋषभः पावमान ऋषभो वैदन्वत इत्येते आदिष्टसामनी
पवमानयोर्भवतः ।
स्तोममेव तद्रूपेण समर्धयन्ति ८७

अथैष व्योमा ।
देवा वा अकामयन्त व्योम स्याम व्योमानं लोकं गच्छेमेति ।

त एतं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै ते व्योमासन्व्योमानं लोकमगच्छन् ।
व्योमा हैव भवति व्योमानं लोकं गच्छति य एवं वेद ।
स ह वै व्योमा यत्रान्यस्य लोकं नाभिध्यायति ।
तमेवैतेन जयति ।
सप्तदशो भवति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतिर्वै व्योमा ।
व्योम्ना व्योमानोऽसाम व्योम्ना व्योमानं लोकं गच्छामेति ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
न ह वा एतयोरन्यतरद्व्योम ।
उभे ह वा एते व्योम ।
व्योम्ना व्योमानोऽसाम व्योम्ना व्योमानं लोकं गच्छामेति ।
तस्यैकविंश आर्भवः पवमानो भवत्यग्निष्टोमसाम वा ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एष उ ह वै व्योमा येऽर्वाञ्चः प्रजापतेर्देवास्तेषां ।
व्योम्ना व्योमानोऽसाम व्योम्ना व्योमानं लोकं गच्छामेति ।
तस्यार्को देवानां परमे व्योमनर्कस्य देवाः परमे वियोमन्नित्येते
आदिष्टसामनी पवमानयोर्भवतः ।
स्तोममेव तद्रूपेण समर्धयन्ति ८८

अथैतावुद्भिद्वलभिदौ ।
प्रजनन्कामो हैताभ्यां यजेत ।
त्रिवृत्पञ्चदशौ स्तोमौ भवतस्सप्तिसप्तदशाः ।
ऊनातिरिक्तौ मिथुनौ प्रजननी ।
ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
तत्तत्प्रजननं क्रियते ।

तस्मादुभाभ्यां प्रजननकामो यजेत ।
अथो आहुर्ब्रह्मवर्चसकाम एवाभ्यां यजेतेति ।
षड्वा एतयोरन्यतरो गायत्रीरभिसंपद्यते षडन्यतरः ।
ब्रह्म वै गायत्री ।
गायत्रीमेतौ यज्ञावभिसंपन्नौ ।
तस्मादुभाभ्यां ब्रह्मवर्चसकामो यजेत ।
अथो आहुरायुष्काम एवाभ्यां यजेतेति ।
प्राणो वै गायत्री ।
गायत्रीमेतौ यज्ञावभिसंपन्नौ ।
तस्मादुभाभ्यामायुष्कामो यजेत ।
अथो आहुस्तेजस्काम एवाभ्यां यजेतेति ।
तेजो वै गायत्री ।
गायत्रीमेव तौ यज्ञावभिसंपन्नौ ।
तस्मादुभाभ्यां तेजस्कामो यजेत ।
अथो आहु स्वर्गकाम एवाभ्यां यजेतेति ।
या वै षड्गायत्र्यश्चतस्रस्ता बृहत्यः ।
बृहती वै स्वर्गं लोकमानशे ।
तस्मादुभाभ्यां स्वर्गकामो यजेत ।
अथो आहुः पशुकाम एवाभ्यां यजेतेति ।
या वै षड्गायत्र्यस्तिस्रस्ता जगत्यः ।
पशवो जगती ।
तस्मादुभाभ्यां पशुकामो यजेत ८९

ते देवा एतावुद्भिद्वलभिदावपश्यन् ।
ताभ्यां एना अभिप्रा धावयन् ।
ते वलभिदैव वलमभिन्दन् ।
उद्भिदा गा उदसृजन्त ।
स वा एष त्रिवृत्पञ्चदशो वलभिद्भवति रथन्तर्सामोत्सेधब्रह्मसामा ।
अथैष उद्भित्सप्तिसप्तदशो भवति बृहत्सामा निषेधब्रह्मसामा ।
तद्यथा ह वै मयूखो वा तीक्ष्णश्शङ्कुर्वैवमेष यत्त्रिवृत्स्तोमः ।

तद्यथा मयूखेन वा तीक्ष्णेनाभिनिधाय शङ्कुना वा कूटेनाभिहन्यादेवमेवैतेन त्रिवृता स्तोमेन वलमभिनिधाय पञ्चदशेन वज्रेण व्यासुः ।
अथो आहुरग्निरेवैष यत्त्रिवृत्स्तोमः ।
वज्र एष यत्पञ्चदशः ।
तद्यथाग्निनाश्मानमभ्योष्य तं कूटेन भिन्द्यादेवमेवैतेन त्रिवृताग्निना स्तोमेन वलमभ्योष्य पञ्चदशेन वज्रेण व्यासुरिति ।
ता हान्तर एव तस्थुरयनमविन्दमानाः ।
ता होत्सेधेनैवोत्सिषिधुः ।
अथैष उद्भित्सप्तिसप्तदशो भवति ।
ततो याः सप्त त एव सप्तयाः पशवोऽथ यास्सप्तदश स एव सप्तदशः प्रजापतिः ।
ताः पितरमेव प्रजापतिं पश्यन्तीः प्रतिमोदमाना उदेयुः ।
ता होदेत्य महदेवाभि विससृजिरे ।
तासां ह देवाः परावापाद्बिभयां चक्रुः ।
ता होत्सेधेनैवोत्सिध्य निषेधेन निषिध्यात्मन्दधिरे ।
स यः पशुकाम स्यात्स एताभ्यां यजेत ।
वलभिदैव वलं भिनत्त्युद्भिदा गा उत्सृजते ।
उत्सेधेनैवैना उत्सिध्य निषेधेन निषिध्यात्मन्धत्ते अव पशून्रुन्द्धे बहुपशुर्भवति ९०

अथैतौ सत्राजित्पृतनाजितौ ।
देवासुरा वै संवत्सरे प्रजापतावस्पर्धन्तैषु च लोकेषु ।
ते देवा अकामयन्त जयेम पृतनामिति ।
त एतं पृतनाजितं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै ते तां पृतनामजयन् ।
यत्पृतनामजयंस्तत्पृतनाजितः पृतनाजित्त्वम् ।
जयति पृतनां द्विषन्तं भ्रातृव्यं य एवं वेद ।
स चतुर्विंशो भवति ।

चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरादेवैनांस्तदजयन् ।
तस्य रथन्तरं पृष्ठं भवति ।
इदं वै रथन्तरम् ।
अस्मादेवैनांस्तल्लोकादजयन् ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
मासश एवैनांस्तत्संवत्सरादजयन् ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
अर्धमासश एवैनांस्तत्संवत्सरादजयन् ९१

ते जिताः पञ्चविंशमेव पितरं प्रजापतिं प्रापद्यन्तामुं च लोकम् ।
तानकामयन्तात एनान्सत्रा जयेमेति ।
त एतं सत्राजितं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततेनान्सत्राजयन् ।
यत्सत्राजयंस्तत्सत्राजितस्सत्राजित्त्वम् ।
सत्रा द्विषन्तं भ्रातृव्यं जयति य एवं वेद ।
स पञ्चविंशो भवति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
प्रजापतिः पञ्चविंशः ।
संवत्सरादेवैनांस्तत्प्रजापतेरजयन् ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
मासश एवैनांस्तत्संवत्सरादजयन् ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
अभिपूर्वमेवैनांस्तदर्धमासशस्संवत्सरादजयन् ।

ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ९२

अथो आहुः प्रजाकाम एव प्रजापतिरेतं पृतनाजितं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजतेति ।
तस्य द्वे अष्टाशीतिशते स्तोत्रिया भवन्ति ।
तन्नयूनम् ।
न्यूनात्प्रजननम् ।
द्वे हि ते स्त्रिया ऊने यतः सा प्रजायते ।
तत्तत्प्रजननं क्रियते ।
स चतुर्विंशो भवति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननं क्रियते ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
संवत्सरः प्रजननम् ।
तत्तत्प्रजननं क्रियते ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननम् ।
तत्तदभिपूर्वं प्रजननं क्रियते ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
ताः प्रजन्याकामयतान्नवतीर्म इमाः प्रजा स्युरिति ।
स एतं सत्राजितं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
स पञ्चविंशो भवति ।
चतुर्विंशत्यर्धमासो वै संवत्सरः ।
अन्नाद्यं पञ्चविंशी ।

अन्नाद्यमेवाभ्यस्तत्पञ्चविंश्या प्रायच्छत् ।
तस्य त्रीणि शतानि स्तोत्र्या भवन्ति ।
सा विराट् ।
अन्नं विराडेतदेवाभ्यस्तदन्नाद्यं प्रायच्छत् ।
ता अस्यान्नवतीः प्रजा अभवन् ।
स यः कामयेत बहुभिः प्रजया पशुभिः प्रजायेयान्नावतीर्म इमाः प्रजा स्युरिति स एताभ्यां यजेत ।
बहुरेव प्रजया पशुभिः प्रजायतेऽन्नवतीरस्य प्रजा भवन्ति ९३

अथैष विराट्स्वराजौ ।
भ्रातरावेतेन यज्ञेन यजेयाताम् ।
यौ कामयेयातां राज्यं नावन्यतरो गच्छेत्स्वाराज्यमन्यतर इति स वा एष विराजं चानुष्टुभं चाभिसंपद्यते ।
एतद्ध वै राज्यं यद्विराट् ।
अथैतत्स्वाराज्यं यदनुष्टुप् ।
विराजैव कनीयान्राज्यं गच्छति अनुष्टुभा ज्यायान्स्वाराज्यं लोकम् ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एतद्ध वै राज्यं यद्रथन्तरम् ।
अथैतत्स्वाराज्यं यद्बृहत् ।
रथन्तरेणैव कनीयान्राज्यं गच्छति ।
बृहता ज्यायान्स्वराज्यं लोकम् ।
तस्य त्रीणि त्रिवृन्ति स्तोत्राणि भवन्ति त्रीणि पञ्चदशानि त्रीणि सप्तदशानि त्रीण्येकविंशानि ।
त्रिवृद्भिरेव कनीयान्राज्यं गच्छति पञ्चदशैर्ज्यायान्स्वाराज्यं लोकम् ।
सप्तदशैरेव कनीयान्राज्यं गच्छत्येकविंशैर्ज्यायान्स्वाराज्यं लोकम् ९४

तदाहुर्भूतस्यैवैष यज्ञो न बुभूषतोऽप्रजननी स्तोमो विराजं चानुष्टुभं चाभिसंपद्यते ।
संपन्नमिव वा एतच्छन्दः पूर्णमिव प्रजननं यद्विराट् ।
अन्त उ वा एष छन्दसां यदनुष्टुबिति ।

तदु वा स्राहुरुभयोरेवैष यज्ञो भूतस्य च बुभूषतश्चेति ।
तस्यैते त्रिवृत्पञ्चदशा स्तोमा भवन्ति सप्तदशैकविंशा ऊनातिरिक्ता मिथुनाः प्रजनयः ।
ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
त्रिवृच्च पञ्चदशश्च तन्मिथुनं प्रजननम् ।
सप्तदशश्चैकविंशश्च तन्मिथुनं प्रजननम् ।
तद्यन्मिथुनं प्रजननं तन्मा प्रजनयादिति ।
स्रथो यदुभे बृहद्रथन्तरे सामनी भवत एतद्वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
स्रनेन हत्वाप प्रजननतमो यद्विराजमभिसंपद्यते ।
स्रन्नं वै विराट् ।
स्रशिताद्वै रेतस्सिच्यते ।
रेतसः प्रजाः प्रजायन्ते ।
स्रथो यदनुष्टुभमभिसंपद्यत स्रानुष्टुभो वै प्रजापतिः प्रजापतिः प्रजननं स यः प्रजननं स मा प्रजनयादिति ६५

तस्य युवं हि स्थ स्वःपती इत्येषो प्रतिपत्कार्या ।
एषा वै द्वयोस्संयजमानयोः प्रतिपत् ।
तदु वा स्राहुः पवस्व वाचो स्रग्रिय उपास्मै गायता नर इत्येते एव प्रतिपदौ कार्ये ।
एते वाव द्वयोः संयजमानयोः प्रतिपदौ ।
स्रथो उभे ह्यत्र सामनी क्रियेते ।
तस्मादेते एव प्रतिपदौ कार्ये इति ।
तस्मिन्नेतानि सामान्यवकल्पयन्ति गौषूक्ताश्वसूक्ते हाविष्मत-हाविष्कृते ।
ये द्वे द्वे सामनी यानि द्वयोस्संयजमानयोस्सामानि तानि ।
तस्य विराट्स्वराजमार्भवस्य पवमानस्यानुष्टुभि कुर्वन्ति ।
विराट्स्वराजो ह्येष यज्ञः ।
स्तोममेव समर्धयन्ति ६६

अथैष ज्येष्ठयज्ञः ।
यो ज्यैष्ठ्यकाम स्यात्स एतेन यजेत ।
स वा एषोऽष्टावेकविंशानभिसंपद्यते ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एष उ ह वा अग्रं ज्यैष्ठ्यम् ।
स योऽग्रं ज्यैष्ठ्यं स माग्रं ज्यैष्ठ्यं गमयादिति ।
तस्य सप्तदशाः पवमाना भवन्ति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतिर्वा अग्रं ज्यैष्ठ्यम् ।
सो योऽग्रं ज्यैष्ठ्यं स माग्रं ज्यैष्ठ्यं गमयादिति ।
तस्योत्तरावन्ति स्तोत्राणि भवन्ति ।
उत्तरावतीमेवैनं तच्छ्रियमुत्तरावन्तं स्वर्गं लोकं गमयन्ति ।
तस्य बृहत्पृष्ठं भवति ।
श्रीर्वै बृहज्जैष्ठ्यम् ।
अदो वै बृहददो वै ज्यैष्ठ्यम् ।
तदेनं तच्छ्रियामेव मध्यतो ज्यैष्ठ्ये प्रतिष्ठापयन्ति ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
संवत्सरो वा अग्रं ज्यैष्ठ्यम् ।
सो योऽग्रं ज्यैष्ठ्यं स माग्रं ज्यैष्ठ्यं गमयादिति ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरो वा अग्रं ज्यैष्ठ्यम् ।
सो योऽग्रं ज्यैष्ठ्यं स माग्रं ज्यैष्ठ्यं गमयादिति ।
स यो ज्येष्ठो ज्यैष्ठिनेयस्समग्रिय स्यात्स एतेन यजेत गच्छति ज्यैष्ठ्यं न ज्यैष्ठ्यादवरोहति ९७

अथैष दुराशः ।
पौर्णमासेन हविषेष्ट्वा आदित्याय चरुं निर्वपति ।
तस्मिञ्छतमानं हिरण्यं ददाति सुवर्णं चन्द्रमसेऽपराह्णे ।

तस्मिञ्छतमानं हिरण्यं ददाति रजतम् ।
स एवमेतौ पूर्वाह्णापराह्णावेतमपरपक्षं यजते ।
तस्यामावास्यायां दीक्षोपरिष्टात्सुत्या ।
तद्वा एतत्सूर्याचन्द्रमसोरेवायनम् ।
सूर्याचन्द्रमसौ वा अकामयेतां समानेन यज्ञेन समानीमृद्धिमृद्ध्नुयाव ।
अहरेव नावन्यतरोऽभिजयेद्रात्रिमन्यतर इति ।
तावेतं यज्ञमपश्यताम् ।
तमाहरताम् ।
तेनायजेताम् ।
ततो वै तौ समानेन यज्ञेन समानीमृद्धिमार्ध्नुताम् ।
अहरेवैनयोरन्यतरोऽभ्यजयद्रात्रिमन्यतरः ।
एषा ह वा एनयोः समान्यृद्धिर्यत्समाने लोके पूर्वाह्णापराह्णौ यजते ।
अहर्वै पूर्वाह्णो रात्रिरपराह्णोऽहोरात्रयोरेवाभिजित्यै ।
पूर्वपक्षापरपक्षौ यजते ।
अहर्वै पूर्वपक्षो रात्रिरपरपक्षोऽहोरात्रयोरेवाभिजित्यै ।
शतमाने भवतः ।
शतायुर्वै पुरुषः शतेन्द्रियः शतवीर्यस्तस्यैवेन्द्रियस्य वीर्यस्यावरुद्ध्यै ९८

सप्तदश स्तोमो भवति ।
प्रजापतिर्वै सप्तदश ।
प्रजापति स्वर्गस्य लोकस्याभिनयिता ।
स मा स्वर्गं लोकमभिनयादिति ।
तस्य शतमनड्वाहो दक्षिणा भवन्ति ।
शतायुर्वै पुरुषः शतेन्द्रियः शतवीर्यस्तस्यैवेन्द्रियस्य वीर्यस्यावरुद्ध्यै ।
सर्वे वह्नयो भवन्ति ।
वह्निना हि तत्र गच्छति यत्र जिगमिषति ।
सर्वे वरा भवन्ति ।
वर इव वै स्वर्गो लोक स्वर्गस्यैव लोकस्यर्द्ध्यै ।
एतदन्यो दद्यादथान्य स्तोत्रे स्तोत्रे सप्तदश सप्तदश निष्कान्दद्यात् ।
देवासुरा यज्ञेऽस्पर्धन्त ।

ते यद्यदेव देवा यज्ञेऽकुर्वत तत्तद्देवासुरा अन्वकुर्वत ।
ते देवा अब्रुवन्यद्यद्वाव वयं यज्ञे कुर्महे तत्तन्नोऽसुरा अनुकुर्वते ।
एत हिरण्यसोमेन यजामहा इति ।
अथ ह तर्हि देवेष्वेव हिरण्यमास नासुरेषु ।
संवृक्तं ह देवैरसुराणां हिरण्यमास ।
ते हिरण्यसोमेनायजन्त ।
ते स्तोत्रे स्तोत्रे सप्तदश सप्तदश निष्कानददुः ।
तदेषामसुरा नोदाश्नुवत ।
तेऽब्रुवन्दुराशं बतेदं देवा अक्रतेति ।
तदेव दुराशस्य दुराशत्वम् ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
तस्य शुक्रचन्द्रे आदिष्टसामनी पवमानयोर्भवतः ।
सूर्याचन्द्रमसोर्ह्येष यज्ञः ।
स्तोममेव तद्रूपेण समर्धयन्ति ९९

अथैषोऽपचितिः ।
प्रजापतिः प्रजा असृजत ।
ता एनं सृष्टा नापाचायन् ।
सोऽकामयत अपचितिमासु प्रजासु गच्छेयमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै तं ता अपाचायन् ।
इन्द्रमु वै देवा नापाचायन् ।
स प्रजापतिमुपाधावन्न वै मेमे देवा अपचायन्तीति ।
तस्मा एतमपचितिं यज्ञं व्यदधात् ।
तमाहरत् ।
तेनायजत ।
ततो वै तं देवा अपाचायन् ।

दर्भमु ह वै शातानीकिं पञ्चाला राजानं सन्तं नापचायां चक्रुः ।
अपि ह स्मैनं कुमारा दर्भ दर्भेति ह्वयन्ति ।
तस्य हैतौ ब्राह्मणावासतुरहीना आश्वत्थिः केशी सात्यकामिरिति ।
तौ हैनमुपसमेयतुः ।
स ह ध्यायन्निषसाद ।
तं होचतुः ।
किं नु राजन्यो ध्यायतीति ।
स होवाच न हि मे ध्येयम् ।
पञ्चाला वै मेमे राजानं सन्तं नापचायन्त्यपि मा कुमारा दर्भ दर्भेति ह्वयन्ति ।
तदेवैतद्ध्यायामीति ।
तं होचतुरपचितिरिति वा अयं यज्ञक्रतुरस्ति तेन त्वा याजयावेति ।
तथेति ।
तेन हैनं याजयां चक्रतुः ।
स हैषु तथामात्रमपचितिं जगाम यदप्येतर्हि पञ्चाला दर्भान्कुशा इत्येवाचक्षते १००

अस्य वा एतस्य गायत्रीमेव प्रातस्सवनं संपद्यते त्रिष्टुभं माध्यन्दिनं सवनं जगतीं तृतीयसवनम् ।
तद्यद्गायत्रीं प्रातस्सवनं संपद्यतेऽष्टाक्षरा गायत्र्यष्टौ वसवो गायत्र्यैव तच्छन्दसा प्रजापतिश्चेन्द्रश्च वसुषु देवेषु प्रातस्सवनेऽध्यपिचितिमगच्छताम् ।
अथ यत्त्रिष्टुभं माध्यन्दिनं सवनं संपद्यत एकादशाक्षरा त्रिष्टुबेकादश रुद्रास्त्रिष्टुभैव तच्छन्दसा प्रजापतिश्चेन्द्रश्च रुद्रेषु देवेषु माध्यन्दिने सवनेऽध्यपचितिमगच्छताम् ।
अथ यज्जगतीं तृतीयसवनं संपद्यते द्वादशाक्षरा जगती द्वादशादित्या जगत्यैव तच्छन्दसा प्रजापतिश्चेन्द्रश्चादित्येषु देवेषु तृतीयसवनेऽध्यपचितिमगच्छताम् ।
अष्टाक्षरा गायत्री ।
एकादशाक्षरा त्रिष्टुप् ।

द्वादशाक्षरा जगती ।
वागिति यज्ञायज्ञीयस्य निधनम् ।
तद्द्वात्रिंशत् ।
द्वात्रिंशदक्षरानुष्टुप् ।
विश्वेषां देवानामनुष्टुप् ।
अनुष्टुभैव तच्छन्दसा प्रजापतिश्चेन्द्रश्च विश्वेषु देवेषु
तृतीयसवनेऽध्यपचितिमगच्छताम् ।
एतावन्तो वै देवाः ।
एतावन्ति देवजातानि ।
तेष्वेव तदध्यपचितिमगच्छताम् १०१

गायत्रो वै ब्राह्मणः ।
त्रैष्टुभो राजन्यः ।
जागतो वैश्यः ।
आनुष्टुभः शूद्रः ।
तद्यद्गायत्रीं प्रातस्सवनं संपद्यते गायत्र्यैव तच्छन्दसा दर्भः शातानीकिर्ब्राह्मणे
मनुष्येऽध्यपचितिमगच्छत् ।
अथ यत्त्रिष्टुभं माध्यन्दिनं सवनं संपद्यते त्रिष्टुभैव तच्छन्दसा दर्भः
शातानीकी राजन्ये मनुष्येऽध्यपचितिमगच्छत् ।
अथ यज्जगतीं तृतीयसवनं संपद्यते जगत्यैव तच्छन्दसा दर्भः
शातानीकिर्वैश्ये मनुष्येऽध्यपचितिमगच्छत् ।
अष्टाक्षरा गायत्री ।
एकादशाक्षरा त्रिष्टुप् ।
द्वादशाक्षरा जगती ।
वागिति यज्ञायज्ञीयस्य निधनम् ।
तद्द्वात्रिंशत् ।
द्वात्रिंशदक्षरानुष्टुप् ।
आनुष्टुभः शूद्रः ।
अनुष्टुभैव तच्छन्दसा दर्भः शातानीकिः शूद्रे मनुष्येऽध्यपचितिमगच्छत् ।
एतावन्तो वै मनुष्याः ।

एतावन्ति मनुष्यजातानि ।
तेष्वेव तदध्यपचितिमगच्छत् १०२

तदाहुः कैतस्य यज्ञस्य विधृतिः कापचितिरिति ।
स ब्रूयाद्यदेव सवनात्सवनं न समैति ।
यद समैव सवनं संपद्यते सैवैतस्य यज्ञस्य विधृतिस्सापचितिरिति ।
तस्य आहुर्दविद्युतत्या रुचेत्येव प्रतिपदं कार्याम् ।
एषा वै गणिनी प्रतिपद्बहुरूपा ।
गणा इव वै तं सचन्ते य श्रियमश्नुत इति ।
तदु वा आहुः पवस्व वाचो अग्रिय उपास्मै गायता नर इत्येते एव प्रतिपदौ कार्ये ।
एते वाव गणिन्यौ प्रतिपदौ बहुरूपे ।
अथो उभे ह्यत्र सामनी क्रियेते ।
तस्मादेते एव प्रतिपदौ कार्ये इति ।
बृहद्रथन्तरे भवतः ।
ब्रह्म वै रथन्तरं क्षत्रं बृहत् ।
ब्रह्म च वै क्षत्रं चापचिते रूपम् ।
भद्रश्रेयसी भवतः ।
भद्रेण वै देवा भद्रा अभवञ्छ्रेयसा श्रियमगच्छन् ।
सहोमहसी भवतः ।
सहसा वै देवा असुरानसहन्त ।
महसा महोऽभवन् ।
भर्गयशसी भवतः ।
भर्गेण वै देवा भर्गोऽभवन् ।
यशसा यशोऽगच्छन् ।
उत्सेधनिषेधौ भवतः ।
उत्सेधेन वै देवा औत्सेध्यमुदसेधन् ।
निषेधेन निषेध्यं न्यषेधन् ।
सदोविशीयं च विशोविशीयं च भवतः ।
सदोविशीयेन वै देवा विशमसीदन् ।

विशोविशीयेन विशो विशो राजानोऽभवन् ।
धर्मविधर्मणी भवतः ।
धर्मेण वै देवा धर्मोऽभवन् ।
विधर्मणा विधर्मापाघ्नत ।
तस्मिनेता उभयीर्द्विपदातिच्छन्दसः क्रियन्ते ज्येष्ठानि च ह्रसिष्ठानि च छन्दांसि ।
पशवो वै छन्दांसि ।
तस्माद्धूतमुभये पशव उपतिष्ठन्ते ज्येष्ठाश्च ह्रसिष्ठाश्च ।
उभये ह वा एनं पशव उपतिष्ठन्ते ज्येष्ठाश्च ह्रसिष्ठाश्च य एवं वेद ।
तस्याश्वरथश्चतुर्युग्दक्षिणा भवति ।
सर्वे शतक्रियोऽश्वाः ।
स रुक्मी प्रावेपी सर्वाभरणयंशुमान्भवति ।
तस्य वैयाघ्रः परिवारो भवति द्वैपो धन्वधिरार्क्ष उपासङ्गः ।
खाड्गकवचोऽध्यास्थाता भवति संनद्धस्संनद्धसारथिरावृतः प्रतिहिताभ्याम् ।
निष्की स्त्रग्वी संग्रहीता भवति ।
एतद्वै त्विषे रूपमेतदपचितेः ।
तस्मिन्नेतदपचितं धनं ददाति ।
अपचिता एवापचितं धनं ददानीति ।
स्तोममेव तद्रूपेण समर्धयन्ति १०३

अथैतावभिभूश्च विनुत्तिश्च ।
देवासुरा अस्पर्धन्त ।
ते देवा अकामयन्ताभीमानसुरान्भवेमेति ।
त एततभिभुवं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
तेनासुरानभ्यभवन् ।
यदभ्यभवंस्तदभिभुवोऽभिभूत्वम् ।
अभि ह वै द्विषन्तं भ्रातृव्यं भवति य एवं वेद ।

तस्य त्रिवृतावभितो भवतः ।
ब्रह्म वै त्रिवृत् ।
ब्रह्मणा वा एनांस्तदभ्यभवन् ।
ब्रह्मणैव द्विषन्तं भ्रातृव्यमभिभवति य एवं वेद ।
ते जितास्त्रस्त्रिंशमेव पितरं प्रजापतिं प्रापद्यन्त ।
यथा ज्येष्ठायां वरिष्ठायां पुरि परियतेरंस्तथा तानकामयन्तात
एनान्विनुदेमहीति ।
त एतं विनुत्तिं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
तत एनान्व्यनुदन्त ।
यद्व्यनुदन्त तद्विनुत्तेर्विनुत्तित्वम् ।
वि ह वै द्विषन्तं भ्रातृव्यं नुदते य एवं वेद ।
तस्य त्रिवृतौ मध्ये भवतः ।
ब्रह्म वै त्रिवृत् ।
ब्रह्मणा वा एनांस्तद्व्यनुदन्त ।
ब्रह्मणैव द्विषन्तं भ्रातृव्यं विनुदते य एवं वेद १०४

अथो आहुरग्निरेवैष यत्त्रिवृत्स्तोमः ।
तद्यथा भ्रमलान्संपन्नानग्निनाभ्यौषेदेवमेवैनांस्तत्त्रिवृता अग्निना स्तोमेन
त्रयस्त्रिंशाभ्यामुभयत उपमार्याभ्यौषन् ।
ते विपलय्येमामुपासर्पन्निति ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
अथो आहुः पुरोधाकाम एवैनेन यजेत यदभिभूरिति ।
तस्य त्रिवृतावभितो भवतस्त्रयस्त्रिंशौ मध्ये ।
ब्रह्म वै त्रिवृत्क्षत्रं त्रयस्त्रिंशः ।
ब्रह्मणैव तदुभयतः क्षत्रं परिगृह्णाति ।
यदो वै ब्रह्मणा क्षत्रं परिगृह्णात्यथ स तस्य पुरोधां गच्छति ।
गच्छति पुरोधां पुर एनं दधते ।

अथो आहुरन्तस्थाकाम एवैनेन यजेत यद्विनुत्तिरिति ।
तस्य त्रिवृत्तौ मध्ये भवतस्त्रयस्त्रिंशावभितः ।
ब्रह्म वै त्रिवृत्क्षत्रं त्रयस्त्रिंशः ।
क्षत्रेणैव तदुभयतो ब्रह्म परिगृह्णाति ।
यदो वै क्षत्रेण ब्रह्म परिगृह्णात्यथ स तस्यान्तस्थां तिष्ठति ।
तिष्ठत्यन्तस्थां नान्तस्थायां जीयते ।
अथो आहू राजानौ हेद्वा एतौ स्तोमौ स्तोमराजाविति १०५

तस्य वा एतस्याभिभुवस्त्रिवृतावभितो भवतस्त्रयस्त्रिंशौ मध्ये ।
तयोष्षट्षष्टि स्तोत्र्याः ।
ततो याष्षष्टिरासन्दी सा ।
अथ याश्चतस्त्र आसन्दीपादास्ते ।
अथ ये द्वे यजमान एवैष द्विपादेतस्यां राजासन्द्यामध्यूढः ।
गच्छति राज्यं य एवं वेद ।
यद्यस्मिँल्लोके नाथ वा अमुष्मिन् ।
अथो आहुर्यस्य द्वावेतौ त्रिवृतौ मध्ये मध्ये सा हेद्वा अप्यासन्दीति ।
मध्ये विनतेव वा आसन्दी ।
मध्ये विनत इवैष ।
सा ह वै सुषिमत्तरा या मध्ये विनता ।
गच्छति राज्यं य एवं वेद यद्यस्मिँल्लोके नाथ वा अमुष्मिन् ।
अथो आहुः पुनरसौ हेद्वा एतौ यज्ञक्रतू इति ।
षड्वा एतयोरिति ऊर्ध्वा स्तोमा उद्यन्ति ।
षडमुतोऽर्वाञ्चष्षड्भिरेवेते ऊर्ध्वं स्वर्गं लोकं गच्छति
प्रत्येवामुतष्षड्भिरवरोहति गच्छति स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठति ।
अथो ह वेद योऽसावासं सोऽयमस्मीति पुनर्हैवास्मिँल्लोक आजायते ।
अथो आहु स्वर्गकाम इद्य आभ्यामपियजेतेति १०६

तयोर्वा एतयोस्सह त्रिवृतौ सह पञ्चदशौ सह सप्तदशौ सहैकविंशौ सह त्रिणवौ सह त्रयस्त्रिंशौ ।
स यथा द्वाभ्यां द्वाभ्यां प्रतितिष्ठन्नियादेवमेवैताभ्यां स्वर्गे लोके प्रतितिष्ठति

।
अथो आहुरन्विष्टीनां हेद्वा एतौ यज्ञक्रतू इति ।
स यस्संवत्सरभृता वासंवत्सरभृता वाग्निना चित्येन यजेत स एताभ्यां यजेत ।
सद्यो हैवास्य संवत्सर ऋतुशो मासशोऽर्धमासशोऽन्विष्टो भवति ।
तद्यत्पृष्ठ्यस्य षडहस्य स्तोमा भवन्त्यृतवो वै पृष्ठानि ।
संवत्सर ऋतवस्तेनर्तुशः ।
अथ यद्द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरस्तेन मासशः ।
अथ यच्चतुर्विंशति स्तुतशस्त्राणि भवन्ति चतुर्विंशत्यर्धमासस्संवत्सरस्तेनार्धमासशः ।
सद्यो हैवास्य संवत्सरोऽन्विष्टो भवति य एवं वेद १०७

अथैष मनुस्तोमः ।
मनुर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय मानवीः प्रजास्सृजेयेति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
ता इमा मानवीः प्रजा असृजत ।
स यः कामयेत बहुः प्रजया पशुभिः प्रजायेय मानवीः प्रजाः सृजेयेति स एतेन यजेत ।
बहुरेव प्रजया पशुभिः प्रजायते मानवीः प्रजास्सृजते ।
तस्य पृष्ठ्यस्य षडहस्य स्तोमा भवन्ति ।
ऋतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सरः प्रजननम् ।
स यः प्रजननं स मा प्रजनयादिति ।
तस्योभये स्तोमा भवन्त्ययुजश्च युग्मन्तश्चैव ।
तद्वै दैव्यं मिथुनं प्रजननं यदुभये स्तोमाः ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।

तस्य व्यतिषक्ता स्तोमा भवन्ति व्यतिषक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते प्रजात्या एव ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्य छन्दोमाः पवमाना भवन्ति ।
पशवो वै छन्दोमाः ।
पशवः प्रजननम् ।
तद्यत्प्रजननं तन्मा प्रजनयादिति ।
तस्य मानवं ब्रह्मसाम भवति ।
ब्रह्म वै ब्रह्मसाम ।
यजमानकामो एष यद्ब्रह्मसाम स्व एव तदायतने यजमानं कामैस्समर्धयन्ति ।
स उक्थ्यो भवति ।
प्रजा वै पशव उक्थानि ।
प्रजा वै पशवः प्रजननम् ।
तद्यत्प्रजननं तन्मा प्रजनयादिति १०८

अथो आहुरन्विष्टीनां हेद्वा एष एको यज्ञक्रतुरिति ।
स यस्संवत्सरभृता वासंवत्सरभृता वाग्निना चित्येन यजेत स एतेन यजेत ।
सद्यो हैवास्य संवत्सर ऋतुशोऽर्धमासशो मासशो रात्रिशोऽन्विष्टो भवति ।
तद्यत्पृष्ठ्यस्य षडहस्य स्तोमा भवन्त्यृतवो वै पृष्ठानि संवत्सर ऋतवस्तेनर्तुशः ।
अथ यत्पञ्चदश स्तोत्राणि भवन्ति पञ्चदश वार्धमासस्य रात्रयस्तेनार्धमासशः ।
अथ यत्त्रिंशत्स्तुतशस्त्राणि भवन्ति त्रिंशन्मासस्य रात्रयस्तेन मासशः ।
अथ यत्त्रीणि षष्टिशतानि स्तोत्रिया भवन्ति तावतीः संवत्सरस्य रात्रयस्तेन रात्रिशः ।
सद्यो हैवास्य संवत्सरोऽन्विष्टो भवति य एवं वेद ।

ताः प्रजन्याकामयत स्वर्गं लोकं गच्छेयमिति ।
स एतमुत्तरं मनुस्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
तस्य पृष्ठ्यस्य षडहस्य स्तोमा भवन्त्यृतवो वै पृष्ठानि ।
संवत्सर ऋृतवः ।
संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्योर्ध्वा स्तोमा भवन्त्यूर्ध्वो वै स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्योभे बृहद्रथन्तरे सामनी भवत स्वर्ग्ये स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य छन्दोमाः पवमाना भवन्ति पशवो वै छन्दोमाः ।
पशव स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य पञ्चविंशं ब्रह्मसाम भवति ।
अन्नं वै पञ्चविंशम् ।
यजमानकामो वा एष यद्ब्रह्मसाम ।
स्व एव तदायतने यजमानमन्नाद्येन समर्धयन्ति ।
स उक्थ्यो भवति प्रजा वै पशव उक्थानि ।
प्रजा वै पशव स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै १०९

अथो आहुरन्विष्टीनां हेद्वा एष एको यज्ञक्रतुरिति ।
तत एव रात्रिमुपयन्ति ।
अतिरात्रेण वै देवा ऊर्ध्वा स्वर्गं लोकमायन् ।
ते स्वर्गं लोकं गत्वा सार्धमेवाव्यवसिता आसत ।
दिशोऽप्रजानानास्ते अकामयन्त दिशः प्रजानीयामेति ।
अहोरात्रयोर्ह वै परस्तात्स्वर्गो लोकः ।
त एतान्युपरिष्टाद्रात्रेश्चत्वारि स्तोत्राण्यपश्यन् ।
तैरस्तुवत ।
तैरेव स्तुत्वा दिशः प्राजानन् ।
ततो वै ते यत्र यत्र स्वर्गस्य लोकस्याकामयन्त तत्तद्व्यवास्यन् ।
यत्र यत्र ह वै स्वर्गस्य लोकस्य कामयते तत्तद्व्यवस्यति य एवं वेदेति ह
स्माह जानश्रुतेयः ।

अथ ह स्माह वैतहव्यः ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टाः प्राद्रवन् ।
तानग्निष्टोमेनाविवारयिषत ।
ते तदत्याद्रवन् ।
तानुक्थ्येनाविवारयिषत ।
ते तदत्याद्रवन् ।
तान्षोडशिनाविवारयिषत ।
ते तदत्येवाद्रवन् ।
तान्पर्यायैः पर्यायमैत् ।
यत्पर्यायैः पर्यायमैत्तत्पर्यायाणां पर्यायत्वम् ।
तानाश्विनेन क्रतुना पर्यगृह्णात् ।
तेषां परिगृहीतानां यथा क्षुद्रा मत्स्या अक्षोरन्दयतिशीयेरन्नेवमेव ये क्षुद्राः
पशव आसुस्तेऽतिशेदुः ।
तानकामयताप्त्वैनानात्मन्यच्छेयमिति ।
स एतान्युपरिष्टाद्रात्रेश्चत्वारि स्तोत्राण्यपश्यत् ।
तैरस्तुत ।
तैरेवैनानाप्त्वात्मन्ययच्छत् ।
यदाप्त्वात्मन्ययच्छत्तस्मादप्तोर्यामः ।
यद्वेवाप्तुश इव सोमस्य प्रभावयन्नन्वेतस्मादप्तोर्यामः ११०

ता द्वाषष्टि स्तोत्रियास्संपद्यन्ते ।
ततो याष्षष्टिस्सा विराट् ।
पशवो विराट् ।
अथ ये द्वे यजमान एवैष द्विपात्परस्तात्पर्यूढः ।
पशूनां गुप्त्यै पशूनामपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
अथो आहुरेकमेवैतत्स्तोत्रं सत्तच्चतुर्धा विहृत्य स्तुयुष्षड्भिरेव होत्रे
स्तुयुष्षड्भिर्मैत्रावरुणाय षड्भिर्ब्राह्मणाच्छंसिने षड्भिरच्छावाकाय ।
तदु होतैवानुशंसेदिति ।

ताश्चतुर्विंशति स्तोत्र्यास्संपद्यन्ते ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजापतिः ।
प्रजापतिरेवैष परस्तात्पर्यूढः ।
पशूनां गुप्त्यै पशूनामपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
तदु वा आहुस्त्रिवृत्पञ्चदशं सप्तदशमेकविंशमित्येवैतानि स्तोत्राणि स्युः ।
एकविंशं वा अनु सर्वे यज्ञक्रतवस्संतिष्ठन्ते ।
अथो एष वाव दृढः प्रतिष्ठित स्तोमो यदेकविंशः ।
तस्मादेकविंश एव स्तोमोऽन्ततः कार्य इति ।
तदाहुः पृष्ठरूपैरेवान्वियुरिति १११

अभि त्वा वृषभा सुत इत्यार्षभम् ।
अभीति रथन्तरस्य रूपम् ।
तेन रथन्तरस्य रूपान्न यन्ति ।
यदद्य कच्च वृत्रहन्निति शाकलं हिंकारवद्वामदेव्यस्य रूपम् ।
तेन वामदेव्यस्य रूपान्न यन्ति ।
तमिन्द्रं वाजयामसीत्येदावसुनिधनं बहिर्निधनं बृहतो रूपम् ।
तेन बृहतो रूपान्न यन्त्यथो पशवो वै वसु पशूनामेवावरुद्ध्यै ।
अथो हैनांस्तदिदं वस्वित्येवाप्त्वोपेयायेदं विष्णुर्विचक्रम इतीळानां संक्षारः
पशवो वा इळानां संक्षारः पशूनामेवावरुद्ध्यै ।
एतद्ध वा एनांस्तन्निजुह्व एहीळा एहीळा इति पशवो वा इळा
तस्मादेतान्यतिरिक्तोक्थानि कार्याणीति ।
तदु होवाच ताण्ड्यः प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
सोऽग्निमब्रवीदेतान्मे वारयस्वेति ।
तान्स जराबोधीयेन नावारयत ।
स इन्द्रमब्रवीदेतान्मे वारयस्येति ।
तान्स सत्रासाहीयेन नावारयत ।
स ईशानं देवमब्रवीदेतान्मे वारयस्वेति ।

तान्स मार्गीयवेण नैवावारयत ।
स विष्णुमब्रवीदेतान्मे वारयस्वेति ।
तान्स वैष्णवीषु वारवन्तीयेनैवावारयत ।
यदवारयत तद्वारवन्तीयस्य वारवन्तीयत्वम् ।
तस्मादेतान्यतिरिक्तोक्थानि कार्याण्येवेति ११२

अथैष गोसवः ।
स्वर्गकामो हैतेन यजेत ।
स वा एष षट्त्रिंशो भवति ।
षट्त्रिंशदक्षरा वै बृहती ।
बृहती स्वर्गो लोकः साम्राज्यं ।
बृहत्यामेव तत्स्वर्गे लोके साम्राज्ये प्रतितिष्ठन्तो यन्ति ।
बृहत्यु ह वा इमान्सर्वाँल्लोकानक्षरैर्व्याप्नोति दशभिरेवाक्षरैरिमं लोकं व्याप्नोति दशभिरन्तरिक्षं दशभिरमुं चतुर्भिर्दिशो द्वाभ्यामहोरात्रे ।
सा येमांल्लोकान्व्याप्नोति तयेमांल्लोकान्व्याप्नवानीति ।
तस्य स्तोत्रं स्तोत्रं चतुरश्चतुरस्त्रिवृतोऽभिसंपद्यते ।
त्रिवृतं वा अन्ये स्तोमा अभिसंपद्यन्ते त्रिवृत्स्वर्गं लोकम् ।
स यथा क्षिप्राश्वेन चतुर्युजा यत्र जिगमिषेत्तद्गच्छेदेवमेवैतेन स्वर्गं लोकं गच्छति ।
तस्योभे बृहद्रथन्तरे सामनी भवत स्वर्ग्ये स्वर्गस्य लोकस्य समष्ट्यै ।
स उक्थ्यो भवति प्रजा वै पशव उक्थानि ।
प्रजा वै पशव स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य द्वादश सहस्राणि दक्षिणा भवन्ति द्वादश मासास्संवत्सरस्संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य व्रतम् ।
उप मातरमियादुप स्वसारमुप सगोत्राम् ।
उपाह्वर्योदकमाचामेदुपाह्वर्य तृणान्याछिन्द्यात् ।
यत्र यत्रैनं विष्ठा विन्देत्तत्तद्वितिष्ठेत ।
अनडहो ह लोकं जयति ।
तेन हैतेन जनको वैदेहो इयक्षां चक्रे ।

तमु ह ब्राह्मणा अभितो निषेदुः ।
स ह पप्रच्छ क स्तोम इति ।
स होवाच सुदक्षिणः क्षैमिर्नायं त्रिवृदेवाहुरिति ।
तस्य किं व्रतं का दक्षिणा इति ।
तस्मा उ हैतत्प्रोवाच ।
स होवाच उदेवास्य दक्षिणा आशंसे व्रतं त्वेवास्य नोदाशंस इति ।
तेनो ह स नोपदधर्ष यष्टुम् ।
तेनो ह पुण्यकेशो यौधेनिरीजे शैब्यो राजा ।
तं ह सभायामेव विष्ठा विवेद ।
स ह तदेवोदावृणान उवाच स्थविरयज्ञो वाव किलायमास ।
स्थविर एवानेन यज्ञेन यजेत ।
स्थविरस्य ह्येवेदं सर्वमनुज्ञातमिति ।
स हैष स्थविरयज्ञ एव ।
तेन हैतेनोत्तरवयस्ये व यजेत ११३

अथैष विवधः ।
पशुकामो हैतेन यजेत ।
स वा एष षट्च पङ्क्तीरभिसंपद्यते दश च स्तोत्र्याः ।
ततो याष्षट्पङ्क्तयः पशवस्ते ।
अथ या दश स्तोत्र्याः पशूनामेव स दोहः ।
पय एवैषां तत् ।
ते उ एव द्वे पञ्च पञ्च पङ्क्तिन्यौ पङ्क्त्यौ संपद्येते ।
त उ ते पशव एव ।
तस्य सविंशं प्रातस्सवनं भवति सदशं माध्यंदिनं सवनं सविंशं तृतीयसवनम् ।
तद्यथा ह वै विवधस्योभयतस्सगुरु सविवधतायै तादृक्तद्यत्सदशं माध्यंदिनं सवनं भवति ।
सविंशे अभितः पूर्वार्धं च जघनार्धं च भूयिष्ठं भाजयन्ति ।
तस्मात्पशवः पूर्वार्धेन च जघनार्धेन च भूयिष्ठं भाजयन्ति ।
वहन्ति पूर्वार्धेन दुह्रे च जघनार्धेन प्र च जनयन्ति ।

उभयं धेनुपयसं चानडुत्पयसं चावरुन्धे य एवं वेद ।
तस्मिन्नु ह तर्ह्युभे बृहद्रथन्तरे कुर्युर्द्वया उ ह वै पशवो राथन्तरा अन्ये बार्हता अन्ये ।
ये ह वा अन्यतोदन्ताः पशवस्ते राथन्तरा य उभयतोदन्तास्ते बार्हता उभयेषामेव पशूनामवरुद्ध्यै ।
स उक्थ्यो भवति पशवो वा उक्थानि पशूनामेवावरुद्ध्यै ।
तस्योद्वंशीयमच्छावाकसाम भवति सर्वपृष्ठरूपं पृष्ठानि वै पशवोऽभिपूर्वाणामेव पशूनामवरुद्ध्यै ११४

अथैष सद्यःक्रीः ।
ते वृता नापाक्रामन् ।
त एत्यायाजयन् ।
तेभ्य एतां वाचं वळवां श्वेतां भूतां अश्वाभिधान्यभिहितामानयन्निमां प्रतिगृह्णीतेति ।
तेऽब्रुवञ्श्रेयसीयमस्मन्नो इमामुद्यंस्याम इति ।
सा क्रुद्धा न मा प्रत्यगृह्णन्निति सिंह्युभयतोमुखी भूत्वोर्ध्वोदक्रामत् ।
सोभयान्देवासुरानन्तरातिष्ठद्यं देवानामुपाप्नोद्यं असुराणां तमाददाना ।
तामुपैव देवा अमन्त्रयन्तोपासुराः ।
सा देवानभ्युपावर्तमानाब्रवीत्किं मे तत स्याद्यद्वोऽभ्युपावर्तेयेति ।
पूर्वा त्वाग्नेराहुतिरश्नुवीतेति ।
तामध्वरेऽवाकल्पयन् ।
सैषोत्तरवेदिः ।
तामेतां पूर्वामग्नेराहुतिरश्नुते ११५

धारयन्त्यग्निं व्याधारयन्त्युत्तरवेदिम् ।
एतदेनां तत्पूर्वामग्नेराहुतिरश्नुते ।
अथैतेभ्य एतमादित्या आदित्यमेवाश्वं श्वेतं भूतमश्वाभिधान्यभिहितमानयन्निमम् वै प्रतिगृह्णीतेति ।
तेऽब्रुवञ्श्रेयानु वावायमस्मन्नो वावेममुद्यंस्याम इति ।
तान्देवाश्चर्षयश्चोपसमेत्याब्रुवन्विच्छेत्स्यन्ते वा अदक्षिणा यज्ञाः प्रतिगृह्णीतेति

।
तदेषाभ्यनूच्यते
आदित्या ह जरितरङ्गिरोभ्योऽश्वं दक्षिणामनयंस्
तं ह जरितर्न प्रत्यायंस्तं ह जरितर्न प्रत्यगृह्णंस्
तामु ह जरितः प्रत्यायंस्तामु ह जरितः प्रत्यगृह्णन् । अहा
नेदसन्नपुरोगवाणि यज्ञा नेदसन्नविचेतनासः ११६

आदित्या रुद्रा वसवस्त्वेळत इदं राधः प्रतिगृह्णीह्यङ्गिर
इदं राधो बृहत्पृथु देवा ददतु वो वरम्
तद्वो अस्तु सुचेतनं
युष्मे अस्तु दिवे दिवे प्रत्येव गृभायत
इत्येवैनान्प्रत्यग्राहयन् ।
ततो वा आदित्याः पूर्वे स्वर्गं लोकमागच्छनहीयन्ताङ्गिरसः ।
स यो भ्रातृव्यवान्स्याद्योऽभिचरेद्य स्पर्धेत स एतेन यजेत ।
हीयतेऽस्य पाप्मा भ्रातृव्यो गच्छति स्वर्गं लोकम् ।
यवोर्वरा वेदिर्भवति ।
सा हि पुराकृता भवति ।
यवानामुत्तरवेदिः ।
यवैर्वा आदित्या अङ्गिरसां यज्ञमयुवत ।
यद्यज्ञं यवैरयुवत तद्यवानां यवत्वम् ।
यवैरेव द्विषतो भ्रातृव्यस्य यज्ञं युते ।
खलेवला यूप स्फ्याग्रो भवत्यैन्द्रः ।
विजित्यै सह पशू आलभन्ते समष्ट्यै ।
पुमान्गौस्सोमक्रयणो भवति वीर्यं वै पुमान्वीर्यवन्तोऽसामेति ।
साराडो भवति सेन्द्रत्वाय ।
कुंभ्या वसतीवर्य्यो भवन्ति यः पुरेजानस्तस्य गृहेभ्यः ।
ता हि पुरागृहीता भवन्ति ।
सर्पिष्मन्तमशित्वा निपद्यते ।
यमेवामुं दीक्षणीयमश्नाति स एवास्य सोऽशितो भवति ।
प्रियायै जायाया अन्तरोरू शेतेऽनिपद्यमानः ।

तपस्यमेवास्य तद्धिरण्यं मुख आधाय शेते ।
सत्यं वै हिरण्यम् ।
सत्यमेवास्य तदुदितं भवति ११७

अश्व श्वेतो दक्षिणा भवति स्वर्ग्यो वा अश्व स्वर्गस्यैव लोकस्य समष्ट्यै ।
अश्वरथस्सोमप्रवाको भवति योजनं परमम् ।
एतद्ध वै परमाणामध्वानामवमं यद्योजनमवमानां वा परमम् ।
तस्मिन्दधिदृतिरुपावहितो भवति ।
तस्य यत्सर्पिस्संपतति तदाज्यकुंभेऽवास्यन्ति ।
तद्धि सद्योजमिव द्विक्रोशमित्थं द्विक्रोशमित्थमृत्विजो विनिहिता भवन्ति ।
त एनं प्रातरुपसमेत्य याजयन्ति ।
स जुह्वत्त्रिर्निमीलयति त्रिर्वीक्षते ।
ता एव दीक्षोपसदः ११८

स त्रिवृद्रथन्तरसामा भवति ब्रह्म वै त्रिवृत् ।
ब्रह्म रथन्तरं ब्रह्मणा स्वर्गं लोकं गच्छामेति ।
अथो आहुस्त्रिवृदेव बृहत्साम स्यादिति ।
ब्रह्म वै त्रिवृत्क्षत्रं बृहत् ।
ब्रह्मणा च क्षत्रेण च संयुग्भ्यां स्वर्गं लोकं गच्छामेति ।
तदु वा आहुस्त्रिवृदेव रथन्तसामा स्यात् ।
ब्रह्म वै त्रिवृत् ।
ब्रह्म वै रथन्तरम् ।
ब्रह्म वै स्वर्गस्य लोकस्येशे ।
तस्मिंस्त्रिवृदेव रथन्तरसामा स्यादिति ।
तस्मिन्नाहुरियवन्ति सामानि कार्याण्ययवद्भिर्वै देवा स्वर्गं लोकमगच्छन्नियवद्भि स्वर्गं लोकं गच्छामेति ।
अथो आहुर्यान्येवाग्नियोनीनि सामानि तानि कार्याणि ।
अशृत इव वा एष यत्सद्यःक्रीः ।
अग्निर्वा अशृतस्य श्रपयितेति ।

तदु वा आहुरग्निष्टोमसामान्येव कार्याणीति ।
एतानि वा अग्नियोनीनि यदग्निष्टोमसामानि ।
तस्मादग्निष्टोमसामान्येव कार्याणीति ।
अथैष क्षिप्रात्क्षेपीयान्क्षिप्रात्क्षेपीय स्वर्गं लोकं गच्छामेति ।
तस्य द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरस्संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ११९

अथैतावनुक्रियौ ।
आदित्याश्च वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त ।
त आदित्याः पूर्वे स्वर्गं लोकमगच्छन् ।
तेऽङ्गिरसोऽकामयन्त वयमपि तं लोकं गच्छेम यमादित्या अग्मन्निति ।
त एतं यज्ञमपश्यन् ।
तमेव सन्तं परोक्षेणैव तमाहरन् ।
तेनायजन्त ।
ते वळवामेव श्वेतां दक्षिणां नीत्वादित्यैस्सलोका अभवन् ।
ते हैत आदित्याश्चाङ्गिरसश्च सलोकाः ।
सलोको ह वा आदित्यैश्चाङ्गिरोभिश्च भवति य एवं वेद ।
अथो आहुर्यस्मादेव श्रेयान्भ्रातृव्य स्यात्सोऽनेन यजेतेति ।
पूर्वप्रेत इव ह वा एष य श्रेयान् ।
पूर्वप्रेतानिव वा एतेन ते तानाप्नुवन् ।
आप्त्वा श्रेयांसं वसीयानात्मना भवति १२०

गोधूमोर्वरा वेदिर्भवति ।
सा हि पुराकृता भवति ।
गोधूमानामुत्तरवेदिः परोक्षतायै ।
खलेवला यूप स्फ्याग्रो भवत्यैन्द्रः ।
विजित्यै सह पशू आलभन्ते समष्ट्यै ।
स्त्रीगौस्सोमक्रयणी भवति परोक्षतायै ।

कुंभ्या वसतीवर्यो भवन्ति यः पुरेजानस्तस्य गृहेभ्यः ।
ता हि पुरागृहीता भवन्ति ।
सर्पिष्मन्तमशित्वा निपद्यते ।
यमेवामुं दीक्षणीयमश्नाति स एवास्य सोऽशितो भवति ।
प्रियायै जायाया अन्तरोरू शेतेऽनिपद्यमानः ।
तपस्यमेवास्य तद्धिरण्यं मुख आधाय शेते ।
सत्यं वै हिरण्यम् ।
सत्यमेवास्य तदुदितं भवति ।
रजतं भवति परोक्षतायै ।
वळवा श्वेता दक्षिणा भवति परोक्षतायै ।
अश्वतरीरथस्सोमप्रवाको भवति त्रैपदं परमं परोक्षतायै ।
तस्मिन्दधिदृतिरुपावहितो भवति ।
तस्य यत्सर्पिस्संपतति तदाज्यकुंभेऽवास्यन्ति ।
तद्धि सद्योजमिवाध्यर्धक्रोशेऽध्यर्धक्रोश ऋत्विजो विनिहिता भवन्ति ।
त एनं प्रातरुपसमेत्य याजयन्ति ।
स जुह्वत्त्रिर्निमीलयति त्रिर्वीक्षते ।
ता एव दीक्षोपसदः ।
स वा एषोऽष्टादशपवमानो भवति ।
परोक्षं त्रिवृत् ।
अग्निष्टोमयज्ञा वा आदित्या उक्थ्ययज्ञा अङ्गिरसः ।
स एष उक्थ्यो निदानेन सन्नग्निष्टोमः प्रत्याह्रियते क्षिप्रतायै ।
अथैष चतुर्विंशपवमानो भवति ।
परोक्षं त्रिवृदु एव ।
स वा एषोऽतिरात्रो निदानेन सन्षोडशीमान्वा अग्निष्टोमः प्रत्याह्रियते
क्षिप्रतायै १२१

अथैष परिक्रीः ।
खण्डकश्च हौद्धारिः केशी च दार्भ्यः पाञ्चालेषु पस्पृधाते ।
स ह खण्डकः केशिनमभिप्रजिघाय ।
सद्यःक्रिया वै स्यो यद्यत इति ।

अथ हैतेन प्रोच्य भ्रातृव्याय यजन्ते ।
तस्य हैते ब्राह्मणा आसुरहीना आश्वत्थिः केशी सात्यकामिर्गङ्गिना राहक्षितो लुशाकपिः खार्गलिरिति ।
ते हैनमुपसमेयुः ।
स ह ध्यायन्निषसाद ।
तं होचुः किं नु राजन्यो ध्यायतीति ।
स होवाच न हि मे ध्येयम् ।
यूयं ब्राह्मणा अनुब्रूथादित्याश्चाङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त ।
त आदित्याः पूर्वे स्वर्गं लोकमगच्छन्नहीयन्ताङ्गिरस इति ।
स य एतेन प्रोच्य भ्रातृव्याय यजते स एव भवति परास्य द्विषन्भ्रातृव्यो भवति १२२

तमु वै मायं खण्डिकोऽभिप्राहैषीत्सयःक्रिया वै स्यो यद्दयत इति ।
स एव नूनं भविष्यति परा स्यो भविष्यतीत्येवैतद्ध्यायामीति ।
तं होचुः परिक्रीरिति वा अयं यज्ञक्रतुरस्ति ।
तेन त्वा याजयामेति ।
तथेति ।
तेन हैनं याजयां चक्रुः ।
तस्य वा एतस्य तृचस्य तृचस्यैकैकया स्तुवन्ति ।
ब्रह्म वै प्रथमा स्तोत्रिया क्षत्रं द्वितीया विट्तृतीया ।
अवलम्ब उ ह वै ब्रह्मणः क्षत्रं च विट्च ।
क्षत्रं चो ह वै विशं चानु भ्रातृव्यलोकः ।
स ये द्वे अवचिच्छेद भ्रातृव्यलोकमेव तदवचिच्छेद ।
आत्मा वै प्रथमा स्तोत्रिया जाया द्वितीया प्रजा तृतीया ।
अवलम्ब उ ह वा आत्मनो जाया च प्रजा च ।
जायां चो ह वै प्रजां चानु भ्रातृव्यलोकः ।
स ये द्वे अवचिच्छेद भ्रातृव्यलोकमेव तदवचिच्छेद १२३

ततो वै स खण्डिकं निःसारयां चकार ।
ततो वै केशी दार्भ्योऽभवत्परा खण्डिकः ।

भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
तस्य तिसृषु बहिष्पवमानं भवति चतसृष्वाज्यानि पञ्चसु माध्यंदिनः
पवमानश्चतसृषु पृष्ठानि सप्तस्वार्भवः पवमान एकस्यामग्निष्टोमसाम ।
ताश्चतुर्विंशति स्तोत्र्यास्संपद्यन्ते ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरादेव तत्खण्डिकमौद्धारिं केशी दार्भ्यो नुनुदे संवत्सरादन्तरियाय ।
संवत्सरादेव द्विषन्तं भ्रातृव्यं नुदते संवत्सरादन्तरेति य एवं वेद १२४

अथैष एकत्रिकः ।
प्रजननकामो हैतेन यजेत ।
प्रजापतिर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेयेमां व्यष्टिं व्यश्नुवीयेति
।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
स षद्मत केन स्तुवीयेति ।
स आत्मानमपश्यत् ।
तेनास्तुत स षद्मत केन न्वेव स्तुवीयेति ।
स प्राणापानव्यानानपश्यत् ।
तैरस्तुत ।
स आत्मना स प्राणापानव्यानैस्स आत्मना स प्राणापानव्यानैस्स एवमेव
विपर्यासं यज्ञं समस्थापयत् ।
ततो वै स बहुः प्रजया पशुभिः प्राजायतेमां व्यष्टिं व्यश्नुते य एवं वेद
१२५

तेन हैतेनोदरश्शाण्डिल्य इयद्मां चक्रे ।
तस्य ह मनस्येवास एकत्रिकेण यजेयेति ।
न ह तु कस्मै चनोवाच ।
अथ हास्य जाया गन्धर्वगृहीतास ।
तां हायं गन्धर्व उपन्येयाय ।

तां होवाचैकत्रिक इति वै यज्ञक्रतुर्दारुण इवास्ति ।
तेन वै ते पतिर्यक्ष्यत इति ।
सा हेयं पतिं पप्रच्छैकत्रिक इति वै यज्ञक्रतुर्दारुण इवास्ति ।
सत्यं त्वं तेन यक्ष्यसा३ इति ।
स होवाच यदहमिदं नैव कस्मै चनावोचं मनस्येव मेऽभूत्कस्त इदमवो-
चदिति ।
यो मायं गन्धर्व उपन्यैतीति ।
तं वै त्वं पृच्छतादिति होवाच ।
यष्टव्यं तेना३ न यष्टव्या३मिति ।
तं ह पप्रच्छ यष्टव्यं तेना३ न यष्टव्या३मिति ।
स होवाच यथा वा एनं स वेदैवमेनं वयं विद्मः ।
यस्त्वस्येत्थं स्तोत्रं विद्यात्स एनेन यजेतेति यथैनेनादः प्रजापतिस्तुष्टुवे ।
तेनो ह स नोपदधर्ष यष्टुम् १२६

शश्वद्धोदरश्शाण्डिल्यस्तेनैव पणाय्यतां जगाम यदस्य मनस्येवासैकत्रिकेण
यजेयेति ।
स वा एषोऽन्यतर इव यज्ञक्रतुस्सुपणाय्यो वैनेनेष्ट्वा भवति सुपापीयान्वा ।
तस्यैकस्यां बहिष्पवमानं संपद्यते उपास्मै गायता नर इति ।
तिसृषु माध्यंदिनः पवमानो गायत्रमेव गायत्र्यामुत्सेधस्सतोबृहत्यां सैवेळा
तन्निधनमाउशनमेव त्रिष्टुभि ।
एतस्यामार्भवः पवमानोऽया रुचा हरिण्या पुनान इति ।
एतस्यामतिच्छन्दसि गायत्रपार्श्वम् ।
स एव स्वरस्तन्निधनम् ।
सप्तपदा भवति ।
सप्त वै छन्दांसि ।
अतिच्छन्दा वै सर्वाण् छन्दांस्यभिभवति ।
तदस्य तत्सर्वाण्येव छन्दांस्युपेतानि भवन्ति ।
तदाहुः पञ्चनिधनमेव वामदेव्यं कार्यम् ।
पञ्चछन्दा आर्भवः पवमानस्सप्तसामा ।
यदह पञ्चनिधनानि तेन छन्दांसि प्रति विभवति ।

यदु वै सप्तपदा तेन सामान्यत्रेव विभवतीति ।
तदु वा आहुर्गायत्रपार्श्वमेव कार्यम् ।
स एव स्वरस्तन्निधनम् ।
आत्मा वै स्वरः प्रजा निधनम् ।
एतदेव समृद्धतरमिव यद्गायत्रपार्श्वम् ।
तस्माद्गायत्रपार्श्वमेव कार्यमिति ।
ताश्चतुर्विंशति स्तोत्र्यास्संपद्यन्ते ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननम् ।
स यः प्रजननं स मा प्रजनयादिति १२७

अथैष बृहस्पतिसवः ।
प्रजापतिः प्रजास्ससृजानस्स व्यस्रंसत ।
सोऽन्नं भूतोऽशयत् ।
तस्य सर्वे देवा ममत्विन आसन्मम ममेति ।
तेऽब्रुवन्वीदं भजामहा इति ।
तस्य विभागे न समपादयन् ।
तेऽब्रुवनाजिमस्यायामेति ।
त आजिमायन् ।
स बृहस्पतिराजिसरणं पन्थानमपश्यत् ।
स पूर्वः परीत्य रथेन वृत्वातिष्ठत् ।
ते देवास्तन्नाविन्दन्येनात्यसरिष्यन् ।
शश्वद्ध यावानेव रथयानाय तावानाजिरास ।
ततो वै स तमाजिमुदजयत् ।
यद्बृहस्पतिरुदजयत्तस्माद्बृहस्पतिसवः ।
तमाजिमुज्जिगिवांसमिन्द्रोऽब्रवीत्पुरस्त्वा दधे ।
मामनेन यज्ञेन याजयेति ।
तथेति ।
तं पुरोऽधत्त ।
तेनैनमयाजयत् ।

ततो वा इन्द्रस्सर्वेषां देवानां श्रैष्ठ्यमगच्छत् ।
गच्छति स्वानां श्रैष्ठ्यं य एवं वेद ।
स वा एष द्वयोरेव यज्ञो ब्राह्मणस्य चैव राजन्यस्य च ।
यद्बृहसोऽग्रतिरुदजयत्तेन ब्राह्मणस्य ।
यदिन्द्रोऽयजत तेनो राजन्यस्य ।
स उ हेन्द्रस्यैवैकस्य पुरोहित आस नेतरेषां देवानाम् ।
सोऽकामयत सर्वेषां देवानां पुरोधां गच्छेयमिति ।
स एतेनैव यज्ञेनायजत ।
ततो वै स सर्वेषां देवानां पुरोधामगच्छत् ।
बृहस्पतिर्वै देवानां पुरोहितः १२८

स त्रिवृद्रथन्तरसामा भवति ।
ब्रह्म वै त्रिवृद्ब्रह्म रथन्तरम् ।
ब्रह्मणा वाव स तद्ब्रह्मवर्चसमार्ध्नोत् ।
ब्रह्मणैव ब्रह्मवर्चसमृध्नोति य एवं वेद ।
तस्य त्रयस्त्रिंशद्दक्षिणा भवन्ति ।
त्रयस्त्रिंशद्वै देवताः ।
देवतानामेव पुरोधामाश्नुत ।
अश्वश्चतुस्त्रिंशः ।
प्रजापतेर्वा एतद्रूपं यदश्वः ।
सप्रजापतिकानामेव तेन देवतानां पुरोधामाश्नुत ।
तस्यैता यथापूर्वमनुसवनं दक्षिणा ददात्यष्टौ प्रातस्सवने ददात्येकादश माध्यंदिने सवने द्वादश तृतीयसवनेऽनूबंध्यायामेकामुदवसानीयायामेकाम् ।
अनुसवनमश्वं तृतीयशः ।
तद्या अष्टौ प्रातस्सवने ददात्यष्टौ वसवो वसूनामेव पुरोधामाश्नुत ।
अथ या एकादश माध्यंदिने सवनेकादश रुद्रा रुद्राणामेव तेन पुरोधामाश्नुत ।
अथ या द्वादश तृतीयसवने द्वादशादित्या आदित्यानामेव तेन पुरोधामाश्नुत ।

अथ यामनूबंध्यायामेकां मित्रावरुणयोरेव तेन पुरोधामाश्नुत ।
अथ यामुदवसानीयायामेकां कर्म कर्म मे दक्षिणावदसदिति ।
अथ यमनुसवनमश्वं तृतीयशः प्रजापतेरेव तेन पुरोधामाश्नुत १२९

तदाहुर्मनसैव प्रातस्सवने दद्यान्मनसा तृतीयसवने माध्यंदिन एव सवने दद्यादिति ।
तदु वा आहुरतीर्थं वै प्रातसवनं दक्षिणानामतीर्थं तृतीयसवनम् ।
माध्यंदिन एव सवने दद्यात् ।
तदेव तीर्थं तदायतनम् ।
नैवेतरयोः सवनयोर्मनसा चन दददाद्रियेतेति ।
ब्रह्मणेऽश्वं ददाति ।
ब्रह्मणो ह्येवैकदक्षिणा ।
तद्यदा माध्यंदिनीयाश्चमसाः प्रतिष्ठेरन्नथ जघनेनाहवनीयं प्राचीनग्रीवं कृष्णाजिनमुपस्तृणीतेति ब्रूयादुदीचीनग्रीवं वा ।
तद्यजमान आस्ते स हुतानां चमसानामुन्मार्ष्टि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रेण बृहस्पतेस्त्वा साम्राज्येन ब्रह्मणाभिषिञ्चामीति ।
मुखं विमार्ष्टि ।
स सोमाभिषिक्तस्तेजस्वी ब्रह्मवर्चसी भवति ।
त्रिरुत्क्रोशन्ति त्रयो वा इमे लोका एष्वेवास्य तल्लोकेषु श्रुतिं दधति १३०

तस्याष्टशतं स्तोत्रिया भवन्ति ।
ततो यच्छतं सा विराट् ।
क्षत्रं विराट् ।
अथ या अष्टौ सा गायत्री ।
तेजो ब्रह्मवर्चसं गायत्री ।
तेज एव तद्ब्रह्मवर्चसं क्षत्रस्य पुरस्ताद्दधाति ।
तस्माद्ब्राह्मणः क्षत्रियस्य पुरोहितः ।
स यः पुरोधाकाम स्यात्स एतेन यजेताश्नुते पुरोधाम् ।
तं हैक एकछन्दसमेव कुर्वन्ति गायत्रमेव सर्वं गायत्रो वै बृहस्पतिः ।

ब्रह्म वै गायत्री ।
ब्रह्म बृहस्पतिर्ब्रह्मणा वा ब्रह्मवर्चसमृध्नवामेति ।
ते ये ह ते तथा कुर्वन्त्यग्निं चैव तेन देवतानामुपाप्नुवन्ति गायत्रीं च छन्द इमं च लोकम् ।
अन्तरिता हैषामितराश्च देवता भवन्तीतराणि च छन्दांसीतरे च देवा इतरे च लोका इतरे च कामाः ।
तस्माद्यथाछन्दसमेव कार्यं सर्वासां देवतानां सर्वेषां छन्दसां सर्वेषां देवानां सर्वेषां लोकानां सर्वेषां कामानामुपाप्त्यै ।
तस्य बृहद्बार्हस्पत्यमादिष्टसामार्भवे पवमाने भवति ।
बृहस्पतिसवो ह्येषः ।
स्तोममेव तद्रूपेण समर्धयन्ति १३१

अथैष इन्द्राग्न्योः कुलायः ।
इन्द्राग्नी वा अकामयेतां सदृशानामेव सतां देवानां श्रेष्ठतां गच्छेव समानेन यज्ञेन समानीमृद्धिमृध्नुयावेति ।
तावेतं यज्ञमपश्यताम् ।
तमाहरताम् ।
तेनायजेताम् ।
ततो वै तौ सदृशानामेव सतां देवानां श्रेष्ठतामगच्छतां समानेन यज्ञेन समानीमृद्धिमार्ध्नुताम् ।
तद्ब्रह्म वा अग्निः ।
क्षत्रमिन्द्रः ।
स वा एष त्रिवृत्पञ्चदशो भवति ।
ब्रह्म वै त्रिवृत् ।
क्षत्रं पञ्चदशः ।
त्रिवृतैवाग्नि श्रेष्ठतामगच्छत्पञ्चदशेनेन्द्रः ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
ब्रह्म वै रथन्तरं क्षत्रं बृहत् ।
रथन्तरेणैवाग्नि श्रेष्ठतामगच्छद्बृहतेन्द्रः ।
तौ यौ ब्राह्मणश्च राजन्यश्च कामयेयातां सदृशानामेव सतां स्वानां श्रेष्ठतां

गच्छेव समानेन यज्ञेन समानीमृद्धिमृध्नुयावेति तावेतेन यजेयाताम् ।
सदृशानामेव सतां स्वानां श्रेष्ठतां गच्छतस्समानेन यज्ञेन समानीमृद्धिमृध्नुतः
।
त्रिवृतैव ब्राह्मण श्रेष्ठतां गच्छति पञ्चदशेन राजन्यः ।
रथन्तरेणैव ब्राह्मण श्रेष्ठतां गच्छति बृहता राजन्यः तद्यदेतानि
त्रिवृत्पञ्चदशस्तोत्राणि व्यतिषक्तानि भवन्ति - १३२

- तस्मादिन्द्राग्नयोः कुलायः ।
तदाहुस्सत्रे तद्व्यतिषक्तं यत्त्रिवृत्पञ्चदशम् ।
त्रिवृत्पञ्चदशमित्येवैतानि स्तोत्राणि व्यतिषक्तानि भवन्ति ।
षडेव त्रिवृन्ति स्तोत्राणि स्युः षट्पञ्चदशानीति ।
यान्येवार्वाञ्चि माध्यंदिनात्तान्येव त्रिवृन्ति स्युर्यान्यूर्ध्वं तानि पञ्चदशानीति ।
पञ्चदशस्त्वेव माध्यंदिनः स्यात्त्रिवृद्धोतुः पृष्ठम् ।
तस्मिन्पञ्चदशे माध्यम्दिने रथन्तरमवकल्पयन्ति ।
ब्रह्म वै रथन्तरं क्षत्रं पञ्चदशः ।
ब्रह्मैव तत्क्षत्रे प्रतिष्ठापयन्ति ।
अथ यत्त्रिवृद्धोतुः पृष्ठं भवति ब्रह्म वै त्रिवृत्क्षत्रं बृहत्क्षत्रमेव
तद्ब्रह्मन्प्रतिष्ठापयन्ति ।
तावेतावेवमन्योऽन्यस्मिन्प्रतिष्ठाय श्रेष्ठतामगच्छताम् ।
तयोर्हैतयोरजय्यमेव ।
अजय्यां ह वै कीर्तिमजय्यां श्रियमजय्यं स्वर्गं लोकं जयति य एवं वेद ।
यद्वेवैते त्रिवृत्पञ्चदशे स्तोत्रे व्यतिषक्ते भवतो व्यतिषक्ताद्वै मिथुनात्प्रजाः
पशवः प्रजायन्ते प्रजात्या एव ।
अथो प्राणा वै स्तोमा व्यतिषक्ता वा इमे प्राणा अनिर्मार्गाय ।
तस्मात्त्रिवृत्पञ्चदशान्येवैतानि स्तोत्राणि व्यतिषक्तानि स्युरिति ।
तस्यैन्द्राग्नं सामादिष्टसाम माध्यंदिने पवमाने भवति ।
इन्द्राग्नयोर्ह्येष यज्ञः ।
स्तोममेव तद्रूपेण समर्धयन्ति १३३

अथैषोऽग्निष्टुत् ।

इन्द्रं वै भूतानि पर्यचक्षत त्रिशीर्षाणं त्वाष्ट्रमवधीद्यतीन्सालावृकेभ्यः प्रादादरुर्मुखानवधीद्बृहस्पतेः प्रत्यवधीत्संधां संहितं अतीत्य नमुचेरासुरस्य शिरः प्राच्छैत्सीदित्येतेभ्यो देवकिल्बिषेभ्यस् ।
स हारण्य एव चचारानभ्यवयन्देवान् ।
स उ ह देवानुवाच याजयत मेति ।
नेति होचुः ।
एता वै त्वया संधा अतीता एतानि देवकिल्बिषाणि कृतानि न त्वा याजयिष्याम इति ।
अथो हास्याग्निरेव सखितम इवास देवेषु ।
स उ हाग्निमुवाच त्वं मा यजयेति ।
तथेति होवाच ।
स वै नु तं देवेष्विच्छामि येन त्वा सह याजयेयमिति ।
स ह तं देवेषु न विवेद येनैनं सहायाजयिष्यत् ।
स होवाच न वै नु तं देवेषु विन्दामि येन त्वा सह याजयेयमिति ।
तं वै मा त्वमेव याजयेति ।
तथेति ।
सोऽग्निरात्मन एवाध्येतमग्निष्टुतमतनुत ।
तेनैनमयाजयत् ।
तस्य सद्यस्सर्वं पाप्मानं निरदहत् ।
स यथाहिरहिच्छव्यै निर्मुच्येत यथा मुञ्जादिषीकां विवृहेदेवमेव सर्वस्मात्पाप्मनो निरमुच्यत ।
स एषोऽपहतपाप्मा तपत्येष ह वा इन्द्रः ।
स य उक्तोक्त स्याद्योऽभ्याख्यायेत स एतेन यजेत ।
सद्यो हैवास्य सर्वं पाप्मानं निर्दहति ।
स यथाहिरहिच्छव्यै निर्मुच्येत यथा मुञ्जादिषीकां विवृहेदेवमेव सर्वस्मात्पाप्मनो निर्मुच्यते १३४

स यो मुखेन पापं कृत्वा मन्येत त्रिवृताग्निष्टुता यजेत ।
एष ह वै मुखेन पापं करोति योऽवाद्यं वदति ।
मुखं वै त्रिवृत्स्तोमानाम् ।

मुखादेव तेन पाप्मानमपघ्नते ।
अथ यो बाहुभ्यां पापं कृत्वा मन्येत पञ्चदशेनाग्निष्टुता यजेत ।
एष ह वै बाहुभ्यां पापं करोति योऽनिघात्यस्य निहन्ति ।
बाहू वै पञ्चदश स्तोमानाम् ।
बाहुभ्यामेव तेन पाप्मानमपघ्नते ।
अथ उदरेण पापं कृत्वा मन्येत सप्तदशेनाग्निष्टुतायजेत ।
एष ह वा उदरेण पापं करोति योऽनाश्यान्नस्यान्नमत्ति ।
उदरं वै सप्तदश स्तोमानाम् ।
उदरादेव तेन पाप्मानमपघ्नते ।
अथ यः पद्भ्याम्पापं कृत्वा मन्येत एकविंशेनाग्निष्टुता यजेत ।
एष ह वै पद्भ्यां पापं करोति यो जनमेति ।
प्रतिष्ठा वा एकविंश स्तोमानाम् ।
पद्भ्यामेव तेन पाप्मानमपघ्नते ।
अथो आहुर्य एवायं ज्योतिष्टोमोऽग्निष्टोमस्तेनैव यजेतेति ।
तस्य यत्त्रिवृद्बहिष्पवमानं भवति मुखादेव तेन पाप्मानमपघ्नते ।
अथ यत्पञ्चदशान्याज्यानि भवन्ति पञ्चदशो माध्यंदिनो बाहुभ्यां एव तेन पाप्मानमपघ्नते ।
अथ यत्सप्तदशानि पृष्ठानि भवन्ति सप्तदश आर्भव उदरादेव तेन पाप्मानमपघ्नते ।
अथ यदेकविंशमग्निष्टोमसाम भवति पद्भ्यामेव तेन पाप्मानमपघ्नते १३५

त्रिवृता तेजस्कामो ब्रह्मवर्चसकामोऽग्निष्टुता यजेत पञ्चदशेन वीर्यकामस्सप्तदशेन पशुकामः प्रजननकाम एकविंशेन प्रतिष्ठाकामस्त्रिणवेनौजस्कामस्त्रयस्त्रिंशेन श्रीकामः ।
तदु वा आहुर्वदनमेवैतत्सर्वं य एवायं चतुष्टोमोऽग्निष्टोमः ।
तेनैव यजेतेति ।
अयं वै त्रिवृदयं पञ्चदशोऽयं सप्तदशोऽयमेकविंशः ।
इमान्वै प्राणानग्निरन्वायत्तः ।
स योऽनूचानस्सन्न विरोचेत स एतेन यजेतेति ।
यथा ह वै निष्कश्शमलगृहीत एवं स योऽनूचानस्सन्न विरोचते ।

अग्ना उ वा एतं प्रास्यन्ति यमग्निष्टुता याजयन्ति ।
तद्यथा निष्कं शमलगृहीतमग्नौ प्रास्य तस्यायोघनेन सर्वं शमलं निर्हन्यादेवं हैवास्य सर्वं पाप्मानं निर्घ्नन्ति ।
सोऽपहतपाप्मा तेजस्वी ब्रह्मवर्चसी भवति ।
अथो आहुर्यस्मिन्नेव पशव्ये सति पशवो न रमेरन्स एनेन यजेतेति ।
यथा ह वै जरत्कष एवं स यस्मिन्पशव्ये सति पशवो न रमन्ते ।
तस्य रेवतीष्वग्निष्टोमसाम भवति ।
आपो वै रेवतयः ।
अग्ना उ वा एतं प्रास्यन्ति यमग्निष्टुता याजयन्ति १३६

तद्यथा जरत्कक्षमग्निनोपदीप्य तमद्भिरुपसिञ्चेत्तस्मिन्कल्याण्य ओषधयो जायेरंस्तासु पशवो रमेरन्नेवं हैवास्मिन्सर्वे पशवो रमन्ते ।
तस्याग्न आयूंषि पवस इत्येषाग्निपावमानी प्रतिपद्भवति ।
तदाहुर्वीव वा एतैः प्राणैर्ऋध्यन्ते ये पावमानीभिः प्रतिपद्यन्त इति ।
तद्यदेषाग्निपावमानी प्रतिपद्भवतीति प्राणो वै वायुः प्राणैरेव तत्समृध्यन्ते ।
अग्ने पावक रोचिषेत्यन्नं वै पावकमन्नाद्येनैवैनं तत्समर्धयन्ति ।
अथो वायुर्वै पावकः प्राणो वै वायुरभिपूर्वमेवैनं तत्प्राणैस्समर्धयन्ति ।
अग्निश्शुचिव्रततम इत्यशुचिरिव वा एष भवति योऽभ्याख्यायते ।
शुचिमेवैनमेतेन पूतं मेध्यं कुर्वन्ति ।
तस्य यज्ञायज्ञा वोऽग्नय इत्येता माध्यंदिनस्य पवमानस्य बृहत्यो भवन्ति ।
अग्ना उ वा एतं प्रास्यन्ति यमग्निष्टुता याजयन्ति ।
उत त्राता तनूनामित्यग्नय एव तद्वैश्वानराय यजमानस्तन्वं परिदत्ते ।
तस्य पाहि नो अग्न एकयेत्येतासु नार्मेधस्यर्क्षु रथन्तरं पृष्ठं भवति ।
एताभिर्वै नृमेधा औशिजोऽग्नेर्हरांस्यपैरयत ।
अग्नेरेवैताभिर्हरांस्यपेरयते ।
तस्य शं नो देवीरभिष्टय इत्येतास्वपोनप्त्रियास्वग्निष्टोमसाम भवति ।
आपो वा अपोनप्त्रियः ।
अग्ना उ वा एतं प्रास्यन्ति यमग्निष्टुता याजयन्ति १३७

तद्यथाग्निदग्धमद्भिरभिषिञ्चेत्तादृगेव तच्छान्त्यै ।

तदाहुर्यो वा अग्निदग्धमद्भिरभिषिञ्चति भूयो वैतत्प्रमृच्यति किलासं सं वा भवति ।
आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिरित्येतास्वेव वायुमतीषु कार्यं वायुर्वै शान्तिश्शान्त्या एवानिर्दाहायेति ।
तदाहुर्यो वा आग्नीनुपदीप्य वातेनोपवाजयति भूयो वै तद्दीप्यते ।
दीप्तिर्वावैषेति ।
तदु वा आहुस्तद्वाव यजमान इच्छेद्यत्स दीप्येत ।
यदु दीप्त्यै वायुरेव दीप्त्यै ।
यदु शान्त्यै वायुरेव शान्त्यै ।
तस्मादेतास्वेव वायुमतीषु कार्यमिति ।
तस्याजा च हिरण्यं च दक्षिणा ।
आग्नेयी वा अजाग्नेयं हिरण्यम् ।
अथो आहुरनड्वान्दक्षिणेति ।
वहति वा अनड्वान्वहत्यग्निर्देवेभ्यो हविः ।
स्तोममेव तद्रूपेण समर्धयन्ति १३८

अथैष इन्द्रस्तोमः ।
इन्द्रो वा अकामयत सर्वेषां देवानां श्रेष्ठतां गच्छेयमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स सर्वेषां देवानां श्रेष्ठतामगच्छत् ।
गच्छति स्वानां श्रेष्ठतां य एवं वेद ।
इन्द्रे ह वा अग्रे यज्ञ आस ।
श्रीर्ह वा अस्मिंस्तदास ।
यज्ञ उ ह वाव देवानां श्रीः ।
तमु ह वृत्रोऽभिववृधे ।
स देवानुपाधावद्युष्माभिर्बलेनेमं वृत्रं हनानीति ।
तमब्रुवन्स वै नो यस्तेऽयं निष्केवल्यो यज्ञस्तं प्रयच्छेति ।
तस्माद्राजनि विजिगीषमाणे विषः प्रदानमिच्छन्ते ।

तस्मादु राजा विजिगीषमाणो विश एव प्रदानं प्रयच्छति ।
स वसुभ्य एव प्रातस्सवनं प्रायच्छद्रुद्रेभ्यो माध्यंदिनं
सवनमादित्येभ्यस्तृतीयसवनं विश्वेभ्यश्च देवेभ्यः ।
तैर्बलेनेन्द्रो वृत्रमहन् ।
अजयन्देवा असुरान् ।
स वृत्रं हत्वा विजित्य पृथगेवैषां इमा श्रियो दीप्यमाना अपश्यत् ।
तमभिशस्तिरविन्दन् ।
स षत्तत कथं न्वहमेषामिमा श्रियस्संवृञ्जीयेति ।
स एतेनैव यज्ञेनायजत ।
तेनैषां सर्वा श्रियस्समवृङ्क ।
वृङ्क्ते द्विषतो भ्रातृव्यस्य श्रियं य एवं वेद १३९

स षन्द्रीष्वेव सर्वो भवति ।
षन्द्रीष्वेव प्रातस्सवनं भवत्यैन्द्रीषु माध्यंदिअनं सवनमैन्द्रीषु तृतीयसवनम्
।
तद्यद्गायत्रं सत्प्रातस्सवनमैन्द्रीषु क्रियते वसूनामेव तेन यज्ञं समवृङ्क ।
अथ यत्त्रैष्टुभं सन्माध्यंदिनं सवनमैन्द्रीषु क्रियते रुद्राणामेव तेन यज्ञं
समवृङ्क ।
अथ यज्जागतं सत्तृतीयसवनमैन्द्रीषु क्रियत आदित्यानामेव तेन यज्ञं समवृङ्क
विश्वेषां च देवानाम् ।
त एनमात्तयज्ञा उपासीदन्विशस्तेऽसाम यज्ञे नोऽन्वाभजेति यथा भर्तारं
भार्या उपसीदन्ति तथा ।
स वसूनेव प्रातस्सवनेऽन्वाभजद्रुद्रान्माध्यंदिने सवन आदित्यांस्तृतीयसवने
विश्वांश्च देवान् ।
यथा राजा विजित्य स्वे वित्ते भार्यानन्वाभजेदेवमेवैनांस्तदन्वाभजत् ।
तस्मादिन्द्राय वसुमते रुद्रवत आदित्यवते विश्वदेव्यावत इत्यन्वाहुस् ।
स पञ्चदशो भवति ।
वज्रो वै पञ्चदशः ।
वज्र इन्द्रः ।
षन्द्र एष यज्ञस्तत्तत्सलच्म क्रियते ।

स उक्थ्यो भवति ।
विड्वा उक्थानि ।
क्षत्रमेव तद्विश्यध्यूहन्ति ।
तस्मात्क्षत्रियो विश्यध्यूढः ।
सय श्रीकाम स्यात्स एतेन यजेत ।
क्षत्रं श्रीः क्षत्रयज्ञ एषोऽश्नुते श्रियम् १४०

अथैष विघनः ।
प्रजापतिर्देवानसृजत वसून्रुद्रानादित्यान् ।
तेभ्यो यज्ञं चेमांश्च लोकान्प्रायच्छत् ।
वसुभ्य एव प्रातस्सवनं प्रायच्छद्रुद्रेभ्यो माध्यंदिनं
सवनमादित्येभ्यस्तृतीयसवनम् ।
वसुभ्य एवेमं लोकं प्रायच्छद्रुद्रेभ्योऽन्तरिक्षमादित्येभ्योऽमुम् ।
अथेन्द्रमसृजत ।
स इदमेषां सर्वम्विभक्तमपश्यत् ।
सोऽब्रवीद्यदिदमेषां सर्वं विभक्तमथ कस्मै मामसृष्ठा इति ।
एतेषां त्वा इत्यब्रवीच्छ्रैष्ठ्यायाधिपत्यायासृक्षीति ।
सोऽहं कथमेषां श्रेष्ठोऽधिपति स्यामिति ।
परेह्येनान्ब्रूहीत्यब्रवीद्युष्माकं मा प्रजापति श्रैष्ठ्यायाधिपत्यायासृष्टेति ।
स एत्याब्रवीद्युष्माकं मा प्रजापति श्रैष्ठ्यायाधिपत्यायासृष्टेति ।
तेऽब्रुवन्वयं वाव श्रेष्ठा स्मो वयमधिपतयो ये ज्येष्ठा स्म इति नाजानन् ।
स पुनरेत्याब्रवीन्न वा अमी तज्जानन्ति यत्त्वमात्थेति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनैनमयाजयत् ।
स हेष्ट्वैव सर्वा मृधो व्यहत ।
यद्व्यहत तद्विघनस्य विघनत्वम् ।
वि ह वै द्विषन्तं भ्रातृव्यं हते य एवं वेद १४१

तं विजिग्यानं सर्वे देवा अभितस्समन्तं पर्यविशन्वसवः पुरस्ताद्रुद्रा

दक्षिणत आदित्याः पश्चान्मरुत उत्तरतो विश्वे देवा
उपरिष्टात्साध्याश्चाप्त्याश्चाहदस्तादभितोऽङ्गिरसः ।
एषा वै दैवी श्रीर्दैवा सभा दैवी संसत् ।
गच्छति ह वा एतां दैवीं श्रियं दैवींसभां दैवीं संसदं य एवं वेद ।
स वा एष षड्बृहतीरभिसंपद्यते ।
षड्वा ऋतवस्संवत्सरश्रीः ।
श्रियां वावैनं तदध्यौहत् ।
स एष ऋतुषु च संवत्सरे चैतस्यां श्रियामध्यूढस्तपति ।
तस्य प्रत्नं पीयूषं पूर्वं यदुक्थ्यमित्येताः सतोबृहतयो भवन्ति गायत्रीभाजनम्
।
ब्रह्म वै गायत्री ।
क्षत्रं बृहती ।
ब्रह्मैव तद्यशसानक्ति ।
ब्रह्मणोऽस्य तत्सतः क्षत्रस्येव प्रकाशो भवति य एवं वेद १४२

तासु व्यतिषक्तासु स्तुवन्ति व्यतिषक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते
प्रजात्या एव ।
अथो व्यतिषक्तो वै पुरुषः पाप्मभिः ।
व्यतिषक्ताभिरेव तद्व्यतिषक्तान्पाप्मनोऽपहते ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथामहीयवमुक्तब्राह्मणम् ।
अथ सौपर्णमुक्तब्राह्मणम् ।
अथ सत्रासाहीयं विजित्यै ।
सत्रा तमभिषहातै योऽस्याभिषह्योऽसदिति ।
अथोत्सेधनिषेधौ पापवस्यसस्यैवोत्सिद्ध्यै च निषिद्ध्यै च ।
अथ विशोविशीयं च सदोविशीयं च ।
विशोविशीयेन वा इन्द्रो देवानभ्यारोहत् ।
तान्सदोविशमित्येव सदोविशीयेन विशमकुरुत ।
अथैतास्त्रिष्टुभो भवन्ति ।
तासु ब्रह्मसाम ।

ब्रह्म वै ब्रह्मसाम ।
क्षत्रं त्रिष्टुप् ।
यजमानकामो वा एष यद्ब्रह्मसाम ।
स्व एव तदायतने यजमानं कामैस्समर्धयन्ति १४३

ताः पदब्राह्मणा भवन्ति ।
तदिदास भुवनेषु ज्येष्ठमिति प्रजापतिर्हि सः ।
प्रजापतिर्ह्येष भुवनेषु ज्येष्ठः ।
यतो जज्ञ उग्रस्त्वेषनृम्ण इति इन्द्रो ह सः ।
सद्यो जज्ञानो नि रिणाति शत्रूनिति सद्यो ह्येव स जज्ञानस्सर्वा मृधो व्यहत ।
अनु यं विश्वे मदन्त्यूमा इत्यृतवो वा ऊमास्त एवैनं तदनुमदन्ति ।
वावृधानश्शवसा भूर्योजाश्शत्रुर्दासाय भियसं दधातीन्द्रो ह सः ।
अव्यनश्च व्यनश्च सस्नि सं ते नवन्त प्रभृता मदेष्विति यच्च ह वै व्यनिति यच्च न तत्सर्वमेतस्यैव श्रियै तत्स्थानम् ।
त्वे क्रतुं वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमा इति ऋतवो वा ऊमास्त एवैते द्विस्त्रिर्भवन्ति ।
स्वादो स्वादीय स्वादुना सृजा समिति प्रजा वै स्वादुः प्रजायै या प्रजा सा स्वादो स्वादु ।
अदः सु मधु मधुनाभि योधीरिति प्रजा वै मधु प्रजायै या प्रजा सा मधोर्मधु ।
अपि ह प्रजायै प्रजां पश्यते य एवं वेद ।
तासु श्यैतमुक्तब्राह्मणम् १४४

अथैतानि गोनामानि भवन्ति पशवो वै गोनामानि पशूनामेवावरुद्ध्यै ।
एकपदा प्रथमा भवति त्रिपदे उत्तरे द्वे ।
तानि सप्तपदानि संपद्यन्ते ।
सप्तपदा वै शक्वर्यः ।
शाक्वराः पशवः ।
अभिपूर्वाणामेव पशूनामवरुद्ध्यै ।

तदाहुरपावमान्यो न पवमाने कार्या इति ।
तदु वा आहुः पावमान्य एवामुष्य वा एताश्चन्द्रमस ऋचः ।
एष वै पवमान एष सोमो राजा ।
तस्मात्कार्या एवेति ।
सुमन्मा वस्वी रन्ती सूनरी सुरूप वृषन्ना गहि
इमौ भद्रौ धुर्यावभि ताविमा उपसर्पतः
नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति
शृङ्गेभिर्दशभिर्दिशन्
इति ये ह वा एत आदित्यस्य रश्मय एतानि ह वा एतस्य शृङ्गाणि ।
मध्य उ ह वा एष एतदपाम् ।
तासु वारवतीयम् ।
यदनेन कर्मणावारुत्स्महि तन्नो वारवन्तीयेन वारितमन्तत उपतिष्ठाता इति
।
तदु वा आहुर्यद्वावान्या वाङ्नातिवदति तदेतस्याह्नोऽग्निष्टोमसाम कार्यम् ।
यज्ञायज्ञीयं वावान्या वाङ्नातिवदति ।
वाग्वै यज्ञायज्ञीयम् ।
कुतो हि वाग्वाचमतिवदिष्यति ।
तस्मादेतस्याह्नो यज्ञायज्ञीयमेवाग्निष्टोमसाम कार्यमिति १४५

अथैष वैश्वदेवः ।
प्रजननकामो हैतेन यजेत ।
प्रजापतिर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय वैश्वदेवीः
प्रजास्सृजेयेति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत वैश्वदेवीः प्रजा असृजत ।
स यत्कामयेत बहुः प्रजया पशुभिः प्रजायेय वैश्वदेवीः प्रजास्सृजेयेति स
एतेन यजेत ।
बहुरेव प्रजया पशुभिः प्रजायते वैश्वदेवीः प्रजास्सृजते ।

तद्यदेष वैश्वदेवो भवति वैश्वदेवीनामेव प्रजानां सृष्ट्यै ।
स सर्व एव वैश्वदेवीषु भवति वैश्वदेवीनामेव प्रजानां प्रजात्यै ।
स त्रिवृद्भवति न्यूनं वै त्रिवृत् ।
न्यूनं प्रजननं तद्यत्प्रजननं तन्मा प्रजनयादिति ।
तस्य रथन्तरं पृष्ठं भवति प्रजननं वै रथन्तरं तद्यत्प्रजननं तन्मा प्रजनयादिति
।
स उक्थ्यो भवति प्रजा वै पशव उक्थानि ।
प्रजा वै पशवः प्रजननं तद्यत्प्रजननं तन्मा प्रजनयादिति १४६

अथो आहुस्सप्तदश एव स्यादिति प्रजापतिर्वै सप्तदशः ।
प्रजापतिः प्रजननं स यः प्रजननं स मा प्रजनयादिति ।
अथो आहुस्त्रिणव एव स्यादिति ।
त्रयो ह ते त्रिवृतः ।
न्यानं वै त्रिवृत् ।
न्यूनं प्रजननम् ।
तद्यत्प्रजननं तन्मा प्रजनयादिति ।
अथो आहुस्त्रयस्त्रिंश एव स्यादिति ।
प्रजापतिर्वै त्रयस्त्रिंशः ।
प्रजापतिः प्रजननम् ।
स यः प्रजननं स मा प्रजनयादिति ।
तदु वा आहुस्सप्तदश एव स्यात् ।
एष ह वाव प्रजापतिर्यत्सप्तदशः ।
तस्मात्सप्तदश एव स्यादिति ।
स उ एव त्रिवृतं च स्तोमं गायत्रीं च छन्दोऽभिसंपद्यते ।
एतद्वै दैव्यं मिथुनं प्रजननं यत्त्रिवृच्च स्तोमो गायत्री च छन्दः ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
स उक्थ्यो भवति विड्वा उक्थानि वैश्वदेवीनामेव प्रजानां प्रजात्यै ।
स हैष भूरेव नाम यज्ञक्रतुः ।
एतेन ह वै यज्ञेनेष्ट्वा प्रजापतिरभवत् ।
यदभवत्तस्माद्भूः ।

भवति य एवं वेद ।
स वा एष वैश्यस्येव यज्ञो ब्राह्मणस्याग्निष्टुद्राजन्यस्येन्द्रस्तोमः ।
यर्हि वा एतैरेवं व्याकृतैरीजिरे प्रोक्ता ह स्म मनुष्या विज्ञायन्ते ।
ब्राह्मणो वदति राजन्यो वदति वैश्यो वदतीति ।
अथ यदिदमेतर्हि यथोपवादमेतैर्यजन्ते ततो ह नाप्रोक्ता विज्ञायन्ते १४७

अथैष उपहव्यः ।
प्रजापतिः प्रजा असृजत ।
तासां सृष्टानां नावेन्नो एव प्रजा अविदुः प्रजापतिर्नोऽसृष्टेति ।
स षद्मत कथं न्विमा अहं प्रजास्सृजेय तासां सृष्टानां न विद्यामिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततोऽनेनैव ता उपाह्वयत ।
यदुपाह्वयत तदुपहव्यस्योपहव्यत्वम् ।
स सप्तदशोऽनिरुक्तासु भवति ।
यथा ह वै वनाकक्षा एवं सप्तदशोऽनिरुक्तासु ।
स यथा वनाकक्षान्परीत्याविर्भवेदेवमेवैताभिर्दृष्टवतीभिराविर्बभूव ।
यददर्षि गातुवित्तम इत्येतासु दृष्टवतीष्वग्निष्टोमसाम भवति ।
ततो वै तं ता अविदुरस्य वै वयं स्मोऽयं वा अस्माकमासेति ।
अथो हाभ्योऽन्नमेव भूतो ददृशे ।
ता एनमन्नकाशिनीः प्रजा अभ्युपाववृतुः ।
तद्यस्माद्राजन्याद्विशोऽपक्रामेयुर्ब्राह्मणाद्वा सजातास्स एतेन यजेत ।
तस्मिन्नृत्विज उपह्वयेत ।
एता उ ह वै यजमानस्य विशो यदृत्विजः १४८

तस्य रथन्तरं पृष्ठं भवति ।
अन्नं वै रथन्तरम् ।
अथो हास्मिन्बह्वेव पक्वान्नं दद्यात् ।
ता एनमन्नकाशिनीः प्रजा अभ्युपावर्तन्ते ।

प्रजापतिर्यज्ञमसृजत ।
तं देवेभ्यः प्रायच्छत् ।
स यज्ञं प्रदाय रिरिचानोऽमन्यत ।
स षन्नत कथं न्वहमिमं यज्ञं पुनरुपह्वयेयेति ।
स एतेनैव यज्ञेनायजत ।
तेनैनं पुनरुपाह्वयत ।
यदुपाह्वयत तद्वेवोपहव्यस्योपहव्यत्वम् ।
तद्यं सकृदिष्टिनं यज्ञो नोपनमेत्स एतेन यजेत ।
अपक्रान्तो ह वा एतस्माद्यज्ञो भवति ।
यं सकृदिष्टिनं यज्ञो नोपनमत्येतेन हैवैनं पुनरुपह्वयते ।
उप हैनं यज्ञो नमति य एवं वेद १४९

द्वया उ ह वा अग्रे प्राजापत्या आसुर्देवाश्चैवासुराश्च ।
ततो हाभिराधयत्तरा इव देवा आसुरनभिराधयत्तरा इवासुराः ।
स प्रजापतिरकामयत देवा एव स्युः परासुरा भवेयुरिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तस्मिन्देवानुपाह्वयत ।
अथासुरान्दीर्घवंशेनान्तरगृह्णात् ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
स यो भ्रातृव्यवान्स्याद्योऽभिचरेद्य स्पर्धेत स एतेन यजेत ।
तद्येऽस्य प्रतिकामीना इवर्त्विज स्युस्तानुपह्वयेत ।
अथेतरान्दीर्घवंशेनान्तर्गृह्णीयात् ।
तेषामेवानुपहवमनु द्विषन्नस्य भ्रातृव्यः पराभवति श्रियमात्मनाश्नुते १५०

अथैष तीव्रसोमः ।
प्रजाकामो हैतेन यजेत ।
तनुरिव ह वा एष योऽप्रजः ।

प्रजयो ह वै पुरुषस्तीव्रो बहुलः ।
प्रजया तीव्रो बहुलोऽसानीति ।
अथो आहुः पशुकाम एवैनेन यजेतेति ।
तनुरिव ह वा एष योऽपशुः ।
पशुभिर्ह वै पुरुषस्तीव्रो बहुलः ।
पशुभिस्तीव्रो बहुलोऽसानीति ।
स सप्तदशो भवति ।
एष ह वै तीव्रो बहुलो यत्सप्तदशः ।
प्रजया पशुभिस्तीव्रो बहुलोऽसानीति ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एते ह वै तीव्रे बहुले यदुभे बृहद्रथन्तरे ।
प्रजया पशुभिस्तीव्रो बहुलोऽसानीति ।
तस्य वडवा गर्भिणी दक्षिणा भवति ।
एषा ह वै तीव्रा बहुला यद्वडवा ।
तीव्रा तेन बहुला यद्गर्भिणी ।
तीव्रा तेन बहुला यदुभयतोदती ।
तीव्रा तेन बहुला यदेका सती बह्वीर्गा अर्हति ।
प्रजया पशुभिस्तीव्रो बहुलोऽसानीति ।
अथो आहुर्धेनुशतमेवास्य नानावत्सं दक्षिणा स्यादिति ।
एतद्ध वै तीव्रं बहुलं यद्धेनुशतम् ।
तीव्रं तेन बहुलं यच्छतम् ।
तीव्रं तेन बहुलं यदस्य पयः ।
तीव्रं तेन बहुलं यदस्य वत्साः ।
प्रजया पशुभिस्तीव्रो बहुलोऽसानीति १५१

इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मन्यमानः परां परावतमगच्छत् ।
तं देवा अन्वैच्छन् ।
तं नान्वविन्दन् ।
तेऽब्रुवन्नभिषुणवामैव ।
तत आगमिष्यतीति ।

तेऽभ्यषुण्वन् ।
तेषां ह सर्वमेव प्रातस्सवनं नाजगाम ।
ते ह स्म चमसानुरस्युपनिग्राहमभ्युन्नयन्ते नेदपेन्द्रस्य सोमस्य भक्षयामेति ।
स उ ह माध्यंदिने सवन आजगाम ।
ते होत्क्रोदं चक्रिरे यथा श्रेष्ठिन्यागत उत्क्रोदं कुर्वते तथा ।
तदु वा आहुरच्छावाकस्येद्वाव स्तोत्रे प्रातस्सवन आजगाम ।
अन्तरितो वै तथा यज्ञादभविष्यद्यदच्छावाकस्य स्तोत्रे प्रातस्सवने
नागमिष्यदिति ।
तस्मादेतस्य यज्ञस्याच्छावाकस्य स्तोत्रे भक्षयन्ति ।
तस्माद्वच्छावाकायोभावध्वर्यू प्रत्यागृह्णीतः सर्वे चमसाध्वर्यवः ।
उत्क्रोदमेव तत्कुर्वते ।
तद्यस्माच्छ्रीरपक्रामेत्स एतेन यजेत ।
श्रीर्वै तेषां सापाक्रामद्यदेषां श्रेष्ठ्यपाक्रामत् ।
तामेतेनैवान्वविन्दन् ।
अनु ह श्रियं विन्दति नास्मात्सा श्रीरपक्रामति य एवं वेद १५२

त्रिशीर्षा ह वै त्वाष्ट्र आस ।
तस्य ह त्रीणि मुखान्यासुस्सोमपानमेकं सुरापानमेकमन्नादनमेकम् ।
प्रस्तौति ह स्मैकेनैकेन गायति प्रतिहरत्येकेनाश्रावयत्येकेन
प्रत्याश्रावयत्येकेन शंसत्येकेन ।
स ह स्मैकाक्येवानुपरिसर्पं सर्वं यज्ञं संस्थापयति ।
स हेयद्वीर्यावानास ।
स उ हासुरीपुत्र आस ।
स ह स्म प्रत्यक्षं देवेभ्यो वदति परोक्षमसुरेभ्यः ।
यस्मा उ ह वा भूयः कामयते तस्मै परोक्षं वदति ।
तस्मादु हेन्द्रो बिभयां चकार यच्चासुरीपुत्र आस यदु चेयद्वीर्यावानास ।
स हेक्षां चक्रेऽसुर्यो वा अयमासुरीपुत्रः ।
स प्रत्यक्षमस्मभ्यं वदति परोक्षमसुरेभ्यः ।
हन्तैनं हनानीति १५३

तस्य ह वज्रेण शीर्षाणि प्रचिच्छेद ।
तान्येव वयांस्यभवन् ।
तद्यत्सोमपानमासीत्स कपिञ्जलोऽभवत् ।
तस्मात्स बभ्रुरिव ।
बभ्रुरिव हि सोमः ।
अथ यत्सुरापानमासीत्स कलविङ्कोऽभवत् ।
तस्मात्स मत्त इवावक्रन्दति ।
अथ यदन्नादनमासीत्स तित्तिरिरभवत् ।
तस्मात्स बहुरूप इव ।
बहुरूपमिव ह्यन्नम् ।
तस्मादु तस्य वृश्चिकश्शङ्कुलिष्ठ इत्येतदन्नम् ।
स त्वष्टा हतपुत्रोऽपेन्द्रं सोममाजह्रे ।
स इन्द्र ईक्षां चक्रेऽस्माच्चेद्वै मा यज्ञादन्तरेत्यन्तरितो वै तथा यज्ञाद्भवानि हन्तैनं हनानीति १५४

तं ह वज्रहस्तोऽभिदुद्राव ।
स त्वष्टा प्रत्यङ्पतित्वा पत्नीः प्रपेदे ।
तं ह तत्र नानुप्रपेदे ।
तस्मात्त्वष्टारं पत्नीषु संयजन्ति ।
तस्मादु पत्नीः प्रपन्नं न हन्यात् ।
उदेयायेन्द्रः ।
स हविर्धानयोरेव द्रोणकलशे सोमं राजानं संपवितुमुपेयाय ।
तं ह द्रोणकलशेनैव प्रतिधाय पीत्वा प्रवव्राज ।
अनूदेयाय त्वष्टा ।
स ह पप्रच्छास्ति किंचित्परिशिष्टा३मिति ।
अस्त्ययं संस्राव इति होचुः ।
तं हाग्नौ प्रवर्तयां चकारेन्द्रशत्रुर्वर्धस्व स्वाहेति ।
तं यत्प्रावर्तयत्स एव वृत्रोऽभवत् ।
स वर्तमान एवाग्नीषोमावभिसंबभूव ।
तस्मादाहुरग्नीषोमावसुर्याविति ।

स ह स्मेषुमात्रमूर्ध्वमुदर्दति ।
ततो ह स्मानावच्छां ह्वितिस् ।
स त्रयीं विद्यां सर्वां श्रियं सर्वमन्नाद्यमपि यदिदं त्रिरात्रे सहस्रं प्रोच्यते तदभिसंबभूव ।
तस्य हेदं सर्वं बलिकृदास ।
कीलालं ह स्मास्मै नद्यो वहन्ति ।
अथ हाभियुग्वानो नामाष्टौ देवानां सहचरा आसुरष्टौ पितृणामष्टौ मनुष्याणामष्टावसुराणाम् ।
तेषां ह स्मेन्द्रो माययाष्टमो भवति वृत्रं जिघांसन् ।
तस्मादु हैनमिन्द्र एव जघान यदिन्द्रशत्रुर्वर्धस्व स्वाहेति प्रवर्तयां चकार अथ यद्ध प्रावर्तयिष्यदिन्द्रस्य शत्रुर्वर्धस्व स्वाहेति १५५

- शश्वद्धैनं नाहनिष्यत् ।
तमयमिन्द्रं सोमो राजा पीतोऽनुपहूतोऽहिनोत् ।
तस्य ह सर्वेभ्य एव छिद्रेभ्यः प्रेयाय मुखादेव न ।
तस्मादु ह भिषज्य आस ।
तस्य यदवागियाय सैव सुरावारिटका बभूव ।
यच्छिश्नात्सा परिस्रुक् ।
त्रिर्निरष्ठीवत् ।
तद्यत्प्रथमं निरष्ठीवत्तदेव कर्कन्ध्वभवद्यद्द्वितीयं तद्बदरं यत्तृतीयं तत्क्वलम् ।
तस्मादेतेषामन्नं चैव रसाः ।
खाट्कृत्य चतुर्थं निरष्ठीवत् ।
तदेवाम्रमभवत् ।
तमेवं सन्तं देवा अभितो निषेदुः ।
अयं न एको वीरोऽभूत् ।
स इत्थं न्यगात् ।
क्व भवाम इति ।
स होवाच न वै विद्म यत्र भूमेति ।
किमिति ।

चुन्नूषामि वा इति ।
अथ ह स्म ततः पुरा न्नुत्वैव म्रियन्ते ।
तं होचुः न्नुहि जीवेति त्वा वन्दयाम इति ।
स ह चुन्नाव ।
तं ह जीवेत्यूचुः ।
स ह जिजीव ।
तस्मादिदमप्येतर्हि चुन्न्वांसमाहुर्जीवेति ।
तस्मादु यमेव मन्येत तं चुन्न्वांसं ब्रूयाज्जीवेति तस्य यन्नस्त इयाय - १५६

- तावेव सिंहावभवताम् ।
यदन्निभ्यां तौ शार्दूलौ यत्कर्णाभ्यां तौ वृकौ वैलूषौ यदुपपन्नाभ्यां तावपाष्टिहौ ।
तस्मादेते वयसां वीर्यावत्तराः ।
इन्द्रो ह्येतेषामाजानम् ।
अथ यदवागियाय तदिदं न्नुद्रं श्वापदं बभूव ।
स ह विषिक्तश्शिश्ये ।
अपि ह तृणैरभिविलूढ आस ।
तं होचुः क्वेवासि क्वेव त्वा भिषज्याम इति ।
तस्मादिदमप्येतर्हि उपतापिनं पृच्छन्ति क्वेव ते रुजति क्वेव ते भिषज्याम इति ।
स ह तृणान्यभिपरिदिशन्नुवाचेदमिवैव माभितोऽस्मीदमिवैव माभितो भिषज्यतेति ।
तदग्निमब्रुवन्निदं दहेति ।
तदग्निरदहत् ।
तत्पर्जन्यमब्रुवन्निदमभि वर्षेति ।
तत्पर्जन्योऽभ्यवर्षत् ।
तत्कल्याण्योषधयोऽजायन्त ।
ता धेनूभिराधयन् ।
तत्पयोऽदुहन् ।
त एतं यज्ञमपश्यन् ।

तमाहरन् ।
तेनैनमयाजयन् ।
तस्य प्रतिधुक्प्रातस्सवनेऽवानयन् ।
प्रतीव वा अनेनाधायीति तस्मात्प्रतिधुक् ।
श्रितं माध्यंदिने सवनेऽश्रेष्टेव वा अनेनेति तस्माच्छ्रितम् ।
दधि तृतीयसवनेऽदाधीव वा अनेनेति तस्माद्दधि ।
स यथा च ह पुर आसातितरां ह तत आस ।
स यस्सोमवामी वा सोमातिपवितो वा स्यात्स एतेन यजेत ।
यथा च ह पुरा भवत्यतितरां ह ततो भवति ।
तस्मादु ह सोमवामिनं वा सोमातिपवितं वा न परिचक्षीत ।
इन्द्र ह्यपि तथास १५७

अथैष ऋतपेयः ।
देवेभ्यो वा ऊर्गन्नाद्यमुदक्रामत् ।
सोमाहुतिर्ह वा एभ्यस्सोच्चक्राम ।
सो एव विराट् ।
ते देवा अब्रुवन्नेतेमां विराजमन्विच्छामेति ।
ते तत्पोऽतप्यन्त ।
त एतां विराजं यज्ञमपश्यन् ।
तमाहरन्त ।
तमभ्यदीक्षन्त ।
त एकमहर्नाश्नन् ।
तस्यै नियानमन्वपश्यन् ।
तेऽब्रुवन्भूयो न्वेव तपस्तप्यामहा इति ।
ते द्वितीयमहर्नाश्नन् ।
तस्यै घोषमुपाशृणवन् ।
तेऽब्रुवन्भूयो न्वेव तपस्तप्यामहा इति ।
ते तृतीयमहर्नाश्नन् ।
तां परापश्यन्यथा महान्तं गिरिमुदीक्षितं यथा वा महदभ्रमेवम् ।
तामभिक्राममपक्रामममभ्यत्सरन् ।

य उ ह वै मृगं पराङेवाभित्सरति नैनं स गृह्णाति ।
अथ य एनमभिक्राममपक्राममभित्सरति स एवैनं गृह्णाति ।
तां दशमेनैवाह्नावरुन्धत ।
दशाक्षरा विराट् ।
अन्नं विराट् ।
विराज एवान्नाद्यस्यावरुद्ध्यै १५८

तस्यापश्च घृतं च व्रतम् ।
अशरीरा वा आपोऽशरीरं घृतमशरीरा स्वधा ।
अशरीरेणाशरीरां स्वधामवरुणधामहा इति ।
एतावच्छो व्रतयति ।
एतावती वै पुरुषस्य मात्रा नेत्पुरुषमतिव्रतयानीति ।
अथो हैतत्पर्वश एवात्मनोऽङ्गानि प्रतिसंदधाति ।
सर्पिष्मानन्तरेण भवति समष्ट्यै ।
सप्तदशस्तोमो भवति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतिर्नष्टस्यानुवेत्ता ।
स यो नष्टस्यानुवेत्ता तेनेमां स्वधामनुविन्दामेति ।
तस्योभे बृहद्रथन्तरे साम्नी भवतो यद्यस्मिँल्लोके रथन्तरेणानुविन्दाम
यद्यन्तरिक्षे वामदेव्येन यद्यमुष्मिँल्लोके बृहतेति ।
तस्यौदुम्बरस्सोमचमसो दक्षिणा भवत्यूर्ग्वा अन्नमुदुम्बर ऊर्ज
एवान्नाद्यस्यावरुद्ध्यै ।
अथो अशरीरो वै सोमोऽशरीरा स्वधाशरीरेणाशरीरां स्वधामवरुणधामहा
इति १५९

तं ब्रह्मणे ददाति ।
ब्रह्मणो ह्येवैकदक्षिणा ।
तदाहुर्हुतो देया३ अहुता३ इति ।
अहुत इत्याहुः ।
यातयामेव वै तथा स्याद्यद्धुतं दद्यादिति ।

तदु वा आहुर्हुत एव देयः ।
देवानां वा एष भागः ।
को देवानां भागं दातुमर्हति ।
तस्माद्धुत एव देय इति ।
यादृगह वा अस्मिँल्लोकेऽन्नं ददाति तादृगस्यामुष्मिँल्लोकेऽन्नं भवति ।
एतदु ह वा अमुष्मिँल्लोके परममन्नाद्यं यत्सोमपीथः ।
एषा हैवास्य सोमाहुतिरमुष्मिँल्लोकेऽन्नं भवति ।
ऋतं सत्यं वदन्तो भक्षयन्ति ।
ऋतेन हि ते तां सत्येनान्वविन्दन् ।
ऋतममृतमित्याह ।
ऋतेन हि ते तदमृतमन्वविन्दन् ।
ओ यि ज्वरा ओयि जूहेति सामनिधने भवतो वाचस्सत्ये ।
वाचो हि ते तां सत्येनान्वविन्दन् ।
तेन हैतेनाथोदिवो गार्ग्य ईजे केशी दार्भ्य ऋजिश्वा वातवात इति ।
स हर्जिश्वा वातवातोऽवतताम ।
तमु ह वृषशुष्मेण कुमारेणार्जिश्वनेनाक्ताक्षेणोपनिषेदुर्यद्ययमु रिष्यत्यनेनेदं समापयिष्याम इति ।
स ह तताम ।
स ह तान्तः परं लोकं जगाम ।
स हामुष्मिँल्लोके पितरमाजगाम १६०

तस्य ह कल्याणो लोक आस ।
स होवाच तत कस्यायं लोक इति ।
ममेति होवाच ।
अथ हान्यो लोकः कल्याणतर आस ।
कस्यो असाविति ।
तवेति होवाच ।
स होवाच तत यत्त्वं मद्भूयो ददिवानसि भूयस्ते मदनूक्तमथ कथं तवायं लोकोऽसौ ममेति ।
स होवाच व्रतोपयोद्ध्यो वै किल पुत्रकासौ लोक आस ।

व्रतोपयोधितर एव नौ त्वमसि ।
तस्मादयं मम लोकोऽसौ तवेति ।
गच्छेति होवाच सं वावाप्स्यसि यं वाव कामं कमितासि स ते
कामस्समर्धिता ।
वक्रितास्त्वेवाङ्गुलीः कुरुतादिति ।
स ह समाप ।
स ह समाप्योवाचापिपात्र एव स्यो ब्राह्मणानामस्त्विति ।
स हापिपात्र एव ब्राह्मणानामास ।
ततो ह वा इदमर्वाचीनमार्जिश्वना अपिपात्राः १६१

अथैष चितिस्तोमः ।
प्रजननकामो यजेत ।
तस्य पृष्ठ्यस्य षडहस्य स्तोमा भवन्त्यृतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सरः प्रजननं स यः प्रजननं स मा प्रजनयादिति ।
तस्योभये स्तोमा भवन्त्ययुजश्च युग्मन्तश्च ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभये स्तोमाः ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्य द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरः ।
संवत्सरः प्रजननं स यः प्रजननं स मा प्रजनयादिति ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननं स यः प्रजननं स मा प्रजनयादिति ।
अथो आहु स्वर्गकाम एवैनेन यजेतेति ।
तस्य पृष्ठ्यस्य षडहस्य स्तोमा भवन्त्यृतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्योर्ध्वा स्तोमा भवन्त्यूर्ध्वो वै स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।

तस्योभे बृहद्रथन्तरे सामनी भवत स्वर्ग्ये स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरः ।
संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सर स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै १६२

तस्य द्व्युत्तराण्युत्तरानि स्तोत्राणि भवन्ति ।
द्विपाद्वै यजमानः ।
यजमानमेव तत्स्वर्गे लोके प्रतिष्ठापयति ।
अथो आहुरिष्टके एवैते उपधीयेत इति ।
अथो द्यावापृथिवी एवाथो बृहद्रथन्तरे एवाथो अहोरात्रावेवाथो
अवस्त्रावावेवाथो अवच्छादावेव ।
छदिरिव ह खलु वा एष यज्ञक्रतुः ।
न ह वै छदिष्मतो गृहानतिवर्षति ।
नैनं पाप्मातिवर्षति य एवं वेद ।
अथो आहुरन्विष्टीनां हेद्वा एष एको यज्ञक्रतुरिति ।
स यस्संवत्सरभृता वासंवत्सरभृता वाग्निना चित्येन यजेत स एतेन यजेत
।
सद्यो हैवास्य संवत्सर ऋतुशो मासशोऽर्धमासशो रात्रिशोऽन्विष्टो भवति ।
तद्यत्पृष्ठ्यस्य षडहस्य स्तोमा भवन्त्यृतवो वै पृष्ठानि संवत्सर
ऋतवस्तेनर्तुशः ।
अथ यद्द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरस्तेन मासशः ।
अथ यच्चतुर्विंशति स्तुतशस्त्राणि भवन्ति
चतुर्विंशत्यर्धमासस्संवत्सरस्तेनार्धमासशः ।
अथ यत्त्रीणि षष्टिशतानि स्तोत्र्या भवन्ति तावतीस्संवत्सरस्य रात्रयस्तेन
रात्रिशः ।
सद्यो हैवास्य संवत्सरोऽन्विष्टो भवति य एवं वेद १६३

अथैतौ राशि-मरायौ ।
प्रजननकामो हैताभ्यां यजेत ।

प्रजापतिर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय ।
द्वन्द्वं प्रजाः पशून्सृजेयेति ।
स एतौ यज्ञावपश्यत् ।
तावाहरत ।
ताभ्यामयजत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
द्वन्द्वं प्रजाः पशूनसृजत ।
स यः कामयेत बहुः प्रजया पशुभिः प्रजायेय द्वन्द्वं प्रजाः पशून्सृजेयेति स एताभ्यां यजेत ।
बहुरेव प्रजया पशुभिः प्रजायते द्वन्द्वं प्रजाः पशून्सृजते ।
स राशिश्चतुश्चत्वारिंशो भवति रथन्तरसामा ।
ब्रह्म वै रथन्तरं क्षत्रं चतुश्चत्वारिंशः ।
ब्रह्मणा च क्षत्रेण च सयुग्भ्यां बहुः प्रजया पशुभिः प्रजाया इति ।
यद्वेवैतानि स्तोत्राणि बहुलान्युदपद्यन्त इव तस्माद्राशिः ।
अष्टाचत्वारिंशो मरायो भवति बृहत्सामा ।
ब्रह्म वा अष्टाचत्वारिंशः क्षत्रं बृहत् ।
द्वे हि ते गायत्र्यौ यदष्टाचत्वारिंशः ।
ब्रह्मणा च क्षत्रेण च सयुग्भ्यां बहुः प्रजया पशुभिः प्रजाया इति ।
यद्वेवैतानि स्तोत्राणि ज्यायांसीव च भवन्ति तस्मान्मरायः ।
ज्यायान्ह्येव राशेर्मरायो भवति १६४

तौ वा एतौ भूमैव स्तोमानाम् ।
तौ यौ भूमा स्तोमानां ताभ्यां बहुः प्रजया पशुभिः प्रजाया इति ।
तयोस्सह दीक्षा सह क्रयस्सहोपसदः ।
क्रीत्वा तु नानोपनह्यन्ति ।
नान्र्त्विजो भवन्ति ।
तदाहुस्संसवो वा एष यन्नानर्त्विजो भवन्ति ।
यन्वाव दूरात्संसूयते तदरमणीयम् ।
अथ किं यदन्तिकात्समाना एवर्त्विज स्युरिति ।
नो ह तु तथा सद्यस्संतिष्ठेयातां नानैवर्त्विज स्युः ।

ते वाव समानं प्रवरं प्रवृणते समानीमाशिषमाशासते ।
तस्मान्नानैवर्त्विज स्युरिति ।
अथो आहू राशिनैव पूर्वेणेष्ट्वावभृतादुदेत्य मरायाय दीक्षेतेति ।
अयमौ ह तु तथा स्याताम् ।
समानी हि यमयोर्योनिस्सह जायेते सह वर्धेते ।
तस्मात्सहैव स्याताामिति ।
ताभ्यां हैताभ्यामुग्रायुधो मानश्चित्त ईजे ।
अथो अलन्दो वात्स्यस्तयोर्ह परश्शता अन्यस्मिन्समा आसुः परश्शता अन्यस्मिन् ।
तथा बहुर्ह प्रजज्ञाते ।
बहुः प्रजया पशुभिः प्रजायते य एवं वेद १६५

अथैते ज्योतिर्गौरायुरिति स्तोमा भवन्ति ।
गौरायुरस्कन्दत् ।
ततो ज्योतिरजायत ।
अयं वै लोक आयुरसौ गौरिदमेवान्तरिक्षं ज्योतिः ।
तमेतं पुरस्तादकुर्वातां यथा पुत्रमेवम् ।
इतो वा अयमूर्ध्वो लोकोऽर्वाङसावमुतः ।
तदिदमेनयोः पुरस्ताज्ज्योतिः पर्यूढं तेन पश्यामः ।
तौ योगमुपप्रयन्तावन्तमभि ज्योतिर्व्युदौहताम् ।
स यथा पितरौ पुत्रं पूर्वं यन्तं पश्चादन्वियातां तादृक्तत् ।
तदेतन्मिथुनी स्तोमा भवन्ति यद्युज्यन्ते ।
मध्ये वै जायापत्योः पुत्रः शेते ।
तौ यथा मिथुनीभविष्यन्तावित्थाद्वेत्थाद्वा पुत्रं परिहरेयातां तादृगेवैतत् ।
त एत ऊनातिरिक्ता मिथुना प्रजनय स्तोमाः ।
स यः कामयेत बहुः प्रजया पशुभिः प्रजायेयेति स एतैर्यजेत ।
बहुरेव प्रजया पशुभिः प्रजायते १६६

अथैष शुनस्कर्णस्तोमः ।
शुनस्कर्णो ह वै वाष्णर्यकः पुण्यकृदपापकृदास ।

स ह चकमे पुण्यमेवास्मिँल्लोके कृत्वापापंकृत्य स्वर्गं लोकं गच्छेयमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स पुण्यमेवास्मिँल्लोके कृत्वापापंकृत्य स्वर्गं लोकमगच्छत् ।
स यः पुण्यकृत्कामयेत पुण्यमेवास्मिँल्लोके कृत्वापापंकृत्य स्वर्गं लोकं गच्छेयमिति स एतेन यजेत ।
पुण्यमेवास्मिँल्लोके कृत्वापापंकृत्य स्वर्गं लोकं गच्छति ।
स त्रिवृद्भवति ।
पराङिव ह वा एषः ।
स्वर्गमेव लोकमभिनिर्मृष्टो यत्त्रिवृत्स्तोमः ।
पराङेवैतेन स्वर्गं लोकमेति ।
तस्य पराञ्च्येव स्तोत्राणि भवन्ति पराञ्चि शस्त्राणि पराञ्चि पृष्ठानि पराचीर्विष्टुतयः ।
पराङेव सर्वो भवति ।
प्रवतीषु स्तुवन्ति पराञ्चमेवैनं तदमुं लोकं गमयन्ति १६७

तस्य वामदेव्यं पृष्ठं भवति स्वारम् ।
स्वाराणि सर्वाणि सामान्यवकल्पयन्ति ।
प्राणो वै स्वरः ।
प्राणैरेव तत्प्राणानुद्गाता यजमानस्य निस्वरति ।
तदाहुर्यज्ञायज्ञीयस्य स्तोत्रे जघनेन गार्हपत्यं दक्षिणा प्रावृत्य निपद्येत ।
तत एव स्वर्गं लोकमेतीति ।
तदु वा आहुर्विकर्षो वै तथा यज्ञस्य भवति यदसंस्थिते निपद्येत ।
यदैव सर्वं कर्म संतिष्ठेत यदा वशया चरेयुः ।
अथ जघनेनाहवनीयं दक्षिणा प्रावृत्य निपद्येत ।
तत एव स्वर्गं लोकमेतीति ।
असौ वा आदित्य आहवनीयः ।
एष वै स्वर्गो लोकः ।

एतस्मिन्नेव तत स्वर्गे लोकेऽन्तत प्रतितिष्ठति १६८

अथैष मनुस्तोमः ।
मनुश्च वै यमश्च वैवस्वतावास्ताम् ।
सोऽकामयत मनुरस्मै मां लोकाय राज्याय देवास्सुवीरन्नमुष्मै यममिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै तमस्मै लोकाय राज्याय देवा असुवतामुष्मै यमम् ।
स वा एष सदशो भवति ।
संदंशो ह वा एष यत्सदशः ।
स यथा संदंशेन संदश्य हरेदेवमेवैनमेतेन संदंशेन संदश्यास्माल्लोकादमुं लोकं जहार ।
तस्य रथन्तरं पृष्ठं भवति ।
वज्रो वै रथन्तरम् ।
वज्रेणैवैनं तदस्माल्लोकादमुं लोकमभिनिर्जघान ।
स यो भ्रातृव्यवान्स्याद्योऽभिचरेद्य स्पर्धेत स एतेन यजेत वज्रेणैवैनं तदस्माल्लोकादमुं लोकमभिनिर्हन्ति ।
तस्मिन्नेतानि घोराणि सामान्यवकल्पयन्ति १६९

जमदग्नेस्सप्तहं विद्रथं चक्षूंषीति ।
यान्यभिचरणीयस्य रूपं सामानि तानि ।
स्तोममेव तद्रूपेण समर्धयन्ति ।
अथो आहुरन्नाद्यकाम एवैनेन यजेतेति ।
सर्वो ह वा अन्यो विराजमतिष्टौति ।
एष ह वाव विराजं नातिष्टौति यो दशभि स्तुते ।
दशाक्षरा विराट् ।
अन्नं विराट् ।
विराज एवान्नाद्यस्यावरुद्ध्यै ।
तस्य रथन्तरं पृष्ठं भवत्यन्नं वै रथन्तरमन्नाद्यस्यैवावरुद्ध्यै ।

तस्मिन्नेतानि सामान्यवकल्पयन्त्यर्कार्कपुष्पे दैर्घश्रवसमिति यान्यन्नाद्यस्य रूपं सामानि तानि ।
स्तोममेव तद्रूपेण समर्धयन्ति १७०

अथैष गायत्रः ।
तस्य त्रिवृति प्रातस्सवने पञ्चदशमच्छावाकस्याज्यं सप्तदशं माध्यंदिनं सवनमेकविंशं तृतीयसवनम् ।
उक्थ्यो यज्ञ उभयसामनी ।
पुरोधाकामो हैतेन यजेत ।
तद्यत्त्रिवृति प्रातस्सवने पञ्चदशमच्छावाकस्याज्यं भवति ब्रह्म वै त्रिवृत्क्षत्रं पञ्चदशो ब्रह्मैव तत्क्षत्रस्य पुरस्ताद्दधाति ।
तस्माद्ब्राःमणः क्षत्रियस्य पुरोहितः ।
अथो हैतद्ब्रह्मण एव क्षत्रमनुवर्त्म करोति ।
सप्तदशं माध्यंदिनं सवनम् ।
विड्वै सप्तदशः ।
एष उ ह वै द्वितीयो राजा यत्पुरोहितः ।
विशो वा एष षश्वर्यमाधिपत्यं गच्छति य श्रियमश्नुते ।
विश षश्वर्यमाधिपत्यं गच्छानीति तस्मात्सप्तदशं माध्यंदिनं सवनं भवति ।
अथो हैतद्ब्रह्मणे चैव क्षत्राय च विशमनुयुवं करोति १७१

तस्य रथन्तरं पृष्ठं भवति बृहद्ब्रह्मसाम ।
ब्रह्म वै रथन्तरम् ।
क्षत्रं बृहत् ।
ब्रह्मैव तत्क्षत्रस्य पुरस्ताद्दधाति ।
तस्माद्ब्राह्मणः क्षत्रियस्य पुरोहितः ।
अथो हैतद्ब्रह्मण एव क्षत्रमनुवर्त्म करोति ।
स उक्थ्यो भवति ।
विड्वा उक्थानि ।
एष उ ह वै द्वितीयो राजा यत्पुरोहितः ।
विश उ वा एष षश्वर्यमाधिपत्यं गच्छति य श्रियमश्नुते ।

विश षश्वर्यमाधिपत्यं गच्छानीति तस्मादुक्थ्यो भवति ।
अथो हैतद्ब्रह्मणे चैव क्षत्राय च विशमनुयुवं करोति ।
तान्येकविंशानि भवन्ति ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एष उ ह वै श्रीः ।
एतामेव तच्छ्रियमन्ततोऽभ्यारोहति ।
स उ एव सर्वस्संस्तुतो गायत्रीमेवाभिसंपद्यते ।
ब्रह्म वै गायत्री ।
यदो वै ब्रह्मवर्चसमृध्नोत्यथ स तस्य पुरोधां गच्छति ।
स यदा पुरोधां गच्छेदथ कामयेताच्याव्योऽस्यै पुरोधायै स्यां न
च्यवेयेत्येतस्यैव सतः पञ्चदशं ब्राह्मणाच्छंसिन आज्यं कुर्यात्तत् ।
ब्रह्म वै त्रिवृत् ।
क्षत्रं पञ्चदशः ।
तदेतद्ब्रह्मणोभयतः क्षत्रं परिगृह्णाति ।
स हाच्याव्यः पुरोधायै भवति न च्यवते १७२

अथैष गौतमस्य चतुष्टोमः ।
गौतमो वा अकामयताव पशून्रुन्धीय भूमानं पशूनां गच्छेयमिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै सोऽव पशूनरुन्ध भूमानं पशूनामगच्छत् ।
स यः कामयेताव पशून्रुन्धीय भूमानं पशूनां गच्छेयमिति स एतेन यजेत ।
अव हैव पशून्रुन्द्धे भूमानं पशूनां गच्छति ।
तस्य चतसृषु बहिष्पवमानं भवति ।
चतुष्पादा वा अश्वास्सन्तश्चतुश्शफाः ।
ते ये चतुष्पादाः पशवश्चतुश्शफास्तानेवैतेनावरुन्द्धे ।
अष्टास्वष्टास्वाज्यानि ।
अष्टाशफा वै पशवः ।
ते येऽष्टाशफाः पशवस्तानेवैतेनावरुन्द्धे ।

द्वादशो माध्यंदिनः ।
द्वादशाक्षरा वै जगती ।
पशवो जगती ।
यत्क्षुद्रं पशूनां तज्जागतम् ।
तदेवैतेनावरुन्द्धे ।
षोडशानि पृष्ठानि ।
षोडशकला वै पशवो यांश्च विद्म यांश्च न ।
तानेवैतेन कलाशोऽवरुन्द्धे ।
सविंश आर्भवः पवमानः ।
द्वे वा एते दशदशिन्यौ विराजौ यद्विंशतिः ।
विंशतिप्रतिष्ठाना वै पशवो वैराजाः ।
ते ये विंशतिप्रतिष्ठानाः पशवो वैराजास्तानेवैतेनावरुन्द्धे ।
अथ चतुर्विंशमग्निष्टोमसाम ।
चतुष्पादा वै पशवो वैराजाः ।
ते ये चतुष्पादाः पशवो वैराजास्तानेवैतेनावरुन्द्धे ।
अथो चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरेणैवैनांस्तत्परिगृह्यात्मन्नधत्त ।
न ह खलु वा एषोऽग्निष्टोमो नोक्थ्य उभयमिवैव ।
नो वा एते ग्राम्याः पशवो नारण्या उभयमिवैव ।
तानेवैतेनावरुन्द्धे १७३

अथैषोऽपूर्वः ।
प्रजननकामो हैतेन यजेत ।
प्रजापतिर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय न मदन्यः पूर्व
स्यादिति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
नास्मादन्यः पूर्व आसीत् ।

स यः कामयेत बहुः प्रजायेय न मदन्यः पूर्व स्यादिति स एतेन यजेत ।
बहुरेव प्रजया पशुभिः प्रजायते नास्मादन्यः पूर्वो भवति ।
स त्रिवृद्रथन्तरसामा भवति ।
न ह वै त्रिवृत स्तोमादन्यः पूर्व स्तोमोऽस्ति न रथन्तरात्पृष्ठादन्यत्पूर्वं पृष्ठमस्ति न प्रजापतेरन्या पूर्वा देवतास्ति ।
तद्यदेतान्यपूर्वाणि तस्मादपूर्वः ।
अथो मनो वै प्रजापतिः ।
नो वै मनसोऽन्यत्किं चन पूर्वमस्ति ।
तस्मादु एवापूर्वः ।
स त्रिवृद्भवति न्यूनं वै त्रिवृत् ।
न्यूनं प्रजननं तद्यत्प्रजननं तन्मा प्रजनयादिति ।
तस्य रथन्तरं पृष्ठं भवति प्रजननं वै रथन्तरं तद्यत्प्रजननं तन्मा प्रजनयादिति ।
तस्य द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरः ।
संवत्सरः प्रजननं स यः प्रजननं स मा प्रजनयादिति ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननं स यः प्रजननं स मा प्रजनयादिति १७४

अथैष पञ्चशारदीयः ।
मरुतो वा अकामयन्तौजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानां स्याम जयेम स्वर्गं लोकमिति ।
त एतं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै त ओजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानामासन्नजयन्स्वर्गं लोकम् ।
ओजिष्ठो बलिष्ठो भूयिष्ठो वीर्यवत्तम स्वानां भवति जयति स्वर्गं लोकं य एवं वेद ।
स वा एष विशामेव यज्ञः ।
विशो वै मरुतस्तस्माद्विशां यज्ञः ।

तेन हैतेनैक्यावा कांदम ईजे ।
स हौजिष्ठश्चैव बलिष्ठश्च भूयिष्ठश्च वीर्यवत्तमश्च स्वानामास जिगाय वा लोकं न वा ।
स सप्तदशो भवति प्रजापतिर्वै सप्तदशः ।
प्रजापतिः प्रजननं स यः प्रजननं स मा प्रजनयादिति ।
तस्य रथन्तरं पृष्ठं भवति प्रजननं वै रथन्तरं तद्यत्प्रजननं तन्मा प्रजनयादिति ।
स उक्थ्यो भवति प्रजा वै पशव उक्थानि प्रजया पशुभिः प्रजाया इति
१७५

तस्य पण्च शरदः पञ्चोन्नाणः प्रोन्निताश्चरन्ति ।
तद्यत्पञ्चशरदः पञ्चोन्नानः प्रोन्निताश्चरन्ति तस्मात्पञ्चशारदीयः ।
त उ सर्वे पृश्नयो भवन्ति ।
मरुतः पृश्निमातर इति वा आहुः ।
अथो ऋचाभ्यनूच्यते मरुतः पृश्निमातर इति ।
तस्मात्पृश्नयो भवन्ति ।
वीर्यं वै देवानां हविः ।
तदात्मभ्य एवागृह्णत ।
तद्यन्मरुद्भ्य एव भवति वीर्यमेव तदात्मसु दधते ।
मरुद्भ्य उञ्जेषिभ्य इति मरुद्भ्य स्वापिभ्य इति मरुद्भ्य स्वतवद्भ्य इति मरुद्भ्य एव मरुद्भ्य इति मरुद्भ्योऽभिष्टिभ्य इति ।
तद्यन्मरुद्भ्य उञ्जेषिभ्य इति यथा तं काममुञ्जयेद्यत्कामो यजेत ।
अथ यन्मरुद्भ्य स्वापिभ्य इति यथा तं कामं स्वाभ्याप्तमभ्याप्नुयाद्यत्कामो यजेत ।
अथ यन्मरुद्भ्य स्वतवद्भ्य इति मरुतो ह वा इदं सर्वं स्वम् ।
तानेवैतत्स्वेन प्रीणाति ।
तस्मै प्रीता स्वं प्रत्यवर्जन्ति ।
तेन प्रत्यवसृष्टेन यजते अथ यन्मरुद्भ्य एव मरुद्भ्य इति - १७६

बहवो ह वै मरुतो यांश्च विद्म यांश्च न ।

ते नस्सर्वे प्रीता आसन्निति ।
अथ यन्मरुद्भ्योऽभिष्टिभ्य इति यथा तं कामं स्वाभ्याप्तमभ्यश्नुवीत तत्कामो यजेत ।
तानेतान्पशूनालभेत ।
दीक्षिष्यमाण एकमुपवसथ एकं प्रसुत
एकमनूबन्ध्यायामेकमुदवसानीयायामेकमेवमेतान्पशूनालभेत ।
अथ हैक आहुः पञ्चरात्र एवैष स्यात् ।
तत्रैवैतानन्वहं पशूनालभेतेति ।
तदु होदर शाण्डिल्य स्थविरमेकयावानं पप्रच्छ यदिदं विवदन्तो पञ्चरात्र एवासेत्येक उक्थ्य एव सप्तदश इत्येके कथं स आसेति ।
स होवाचोक्थ्यमेव नस्तं सप्तदशमेकाहमभ्यवेदयन्तेति ।
अथ हैक आहुरतिरात्र एवैष स्यात् ।
कथं पञ्च वर्षाणि यज्ञ आगूर्णोऽनतिरात्र स्यादिति ।
तद्ध तन्न तथा ।
अग्निष्टोम एव स्यादित्येके ।
अग्निष्टोमाद्वै सर्वे यज्ञक्रतवस्तायन्त इति ।
तदु ह तन्नो एव तथा ।
उक्थ्यो हैव स सप्तदश स्यात् ।
विड्वा उक्थ्यानि ।
विट्सप्तदशः ।
विशामेव यज्ञः ।
तस्मादुक्थ्य एव सप्तदश स्यादिति ।
तस्य मरुतां चार्को मरुतां च संस्तोभ इत्येते आदिष्टसामनी पवमानयोर्भवतः ।
स्तोममेव तद्रूपेण समर्धयन्ति १७७

अथैषोऽभिजित् ।
देवासुरा वा एषु लोकेष्वस्पर्धन्तास्मिन्भुवने ।
ते देवा अकामयन्ताभीमाँल्लोकाञ्जयेम जयेमासुरान्स्पर्धा भ्रातृव्यानिति ।
त एतं यज्ञमपश्यन् ।

तमाहरन् ।
तेनायजन्त ।
तेनेमाँल्लोकाअभ्यजयन्नजयन्स्पर्धां भ्रातृव्यानसुरान् ।
तद्यदिमाँल्लोकानभ्यजयंस्तदभिजितोऽभिजित्त्वम् ।
अभीमाँल्लोकाञ्जयति जयति स्पर्धां द्विषन्तं भ्रातृव्यं य एवं वेद ।
तस्य त्र्युत्तरिण स्तोमा भवन्ति त्रयो वा इमे लोका एषां लोकानामभिजित्यै
।
चतुरावृतो भवन्ति चतस्रो दिशो दिशामेवाभिजित्यै ।
अभिवतीषु स्तुवन्त्येषामेव लोकानामभिजित्यै ।
आभीकमभिनिधनमभीवर्त आभीशवमित्येतानि सामानि भवन्त्येषामेव
लोकानामभिजित्यै १७८

तस्य रथन्तरं पृष्ठं भवति वामदेव्यं मैत्रावरुणसाम बृहदार्भवे पवमाने ।
इदं वै रथन्तरम् ।
अन्तरिक्षं वामदेव्यम् ।
अद एव बृहत् ।
एषामेव लोकानामनन्तर्हितानामभिजित्यै ।
तस्मिन्नेतानि परोक्षं पृष्ठरूपाण्यवकल्पयन्ति विश्वजितः प्रत्युद्यमाय ।
इन्द्रो वै वृत्रमहन् ।
तं वृत्रं जघ्निवांसमेभ्यो लोकेभ्यस्तमोऽन्ववृणोत् ।
सोऽकामयतापेदं तमो हनीयेति ।
स एतमभिजितं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तस्य त्र्युत्तरिण स्तोमा भवन्ति ।
त्रयो वा इमे लोकाः ।
तेनैभ्यो लोकेभ्यस्तमोऽपाहत ।
तं चतुर्थाल्लोकात्तमोऽन्वेवावृणोत् ।
सोऽकामयतापैवेदं तमो हनीयेति ।
स एतं विश्वजितं यज्ञमपश्यत् ।

तमाहरत् ।
तेनायजत ।
तस्य चतुरुत्तरिण स्तोमा भवन्ति ।
चतस्रो दिशः ।
एष उ ह वै चतुर्थो लोको यद्दिशः ।
तेन चतुर्थाल्लोकात्तमोऽपैवाहत ।
ततो वै स सर्वेभ्य एभ्यो लोकेभ्यस्तमः पाप्मानमपहत्य स्वर्गं लोकमारोहत्
।
सर्वेभ्य एवैभ्यो लोकेभ्यस्तमः पाप्मानमपहत्य स्वर्गं लोकमारोहति य एवं वेद १७९

अथैष विश्वजित् ।
इन्द्रोऽसुरानजयत् ।
तेषां त्वानिव नाजयत् ।
तमेतेन देवा अयाजयन् ।
स विश्वमजयत् ।
इन्द्रो वै विश्वजित् ।
यद्वा एतेन शिल्पेनाजयत् ।
तद्विश्वजितो विश्वजित्त्वम् ।
देवा वा असुरेभ्यो बिभ्यतस्सर्वमिदं संगृह्योर्ध्वा स्वर्गं लोकमुदक्रामन् ।
यो वै सर्वं विन्दमानः सर्वं न ददाति स सर्वपरादायी ।
अथ यस्सर्वं विन्दमानस्सर्वं ददाति स सर्ववेदसी ।
सर्वं वा एष विन्दते यत्सर्वान्स्तोमान्सर्वान्ग्रहान्सर्वाणि पृष्ठानि सर्वाणि छन्दांसि विन्दते ।
तस्य चतुरुत्तरिण स्तोमा भवन्ति ।
इमानेव लोकांस्त्रिभिरभिजयति ।
यश्चतुर्थो विश्वा एव तेनाशास्संभार्या भवन्ति ।
पृष्ठानामेव संयोगो नानादेवत्या भवन्ति तेन युज्यं तेन रूपेण ।
तदाहुरपथमिव वा एते यन्ति ये पावमानीभिः प्रतिपद्यन्त इति ।
पवमानस्य ते कव इति पर्यासो भवति ।

पुनः पन्थानं पर्यवयन्ति ।
न चत्वारि षड्भ्यो भवन्ति ।
तेन विभवन्ति १८०

अथैतान्याप्रीराज्यानि भवन्ति ।
प्रजापतिः प्रजा असृजत ।
स सृष्ट्वा रिरिचानोऽमन्यत ।
स एतान्याप्रीराज्यान्यपश्यत् ।
तैरात्मानमाप्रीणीतायातयामतायै ।
रिच्यत इव वा एष यत्सर्वं ददाति ।
तद्यदेतान्याप्रीराज्यानि भवन्त्यात्मानमेवैतैर्यजमान आप्रीणीतेऽयातयामतायै
।
तदाहुर्वीव वा एते प्राणैर्ऋध्यन्ते ।
य एतानि नानारूपाणि नानादेवत्यानि नानाछन्दःसु समाने यज्ञक्रतौ
संप्रोहन्तीति ।
तद्यद्गायत्रीषु बृहद्भवति प्राणो वै बृहत् ।
प्राणो गायत्री प्राणैरेव तत्समृध्यन्ते ।
यद्यथापूर्वं पृष्ठान्युपेयू रेवतीरुत्तमाः कुर्यू रेवतीनामेता रूपमृचस्तेनैव
रेवतीनां रूपान्न यन्ति ।
तदाहुर्यन्ति वा एतेऽग्निष्टोमसाम्नो ये त्रयस्त्रिंशं स्तोमं कुर्वन्तीति ।
एकविंशत्यक्षरा एता ऋचो भवन्ति ।
तेनैवाग्निष्टोमसाम्नो न यन्ति ।
तदाहुर्यन्ति वा एते यज्ञायज्ञीयाद्ये बृहदग्निष्टोमसाम कुर्वन्तीति ।
तद्यत्त्वमग्ने यज्ञानां होतेति भवति तेनैव यज्ञायज्ञीयस्य रूपान्न यन्ति तेन
तृतीयसवनान्न यन्ति ।
तदाहुर्वीव वा एष पशुभिर्ऋध्यते यत्सर्वं ददातीति १८१

रोहिणीं छविं परिधत्ते ।
एतद्वै पशूनां प्रियं रूपं यद्रोहितम् ।
पशूनामेव तत्प्रियेण रूपेण समृध्यते ।

खनति खनित्रमवृत्तिमपजयति ।
उभयतःक्ष्णूत्रृ अभ्रिर्भवत्युभयत एवास्मा अन्नाद्यं रदति ।
अरण्ये तिस्रो वसति यदारण्यमन्नाद्यं तदेव ताभिरवरुन्द्धे ।
न ग्रामे नारण्ये तिस्रो यन्न ग्रामे नारण्येऽन्नाद्यं तदेव ताभिः ।
जने तिस्रो जन्यं ताभिः ।
सजने तिस्रः सजन्यं ताभिः ।
ता द्वादश संपद्यन्ते ।
द्वादश मासास्संवत्सरः ।
संवत्सरादेवान्नाद्यमवरुन्द्धे ।
रोहिणीं छविं परिधत्ते ।
एषा ह वा अग्रे पशूनां त्वगास या पुरुषस्य या पशूनां सा पुरुषस्य ।
ते पशव आतपं वर्षं दशान्मशकान्न धारयन्ति ।
ते पुरुषमेत्याब्रुवन्पुरुषेयं तव त्वगस्त्वेषास्माकमिति ।
किं तत स्यादिति ।
आद्या ते स्याम इत्यब्रुवन् ।
इदं ते वास इति वासः प्रायच्छन् ।
तद्यद्रोहिणीं छविं परिधत्ते स्वेनैव तद्रूपेण समृध्यते ।
तथा हैनममुष्मिँल्लोके पशवो नादन्ति ।
अदन्ति ह वा अमुष्मिँल्लोके पशवः पुरुषम् ।
तस्मादु ह गोरन्ते नग्नो न स्यात् ।
ईश्वरो हास्मादपक्रमितोस्त्वचमस्य बिभर्मीति १८२

सा सपुच्छा भवति कृत्स्नत्वाय ।
अथो सर्वे वाव स्म प्राजापत्याः ।
यस्त्वाव पुत्राणां कृपणतमो भवति स पितुर्हृदयमाव्ययति ।
कृपणतामिवैष न्येति यस्सर्वं ददातीति गच्छति प्रजापतेरनुबोधम् ।
तद्या आरण्ये वसेदुदुम्बरे हैव ता वसेत् ।
प्रजापतिर्यत्प्रजाभ्य ऊर्जमन्नाद्यं व्यभजत्ततो यः संशेषः समशिष्यत स एष वनस्पतिरभवत् ।
ऊर्ग्वा उदुम्बरोऽन्नम् ।

अरगयं वा एतस्यान्नाद्यमितं भवति यस्सर्वं ददाति ।
स योऽत्र प्रजापतिन्यङ्गो यदन्नाद्यम् ।
तदेव ताभिरवरुन्द्दे ।
अथ या न ग्रामे नारगये वसेन्निषादेषु हैव ता वसेत् ।
एते ह वै न ग्रामे नारगये यन्निषादाः ।
एताभिर्ह वा उभयमन्नाद्यं समभ्यवैति यच्च ग्राम्यं यच्चारगयम् ।
स योऽत्र प्रजापतिन्यङ्गो यदन्नाद्यं तदेव ताभिरवरुन्द्दे ।
अथ या जने वसेद्वैश्ये वा ह ता भ्रातृव्ये वा वसेत् ।
एष ह वै ब्राःमगस्य जनो यद्वैश्यो वा भ्रातृव्यो वा ।
जनं वा एतस्यानाद्यमितं भवति यस्सर्वं ददाति ।
स योऽत्र प्रजापतिन्यङ्गो यदन्नाद्यं तदेव ताभिरवरुन्द्धे ।
अथ यास्सजने वसेद्राजनि हैव ता वसेत् ।
एतद्ध वै सजनं यद्राजा ।
अन्त उ वा अन्नाद्यस्य श्रीरन्त एव तदन्नाद्यस्य श्रियमन्ततः प्रतितिष्ठति १८३

प्रजापतिः प्रजा असृजत ।
स एतेनैव विश्वजितेदमसृजत विश्वम् ।
तद्यदेता नानारूपाः प्रतिपदो भवन्ति तस्मादु हेदं विश्वं भूतं नानारूपम् ।
पृष्ठानां वावैष योगः ।
उपवत्यैव रथन्तरं युज्यते ।
सरस्वता वैराजस्सारस्वत्या महानाम्नयो ब्राह्मगस्पत्यया वैरूपं सावित्र्या
रेवतय आग्निपावमान्या बृहत् ।
तद्यदेता नानारूपाः ।
प्रतिपदो भवन्ति पृष्ठान्येवैतत्प्रातस्सवने युक्तानि ।
तानि माध्यंदिने सवनेऽभ्यारोहन्ति ।
तदाहुर्वीव वा एते प्रागैर्ऋध्यन्ते ये पवस्विनीभिः प्रतिपद्यन्त इति ।
तद्यदेषा वायव्या प्रतिपद्भवति प्रागो वै वायुः प्रागैरेव तत्समृध्यन्ते १८४

अथैते सरस्वतश्च सरस्वत्याश्च ।
एतद्वै दैव्यं मिथुनं प्रजननं यत्सरस्वांश्च सरस्वती च ।

दैव्येन मिथुनेन प्रजाया इति ।
तदाहुः पुंसः पूर्वा कार्या स्त्रिया उत्तरा ।
तथा यजमानस्यानपगल्भ्या प्रजाजायत इति ।
तदु वा आहुर्वायुर्वै रेतोधाः ।
प्रजननं सरस्वती ।
तौ सरस्वन्तं मिथुनात्प्रजनयतः ।
अथो वाशिता वै पूर्वा धावत्यन्वमृषभः सरस्वत्या एव पूर्वा कार्येति ।
एतदु हैतत्सरस्वतस्त्वेव पूर्वा कार्या ।
अथैषा ब्राह्मणस्पत्या प्रतिपद्भवति ।
प्रजापतिर्या ऋते ब्रह्मणः प्रजा असृजत ता अस्य सृष्टा पराभवन् ।
स एतां ब्राह्मणस्पत्यां प्रतिपदमपश्यत् ।
तया ब्रह्मण्वतीः प्रजा असृजत ।
ता अस्य सृष्टा न पराभवन् ।
तद्यदेषा ब्राह्मणस्पत्या प्रतिपद्भवति ब्रह्मण्वतीरेवैतया प्रजास्सृजते ता अस्य सृष्टा न पराभवन्ति १८५

अथ सावित्रीप्रसवाः ।
यदिह विषुरूपमिमा नानारूपाः प्रतिपद उपागाम तन्नस्सवितृप्रसूतमसदिति ।
अथाग्निपावमान्यः ।
पथमिव वा एते यन्ति ये पावमानीभिः प्रतिपद्यन्त इति ।
अग्निर्वै पथिकृद्देवतानाम् ।
येन वै केन चाग्निनैति पन्थानमेव कुर्वन्नेति ।
तद्यदेषाग्निपावमानी प्रतिपद्भवत्यग्निनैव तत्पथिकृता पन्थानं पर्यवयन्ति ।
पवमानस्य ते कव इति पर्यासो भवति ।
एतत्पुनः पन्थानं पर्यवयन्ति ।
यो वै पृष्ठानां धुर्यं वेद धुर्य स्वानां भवति ।
वैराजं वाव पृष्ठानां धुर्यम् ।
धुर्य स्वानां भवति य एवं वेद १८६

तदाहुः पापवस्यसमिव वा एतत्क्रियते यद्बृहद्रथन्तरे अभितो भवतो मध्ये पृष्ठानि ।
यथा वै पापीयांसमुपर्यासीनं श्रेयानधस्तादुपासीत तादृक्तद्यदेते बृहद्रथन्तरे अभितो भवतो मध्ये पृष्ठानीति ।
बृहद्रथन्तरे एव मध्ये स्यातामभितः पृष्ठानि पापवस्यसस्य व्यावृत्त्यै ।
अथो यथा श्रेयांसमुपर्यासीनं पापीयानधस्तादुपासीत तादृक्तद्यद्बृहद्रथन्तरे मध्ये भवतोऽभितः पृष्ठानीति ।
असर्वपृष्ठो ह तु तथा स्यात् ।
सर्वेषां वै पृष्ठानां वैराजमेव पूर्वं योगमानशे ।
अथो यद्यपि चरमं यन्तं पृच्छेयुरुप पृष्ठान्यगूर्णा इति नेत्येव ब्रूयात् ।
बृहद्रथन्तरे एवाभित स्यातां मध्ये पृष्ठानि सर्वपृष्ठतायै ।
इदं वै रथन्तरमदो बृहत् ।
पशवः पृष्ठानि ।
आभ्यामेवैतल्लोकाभ्यामुभयतः पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद १८७

अथो यथा पिता मातैवं बृहद्रथन्तरे यथा पुत्रा एवं पृष्ठानि ।
यद्वै पुत्रोऽतिपादयति पिता वै तस्य शमयिता पिता निषेद्धा ।
तद्यद्बृहद्रथन्तरे अभितो भवतश्शान्त्या एव निषिद्ध्यै ।
अथो यथा पितरौ पुत्रानभितः परिशयीयातां तादृक्तद्यद्बृहद्रथन्तरे अभितो भवतो मध्ये पृष्ठानि ।
यथा ह वा इदमृषभा वा परस्वन्तो वा समुत्क्रुद्धास्तिष्ठेयुरेवमेतद्यदेतानि मध्यतः पृष्ठानि भवन्ति तद्यच्छ्यैतनौधसे अभितो भवतः ।
ब्रह्म वै नौधसम् ।
ब्रह्मणैवैनांस्तत्पुरस्ताच्छमयित्वा श्यैतेनोपरिष्टाच्छ्येतीकुर्वन्ति ।
तस्मात्पुरस्तादेव नौधसं स्यादुपरिष्टाच्छ्यैतम् ।
तदाहुर्यत्समाननिधनानि पृष्ठानि केनाजामि क्रियन्त इति ।
वैराजं च महानाम्नयश्च वैरूपं च रेवत्यश्चैतेनाख्यानेनाजामीति ।
अथो यदेवैतानि मध्येनिधनानि भवन्ति तेनो एवेति ।
तस्मिंस्त्रयस्सप्तदशा भवन्ति ।

ता एकपञ्चाशत्स्तोत्र्याः ।
तद्गोः प्रातस्सवनम् ।
एकान्ननवतिशतं रात्रेस्सा ज्योतिष्टोमस्य रात्रिः ।
तदेतन्मिथुनं प्रजननं क्रियते ।
प्र मिथुनेन जायते य एवं वेद ।
ता उभयी स्तोत्र्यास्संपद्यन्ते द्वे चत्वारिंशच्छते ।
सा विराट् ।
अन्नं विराट् ।
विराज्येव तदन्नाद्ये यज्ञस्यान्ततः प्रतितिष्ठति १८८

देवासुरा अस्पर्धन्त ।
अथ ह तर्हि प्रजापतावेवैतानि शिल्पान्यासुर्नेतरेषु देवेषु ।
स इन्द्रः प्रजापतिमुपाधावज्जयामासुरानिति ।
तस्मा एव तच्छिल्पं प्रायच्छत् ।
तदस्मिन्प्रत्यमुञ्छत् ।
यथा निष्कं मणिं स्रजं प्रतिमुञ्चेदेवं तन्वोदयच्छत् ।
तस्मादेतच्छिल्पं निरमिमीतैतानि पृष्ठानि ।
अथ यदितरत्तेज आसीद्येनैष एतत्तपति ।
तेऽसुरा इदं रूपं ज्ञात्वा सो नः पिता हन्ति सो नः पिता हन्तीत्येव वदन्तः पराजयन्त ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद १८९

तदाहुर्नातिष्टुत्यम् ।
यथा वै निष्कं मणिं स्रजं प्रतिमुच्य तत्पुनरुन्मुञ्चेत्तादृक्तद्योऽग्निष्टोमेऽतिष्टौतीति ।
अन्यतरद्ध त्वाव स विश्वयोर्जयति ।
अहोरात्रे वै सर्वं विश्वम् ।
अथो यथा महावृक्षस्याग्रं रूढ्वा प्रत्यवरोढुं न विन्देत्तादृक्तद्यदग्निष्टोमो भवति ।

तद्यत्प्रत्यवरोहीणि स्तोत्राणि भवन्त्येषा वै कृत्स्ना प्रतिष्ठा
यदतिरात्रस्तेनैवास्यां प्रतितिष्ठति ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते येऽतिरात्रमुपयन्तीति ।
तद्यद्गायत्रीषु बृहद्भवतीयं वै गायत्र्यस्यामेवैतत्प्रतितिष्ठति १९०

अथो यथा रथाक्षे रथचक्रं प्रतिमुञ्चेदेवमेवैतानि सर्वाणि शिल्पान्याहृत्य
ब्रह्मन्प्रतिष्ठापयन्ति ये गायत्रीषु बृहदग्निष्टोमसाम कुर्वन्ति ।
तस्माद्गायत्रीष्वेव बृहदग्निष्टोमसाम कार्यमिति ।
तदाहुस्सहस्रमेव दद्यात्तदेव विश्वमिति ।
अथो आहुर्यावतीरेवैतस्य विश्वजित स्तोत्र्यास्तावदेव दद्यात् ।
तदेव विश्वमिति ।
तदु वा आहुर्यदेवास्य किंचित्स्वं स्यात्तद्दद्यात् ।
यत्परिशिनष्टि स पाप्मेति ।
यथा वैनं मिथुनात्स्रवत्येवमेनं तस्मात्सर्वस्मात्पाप्मा स्रवति यत्परिशिनष्टि
।
तस्मात्सर्वमेव देयमिति १९१

अथैष वाजपेयः ।
वाजपेयेनान्नाद्यकामो यजेत ।
अन्नपेयो ह वा एष यद्वाजपेयः ।
अन्नं वै वाजः ।
यदा वै गौरश्वः पुरुषोऽन्नस्य सुहितो भवत्यथ स वाजी भवति ।
अग्निष्टोमेन ब्रह्मवर्चसकामो यजेत ब्रह्म वा अग्निष्टोमो
ब्रह्मवर्चसस्यैवावरुद्ध्यै ।
ऋतूनां च ह खलु वै पशूनां च कामायाभिशिच्यमानोऽभिशिच्यते ।
तस्य पञ्च स्तोत्राणि चतुस्त्रिंशानि कुर्युस्सर्वान्पवमानानुभे ब्रह्मसामनी ।
तावतीरुक्थ्यस्य स्तोत्र्याः ।
आप्नुवन्ति तं कामं य उक्थ्ये ।
नो वा अग्निष्टोमाद्यन्ति ।
न ह खलु वा एषोऽग्निष्टोमो नोक्थ्यो न षोडशिमान्नातिरात्रः ।

अतिरिक्तयज्ञो ह वा एषः ।
अतिरिक्तो वै प्रजापतिः ।
प्राजापत्य एष यज्ञः ।
प्रजापतेरेवाप्त्यै ।
तस्य बृहच्छिपिविष्टवती भवति ।
पशवो वै शिपिविष्टाः ।
क्षत्रं बृहत् ।
क्षत्रियस्यो अयं लोकः ।
अस्य नो लोकवतस्साम्नः पशवो लोकमनूपतिष्ठान्ता इति ।
त्रिष्टुप्सु स्तुवन्ति बृहत्साम ।
क्षत्रं वै त्रिष्टुप् ।
क्षत्रेणाभिशिच्यमानोऽभिषिच्याता इति ।
वैष्णवीषु स्तुवन्ति विष्णुर्वै परमो देवतानां परमया
देवतयाभिषिच्यमानोऽभिष्च्याता इति ।
आजिं धावन्ति प्रजापतेरेवाप्त्यै स्वर्गस्य च लोकस्योज्जित्यै ।
सप्तदश प्रव्याधान्धावन्ति ।
सप्तदशो वै प्रजापतिः ।
प्राजापत्य एष यज्ञः प्रजापतेरेवाप्त्यै १९२

तदाहुस्तिसृष्वेवास्तुतासु धावेयुः ।
त्रयो वै प्राणापानव्यानाः ।
तेषां संतत्या अव्यवच्छेदायेति ।
अथो आहुरेकस्यामेवास्तुतायां धावेयुः ।
को ह्येवैष यत्प्राणोऽपानो व्यान इति ।
तदु वा आहुस्सर्वास्वेवास्तुतासु धावेयुरेतयोराज्योरसंसर्गायेति ।
तदाहुर्यन्ति वा एते यज्ञाद्ये बहिर्वेदि प्रसुते धावयन्ति ।
एतावान्वाव यज्ञो यावानन्तर्वेदि ।
षव वेद्यन्ताद्धावयेयुरिति ।
अथो आहू रथोपस्थ एव पादमाधाय तं पुनरेव हरेत् ।
तदेव सृतं चासृतं चेति ।

तदु वा आहुर्धावयेयुरेव ।
रथन्तरेण वै दैव्यमाजिमुज्जयति रथेन मानुषम् ।
तस्माद्धावयेयुरेवैतयोराज्योरुज्जित्या इति ।
ब्रह्मा रथचक्र आसीनस्सामाभिगायत्यग्म वाजं वाजिन इति ।
त आ वाजं वाजिनोऽग्मन्निति ।
अमृतोऽन्नं वै वाजोऽन्नाद्यस्यैवावरुद्ध्यै ।
वर्तमाने गायति ।
वर्तमानेन हि तत्र गच्छति यत्र जिगमिषति ।
वयश्वो ददाति ।
वयश्वो वा इदं विहितम् ।
प्रजापतेर्वा इदं सर्वम् ।
प्राजापत्य एष यज्ञः प्रजापतेरेवाप्त्यै ।
वयसो वयसस्सप्तदश सप्तदश ददाति ।
सप्तदशो वै प्रजापतिः ।
प्राजापत्य एष यज्ञः प्रजापतेरेवाप्त्यै ।
तस्यानिरुक्तं प्रातस्सवनं भवति ।
अनिरुक्तो वै प्रजापतिः ।
प्राजापत्य एष यज्ञः प्रजापतेरेवाप्त्यै ।
वाजवन्माध्यंदिनं सवनम् ।
वाजपेयो ह्येषः ।
चित्रवत्तृतीयसवनम् ।
चित्रतमो ह्येष यज्ञः ।
उच्चा ते जातमन्धसेति माध्यंदिनस्य पवमानस्य अन्धस्वतीर्गायत्र्यो भवन्ति
।
अन्नं वा अन्धः ।
तदेनं तत्सुष्वाणमेव पवमानमुखे अन्नाद्येन समर्धयन्ति १९३

तासु गायत्रमुक्तब्राह्मणम् ।
अथामहीयवम् ।
प्रजापतेर्वा आमहीयवम् ।

प्राजापत्य एष यज्ञः प्रजापतेरेवाप्त्यै ।
अथ सैन्धुक्षितं क्षत्रसाम ।
क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति ।
अथाभीकमभिषिक्त्यै रूपम् ।
पुनानस्सोम धारयेत्युभयरूपा बृहती भवति ।
एषा उभयसामनी उद्ययाम ।
तस्मादेतां कुर्वन्त्येव बृहत्साम्नः कुर्वन्ति रथन्तरसाम्नः ।
तासु रौरवं प्रज्ञातमग्निष्टोमसाम ।
प्रज्ञातमग्निष्टोमसाम नेदन्तरयामेति ।
अथ वाजजिदन्नं वै वाजोऽन्नाद्यस्यैवावरुद्ध्यै ।
अथ दैर्घश्रवसमन्नं वै दैर्घश्रवसमन्नाद्यस्यैवावरुद्ध्यै ।
अथार्कपुष्पमन्नं वा अर्कोऽन्नाद्यस्यैवावरुद्ध्यै ।
अथ समन्तम् ।
समन्तैनं श्रीरसदिति ।
अथ यौधाजयं त्रिणिधनं सवनानां कॢप्त्यै ।
अथौशनमन्त्यं साम अन्त्येन साम्नान्त्यं स्वर्गं लोकमश्नवाता इति ।
अथ रथन्तरम् ।
ब्रह्म वै रथन्तरम् ।
ब्रह्मसव एषः ।
ब्रह्मणाभिषिच्यमानोऽभिषिच्याता इति ।
अथ वामदेव्यं शिवं शान्तं सुष्वाणमनुवर्ताता इति ।
अथो पशवो वै वामदेव्यं पशूनामेवावरुद्ध्यै ।
अथ नौधसं प्रज्ञातं ब्रह्मसाम ।
प्रज्ञातं ब्रह्मसाम नेदन्तरयामेति ।
अथ कालेयं कं सुष्वाणायासदिति ।
अथो कालं सुष्वाणोऽश्नवाता इत्यथो तं कालयातं योऽस्य काल्योऽसदिति ।
यस्ते मदो वरेण्य इत्यार्भवस्य पवमानस्यान्धस्वतीर्गायत्र्यो भवन्ति ।
अन्नं वा अन्धः ।
तदेनं तत्सुष्वाणमेव पवमानमुखेऽन्नाद्येन समर्धयन्ति १९४

तासु गायत्रमुक्तब्राह्मणम् ।
अथो संहितम् ।
ब्रह्म वै संहितम् ।
ब्रह्मसव एषः ।
ब्रह्मणाभिषिच्यमानोऽभिषिच्याता इति ।
अथ वाजदावर्य्यः ।
अन्नं वाजः ।
अन्नदावर्य्य एता अन्नाद्यस्यैवावरुद्ध्यै ।
अथ वारवन्तीयं वारितैनं श्रीरुपतिष्ठाता इति ।
अथो पशवो वै वारवन्तीयम् ।
पशूनामेवावरुद्ध्यै ।
अथ सभम् ।
सभमविभं सुष्वाणायासदिति ।
अथो सभं सुष्वाणोऽश्नवाता इति ।
अथ श्रुधीयं कीर्तिमत्साम ।
पुरायैनं कीर्तिरुत्तस्थिवांसमनूत्तिष्ठादिति ।
पुरोजिती वो अन्धस इत्यन्धस्वतीरनुष्टुभो भवन्ति ।
अन्नं वा अन्धः ।
तदेनं तत्सुष्वाणमेवान्नाद्येन समर्धयन्ति ।
तासु नानदम् ।
षोडशी ह्यत्रापि क्रियते ।
अथ विशोविशीयं क्षत्रसाम क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति ।
अथो अयं सुष्वाणो विशः ।
विशो राजासदिति ।
अथ श्यावाश्वं स्वर्ग्यं साम स्वर्गस्य लोकस्य समष्ट्यै ।
अथान्धीगवमन्नं वा आन्धीगवमन्नाद्यस्यैवावरुद्ध्यै ।
अथ कावं कं सुष्वाणायासदिति ।
अथो कावं सुष्वाणोऽश्नवाता इति ।
अथ यज्ञायज्ञीयं प्रज्ञातमग्निष्टोमसाम ।

प्रज्ञातमग्निष्टोमसाम नेदन्तरयामेति ।
अथो ज्यैष्ठ्यम् ।
ज्यैष्ठ्यं वै यज्ञायज्ञीयम् ।
ज्यैष्ठ्य एवैनं तत्प्रतिष्ठापयति ।
अथ साकमश्वं स्वर्ग्यं साम स्वर्गस्य लोकस्य समष्ट्यै ।
अथ सौभरं बृहतस्तेजः ।
सतेजस्केन नो बृहता स्तुतमसदिति ।
अथ नार्मेधमतिरात्रसामातिरात्रसाम नेदन्तरयामेति ।
अथो पशवो वै नार्मेधं पशूनां एवावरुद्ध्यै ।
अथ षोडशी यः षोडशिनि कामस्स म उपाप्तोऽसदिति ।
अथ बृहच्छिपिविष्टवतीषु भवति ।
मनो वै बृहत् ।
मनः प्रजापतिः ।
सप्तदशमेतत्स्तोत्राणां भवति ।
सप्तदश एष स्तोमः ।
प्रजापतिर्वै सप्तदशः ।
प्रजापति स्वर्गो लोकः ।
श्रीस्तत् ।
एनं तत्प्रजापतावेव स्वर्गे लोके श्रियामन्ततः प्रतिष्ठापयन्ति १९५

अथैष राजसूयः ।
वरुणो वा अकामयत सर्वेषां देवानां राज्याय सूयेयेति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै सर्वेषां देवानां राज्यायासूयत ।
सूयते स्वानां श्रेष्ठतायै य एवं वेद ।
तस्य चतुस्त्रिंशाः पवमाना भवन्ति ।
स्वराड्वै देवलोकः ।
स्वाराज्यमु चतुस्त्रिंशी ।

तदेनं तत्सुष्वाणमेव पवमानमुखे स्वाराज्येन लोकेन समर्धयन्ति ।
अनुष्टुप्प्रतिपद्भवति ।
वाग्वा अनुष्टुप् ।
क्षत्रमु वै वाक् ।
क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति ।
अथैताः पञ्च संभार्या नानादेवत्या भवन्ति ।
पञ्चानां ह वै पुरुषाणां राज्यायाभिषिच्यमानोऽभिषिच्यते राज्ञे राजन्याय सूताय ग्रामण्ये शूद्राय दासाय ।
उदतस्त्रिवृतं स्तोमं हरन्त्युदाग्नेयीं संभार्याभ्यः ।
तस्माद्ब्राह्मणयो राजन्यस्याज्येयोऽमार्योऽदण्ड्योऽघात्यः ।
यदत्र त्रिवृतं स्तोमं कुर्युराग्नेयीं संभार्यास्वब्रह्मज्य एव राजन्यो ब्राह्मणाञ्जिनीयादभ्रूणहत्यै मारयात् १९६

तदाहुर्नैतद्राजन्यो वेदयेत ।
यथा वै श्रेष्ठी कामयते तथा करोति ।
यस्स ब्रूयात्त्रिवृतमेव स्तोमं कुरुताग्नेयीं संभार्यास्वित्यब्रह्मज्य एव राजन्यो ब्राह्मणाञ्जिनीयादभ्रूणहत्यै मारयात् ।
तदु वा आहुर्य एवैतद्राजन्यो वेदयेत तमेवाब्रह्मज्यो जिनीयात् ।
तमभ्रूणहत्यै मारयादिति ।
तदाहुर्यन्ति वा एते प्राणेभ्यो ये त्रिवृत स्तोमाद्यन्तीति ।
त्रिवृताग्निष्टोमेन पुरस्ताद्यजेत ।
प्राणो वै त्रिवृतः ।
तेनैव प्राणेभ्यो न यन्ति ।
ब्रह्म पुरस्तादु क्षत्रं सूयते ।
अथो आहुरपिचितिरिति यज्ञक्रतुः ।
तेनैव यजेतेति ।
तस्य यद्द्वे त्रिवृती स्तोत्रे भवतस्तेनैव प्राणेभ्यो न यन्ति ।
अपचितिमु सुष्वाणोऽश्नुते ।
तदु वा आहुर्यदेवैषा वायव्या प्रतिपद्भवति प्राणो वै वायुः प्राणैरेव तत्समृध्यन्ते ।

वायो शुक्रो अयामि त इति शुक्रवती भवति ।
ज्योतिरिव ह वा एषोऽन्येषु मनुष्येष्वतिभाति यस्सूयतेऽयं सुष्वाणो ज्योतिरिवासदिति ।
मध्वो अग्रं दिविष्टिष्विति तदेतन्मधव्यमेवाग्र्यं कुर्वन्ति ।
आ याहि सोमपीतय इति सौमी ।
तेन पावमानी क्रियते ।
स्पार्हो देव नियुत्वतेति ।
क्षत्रं वै स्पार्हः ।
विशो नियुत्वतीः ।
क्षत्रायैव तद्विशमनुवर्त्मानं कुर्वन्ति ।
तस्मात्क्षत्रस्य विडनुवर्त्मा १९७

अथैते सरस्वतश्च सरस्वत्याश्च ।
एतद्वै दैव्यं मिथुनं प्रजननं यत्सरस्वांश्च सरस्वती च ।
दैव्येन मिथुनेन प्रजाया इति ।
तदाहुः पुंसः पूर्वा कार्या स्त्रिया उत्तरा ।
तथा सुष्वाणस्यानपगल्भ्यो राजपुत्र आजायत इति ।
तदु वा आहुर्वायुर्वै रेतोधाः ।
प्रजननं सरस्वती ।
तौ सरस्वन्तं मिथुनात्प्रजनयतः ।
अथो वाशिता वै पूर्वा धावत्यन्वमृषभः सरस्वत्या एव पूर्वा कार्येति ।
एतदु हैतत्सरस्वतस्त्वेव पूर्वा कार्या ।
अथ ब्राह्मणस्पत्या ब्रह्मण्य क्षत्रं सूयाता इति ।
अथ सावित्री सवितृप्रसूतस्सूयाता इति ।
अथैते उभे प्रतिपदौ भवतः ।
उभे ह्यत्र सामनी क्रियेते ।
अभिवन्नवर्चं भवत्यभिषिक्त्यै रूपम् ।
अथो तेनैव त्रिवृत स्तोमान्न यन्ति ।
सवत्षड्चं भवति ।
सामानं वदन्तीभिस्सूयाता इति ।

वृषरावद्भवति ।
श्रयं वृषाभिषिच्यमानोऽभिषिच्याता इति ।
चतुर्ऋचं भवति चतुष्पदां पशूनामवरुद्ध्यै ।
परोक्षं द्विपदा भवन्ति द्विपदां पशूनामवरुद्ध्यै ।
पर्यासो भवति यः पर्यासे कामस्स म उपाप्तोऽसदिति १९८

श्रध क्षपा परिष्कृत इत्यनुष्टुबन्त्या भवति ।
स ह वा उद्गाता राजानं राजसूयेन याजयेद्य एनं बहिष्पवमान एव देवानां देवासन्दीमारोहयेत् ।
श्रनुष्टुप्प्रतिपद्भवति श्रनुष्टुबन्त्या ।
तयोश्चतुष्षष्टिरक्षराणि ।
ततो यानि षष्टिरासन्दी सा ।
श्रथ यानि चत्वार्यासन्दीपादास्ते ।
एतद्वै राजानमुद्गाता बहिष्पवमान एव देवानां देवासन्दीमारोहयति ।
उभयान्याज्यानि भवन्ति ।
उभे ह्यत्र सामनी क्रियेते ।
तदाहुरन्यतराण्येव कार्याणि यान्येव बार्हतानि ।
विड्भाजनानि वा श्राज्यान्यपि वाजिन्या विशः क्षत्रं सूयाता इति ।
तदु वा श्राहुरुभयान्येव कार्याणि ।
सर्वेषां वै राज्यायाभिषिच्यमानोऽभिषिच्यते ।
तस्मादुभयान्येव कार्याणीति ।
तानि पञ्चदशानि भवन्ति ।
क्षत्रं वै पञ्चदशः ।
क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति १९९

श्रवभृतादुदेयुषे द्वादशपुष्करां स्रजं प्रतिमुञ्चति ।
श्रापो वै देवानां पत्नय श्रासन् ।
ता मिथुनमैच्छन्त ।
ता देवा उपायन् ।
ता गर्भमदधत ।

ततः पुष्कराण्यजायन्त ।
सत्यं वा आपः ।
सत्यं दीक्षा ।
सत्यस्यैव तत्सत्यं यत्पुष्कराणि ।
सत्यस्यैवास्मै तत्सत्येन तपो दीक्षां प्रतिमुञ्चति ।
सा द्वादशपुष्करा भवति ।
द्वादश मासास्संवत्सरः ।
संवत्सरो यज्ञः ।
यज्ञमेवास्मिंस्तत्प्रतिमुण्चति ।
अथो आहुस्सप्तपुष्करैव स्यादिति ।
सप्त वै छन्दांसि ।
छन्दोभिर्यज्ञस्तायते ।
यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति ।
अथो आहुष्षट्पुष्करैव स्यादिति ।
षड्वा ऋतवस्संवत्सरः ।
संवत्सरो यज्ञः ।
यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति ।
अथो आहुः पञ्चपुष्करैव स्यादिति ।
पाङ्क्तो यज्ञः ।
पाङ्क्ताः पशवः ।
पशवो यज्ञः ।
यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति ।
अथो आहुश्चतुष्पुष्करैव स्यादिति ।
चतस्रो दिशः ।
चतुष्पदा पशवः ।
पशवो यज्ञः ।
यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति ।
अथो आहुस्त्रिपुष्करैव स्यादिति ।
त्रिषवणो यज्ञः ।
यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति ।

तदु वा आहुर्द्वादशपुष्करैव स्यादिति ।
द्वादशसु वावैतानि सर्वाणि ।
तस्माद्द्वादशपुष्करैव स्यादिति २००

अथैतास्संसृप इष्टयो भवन्ति ।
वरुणस्य ह वै सुष्वाणस्य षोडशतयैरापो भर्गं निरघ्नन् ।
तदिमां दिशमपतत् ।
तच्चतुर्धाभवद्भृगुस्तुरीयं सरस्वती तुरीयं दशपेयस्तुरीयं श्रायन्तीयं तुरीयम् ।
तस्मादेतस्य यज्ञस्य भार्गवो होता भवति सरस्वतीरापोऽभिषेचनीया दशपेयो यज्ञ श्रायन्तीयं ब्रह्मसाम ।
ते देवा अब्रुवन्नेतेदं भर्गमनुविन्दामेति ।
त एतास्संसृप इष्टीरपश्यन् ।
ताभिरेनदनु समसर्पन् ।
यदनु समसर्पंस्तत्संसृपां संसृप्त्वम् ।
तद्विष्णुनैव देवतया दशभ्यामन्वविन्दन् ।
तस्मादेतस्य यज्ञस्य वैष्णवं दशमं हविर्निरुप्यते ।
दशम्यां ह्यन्वविन्दन् ।
दशमीं प्रसृप्तो भवति ।
दशम्यां ह्यन्वविन्दन् ।
दश चमसा भवन्ति ।
दशम्यां ह्यन्वविन्दन् ।
दश दश चमसमनु प्रसृप्ता भवन्ति ।
दशम्यां ह्यन्वविन्दन् ।
यो दशपुरुषं सोमपीथादव्यवच्छिन्नस्स भक्षस्य कर्ता ।
दशम्यां ह्यन्वविन्दन् ।
तदनुविद्याग्निना पर्यैन्धत ।
मरुतोऽधमन् ।
श्रायन्तीयेनैनदश्रीणन् ।
तच्छ्रायन्तीयस्य श्रायन्तीयत्वम् ।
तस्य यज्ञायज्ञीयस्यर्क्षु बहिष्पवमानं भवति ।

अग्निर्वै यज्ञायज्ञीयस्यर्चः ।
अग्निनैवैनत्तत्परीन्धते २०१

आयन्तीयं ब्रह्मसाम ।
समेवैनत्तच्छ्रीणन्ति ।
यज्ञायज्ञीयमनुष्टुप्सु प्रोहन्ति ।
वाग्वै यज्ञायज्ञीयम् ।
वागनुष्टुप् ।
वाचैवैनत्तत्समर्धयन्ति ।
वारवन्तीयमग्निष्टोमसाम ।
इन्द्रियं वै वीर्यं वारवन्तीयम् ।
इन्द्रियेणैवैनत्तद्वीर्येण समर्धयन्ति ।
सप्तदशस्तोमो भवति प्रजापतिर्वै सप्तदशः ।
प्रजापतिर्नष्टस्यानुवेत्ता स यो नष्टस्यानुवेत्ता तेनेदं भर्गमनुविन्दामेति ।
अग्निष्टोमो यज्ञस्संवत्सरो वा एष
यदग्निष्टोमस्संवत्सरेणैवैनांस्तत्परिगृह्यात्मस्वदधत ।
तस्मिन्नेता यथारूपं दक्षिणा नीयन्ते स्रगुद्गातू रुक्मो होतुः
प्राकाशावध्वर्योर्द्वादश पष्ठौहीर्ब्रह्मणे धेनुर्मैत्रावरुणायर्षभो ब्राःमणाच्छंसिने
वाससी नेष्टापोत्रो स्थूरि यवाचितमच्छावाकायानड्वानग्नीधः ।
तद्यत्स्रगुद्गातुर्भवति सौर्यो वै स्रक्सौर्य उद्गाता तत्तत्सलक्ष्म क्रियते २०२

सा पटरिणी भवति ।
पटरीव ह्यसावादित्यः ।
अथ यद्रुक्मो होतुर्भवति त्रीणि वा एतानि सम्यञ्चि संधीयन्ते ।
रुक्म आहवनीयोऽसावादित्यः ।
तद्यदेतानि सम्यञ्चि संधीयन्ते समृद्ध्या एव ।
समस्मा ऋध्यते य एवं वेद ।
अथ यत्प्राकाशावध्वर्योर्भवतो रूपेणेन्ततां आह्वयन्तीति वा आहुः ।
अथो यदेव तौ प्रकाशेनैव सो स्तत्त्प्रकाशैव चरतस्तत्तत्सलक्षम क्रियते ।
अथ यद्द्वादश पष्ठौहीर्ब्रह्मणे भवन्ति प्रजननं वै पष्ठौहीः प्रजननं ब्रह्मा

तत्तत्सलक्ष्म क्रियते ।
अथ यद्धेनुर्मैत्रावरुणाय भवति पयस्या वै धेनुः पयस्याभाजसौ मित्रावरुणौ तत्तत्सलक्ष्म क्रियते ।
अथ यदृषभो ब्राह्मणाच्छंसिने भवत्यैन्द्रो वै ब्राह्मणाच्छंस्यैन्द्र ऋषभस्तत्तत्सलक्ष्म क्रियते ।
अथ यद्वाससी नेष्टापोत्रोर्भवतो मारुते वै वाससी मारुतौ नेष्टापोतारौ तत्तत्सलक्ष्म क्रियते ।
अथो भूमा वै मरुतो भूमा तन्तुभिर्वासः ।
अथ यत्स्थूरि यवाचितमच्छावाकाय भवति धीतेव ह वा एषा होत्रा यातयाम्नी यदच्छावाकीया ।
तामेतैरेव यवैराप्याययन्ति ।
तत्स्थूरि भवति क्षेमस्य रूपम् ।
होत्रा अनुविमुच्यान्ता इति ।
अथ यदनड्वानग्नीधे भवति वहति वा अनड्वान्वहत्यग्निर्देवेभ्यो हविस्तत्तत्सलक्ष्म क्रियते ।
तद्यदेता यथारूपं दक्षिणा नीयन्ते समृद्ध्या एव ।
समस्मा ऋध्यते य एवं वेद २०३

अवभृतादुदेत्य श्मश्रूण्येव वपते न केशान् ।
श्रीर्वै शिरः ।
शिर उ ह वै सुष्वाणस्य श्रीर्गच्छति ।
स यत्पुरा संवत्सरात्केशान्वपेत श्रियमेव वपेत न केशान् ।
अथ यदुपरिष्टात्संवत्सरस्य केशान्वपते संवत्सरेणैव तदात्मञ्छ्रियं परिगृह्य केशानेव वपते न श्रियम् ।
तस्मादुपरिष्टादेव वपेत ।
सोऽतिरात्रो भवति ।
एतद्वै केशानां रूपं यदतिरात्रः ।
ये शुक्ला अह्नस्ते रूपं ये कृष्णा रात्र्यै ते ।
तस्मादतिरात्रो भवति ।
तस्यैते प्रतिलोमा भवन्ति ।

तदा श्रेयांसं वा एषोऽभ्यारोहति यस्सूयत इति ।
तस्यैकविंशं प्रातस्सवनं भवति ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एष वै वरुणः ।
वरुणसव एष एतर्ह्यभ्यारोहति यो वै श्रेयांसमभ्यारुह्याथास्मै न निह्नुते यया वै स तमार्त्या कामयते तयैनं निनयति ।
तद्यदेते प्रतिलोमा स्तोमा भवन्ति निह्नवाना एवैतदपविजानानाः पुनरर्वाञ्चि स्तोमा आयन्ति ।
यो वै श्रेयांसमभ्यारुह्याथास्मै निह्नुते व्येहि मापक्रमीरिति वै स तमाह तद्यदाश्विनाः क्रतवः पुनरूर्ध्वा उद्यन्ति यथा निह्नवानं ब्रूयाद्व्येहि मापक्रमीरिति तादृक्तत् ।
तस्य रथन्तरं माध्यन्दिने भवति ।
इयं वै रथन्तरम् ।
अस्यामेवैतत्प्रतितिष्ठति २०४

अथैष द्विरात्रः ।
प्रजाकामो हैतेन यजेत ।
तस्योभये स्तोमा भवन्त्ययुजश्च युग्मन्तश्च ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभये स्तोमाः ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्य पञ्चविंशं ब्रह्मसाम भवति ।
पुरुषो वै पञ्चविंशः ।
यजमानकामो वा एष यद्ब्रह्मसाम ।
प्रजामेव तत्पुरुषतां गमयति ।
तस्य सप्त च शतानि विंशतिश्च स्तोत्र्या भवन्ति ।
तावन्तस्संवत्सरस्याहोरात्राः ।
अहोरात्रा वा इदं सर्वं प्रजनयन्ति ।

ते य इदं सर्वं प्रजनयन्ति ते मा प्रजनयानिति २०५

अथैष त्रिष्टोमोऽग्निष्टोमः ।
प्रतिष्ठाकामो हैतमाहरेत ।
तदाहुः प्रेव वा एषोऽस्माल्लोकाच्च्यवते यस्सूयत इति ।
तद्यत्त्रिष्टोमो भवति त्रयो वा इमे लोका एष्वेव तल्लोकेषु प्रतितिष्ठति ।
अथो हैष धृतिरेव नाम यज्ञक्रतुः ।
तस्य रथन्तरं पृष्ठं भवति ।
तेन हैतेनाभिप्रतारणो राजा नेजे ।
द्विरात्रान्तं हैव चक्रे ।
तमु ह ब्राह्मण उवाच परा कुरवः कुरुक्षेत्रं जेष्यन्ते ।
प्रजामेवाहरत न क्षेत्राणीति ।
त एते कुरवः कुरुक्षेत्रं पराजित्य चरन्ति सल्वा एते कुरुक्षेत्रे ।
स वा एष क्षेत्राणामेव धृत्या ह्रियते यत्त्रिष्टोमोऽग्निष्टोमः २०६

अथैते नाकसदः ।
स्वर्गं ह वै लोकं देवा अभ्यारुरुहुः ।
ते स्वर्गं लोकं गत्वा सार्धमेवाव्यवसिता आसन् ।
तेऽकामयन्त नाके स्वर्गे लोके व्यवस्येमेति ।
त एतान्नाकसद स्तोमानपश्यन् ।
तानाहरन्त ।
तैरयजन्त ।
ततो वै ते नाके स्वर्गे लोके व्यवास्यन् ।
यन्नाके स्वर्गे लोके व्यवास्यंस्तन्नाकसदां नाकसत्त्वम् ।
वि ह वै नाके स्वर्गे लोकेऽवस्यति य एवं वेदेति ह स्माह जानश्रुतेयः ।
अथ ह स्माह वैतहव्योऽस्मिन्नेवाग्रे लोके प्रजापतिर्देवानसृजतेति ।
अथ हेम ऊर्ध्वा लोकाः कृन्तत्रारण्यान्येवासुररथयाना यथा वनाकक्षा एवमप्रेताः ।
ते देवा अकामयन्त स्वर्गं लोकमियामेति २०७

ते वसवः प्रथम स्रायन् ।
ते त्रिभिरेव त्रिवृद्धिरिमं लोकं प्रायुवन्नेकेन पञ्चदशेनान्ववास्यन् ।
त्रिभिरेव त्रिवृद्धिरिममन्तरित्तं लोकं प्रायुवन् ।
एकेन सप्तदशेनान्ववास्यन् ।
त्रिभिरेव त्रिवृद्धिरमुं लोकं प्रायुवन् ।
एकेनैकविंशेनान्ववास्यन् ।
तद्यथा ह वै परशोस्तिग्म यथाग्निर्देवतानामेवमेष यत्त्रिवृत्स्तोमः ।
तद्यथा परशुना पुरस्तात्संवृश्चयन्नियादग्निना पश्चात्समं कुर्वन्नेवमेव तद्वसवस्त्रिवृता स्तोमेनेमाँल्लोकान्प्रायुवन् ।
तद्यदिमाँल्लोकान्प्रायुवंस्तस्मादु हैते प्रयुतो नामापि स्तोमाः ।
तद्यथाग्निदग्धे सुगेऽवस्यन्नियादेवमेव तद्वसव स्रायन् ।
तस्मात्ते पराध्या देवानाम् ।
ते हि प्रथम स्रायन् २०८

स्रथ रुद्राः कृततरं पन्थानमपश्यन् ।
त एकेनैव त्रिवृतेमं लोकं प्रायुवन् ।
त्रिभिः पञ्चदशैरन्ववास्यन् ।
एकेनैव त्रिवृतेममन्तरित्तं लोकं प्रायुवन् ।
त्रिभिस्सप्तदशैरन्ववास्यन् ।
एकेनैव त्रिवृतामुं लोकं प्रायुवन् ।
त्रिभिरेकविंशैरन्ववास्यन् ।
तद्यथा ह वै कृतस्य पथो यत्तत्त्रिविषमम् ।
तत्पश्चात्समं कुर्वन्नेवमेव तद्रुद्रा स्रायन् ।
स्रथादित्याश्चतुर्भिरेव त्रिवृद्भिश्चतुर्भिर्पञ्चदशैस्त्रिभिस्सप्तदशैरेकेनैकविंशेन कृतेन पथायन् ।
स्रथाङ्गिरसस्त्रिभिरेव त्रिवृद्भिः पञ्चदशैस्त्रिभिस्सप्तदशैस्त्रिभिरेकविंशैर्विराट्स्वराजेन पृथगेवायन् ।
त्रिणवेनैव मरुत स्रायन् ।
स्रोजो वै वीर्यम् ।
मरुत स्रोजो वीर्यम् ।

त्रिणवस्तेऽत ओजसैव वीर्येणायन् ।
त्रयस्त्रिंशेनैव विश्वे देवा आयन् ।
ते स्वर्गं लोकं गत्वा सार्धमेवाव्यवसिता आसन् ।
तेऽकामयन्त वयमपि नाके स्वर्गे लोके सीदेमेति २०९

त एतं विश्वे देवास्त्रयस्त्रिंशं स्तोममपश्यन् ।
तमाहरन्त ।
तदाहुः कतमे विश्वे देवा इति ।
एता एव पञ्च देवतास्संपद्य एव विश्वे देवा भवन्तीति ह ब्रूयात् ।
त एतेन विश्वे देवास्त्रयस्त्रिंशेन स्तोमेन समयजन्त ।
तत्त्रयस्त्रिंशद्वै देवतास्त्रयस्त्रिंशद्देवलोकाः ।
ततो वै ते नाके स्वर्गे लोकेऽसीदन् ।
तेऽब्रुवन्नसदाम वै स्वर्गे लोके नाक इति ।
यद्ब्रुवन्नसदाम वै स्वर्गे लोके नाक इति तन्नाकसदां नाकसत्त्वम् ।
अपि सो ह वै नाके स्वर्गे लोके सीदति य एवं वेद ।
तेषूभे उभेसामनी भवत उभाभ्यां हि तत्र गच्छति यत्र जिगमिषति ।
तेषु यानि सुवर्निधनानि यानि ज्योतिर्निधनानि सामानि तान्यवकल्पयन्ति
स्वर्ग्याणि स्वर्गस्य लोकस्य समष्ट्या अहोरूपाणां च समृद्ध्यै २१०

अथैत ऋतुष्टोमाः ।
ऋतवो वा अकामयन्त समानेन यज्ञेन समानीमृद्धिमृध्नुयामावान्नाद्यं
रुन्धीमहि पुनर्नवाः पुनर्नवा स्यामेति ।
त एतान्यज्ञानपश्यन् ।
तानाहरन्त ।
तैरयजन्त ।
स वसन्तः प्रथमोऽयजत ।
स एतेनायजत ।
स एतामेवर्द्धिमार्ध्नोदेतदन्नाद्यमवारुन्द्धैतां पुनर्नवतां यैषा वसन्तस्य ।
अथ शिशिर षद्मत येनैवैमे पूर्वा इष्ट्वारात्सुस्तेनो एवाहं यजा इति ।
स एतेनैवायजत ।

स एतामेवर्द्धिमार्ध्नोदेतदन्नाद्यमवारुन्द्धैतां पुनर्नवतां यैषा शिशिरस्य २११

शश्वद्धैषामेष एवर्द्धतमः ।
एतं ह्येव प्राप्य गोरश्वस्य पुरुषस्यैतमेव रूपमभ्यवैति ।
तदेतदनन्तं देवचक्रमक्षितं पुनर्नवमा च परा च परिवर्तते ।
स य एतदेवं वेदैतामेवानन्ततामेतामक्षितिमेतां पुनर्नवतां जयति ।
स यः कामयेत समानेन यज्ञेन समानीमृद्धिमृध्नुयामावान्नाद्यं रुन्धीय पुनर्नवः पुनर्नव स्यामिति स एतैर्यजेत ।
स वसन्ते प्रथमेन यजेत ।
स एतामेवर्द्धिमृध्नोति एतदन्नाद्यमवरुन्द्ध एतां पुनर्नवतां यैषा वसन्तस्य ।
ग्रीष्मे द्वितीयेन यजेत ।
वर्षासु तृतीयेन यजेत ।
शरदि चतुर्थेन यजेत ।
हेमन्पञ्चमेन यजेत ।
शिशिरे षष्ठेन यजेत ।
स एतामेवर्द्धिमृध्नोत्येतदन्नाद्यमवरुन्द्ध एतां पुनर्नवतां यैषा शिशिरस्य २१२

स हर्तूनामेवैको भवति ।
ऋतूनेवाप्येत्यक्षय्यं हास्याव्यवच्छिन्नं सुकृतं भवति ।
पुनर्नवः पुनर्नवो हैव सुकृतेनाप्यायमान एति ।
ते पञ्च स्तोत्र्या भवन्ति ।
यः पाङ्क्तो यज्ञो ये पाङ्क्ताः पशवो यत्पाङ्क्तमन्नाद्यं ये पञ्चर्तवो यत्किं च पञ्च पञ्च तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।
तेषामु एकैकस्य षष्टि षष्टि स्तोत्र्या भवन्ति ।
तावतीर्ऋतो रात्रयः ।
तेनर्तून्नातिष्टवन्ति ।
तेषामु सर्वेषां त्रीणि षष्टिशतानि स्तोत्र्या भवन्ति ।
तावतीष्संवत्सरस्य रात्रयः ।
रात्रिश एव तत्संवत्सरमाप्नुवन्ति ।
तदाहुः पृष्ठान्येवोपेत्यानीति ।

पृष्ठाद्वाव पृष्ठमुपेयात् ।
पृष्ठानि ह्यृतव इति ।
स रथन्तरसामैव प्रथम स्यादथ बृहत्सामाथ वैरूपसामाथ वैराजसामाथ शक्वरीसामाथ रेवतीसामोत्तम स्यादिति ।
तदु वा आहुर्दीर्घोपसद्भिस्स्तुत्यायै पृष्ठानि व्यवच्छिद्येरन् ।
यदेवं कुर्युर्दूरे दूर इव वै पृष्ठान्युपयन्ति ।
पृष्ठं वाव पृष्ठमभिवोढुमर्हति ।
उपजो वा एषा बृहद्रथन्तरयोर्यदेतानि सामानि ।
बृहद्रथन्तरे वै विच्छिन्नस्य यज्ञस्य सन्तत्यौ ।
तस्माद्बृहद्रथन्तराभ्यामेव स्युरिति ।
स रथन्तरसामैव प्रथम स्यादथ बृहत्सामाथ रथन्तरसामाथ बृहत्सामाथ रथन्तरसामाथ बृहत्सामोत्तम स्यादिति ।
तेषु यान्यृतुनिधनानि यान्यृतुनिधनानि सामानि तान्यवकल्पयन्ति स्वर्ग्याणि स्वर्गस्य लोकस्य समष्ट्या अहोरूपाणां च समृद्ध्यै २१३

अथैते दिशां स्तोमाः ।
दिशो वा अकामयन्त समानेन यज्ञेन समानीमृद्धिमृध्नुयाम प्रतितिष्ठेमानन्तं स्वर्गं लोकं जयेमेति ।
ता एतान्यज्ञानपश्यन् ।
तानाहरन्त ।
तैरयजन्त ।
सेयं प्राची दिक्प्रथमायजत ।
सैतेनायजत ।
सैतामेवर्द्धिमार्ध्नोदेतां प्रतिष्ठामेतमनन्तं स्वर्गं लोकमजयत् ।
स एष एतस्यानन्त स्वर्गो लोको जितः ।
स यो ह वा अपि बहून्येवाहानि प्राङियान्नैवैतस्या अन्तं विन्देत् ।
अथेयमूर्ध्वा दिगैक्षत येनैवेमाः पूर्वा इष्ट्वारात्सुस्तेनो एवाहं यजा इति ।
सैतेनैवायजत ।
सैतामेवर्द्धिमार्ध्नोदेतां प्रतिष्ठामेतमनन्तं स्वर्गं लोकमजयत् ।
स एष एतस्यानन्त स्वर्गो लोको जितः ।

स यो ह वा अपि बहून्येवाहान्यूर्ध्व इयान्नैवैतस्या अन्तं विन्देत् २१४

तदाहुः पृष्ठान्येवोपेत्यानीति ।
पृष्ठाद्धाव पृष्ठमुपेयात् ।
पृष्ठानि हि दिश इति ।
स रथन्तरसामैव प्रथम स्यादथ बृहत्सामाथ वैरूपसामाथ वैराजसामाथ शक्वरीसामाथ रेवतीसामोत्तम स्यादिति ।
तदु वा आहुर्दीर्घोपसद्भिस्सुत्यायै पृष्ठानि व्यवच्छिद्येरन् ।
यदेवं कुर्युर्दूरे दूर इव वै पृष्ठान्युपयन्ति ।
पृष्ठं वाव पृष्ठमभिवोढुमर्हति ।
उपजो वा एषा बृहद्रथन्तरयोर्यदेतानि सामानि ।
बृहद्रथन्तरे वै विच्छिन्नस्य यज्ञस्य सन्तत्यौ ।
तस्माद्बृहद्रथन्तराभ्यामेव स्युरिति ।
स रथन्तरसामैव प्रथम स्यादथ बृहत्सामाथ रथन्तरसामाथ बृहत्सामाथ रथन्तरसामा च बृहत्सामा चोत्तम स्यादिति २१५

त उ वै पञ्च पञ्चविंशा भवन्ति ।
ततो या विंशतिर्विराट्सा ।
अथ याश्चतस्र इमा एव ताश्चतस्रो दिशः ।
अथ या पञ्च पञ्चविंशीयमेव सोर्ध्वा दिक् ।
दिशो ह वै दिवं दुह्रे द्यौर्वा दिशो दुहे ।
प्र ह वै दिशां च दिवश्च दोहमाप्नोति य एवं वेद ।
स यः कामयेत समानेन यज्ञेन समानीमृद्धिमृध्नुयां प्रतितिष्ठेयमनन्तं स्वर्गं लोकं जयेयमिति स एतैर्यजेत ।
स ह महदेवाभि देवयजनं जोषयेत ।
तत्पञ्च शालाः कर्तवै ब्रूयादिहैकामिहैकामिहैकामिहैकां मध्य एकाम् ।
सोऽनेन रथन्तरसाम्ना यजेत ।
स एतामेवर्द्धिमृध्नोत्येतां प्रतिष्ठामेतमनन्तं स्वर्गं लोकं जयति ।
अथानेन बृहत्साम्ना यजेताथानेन रथन्तरसाम्ना यजेताथानेन बृहत्साम्ना यजेताथानेनोभयसाम्ना यजेत ।

स एतामेवर्द्धिमृध्नोत्येतां प्रतिष्ठामेतमनन्तं स्वर्गं लोकं जयति एतामेव दिशमप्येति ।
स ह दिशामेवैको भवति दिश एवाप्येति ।
तस्यैषोऽनन्त स्वर्गो लोको जितो भवति ।
य एष दिशां तेषु यानि दिङ्निधनानि यानि विणिधनानि सामानि तान्यवकल्पयन्ति स्वर्ग्याणि स्वर्गस्य लोकस्य समष्ट्या अहोरूपाणां च समृद्ध्यै २१६

अथैत ऋषिष्टोमाः ।
ऋषयो ह वै स्वर्गं लोकं जिग्युः श्रमेण तपसा व्रतचर्येण ।
तेऽकामयन्त प्रजा अस्मिँल्लोके विधाय स्वर्गं लोकं गच्छेमेति ।
स वसिष्ठोऽकामयताग्र्या मे मुख्या प्रजा स्यादिति ।
स एतं त्रिवृतं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
अग्रं वै मुखं त्रिवृत्स्तोमानाम् ।
ततो वै तस्याग्र्या मुख्या प्रजाभवत् ।
त एतेऽप्येतर्हि वसिष्ठाः कुरुष्वग्र्याश्चैव मुख्याश्च मन्यन्ते ।
अग्र्यो मुख्यो भवति य एवं वेद ।
अथाकामयत भरद्वाज ओजिष्ठा मे बलिष्ठा प्रजा स्यादिति ।
स एतं पञ्चदशं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
ओजो वै बलं पञ्चदश स्तोमानाम् ।
ततो वै तस्यौजिष्ठा बलिष्ठा प्रजाभवत् ।
अपि ह स्म तेन पथा पुरा कुरवो न यान्ति येन भरद्वाजा ययुः ।
अथो ह स्मोत्क्रोशन्ति भारद्वाजबलमिति ।
तस्मादु भारद्वाज एवानुज्ञातः सभायां दण्ड्यं प्रहरेत् ।
ओजिष्ठो बलिष्ठो भवति य एवं वेद २१७

अथाकामयत जमदग्निर्भूमानं प्रजया पशुभिर्गच्छेयमिति ।
स एतं सप्तदशं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
भूमा वै प्रजापतिः सप्तदश स्तोमानाम् ।
ततो वै स भूमानं प्रजया पशुभिरगच्छत् ।
भूमानमेव प्रजया पशुभिर्गच्छति य एवं वेद ।
अथाकामयत गोतम श्रद्धानीया मे प्रजा ब्रह्मवर्चसिनी स्यादिति ।
स एतमेकविंशं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
श्रद्धा वै ब्रह्मवर्चसमेकविंश स्तोमानाम् ।
असौ हि स आदित्यः ।
ततो वै तस्य श्रद्धानीया ब्रह्मवर्चसिनी प्रजाभवत् ।
त इमेऽप्येतर्हि गौतमा श्रद्धानीयाश्चैव ब्रह्मवर्चसिनश्च ।
श्रद्धानीयो ब्रह्मवर्चसी भवति य एवं वेद २१८

अथाकामयतात्रिर्भूयिष्ठा म ऋषयः प्रजायामाजायेरन्निति स एतं त्रिणवं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
तेजो वै त्रिणव स्तोमानाम् ।
ततो वै तस्य भूयिष्ठा ऋषयः प्रजायामाजायन्त परस्सहस्रा हास्य प्रजायां मन्त्रकृत आसुरपि हास्य स्त्रियो मन्त्रकृत आसुः ।
तस्माद्योऽप्यात्रेयीं स्त्रियं हन्ति तं पर्येव चक्षते ।
तेजस्वी भवति य एवं वेद ।
अथाकामयत विश्वामित्रो राज्यं मे प्रजा गच्छेदिति ।
स एतं त्रयस्त्रिंशं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।

क्षत्रं वै त्रयस्त्रिंश स्तोमानाम् ।
ततो वै तस्य राज्यं प्रजागच्छत् ।
अष्टको हास्य प्रजायामभिषिषिचे ।
गच्छति राज्यं य एवं वेद ।
ततो वै ते प्रजा अस्मिँल्लोके विधाय स्वर्गं लोकमगच्छन् ।
प्रजामेवास्मिँल्लोके विधाय स्वर्गं लोकं गच्छति य एवं वेद २१९

तदु हागस्त्यः पश्चेवानुबुबुध ऋषयो ह वा इमे प्रजा अस्मिँल्लोकेविधाय स्वर्गं लोकमग्मन्निति ।
सोऽकामयताहमपि प्रजा अस्मिँल्लोके विधाय स्वर्गं लोकमनुगच्छेयमिति ।
स एतं षोडशं स्तोममपश्यत् ।
तमाहरत् ।
तेनायजत ।
स्वर्गो लोकष्षोडश स्तोमानाम् ।
ततो वै स प्रजा अस्मिँल्लोके विधाय स्वर्गं लोकमन्वगच्छत् ।
प्रजामेवास्मिँल्लोके विधाय स्वर्गं लोकमनुगच्छति य एवं वेद ।
तस्माद्यदागस्त्यो ब्राह्मणान्प्राप्नोत्यनुचर इवैव भवति ।
अनुचर इव ह्येष स्तोमानां यत्षोडशः ।
तस्माद्वगस्तयो बहिर्धेव कुरुपञ्चालेभ्यः ।
बहिर्धेव ह्येष स्तोमेभ्यो यत्षोडशः २२०

अथैते व्रात्यस्तोमाः ।
दिव्या वै व्रात्या व्रात्यामधावयन्बुधेन स्थपतिना ।
त एते व्रात्या आर्छन्निमं वैव योऽयं पवत ईशानं वा देवम् ।
तान्यज्ञस्यात्याविध्यत् ।
ते स्वर्गं लोकं न प्राजानन् ।
तेऽकामयन्त प्र स्वर्गं लोकं जानीयामेति ।
ते प्रजापतिमेवोपाधावन् ।
तेभ्य एतं व्रात्यस्तोमं यज्ञं व्यदधात् ।

तमाहरन् ।
तेनायजन्त ।
ततो वै ते स्वर्गं लोकं प्राजानन् ।
मुह्यन्तीव वा एते ये व्रात्यां धावयन्ति ।
तद्यद्व्रात्यस्तोमेन यजन्ते स्वर्गस्यैव लोकस्यानुख्यात्यै ।
तस्य द्वात्रिंशाः पवमाना भवन्ति ।
द्वात्रिंशदक्षरानुष्टुप् ।
वागनुष्टुप् ।
वाचो वा एते व्यृध्यन्ते ये व्रात्यां धावयन्ति ।
तद्यद्द्वात्रिंशाः पवमाना भवन्ति वाचैव तत्समृध्यन्ते ।
अनुष्टुप्प्रतिपद्भवति ।
वाग्वा अनुष्टुप् ।
वाचो वा एते व्यृध्यन्ते ये व्रात्यां धावयन्ति २२१

वाचा ह्यपूतममेध्यं वदन्ति ।
तेषामिन्द्रियं वीर्यं वाचोऽपक्रामति ।
तद्यदनुष्टुप्प्रतिपद्भवति अभिपूर्वमेव तद्वाचा समृध्यन्ते ।
सो वा अर्बुदस्यर्क्षु भवति ।
अर्बुदो वै सर्प एताभिर्मृतां त्वचमपाहत ।
म्रियन्ते इव वा एते ये व्रात्यां धावयन्ति ।
उत हि स्थविरतरस्यान्त आहनस्यं वदन्ति ।
मृतामेवैताभिस्त्वचमपघ्नते २२२

सो वा आग्नेयी भवति ।
अग्निर्वै लोकानां प्रज्ञपयिता ।
स यो लोकानां प्रज्ञपयिता स नो लोकान्प्रज्ञपयादिति ।
न हि ते अग्ने तन्वै क्रूरं विवेद मर्त्य इति यदिह क्रूरमशान्तमचारिष्म
तदेतयापहनामहा इति ।
कपिर्बिभस्ति तेजनं पुनर्जरायु गौरिवेति पुनरेवैतयापियन्ति ।
अग्ने विश्वेभिरग्निभिरिति वैश्वाग्नमाज्यं भवति ।

अग्नयो वै विश्वे देवाः ।
विश्वानेव तेन देवानपियन्ति ।
तदानुष्टुभं भवति सवनमुखे सवनमुखे वाचा समृध्यामहा इति ।
तत्त्रिवृद्भवति ब्रह्म वै त्रिवृत् ।
ब्रह्मणो वा एते व्यृध्यन्ते ये व्रात्यां धावयन्ति ।
राजपुत्रा इति ह्येनानाचक्षते ।
तद्यत्त्रिवृद्भवति ब्रह्मणैव तत्समृध्यन्ते ।
पञ्चदशं मैत्रावरुणस्य ।
क्षत्रं वै पञ्चदशः ।
अपभ्रंशो ह वै ब्रह्मणः क्षत्रम् ।
क्षत्रेणैव तत्समृध्यन्ते ।
सप्तदशं ब्राह्मणाच्छंसिनः ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतिनैव तत्समृध्यन्ते ।
षोडशमच्छावाकस्य ।
इन्द्रियं वै वीर्यं षोडशी ।
इन्द्रियेणैव तद्वीर्येण समृध्यन्ते २२३

अथैते उष्णिक्ककुभौ माध्यंदिनं सवनमभि प्रत्याहरन्ति ।
प्रजा वै छन्दसामुष्णिक्ककुभौ ।
तयोर्बृहतो मारुतस्य सामनी भवतः ।
द्यौताने वा देवसामे ।
छन्दांसि वै स्वर्गो लोकः ।
स यथा प्रियं पुत्रमारभ्य याचेत्सखा वा सखायमनुसंविदमेवमेवैतत्सर्वाणि छन्दांस्यारभ्य मध्यतो वियन्ति ।
तयोरन्यतरस्यां ब्रह्मसाम ।
ब्रह्म वै ब्रह्मसाम ।
यजमानकामो वा एष यद्ब्रह्मसाम ।
स्व एव तदायतने यजमानं कामैस्समर्धयन्ति ।
सप्तदशं होतुः पृष्ठं भवति ।

प्रजापतिर्वै सप्तदशः ।
प्रजापतिमेवैतन्मध्यतो वियन्ति ।
एकविंशं मैत्रावरुणस्य ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एतमेवैतन्मध्यतो वियन्ति ।
त्रिणवं ब्राह्मणाच्छंसिनः ।
त्रिणवा इमे लोकाः ।
इमानेवैतल्लोकान्मध्यतो वियन्ति ।
षोडशमच्छावाकस्य ।
इन्द्रियं वै वीर्यं षोडशी ।
इन्द्रियेणैव तद्वीर्येण समृध्यन्ते ।
षोडशमु एवादोऽच्छावाकस्य ।
तद्द्वात्रिंशत् ।
द्वात्रिंशदक्षरानुष्टुप् ।
योऽनुष्टुभि कामस्स न उपाप्तोऽसदिति २२४

अथैता नदं व ओदतीनामित्युष्णिहाभाजनमार्भवे पवमाने क्रियन्ते ।
तास्सप्ताक्षरपदा भवन्ति ।
सप्त प्राणाः ।
प्राणैरेव तत्समृध्यमाना यन्ति ।
प्राणेषु प्रतितिष्ठन्ति ।
उत ह्यहिंस्यं ब्राह्मणं हिंसन्ति श्रोत्रियं वा गृहमेधिनं वा ।
तद्यत्सप्ताक्षरपदा भवन्ति प्राणैरेव तत्समृध्यन्ते ।
ताश्चतुष्पदा भवन्ति प्रतिष्ठायै ।
चतुष्पदीव प्रत्यष्ठादिति वा आहुः ।
सुप्रतिष्ठितं तास्वभीवर्तः ।
वाग्वा अभीवर्तः ।
वाचो वा एते व्यृध्यन्ते ये व्रात्यां धावयन्ति ।
तद्यदभीवर्तो भवति वाचैव तत्समृध्यन्ते ।
अग्न आ याह्यग्निभिरित्यग्निष्टोमसाम भवति ।

अग्नयो वै सर्वे देवाः ।
सर्वानेव तेन देवानपियन्ति ।
तत्त्रयस्त्रिंशं भवति ।
त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वास्वेवैतद्देवतासु यज्ञस्यान्ततः प्रतितिष्ठन्ति २२५

ताः केशिनीर्भवन्ति ।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यमिति केशैरिव ह्येते चरन्ति ।
अथैष कुषीतगृहपतीनामैषीकपावानां षोडशपवमानः ।
इन्द्रियं वै वीर्यं षोडशी ।
आरभमाणा एवेन्द्रियेण वीर्येण समृध्यामहा इति ।
त्रीणि पञ्चदशान्याज्यानि भवन्ति ।
क्षत्रं वै पञ्चदशः ।
क्षत्रेणैव तत्समृध्यन्ते ।
षोडशमच्छावाकस्य ।
इन्द्रियं वै वीर्यं षोडशी ।
इन्द्रियेणैव तद्वीर्येण समृध्यन्ते ।
षोडशो माध्यंदिनः ।
तद्द्वात्रिंशत् ।
द्वात्रिंशदक्षरानुष्टुप् ।
योऽनुष्टुभि कामस्स न उपाप्तोऽसदिति ।
त्रीणि सप्तदशानि पृष्ठानि भवन्ति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतिनैव तत्समृध्यन्ते ।
षोडशमच्छावाकस्य ।
इन्द्रियं वै वीर्यं षोडशी ।
इन्द्रियेणैव तद्वीर्येण समृध्यन्ते ।
षोडश आर्भवः ।
तद्द्वात्रिंशद् ।
द्वात्रिंशदक्षरानुष्टुप् ।

योऽनुष्टुभि कामस्स न उपाप्तोऽसदिति ।
एकविंशमग्निष्टोमसाम ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एतस्य वा एते सलोकतां गच्छन्ति एतमभ्यारोहन्ति २२६

अथैष कनिष्ठानामग्रकामाणाम् ।
तस्य त्रिवृतस्सतश्चतुर्विंशं बहिष्पवमानम् ।
ते ये कनिष्ठा अग्रकामा स्युस्त एतेन यजेरन् ।
तद्यत्त्रिवृतस्सतश्चतुर्विंशं बहिष्पवमानं भवति चतुर्विंशत्यर्धमासस्संवत्सरः
।
संवत्सरो वा अग्रं ज्यैष्ठ्यं स योऽग्रं ज्यैष्ठ्यं स नोऽग्रं ज्यैष्ठ्यं गमयादिति ।
स त्रिवृद्भवति ।
त्रिवृद्वै स्तोमानामग्रं ज्यैष्ठ्यम् ।
स योऽग्रं ज्यैष्ठ्यं स नोऽग्रं ज्यैष्ठ्यं गमयादिति ।
स गायत्रीषु भवति ।
गायत्री वै छन्दसामग्रं ज्यैष्ठ्यम् ।
सा याग्रं ज्यैष्ठ्यं सा नोऽग्रं ज्यैष्ठ्यं गमयादिति ।
तस्य रथन्तरं पृष्ठं भवति ।
रथन्तरं वै पृष्ठानामग्रं ज्यैष्ठ्यम् ।
तद्यदग्रं ज्यैष्ठ्यं तन्नोऽग्रं ज्यैष्ठ्यं गमयादिति ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
संवत्सरो वा अग्रं ज्यैष्ठ्यम् ।
स योऽग्रं ज्यैष्ठ्यं स नोऽग्रं ज्यैष्ठ्यं गमयादिति ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरो वा अग्रं ज्यैष्ठ्यम् ।
स योऽग्रं ज्यैष्ठ्यं स नोऽग्रं ज्यैष्ठ्यं गमयादिति ।
गच्छन्ति ह कनिष्ठास्सन्तो ज्येष्ठताम् २२७

अथैते चातुर्मास्याः ।
प्रजापतिः प्रजा असृजत ।
ता अस्य सृष्टाः पराभवन् ।
तदिदं सरीसृपमभवद्यदन्यत्सर्पेभ्यः ।
स द्वितीया असृजत ।
ता अस्य परैवाभवन् ।
ते मत्स्या अभवन् ।
स तृतीया असृजत ।
ता अस्य परैवाभवन् ।
तानि वयांस्यभवन् ।
स षत्तत या इमास्त्रयीः प्रजा असृत्त्यृते ब्रह्मण ऋतेऽन्नाद्यादृते यज्ञात्परा ता अभूवन् ।
हन्तो न्वेव ब्रह्मणोऽन्नाद्याद्यज्ञात्प्रजास्सृजा इति ।
सोऽन्नाद्यमात्मन्नधत्त ।
तदभ्यस्तनयत् ।
तत्प्राक्प्रैषत् ।
तौ स्तनावभवताम् ।
यदभ्यस्तनयत्तत्स्तनयो स्तनत्वम् ।
तदत्यत्तरत् ।
तत्त्तीरमभवत् ।
यदत्यत्तरत्तत्त्तीरस्य त्तीरत्वम् ।
व्रीहियवौ ह वाव स तदात्मन्दधे ।
तदेतद्व्रीहियवयोः त्तीरम् ।
स षत्ततालं वै तस्मा अस्मि सृजेयेत्तदन्नं लभेत यत्सृजेय हन्त सृजा इति
२२८

स एतांश्चातुर्मास्यान्यज्ञानपश्यत् ।
तानाहरत् ।
तैरयजत ।
तैरिमाः प्रजा असृजत ।

या इमा स्तनवतीस्ताभ्योऽन्नाद्यं प्रायच्छत् ।
ता अस्यान्नवतीः प्रजा अभवन् ।
स यः कामयेत बहुः प्रजया पशुभिः प्रजायेयान्नवतीर्म इमाः प्रजा स्युरिति स एतैर्यजेत ।
बहुरेव प्रजया पशुभिः प्रजायतेऽन्नवतीरस्य प्रजा भवन्ति ।
तदेषाभ्यनूच्यते ।

तिस्रो ह प्रजा अत्यायमीयुर्
न्यन्या अर्कमभितो विविश्युः
बृहद्ध तस्थौ रजसो विमाने
पवमानो हरित आ विवेश
इति ।
तद्यदाह तिस्रो ह प्रजा अत्यायमीयुरिति या एव ताः प्रजा अत्यायमायंस्ता एव ताः ।
न्यन्या अर्कमभितो विविश्युरित्यग्निर्वा अर्कस्तमिमाः प्रजा अभितो विष्टाः ।
बृहद्ध तस्थौ रजसो विमाने पवमानो हरित आ विवेशेति ।
दिशो वै हरितः ।
ता अयं वायुः पवमान आविष्ट इति वाजसनेयः ।
अथैकादशाक्षी ।
तिस्रो ह प्रजा अत्यायमीयुरिति ।
या एव ताः प्रजा अत्यायमायंस्ता एताः ।
न्यन्या अर्कमभितो विविश्युरित्यन्नं वा अर्कस्तदिमाः प्रजा अभितो विष्टाः ।
बृहद्ध तस्थौ रजसो विमान इति ।
मनो वै बृहत् ।
तदिदं रजसो विमाने मध्य आत्मनो हृदयं तत् ।
पवमानो हरित आ विवेशेति ।
प्रजा वै हरितः ।
ता अयं प्राणः पवमान आविष्ट इति २२९

सोऽकामयत वैश्वदेवीः प्रजास्सृजेयेति ।
स एतं वैश्वदेवं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तेन वैश्वदेवीः प्रजा असृजत ।
स यः कामयेत वैश्वदेवीः प्रजास्सृजेयेति स एतेन यजेत ।
वैश्वदेवीरेव प्रजास्सृजते ।
स त्रिवृद्रथन्तरसामा भवति ।
ब्रह्म वै त्रिवृत् ।
ब्रह्म रथन्तरम् ।
ब्रह्मणा वा एनास्तदसृजत ।
ब्रह्मणैव प्रजास्सृजते य एवं वेद ।
तस्याग्नेयश्च बार्हस्पत्यश्च पशू भवतः ।
ब्रह्म वा अग्निः ।
ब्रह्म बृहस्पतिः ।
ब्रह्मणा वा एनास्तदभिपूर्वमसृजत ।
ब्रह्मणैवाभिपूर्वं प्रजास्सृजते य एवं वेद ।
तस्य मैत्रावरुण्यनूबन्ध्या भवति ।
मित्रो वै यज्ञस्य स्विष्टं गृह्णाति वरुणो दुरिष्टम् ।
तद्यन्मैत्रावरुण्यनूबन्ध्या भवति पुनरेवास्मै मित्रो ददाति ।
स्विष्टमस्मै वरुणः करोति ।
द्यावापृथिव्योपालंभ्या भवति ।
द्यावापृथिवी वा आइत्नेतां यद्वा अयमिदं सृजत आवं वा अयमिदं प्रतिष्ठे पश्यन्सृजते हन्तास्मिन्भागधेयमिच्छावहा इति ।
तेऽस्मिन्भागधेयमैच्छेताम् ।
ताभ्यामेतां द्यावापृथिव्यामुपालंभ्यामकल्पयत् ।
तद्यदेता द्यावापृथिव्योपालंभ्या भवति द्यावापृथिवी एवैतेन भागधेयेन निरवदयन्ते ।
आग्नेयः पशुर्यज्ञो वा अग्निर्नेद्यज्ञादग्नेरयामेति २३०

ता अस्य प्रजास्सृष्टा वरुणस्य यवमादन् ।
ता वरुणो वरुणपाशेनागृह्णात् ।
स षन्नत या अमूः पूर्वाः प्रजा असृक्षि परा ता अभूवन् ।
यदीमाः पराभवन्ति क्व ततो भवानि हैन्तैना अभितो भिषज्यानीति ।
स एतौ द्विदिवौ वरुणप्रघासावपश्यत् ।
तावाहरत् ।
ताभ्यामयजत ।
ताभ्यामेना वरुणीयादेनसो व्यमुञ्चत् ।
तद्यदेतौ द्विदिवौ वरुणप्रघासौ भवतो वरुणीयादेवैताभ्यामेनसः प्रजा मुञ्चति
।
मरुत्वती पूर्वस्याह्न प्रतिपद्भवति ।
आग्नेयश्च मारुतश्च पशू ।
ता अस्य प्रजा वरुणगृहीता मरुतो रन्ध्रारायन्ववपातिनो व्यमिमथिषन्त ।
तद्यन्मरुत्वती प्रतिपद्भवति मरुत एवैतेन भागधेयेन निरवदायन्ते ।
आग्नेयपशुर्यज्ञो वा अग्निर्नेद्यज्ञादग्नेरयामेति ।
कवत्युत्तरस्याह्नः प्रतिपद्भवति कायोपालम्भ्या प्रजापतिर्वै कः प्रजापतिमेव
तदन्ततः प्रीणन्ति ।
प्रजापतिर्वा षन्नत कं वै प्रजाभ्यो भूवं कमात्मनेऽसानीति ।
स एतां कवतीं प्रतिपदमपश्यत्कायामुपालंभ्याम् ।
ततो वै स कं प्रजाभ्योऽभवत्कमात्मने ।
कं हैव प्रजाभ्यो भवति कमात्मने य एवं वेद ।
आग्नेयः पशुर्यज्ञो वा अग्निर्नेद्यज्ञादग्नेरयामेति २३१

अथ यद्वारुणो निर्वरुणताया एव ।
ता अस्य प्रजा वरुणान्मुमुचाना वृत्रः पाप्मागृह्णात् ।
स षन्नत हन्तो न्वेवैना अभितो भिषज्यानीति ।
स एतांस्त्रिदिवान्साकमेधानपश्यत् ।
तानाहरत् ।
तैरयजत ।
तैरेना वृत्रात्पाप्मनोऽभ्यमुञ्चत् ।

तद्यदेते त्रिदिवास्साकमेधा भवन्ति वृत्रादेवैतैः पाप्मनः प्रजा मुञ्चति ।
ता अस्य प्रजा वृत्रात्पाप्मनो मुमुचानास्सर्वास्साकं समैधयन्त ।
यत्साकं समैधयन्त तत्साकमेधानां साकमेधत्वम् ।
साकं ह वै प्रजया पशुभिरेधते य एवं वेद ।
अनीकवती प्रथमस्याह्नः प्रतिपद्भवति ।
आग्नेयः पशुः ।
अग्निना वा अनीकेनेन्द्रो वृत्रं पाप्मानमहन् ।
तद्यदनीकवती प्रतिपद्भवत्यग्निनानीकेन वृत्रं पाप्मानं हनानीति ।
अग्निनैवानीकेन द्विषन्तं पाप्मानं भ्रातृव्यं हन्ति य एवं वेद ।
क्रीडनी द्वितीयस्याह्नः प्रतिपद्भवति ।
आग्नेयश्चैन्द्राग्नश्च पशू ।
तद्यत्क्रीडनी प्रतिपद्भवति यदेव प्रजा वृत्रात्पाप्मनो मुमुचाना आक्रीडन्त तस्मात्क्रीडनी ।
अथो हेन्द्रो वृत्रं हनिष्यन्मरुत उवाच परशुवधहस्ता मामभितः परिक्रीडत स वीतभीर्वृत्रं पाप्मानं हनानीति ।
तमु ह मरुतः परशुवधहस्ता अभितः परिचिक्रीडुः ।
स ह वीतभीर्वृत्रं पाप्मानमहन् ।
वीतभीर्ह वै द्विषन्तं पाप्मानं भ्रातृव्यं हन्ति य एवं वेद ।
आग्नेयः पशुर्यज्ञो वा अग्निर्नेद्यज्ञादग्नेरयामेति २३२

अथ यदैन्द्राग्नो ब्रह्म वा अग्निः ।
क्षत्रमिन्द्रो ब्रह्मणा च ह वाव स तत्क्षत्रेण च सयुग्भ्यां वृत्रं पाप्मानं हनानीति ।
ब्रह्मणा च हैव क्षत्रेण च सयुग्भ्यां द्विषन्तं पाप्मानं भ्रातृव्यं हन्ति य एवं वेद ।
वैश्वकर्मणी तृतीयस्याह्नः प्रतिपद्भवति ।
वैश्वकर्मण्युपालंभ्याग्नेयश्च माहेन्द्रश्च पशू ।
तद्यद्वैश्वकर्मणी प्रतिपद्भवति वैश्वकर्मण्युपालंभ्या प्रजापतिर्वै विश्वकर्मा प्रजापतिमेव तदन्ततः प्रीणन्ति ।
अथो यदेव प्रजा वृत्रात्पाप्मनो मुमुचाना विश्वं कर्मोपाक्रमन्त

तस्माद्वैश्वकर्मणी ।
आग्नेयः पशुर्यज्ञो वा अग्निर्नेद्यज्ञादग्नेरयामेति २३३

अथ यन्माहेन्द्रः ।
इन्द्रो ह वा एष पुरा वृत्रस्य वधादास ।
स वृत्रं हत्वा महेन्द्रोऽभवत् ।
भूयो ह्येव ज्यायसा कर्मणाऽभ्यश्नुते ।
तस्मादु राजानं विजितिनमाचक्षते महाराज इति ।
अथैष शुनासीर्यो यद्वा इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यमासीत्तच्छुनम् ।
यत्संवत्सरस्य प्रजितस्य पयस्तत्सीरम् ।
तद्यदिन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं यत्संवत्सरस्य प्रजितस्य
पयस्तदुभयमवरुणधामहा इति ।
संवत्सरसद्ध खलु वा एष यश्चातुर्मास्ययाजी ।
तस्य शुनासीर्यं मे महाव्रतं भाजनम् ।
स यावत्संवत्सरेण महाव्रतवतावरुन्द्धे तावदवरुन्द्धे य एवं वेद ।
तस्य सौरी प्रतिपद्भवति सौर्युपालंभ्या ।
असौ वा आदित्यः ।
सूर्य एष इन्द्रः ।
षन्द्रं महाव्रतं तत्तत्सलक्ष्म क्रियते ।
ऋतुषु ह खलु वा एष संवत्सरं स्वर्गं लोकमप्येति यश्चातुर्मास्ययाजी ।
स वसन्तमेव प्रथमेनाह्नाप्येति ग्रीष्मं द्वितीयेन वर्षास्तृतीयेन शरदं चतुर्थेन
हेमन्तं पञ्चमेन शिशिरं षष्ठेन ।
संवत्सरमेव शुनासीर्येणाप्येति ।
स सर्वस्तोमो भवति ।
सर्वं हि तद्यत्सर्वस्तोमः ।
सर्वमेवैतेनाप्येति ।
तस्य त्र्येणी शलली भवति लौहायसः क्षुरः ।
स चतुर्षु चतुर्षु मास्सु केशान्परिवर्तयतेऽनन्तताया असौ वा आदित्योऽनन्तः
।
अनन्तो वा असौ भूत्वेदं सर्वमभ्यश्नुतेऽनन्तो भूत्वेदं सर्वमभ्यश्नवा इति ।

अनन्तो भूत्वेदं सर्वमभ्यश्नवा इति २३४

इत्येकाहं समाप्तम्

अहीनम्

अथैते द्विरात्राः ।
हविष्मांश्च वै हविष्कृच्चाङ्गिरसावास्ताम् ।
तावस्मिँल्लोके स्त्रीचर्यं प्रमत्तौ चरन्तावृषयोऽङ्गिरसः पितरश्च पितामहाश्च सुकृतो हित्वा स्वर्गं लोकमायन् ।
तौ यदा सा चर्या परैदथाकामयेतां कथं न्विद्यत्र नावृषयोऽङ्गिरसः पितरश्च पितामहाश्च सुकृत स्वर्गं लोकमितास्तदनुगच्छेवेति ।
तौ तपोऽतप्येताम् ।
तावेतद्द्विरात्रं यज्ञमपश्यताम् ।
तमाहरेताम् ।
तेनायजेताम् ।
ततो वै तौ यत्रैनयोर्ऋषयोऽङ्गिरसः पितरश्च पितामहाश्च सुकृत स्वर्गं लोकमिता आसंस्तदन्वगच्छताम् ।
स यःकामयेत यत्र मे पितरश्च पितामहाश्च सुकृत स्वर्गं लोकं इतास्तदनुगच्छेयमिति स एतेन यजेत ।
यत्र हैवास्य पितरश्च पितामहाश्च सुकृत स्वर्गं लोकमिता भवन्ति तदेवानुगच्छति ।
अथो आहुर्यस्मादेव श्रेयान्भ्रातृव्य स्यात्स एनेन यजेतेति ।
पूर्वप्रेत इव ह वा एष य श्रेयान् ।
पूर्वप्रेतानिव वा एतेन तौ तानाप्नुताम् ।
आप्त्वा श्रेयांसं वसीयानात्मना भवति ।
अथो आहुः प्रजाकाम एवैनेन यजेतेति ।
आत्मा वै पूर्वमहः प्रजोत्तरम् ।
आत्मानमेव पूर्वेणाह्ना संस्कुरुते प्रजामुत्तरेण २३५

सुदुष्षज इव ह खलु वा एष यज्ञक्रतुर्यद्द्विरात्रः ।
यदि ज्योतिरग्निष्टोमः पूर्वमहर्भवति सर्वस्तोमोऽतिरात्र उत्तरं स्तोत्राणि विच्छिन्दन्ति ।
अथ यदि ज्योतिरग्निष्टोमः पूर्वमहर्भवति सर्वस्तोम उ एवातिरात्र उत्तरं स्तोत्राणि विच्छिन्दन्ति ।
अथ यदि ज्योतिरुक्थ्यः पूर्वमहर्भवति सर्वस्तोम उ एवातिरात्र उत्तरं यज्ञमुखं छम्बट्कुर्वन्ति ।
तद्यज्ञ्योतिर्भवति तेन यज्ञमुखं न छम्बट्कुर्वन्ति ।
अथ यदुक्थ्यस्तेन स्तोत्राणि न विच्छिन्दन्ति ।
आप्त इव ह खलु वा एष यज्ञक्रतुर्यो विराजमभिसंपन्नः ।
स पुनरारम्भ्यो भवति ।
त्यद्यदुत्तरस्याह्नश्चतुर्विंशं बहिष्पवमानं भवति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरो यज्ञो यज्ञमेवैतद्यज्ञमुख आरभन्ते ।
अथो चतुर्विंशत्यक्षरा वै गायत्री ।
गायत्र्यो वा आप्तं यज्ञक्रतुं पुनस्तन्वते ।
नो ह्यन्या गायत्र्या आप्तं यज्ञक्रतुमुद्यन्तुमर्हति ।
तदाहुः कथं न चतुश्चत्वारिंशो नाष्टाचत्वारिंशो मुखं युग्मतां स्तोमानां भवितुमर्हति ।
कथं चतुर्विंश एवेति ।
स ब्रूयात्त्रिपदा वै गायत्री ।
तत्त्रिपदा प्रतिपद्यन्त इति ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा एषु प्रतिष्ठायोदृचमश्नवामहा इति २३६

विच्छिन्न इव ह खलु वा एष यज्ञक्रतुर्यद्द्विरात्रः ।
गायत्रीं पूर्वमहस्संपद्यते त्रिष्टुभमुत्तरम् ।
अथ क्व जगती चानुष्टुप्चेत्याहुः ।

गायत्रीं चैव पूर्वमहस्संपादयेत्त्रिष्टुभं च जगतीं चानुष्टुभं चोत्तरं छन्दसां संतत्या अव्यवच्छेदाय ।
उच्चा ते जातमन्धसेत्यन्धस्वतीर्भवत्यन्धस्वद्वै जगत्यै रूपं तेन जगत्यै रूपान्न यन्ति ।
वैखानसं भवति जागतं साम ।
तेनैव जगत्यै रूपान्न यन्ति ।
ये द्वे सामनी तयोरन्यतरद्भवति यथोभयापदी प्रतितिष्ठेत्तादृक्तत् ।
सुवर्ज्योतिर्भवति ।
सुवर्वै पूर्वमहर्ज्योतिरुत्तरमह्नोरेव सन्तत्या अह्नोस्समारम्भाय ।
हाविष्मतहाविष्कृते स्वर्ग्ये सामनी स्वर्गस्य लोकस्य समष्टचै ।
तदाहुः ज्ञिप्रे सामनी यदुभे कुर्युरीश्वरो यजमानं पुरायुषः प्रमथितोरनादृत्य हि ताविमं लोकममुमेव लोकमभिसंप्रैतामिति ।
हाविष्मतमेवोत्तरस्याह्न उक्थेषु ब्रह्मसाम कुर्युः ।
तथा सर्वमायुरेति गच्छति स्वर्गं लोकम् २३७

अथ यस्यैतस्य ज्योतिरुक्थ्यः पूर्वमहर्भवत्यायुरतिरात्र उत्तरमेतेनो हाभिप्रतारण ईजे राजा प्रजाकामश्च खलती च दैवोवाती अवचिच्छित्समानः ।
ततो वै सोऽव खलती दैवोवाती अच्छिन्त्त ।
इमामियतीं प्रजामध्यगच्छत् ।
त्रीण्यन्यस्यातिरिच्यन्ते द्वाभ्यामन्य ऊनः ।
त्रीणि तानि पुंसोऽतिरिक्तानि यैस्स प्रजनयति ।
द्वे ते स्त्रिया ऊने यतस्सा प्रजायते ।
तदेतन्मिथुनं प्रजननं क्रियते ।
मिथुनेन प्रजननेन प्रजायते य एवं वेद ।
ता उभे स्तोत्र्यास्संपद्यन्ते सप्त च शतान्येकविंशतिश्च तावन्ति संवत्सरस्याहोरात्राणि ।
अहोरात्रे वै कृत्स्नः प्रजापतिः कृत्स्नं प्रजापतिमृध्नवाम कृत्स्नो नः प्रजापतिरुपेतोऽसदिति ।
अथ यैका स्तोत्र्यातिरिच्यते यजमानलोको हैव सः ।

शश्वद्धैनं ब्राःमण उवाच नास्यापरः प्रजायामेतादृङ्वीरोऽनाजानितोः ।
आत्मन एव लोकमकृत न प्रजाया एकमिमं ह्येव लोकमभ्युपागादिति
२३८

तद्धानुबुध्योवाच यथादैवं त्यस्य प्रजाया अस्तु ।
खलती देवेदेवोऽहं दैवोवाती अवाच्छित्सीति ।
तथा हैनं तावभितेपतुस्तथाभिशुशुचतुः ।
तदिदं तदेव ।
इमे हाभिप्रतारणा इयन्तो नो अपरस्तादृङ्वीर आजायते ।
अथ यस्यैतस्यत्रिवृत्पञ्चदशाभ्यां विपर्यासम् ।
पूर्वमहरग्निष्टोमो भवति ।
सर्वस्तोमोऽतिरात्र उत्तरम् ।
प्रजननकामो हैतेन यजेत ।
त्रिवृत्पञ्चदशौ स्तोमौ भवत ऊनातिरिक्तौ मिथुनौ प्रजनी ।
ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
तत्तत्प्रजननं क्रियते ।
तस्य रथन्तरं पृष्ठं भवति ।
प्रजननं वै रथन्तरम् ।
तत्तत्प्रजननं क्रियते ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
संवत्सरः प्रजननम् ।
तत्तत्प्रजननं क्रियते ।
तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननम् ।
तत्तदभिपूर्वं प्रजननं क्रियते ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।

सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु ।
प्रतिष्ठायोदृचमश्नवामहा इति २३९

अथ यस्यैतस्य त्रिवृत्पञ्चदशः सप्तदश इति
पूर्वमहर्भवत्येकविंशस्त्रिणवस्त्रयस्त्रिंश इत्युत्तरं स्वर्गकामो हैतेन यजेत ।
ऊर्ध्वा एते स्तोमा भवन्ति ।
ऊर्ध्वो वै स्वर्गो लोकः ।
स्वर्गस्यैव लोकस्य समष्ट्यै ।
अभिक्रान्तस्तोमा भवन्ति ।
अभिक्रान्तेन ह वै यज्ञस्य भुञ्जते ।
एतेन ह वै तद्धविष्मांश्च हविष्कृच्च सद्य स्वर्गं लोकमीयतुः ।
तस्य पराञ्चयेव स्तोत्राणि भवन्ति पराञ्चि शस्त्राणि भवन्ति पराञ्चि पृष्ठानि
पराचीर्विष्टुतयः पराङेव सर्वो भवति ।
तेन हैतेनोत्तरवयस्येव यजेत यदेमं लोकं न प्रत्यवकाङ्क्षेद्यदास्मिँल्लोके न
निधित्सेद्यदास्माल्लोकादमुमेव लोकमभिसंप्रजिगांसेत् ।
स हैनेन यजेत ।
इष्ट्वा हैव स्वर्गं लोकमेति ।
तस्मिन्नु ह तर्ह्युभे हाविष्मतहाविष्कृते कुर्यु स्वर्ग्यै स्वर्गस्य लोकस्य समष्ट्यै
।
तस्याहुस्सप्त च शतानि विंशतिश्च स्तोत्र्यास्संपादयेयुरिति ।
तावन्ति संवत्सरस्याहोरात्राणि ।
संवत्सरादेव तन्न यन्ति ।
अथो आहुर्यावतीरेवैतस्य ज्योतिर्गौरायुरिति त्र्यहस्य स्तोत्र्यास्तावतीरस्य
स्तोत्र्यास्संपादयेयुरिति ।
तेन त्र्यहरूपान्न यन्ति ।
अथो आहुस्सहस्रमेवास्य स्तोत्र्यास्संपादयेयुरिति ।
सहस्रं वै त्रिरात्रस्य स्तोत्र्याः ।
त्रिरात्ररूपादेव तन्न यन्ति ।
एष ह वै समृद्धो द्विरात्रो यस्त्रिरात्रस्य संपदा तायते यो वा त्रिरात्रश्चतूरात्रस्य

२४०

अथैते त्रिरात्राः ।
त्रिरात्रेण वै देवा एषु लोकेष्वार्ध्नुवंस्त्रिरात्रेण स्वर्गं लोकमायन् ।
वाग्वै त्रिरात्रः ।
वाचो रूपेणाज्यानि चाहानि च विभज्यन्ते ।
एकाक्षरा वै वाक्त्र्यक्षरमक्षरम् ।
अक्षरस्य रूपेण विभज्यन्ते ।
त्रयो गन्धर्वाः ।
तेषामेषा भक्तिरग्नेः पृथिवी वायोरन्तरिक्षमसाव्यथा वा असौ द्यौरेवं सः ।
आदित्यस्य द्यौः ।
तदेषाभ्यनूच्यते
त्रयः कृण्वन्ति भुवनेषु रेतस्तिस्रः प्रजा आर्या ज्योतिरग्राः
त्रयो घर्मास उषसं सचन्ते सर्वं इत्तं अनु विदुर्वसिष्ठाः
इति ।
तद्यदाह त्रयः कृण्वन्ति भुवनेषु रेत इत्यग्निः पृथिव्यां रेतः कृणोति
वायुरन्तरिक्ष आदित्यो दिवि तिस्रः प्रजा आर्या ज्योतिरग्रा इति - २४१

- वसवो रुद्रा आदित्याः ।
तेषामेति ज्योतिरग्रं यदसावादित्यः ।
त्रयो घर्मास उषसं सचन्त इत्यग्निरुषसं सचते वायुरुषसं सचत आदित्य
उषसं सचते ।
सर्वं इत्तं अनु विदुर्वसिष्ठा इति ये वै ब्राह्मणाश्शुश्रुवांसस्ते वसिष्ठास्ते
ह्येतत्सर्वं अनु विदुः ।
एतावान्वाव त्रिरात्रः ।
गायत्रः प्राणस्त्रैष्टुभं चक्षुर्जागतं श्रोत्रम् ।
त्रीणि मिथुनानि तान्येषु मिथुनं द्वे सम्भवतो यन्मिथुनात्प्रजायते तत्तृतीयम् ।
इन्द्रो वृत्राय वज्रमुदयच्छत् ।
तं विष्णुरन्वतिष्ठत् ।
सोऽब्रवीदस्ति वा इदं त्यस्मिंस्तेज इन्द्रियं वीर्यम् ।

तत्त स्राहराणि ।
मा मे प्रहार्षीरिति ।
तथेति ।
तदस्मै प्रायच्छत् ।
तद्विष्णुः प्रत्यगृह्णात् ।
तस्मै द्वितीयमुदयच्छत् ।
तं विष्णुरन्वतिष्ठत् ।
सोऽब्रवीदस्ति वा इदं त्यस्मिंस्तेज इन्द्रियं वीर्यम् ।
तत्त स्राहराणि ।
मा मे प्रहार्षीरिति ।
तथेति ।
तदस्मै प्रायच्छत् ।
तद्विष्णुः प्रत्यगृह्णात् ।
तस्मै तृतीयमुदयच्छत् ।
तं विष्णुरन्वतिष्ठत् ।
सोऽब्रवीदस्ति वा इदं त्यस्मिंस्तेज इन्द्रियं वीर्यम् ।
तत्त स्राहराणि ।
मा मे प्रहार्षीरिति ।
तथेति ।
तदस्मै प्रायच्छत् ।
तद्विष्णुः प्रत्यगृह्णात् ।
तस्मिन्होदाते सर्वं ममेतीन्द्रस्तृतीयं ममेति विष्णुः २४२

तौ वै पृच्छावहा इति ।
तौ ह प्रजापतावपृच्छेताम् ।
ताभ्यां हैतया व्युवाच
उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम्
इति ।
द्वौ तव भागावितीन्द्रमब्रवीत्तृतीयं तवेति विष्णुम् ।

एतदाभ्यां तत्सहस्त्रं प्रायच्छत् ।
तस्यैषाप्तिर्यो बन्धुमाननूचान स्यात्तस्मै प्रथमेऽहनि दद्यात् ।
यथा इयं पृथिव्येवं सः ।
प्रतिष्टिःता वा इयं प्रतिष्ठितस्सः ।
अथ योऽबन्धुरनूचान स्यात्तस्मै द्वितीयेऽहन्दद्यात् ।
यथा वा इदमन्तरिक्षमेवं सः ।
अन्तरिक्षमिति वा इदं विदुर्वेदं तस्य विदुः ।
अथ यो बन्धुमानननूचान स्यात्तस्मै तृतीयेऽहनि दद्यात् ।
यथा वा असौ द्यौरेवं सः ।
द्यौरिति वा अमुं विदुर्बन्धु तस्य विदुः ।
अन्वहं दशतो दीयन्ते ।
दशाक्षरा विराट् ।
वैराजो यज्ञः ।
सैव सा व्यवच्छिन्ना दीयते ।
अन्वहं शतानि दीयन्ते ।
एषा वै यज्ञस्य मात्रा यच्छतम् ।
सैव सा व्यवच्छिन्ना दीयते ।
त्रयस्त्रिंशतं च त्रीणि च शतानि प्रथमेऽहनि दद्यात् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि द्वितीयेऽहनि दद्यात् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि तृतीयेऽहनि दद्यात् ।
अथैषा सहस्रतमी त्रिरूपा द्विदेवत्या ।
तस्यै द्वौ भागौ ब्रह्मण एकोऽग्नीधः २४३

प्रजापतिर्वा इदमग्र आसीत् ।
नान्यं द्वितीयं पश्यमानस्तस्य वागेव स्वमासीद्वाग्द्वितीया स षक्षत हन्तेमां वाचं विसृजै ।
इयं वावेदं विसृष्टा सर्वं विभवन्त्येष्यन्तीति ।
तां वागित्येव व्यसृजत ।
सोर्ध्वोदातनोद्यथापां धारा सन्ततैवम् ।
तस्या एत्येकमक्षरमच्छिनत् ।

तदिदमभवत् ।
अभूद्वा इदमिति ।
तद्भूमेर्भूमित्वम् ।
केति द्वितीयम् ।
तदिदमन्तरिक्षमभवत् ।
अन्तरेव वा इदमुभयमभूदिति ।
तदन्तरिक्षस्यान्तरिक्षत्वम् ।
हो इति तृतीयमूर्ध्वमुदास्यत् ।
तद्द्यौरभवत् ।
अद्युतदिव वा अद इति ।
तद्दिवो दिवत्वम् ।
प्रजापतिर्वा इदमग्र एकाक्षरां वाचं त्रेधा व्यभजत् ।
त इमे लोका अभवनृक्षा अनुपजीवनीयाः ।
सोऽशोचत्सोऽतप्यत ।
स षक्षत कथमिमे लोका लोम गृह्णीयुः कथमुपजीवनवन्त स्युरिति ।
स एतं त्रिरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तमेषु लोकेष्वन्वायातयत् ।
ततो वा इमे लोका लोमागृह्णंस्तत उपजीवनवन्तोऽभवन् ।
त्रिरात्रस्य ह खलु वा इदं पुष्ठं त्रिरात्रस्योदरणं यदेषु लोकेष्वधि ।
गच्छति पशूनां द्विपदां चतुष्पदां भूमानं य एवं वेद २४४

यथो ह वै मणौ मणिसूत्रमोतं स्यादेवमेषु लोकेषु त्रिरात्र ओतः ।
शोभतेऽस्य मुखं य एवं वेद ।
एषा ह खलु वै प्रत्यक्षं वाग्यजिह्वाग्रेणैतद्वाचो वदति यदेति ।
मध्येनैतद्वाचो वदति यद्केति ।
सर्वयैतद्वाचो रसोऽध्यूर्ध्व उद्वदति यद्धो इति ।
हो इति हि सर्वा वाक् ।
तद्यदेतानि रूपाण्याज्येषु चाहस्सु च नियुज्यन्ते ।

मुखत एवैतद्वाचं विसृजन्ते मुखतो याज्ञियं कर्म ।
प्रजापतिर्यद्वाचं व्यसृजत साक्षरदेव ।
तस्या एत्येव प्रथममक्षरं क्षेति द्वितीयं रदिति तृतीयम् ।
तद्येन येन वै रूपेण प्रजापतिर्वाचं व्यसृजत तेन तेन रूपेणाज्यान्यारभ्यन्ते तेन तेनाहान्याप्यन्ते ।
अक्षरेष्ठा ह खलु वा एष यज्ञो यस्त्रिरात्रः ।
अक्षरं त्र्यक्षरं ।
त्र्यक्षरस्त्रिरात्रः ।
अक्षरं त्रिरात्रः ।
स ह वा एनं वेद य एनं पुरुषसम्मितं वेद पुरुषस्त्रिरात्रः २४५

इदमेव प्रथमेनाह्ना व्यकरोद्यदस्यामायत्तमूलमिदं द्वितीयेन यत्प्राणदेजत्यदस्तृतीयेन यद्वर्षति यन्नक्षत्राणि यदमुं लोकं भेजे ।
महाव्रतं वा एतद्यदेष त्रिरात्रस्य ।
यान्येतेषामह्नां बहिष्पवमानानि तच्छिरः ।
येऽभितोऽहनी तौ पक्षौ ।
यन्मध्यममहस्स आत्मा ।
अग्निष्टोमसामान्येव पुच्छम् ।
अथो आहुर्यदेवासावुदेति तच्छिरः ।
येऽभितोऽहनी तौ पक्षौ ।
यन्मध्यममहस्स आत्मा ।
अग्निरेव पुच्छम् ।
अथो आहुर्य एवासावुदेति तच्छिरः ।
येऽभितोऽहनी तौ पक्षौ ।
यन्मध्यममहस्स आत्मा ।
यदेवास्तमेति तत्पुच्छमिति २४६

वाग्देवत्यं वै त्रिरात्रस्य प्रथममहः प्राणदेवत्यं द्वितीयं चक्षुर्देवत्यं तृतीयम् ।
तदाहुः कियांस्त्रिरात्र इति ।
इयानिति ब्रूयात् ।

इयद्ध्येवैतदिति ।
अथो इयानिति ब्रूयात् ।
इयद्ध्येवैतदिति ।
तदाहुरर्वाङ्त्रिरात्रा३ः परा३ङिति ।
पराङिति ब्रूयात् ।
पराङ्हि वदति पराङ्प्राणिति पराङ्पश्यति पराङ्छृणोति ।
अथो ह ब्रूयादर्वाञ्च पराञ्चेति ।
अर्वाञ्च हि पराञ्च वदत्यर्वाञ्च पराञ्च प्राणित्यर्वाञ्च पराञ्च पश्यत्यर्वाञ्च पराञ्च शृणोति ।
तदाहुरेकस्त्रिरात्रा३ु द्वा३ु त्रया३ इति ।
एक इति ब्रूयात् ।
एको ह्येवैष यत्प्राणोऽपानो व्यान इति ।
तदाहुरेकं भूया३स्सहस्रा३मिति ।
एकमिति ब्रूयात् ।
एकं ह्येव भूयस्सहस्रात्संख्याने भवति २४७

वागेवेति ।
गायत्रं वै त्रिरात्रस्य प्रथममहस्त्रैष्टुभं द्वितीयं जागतं तृतीयम् ।
यद्वा अन्यस्य त्रिरात्रस्य विलोम तसस्य सलोम यसस्य सलोम तदन्यस्य विलोम ।
तद्यदेतत्परं सदहरवरं क्रियते यजमानायैव तत्पशून्प्रजनयन्ति न ह्यमुष्मिंल्लोके पशवः प्रजायन्ते ।
एते ह खलु वै छन्दसां वीर्यवत्तमे यद्गायत्री च त्रिष्टुप्च ।
तद्यद्गायत्री च त्रिष्टुप्चाभितो भवतो मध्ये पशवो जगती वीर्यवद्भ्यामेवैतच्छन्दोभ्यां यजमानायोभयतः पशून्परिगृह्णन्त्यपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
असावेव त्रिरात्रो योऽसौ तपति ।
स यथोदेत्येवमस्य प्रथममहर्यथा मध्यन्दिन एवं द्वितीयं यथास्तमेत्येवं तृतीयम् ।
स य एतदेवं वेद गच्छत्येतस्य सायुज्यं सांवेश्यम् २४८

इन्द्रो वै मरुतस्सहस्रमेतेन ह वै तदेनेनेन्द्राग्नी मरुतः सहस्रं जिग्यतुः ।
अजिनोत्स्वां विशं सोमाय राज्ञे प्रतिप्रोच्य ।
तदनुकृतीदमप्येतर्हि राज्ञे प्रतिप्रोच्य विशं जिन्वन्ति ।
तद्यमोऽन्वबुध्यत सहस्रमज्यासिष्टामिति ।
स आगच्छत् ।
स एत्याब्रवीदुप मास्मिन्सहस्रे ह्वयेथामिति ।
तथेति ।
तमुपाह्वयेताम् ।
स यमोऽस्मिन्सहस्रेऽपि गामपश्यत्सहस्रस्य गवां पयो बिभ्रतीम् ।
तामब्रवीदियमेव मम युवयोरेतदितरदिति ।
तावितरावब्रूतां यद्वाव त्वमेतस्यां पश्यसि तदावं पश्याव इति
सोऽब्रवीत्तया वा एता एव विकरवामहा इति ।
ते तयैव व्यकुर्वत ।
तेऽब्रुवन्नंशानाहरामहै यस्मै नः प्रथमैष्यति ।
तेऽंशानाहरन्त ।
सोमस्य प्रथमैत् ।
अथेन्द्रस्याथ यमस्य ।
तामप्सु प्रावेशयन् २४९

तामब्रुवन्सोमायोदेहि तृतीयेन चात्मनस्तृतीयेन च सहस्रस्येति ।
सा बभ्रुः पिङ्गाद्युदैत्तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य ।
सैषा सोमक्रयणी ।
तृतीयेन च ह वै तस्यै तृतीयेन च सहस्रस्य सह सोमो राजा क्रीतो भवति
।
ताम्पुनरेवाप्सु प्रावेशयन् ।
तामब्रुवन्निन्द्रायोदेहि तृतीयेन चात्मनस्तृतीयेन च सहस्रस्येति ।
सा शबली पष्ठौह्युदैत्तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य ।
सैषेन्द्रेष्या दीयते ।
तृतीयेन च ह वै तस्यै तृतीयेन च सहस्रस्य सह सा दत्ता भवति ।

ताम्पुनरेवाप्सु प्रावेशयन् ।
तामब्रुवन्यमायोदेहि तृतीयेन चात्मनस्तृतीयेन च सहस्रस्येति ।
सा धूम्रा दित्यौह्युदैदीर्मतो ह्रसीयसी पश्चाद्वर्षीयसी जरती वाकुष्ठाशृङ्गी तृतीयेन चात्मनस्तृतीयेन च सहस्रस्य ।
सैषानुस्तरणी ।
तृतीयेन च ह वै तस्यै तृतीयेन च सहस्रस्य सह सानुस्तरणी कृता भवति ।
नो हाचक्रुरिव मन्येत २५०

तदाहुर्नामुष्मिँल्लोके सहस्रस्यावकाशोऽस्ति ।
आत्मने वैव न वात्मने चनेति ।
तदाहुः कियदित स्वर्गो लोक इति ।
यावत्सहस्रं गौर्गव्यधि प्रतिष्ठिता तावदिति ब्रूयात् ।
अथो यावत्सहस्रं प्राणैस्सं प्रानन्तीत्यथो यावत्सहस्रमाश्वीनानीत्यथो यावत्सहस्रं योजनानीत्यथो यावत्सहस्रमह्नयानीति ।
तद्गवा गवैवाप्नोति ।
सा यैषा शबली पष्ठौह्युपैनमेषामुष्मिँल्लोके कामदुघा भूत्वा तिष्ठते य एवं वेद ।
तार्प्यं प्रत्यस्य दक्षिणा नयति सहस्रस्य सयोनितायै ।
सहस्रं वै यदसृजत तस्य तार्प्यमेव योनिरासीत् ।
तद्यत्तार्प्यं प्रत्यस्य स दक्षिणा नयति सयोन्येव तत्सहस्रं करोति ।
उप हैनं सहस्रं ददिवांसं सयोनिसहस्रं तिष्ठते य एवं वेद ।
सा या सहस्रतमी स्यात्तस्यै कर्णमाजपेदिळे रन्ते महि विश्रुति शुक्रे चन्द्रे हव्ये काम्येऽदिते सरस्वत्येतानि तेऽघ्न्ये नामानि देवेषु नस्सुकृतो ब्रूतादिति ।
सुकृतं ह वा एनं देवेष्वाह ।
तां कलशमपघ्रापयत्यपजिघ्र कलशं मह्या त्वा विशन्त्विन्दवस्सा नो धुक्षस्सहस्रमुरुधारा पयस्वतीति ।
उप हैनं सहस्रं ददिवांसं सहस्रं तिष्ठते य एवं वेद २५१

प्रजापतिर्वाविदमग्र आसीत् ।

सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति ।
स तपोऽतप्यत ।
स वाचमसृजत ।
वाचो गां निरमिमीत ।
स षन्नतालं वै तस्मा अस्मि यत्सृजेयेत् ।
तदन्नं लभेत यत्सृजेय हन्त सृजा इति स वसूनसृजत स रुद्रान्स आदित्यान्
।
तं वसव उपासीदन्नस्तु न स्वमिति ।
तेभ्य एतां गां प्रायच्छत् ।
तां संवत्सरमरन्नन्त ।
सैभ्यस्संवत्सरे त्रयस्त्रिंशतं च त्रीणि च शतानि प्राजनयत् ।
तां पुनराजायत ।
तं रुद्रा उपासीदन्नस्तु न स्वमिति ।
तेभ्य एतां गां प्रायच्छत् ।
तां संवत्सरमरन्नन्त ।
सैभ्यस्संवत्सरे त्रयस्त्रिंशतं च त्रीणि च शतानि प्राजनयत् ।
तां पुनराजायत ।
तमादित्या उपासीदन्नस्तु न स्वमिति ।
तेभ्य एतां गां प्रायच्छत् ।
तां संवत्सरमरन्नन्त ।
सैभ्यस्संवत्सरे त्रयस्त्रिंशतं च त्रीणि च शतानि प्राजनयत् ।
तत्सहस्रमभवत् ।
सैव सहस्रतमी ।
तां पुनराजायत ।
स यो हैवं विद्वान्गा रन्नते प्र हैवास्य सहस्रमाप्नुवन्ति ।
तस्मादु हैवंविदा रन्नितव्या एव गावस् ।
तेऽब्रुवन्नलं वै तस्मै स्मो यत्सहस्रेण यजेमहि ।
एत सहस्रेण यजामहा इति २५२

तत्सार्धं सहस्रं समाकुर्वन् ।

तदेषां सहस्रं संख्यान एवैकस्यै गोर्नोदभवत् ।
तेऽब्रुवन्प्रजापतिमेवेमां सहस्रतमीं याचामहा इति ।
ते प्रजापतिमेव तां सहस्रतमीमयाचन्त ।
स प्रजापतिरैक्षत यद्येभ्यः प्रदास्यामि रेक्ष्ये यद्येभ्यो न प्रदास्याम्यूनमेषां सहस्रं भविष्यति ।
हैन्तैनान्सहैवानयाभ्युपयानीति ।
तानब्रवीत्सहैव वोऽहमनयाभ्युपयानीति ।
तथेति ।
तांस्तयैव सहाभ्युपैत् ।
त एतं त्रिरात्रं यज्ञमपश्यत् ।
तमाहरन्त ।
सोऽब्रवीत्समेना३नेन यज्ञेन यक्षामहा३ असमेना३ इति ।
समेनेत्यब्रुवन् ।
यत्समेनेत्यब्रुवन्सम एव तद्वर्षमकुर्वत समे राष्ट्रं संज्ञां एव तदकुर्वत ।
अथ यदवक्ष्यन्नसमेनेत्यसम एव वर्षमभविष्यदसमे राष्ट्रमसंज्ञाभविष्यत् ।
ते केन समेष्याम इति ।
यज्ञायज्ञीयेनेति ।
तस्माद्यज्ञायज्ञीयेनैव संयन्ति ।
वाग्वै यज्ञायज्ञीयम् ।
वागिमे लोकाः ।
वाचैव तद्वाचमारोहन् ।
ते त्रयस्त्रिंशतं च त्रीणि च शतानि प्रथमेऽहन्नददुः ।
तेनास्मिँल्लोके वसुभिरराध्नोत् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि द्वितीयेऽहन्नददुः ।
तेनास्मिनन्तरिक्षे लोके रुद्रैरराध्नोत् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि तृतीयेऽहन्नददुः ।
तेनामुष्मिँल्लोक आदित्यैरराध्नोत् ।
स यो हैवं विद्वानेतेन यज्ञक्रतुना यजत एतासु चैव देवतास्वृध्नोत्येतांश्च लोकानाप्नोति २५३

प्रजापतिर्यदग्रे सहस्रमसृजत तत्प्रजाभ्यः प्रायच्छदेतद्रस्सहेति ।
यत्सहेत्यब्रवीत्तत्सहस्रस्य सहस्रत्वम् ।
तस्मादु ह सहस्रीव सतिरेव स्यात् ।
सहेति ह्यब्रवीत् ।
सा यो हैनस्तत्रावास्यमानो ब्रूयादा ते सहस्रस्य पयो दद इति तथा हैव स्यात् ।
ते देवा ईशानं देवमब्रुवंस्त्वं वै न श्रेष्ठोऽसि ।
तमुद्धारमुद्धरस्वेति ।
स एतानि त्रीणि सामानि सहस्रस्य रसं प्रावहतर्त्तनिधनमीनिधनं त्रिणिधनमिति ।
तानि वा एतानि सामानि सहस्रत्रिरात्रेण कार्याणीशानस्य देवस्योद्धार उद्धृतानि ।
उदुद्धारं हरत उद्धार्यो भवति य एवं वेद ।
तस्मादेतानि सामानि सहस्रत्रिरात्रेण कार्याणीशानस्य देवस्याखलस्य सामानीश्वरो यजमानस्य पशूनभिमन्तोरिति ।
अपरसमिव तु हास्य सहस्रं दत्तं स्यात् ।
कार्याण्येव सहस्रस्य धरतायै ।
प्रजापिर्यद्देवेभ्यस्सहस्रं प्रायच्छत्तदप्रतीक्षमाणा एवादन् ।
तद्देवेभ्योऽद्यमानं तिरोऽभवत् ।
तदन्वमन्त्रयन्त ।
तदब्रवीत्क्षयाद्वै बिभेमीति ।
नेत्यब्रुवन् ।
तथा वै त्वात्स्यामो यथा नोऽद्यमानं पीयमानं न क्षेष्यस इति ।
तस्मै वै म ऋतं कुरुतेति ।
तस्मा ऋतनिधनेनैवर्तमकुर्वनीनिधनेनादयन्प्र चैवैनत्त्रिणिधनेनाजनयन्नक्षितिं चास्मा अकुर्वन् ।
अद्यमानमस्य सहस्रं न क्षीयते य एवं वेद २५४

अन्वहमाजिदोहानि भवन्ति ।
प्राणा वा आजिदोहानि ।

यदन्वहमाजिदोहानि भवन्ति ।
प्राणेष्वेव तत्प्रतितिष्ठति ।
अन्वहमाजिदोहानि भवन्ति ।
पशवो वा आजिदोहानि ।
यदन्वहमाजिदोहानि भवन्ति पशुष्वेव तत्प्रतितिष्ठति ।
अन्वहमाजिदोहानि भवन्ति ।
इमे वै लोका आजिदोहानि ।
यदन्वहमाजिदोहानि भवन्त्येष्वेव तल्लोकेषु प्रतितिष्ठति ।
अग्निराजिदोहं वायुराजिदोहमसावादित्य आजिदोहम् ।
यदन्वहमाजिदोहानि भवन्त्येतास्वेव तद्देवतासु प्रतितिष्ठति ।
इमे वै लोका आजयो नाम ।
एतेषामेते दोहाः ।
दुह इमाँल्लोकान्य एवं वेद ।
अन्वहमर्का भवन्त्यन्नं वा अर्कोऽन्नाद्यस्यैवावरुद्ध्यै ।
स्वाशिरामर्कः प्रथमेऽहनि भवति ।
आपो वै स्वाशिरः ।
अन्नमु वा आपः ।
नो वा अनवसोऽध्वानं समश्नुते ।
अग्नेरर्को द्वितीयेऽहनि भवति ।
अन्तरिक्षायतनं वै द्वितीयमहः ।
अस्तमेवान्तरिक्षं तमस्सहचयानि रक्षांस्यग्निर्वै रक्षसामपहन्ता
रक्षसामेवापहत्यै ।
दीर्घतमसोऽर्कस्तृतीयेऽहनि भवति ।
जागतो वै दीर्घतमसोऽर्कः ।
जागतं तृतीयमहः ।
अहरेव तद्रूपेण समर्धयन्ति २५५

अन्वहं सौपर्णानि भवन्ति स्वर्ग्याणि स्वर्गस्य लोकस्य समष्ट्यै ।
तदाहुः क्षिप्राणि सामानीश्वरो यजमानं पुरायुषः प्रमथितोः ।
द्वे एव कार्ये पतनायैवेति ।

सं वा एनं तत्साधयन्तीत्याहुः ।
एकमेव कार्यं समष्ट्या एवेति ।
किमु य एनं प्रमथ्नीयुरपि सर्वाण्येव कार्याणि ।
त्रिरात्रेण वै देवा ऊर्ध्वा स्वर्गं लोकमायन् ।
स एषामसंगृहीतो वीवावृह्यत ।
तं गायत्रपार्श्वेणैवोदस्तभ्नुवन्संतनिना समतन्वन्संकृतिना समकुर्वंस्त्रिषन्धिना समदधुः श्रायन्तीयेन समश्रीणन्नरिष्टेनारिष्टतामगमयन् ।
तद्यदेतानि सामानि भवन्ति त्रिरात्रस्यैवोत्तब्ध्यै त्रिरात्रस्य सन्तत्यै त्रिरात्रस्य संकृत्यै त्रिरात्रस्य संहित्यै त्रिरात्रस्य संश्रित्यै त्रिरात्रस्यारिष्टतायै ।
षळं ककुभि स्वारमुष्णिहि ।
त्रिरात्रमेवैतन्मध्यतो व्यतिषजन्त्यनवस्रंसाय २५६

षट्च वै गायत्री प्रथममहस्संपद्यते दश च स्तोत्र्याः ।
षट्च वै त्रिष्टुभो द्वितीयमहस्संपद्यत एकां च स्तोत्र्याम् ।
अथ यत्तृतीयमहस्तस्य द्वे सवने जगतीस्संपद्यतेऽनुष्टुभः ।
तृतीयसवनमेकविंशष्षोडशी ।
षोडशी वै पूर्वयोरह्नोरपित्वमैच्छत ।
षोडशिनि पूर्वेऽहनी अपित्वमैच्छेताम् ।
तमेताभिरेकादशभि स्तोत्र्याभिरुपसंपराइताम् ।
स आनुष्टुभष्षोडशी समपद्यत ।
स यो वै षोडशिनं पूर्वयोरह्नोरपित्विनं वेद षोडशिनि पूर्वेऽहनी अपित्विनी अपित्वी ह तत्र भवति यत्र कामयतेऽपित्वी ह स्यामिति ।
तदाहु स्तोमैरेव पृष्ठ्यं षडहमाप्नोति संपदा छन्दोमान्नात्र्या दशममहरिति ।
स यवद्द्वादशाहेन दक्षिणावतावरुन्द्धे य एवं वेद ।
अथैषा सहस्रतमी तां यद्द्याद्रिच्येतानु गर्भाश्शुष्येयुर्यन्न दद्यादूनमस्य सहस्रं दत्तं स्यात् ।
कलां चादेयं च न दद्यात् ।
तन्मिथुनम् ।
तदनु प्रजायते ।
तदाहुरदत्तं वै तथा भवत्युत वै कलामेवान्ववजयति ।

तत्तत्कलां वानु सहस्रं इयात् ।
कलावानु सहस्रं तत्तदविज्ञानं दत्वैवैनामद्यया गवा निष्क्रीणीयादिति ।
तदु वा आहुर्दत्तं वै तथा भवति ।
गौरितरा गौरितरोर्णासूत्रस्यैवनामाविकस्य यावदर्हन्तीम्मन्येत तावता निष्क्रीणीयादिति ।
ऊर्णासूत्रमु वै गोः किञ्चिदिव ।
दत्तमस्य सहस्रं भवति नात्मना रिच्यते ।
स यथा वागरया वा रज्ज्वा वा व्रजं परितनुयादेवमेवैतत्पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद २५७

शबलि समुद्रोऽस्यक्षितिर्ब्रह्मदेवी प्रथम्जा ऋतस्यैकमक्षरं क्षरसि विभावर्यभीमाँल्लोकानमृतं दुहाना तां त्वा विद्म सरमे दीद्यानामक्षितिं देवेभ्यो भासा तपन्तीम् ।
तेजोऽसि शुक्रमस्यमृतमस्यन्नमसि महदस्येषासि महि तां त्वा तथा वेद ।
तस्यां त्वय्येतां दक्षिणां निदधेऽक्षितिमक्षीयमाणां श्रियं देवानां बृहज्ज्योतिर्वसानां प्रजानां शचिष्ठामावृतमनुगेषमिति ।
एषा ह वै शचिष्ठावृद्यदसावादित्यः ।
तस्या एते द्वे पदे अहश्चैव रात्रिश्च सत्यं चानृतं च ।
तद्धास्या एतत्सत्यं पदं यदहः ।
तदेतदत्यायु नाम ।
स यो हास्य एतदत्यायु नाम पदं वेदात्येवान्यान्प्रजया पशुभि श्रिया कीर्त्यायुषा भवति २५८

अथास्या एतत्पृश्नि शबलं पदं यद्रात्रिः ।
स यो हास्य एतत्पृश्नि शबलं पदं वेद पृश्निरेव प्रजया पशुभि श्रिया कीर्त्यायुषा भवति ।
तद्यथाग्निं दीप्यमानमुपवाजनेनोपवाजयेदेवमेवैतद्ब्राह्मण आत्मानं संश्यते सत्यं वदन् ।
स सत्यमेव वदेत्सत्यं चरेत्सत्यं चिकीर्षेत्सत्यमेव भवति ।

उत त्वेनमनृतस्य कामो विन्देज्जीवनकाम्या वा स्त्रीकाम्या वा नर्मकाम्या वा सखिकाम्या वा ।
रात्र्यां वा हैनच्छायायां वा वदेत् ।
तथा हैनं तन्न द्रुणीतेद्रुणाति ।
स्वे ह्येनदायतने वदति ।
पृथ्वी बेकुर इति ।
हेति हेसिनी परिमन्थादित्ये मनस्ते भुवो युवस्ते यज्ञस्याज्यमसि धीष्णस्त्वृतुस्था मनस्था मनसो ग्रामस्यामाविशनाभृत्तेऽस्मि रन्तिरसि रमतिरसीमे स्वर्गस्य ऊर्जस्वती पयस्वती शबल्येह्यराभुरस्मि सिकताः पुरोमि वत्सा बिभर्मि सहस्रमातरं विद्म त्वा पुरुष तल्लक स न इदं ब्रूहि यथेदं भविष्यति २५९

अग्ने देवाणां होतस्त्वं देवानां होतास्यहं मनुष्याणां स न इदं ब्रूहि यथेदं भविष्यति न साम समैति न स्तोत्र्या नो मे लोकास्संक्रामन्ति वरीयान्यजमानस्य लोको भवति ।
यत्साम समेयाद्यत्स्तोत्र्यो यदिमे लोकास्संक्रामेयुरंहीयान्यजमानस्य लोक स्यात् ।
गायत्रं समैति ।
प्राणो वै गायत्रम् ।
सर्वत्र ह्येव प्राणः समैति ।
यज्ञायज्ञीयं समैति ।
वाग्वै यज्ञायज्ञीयम् ।
सर्वत्र ह्येव वाक्च प्राणश्च समेतः ।
द्वे सामनी समेतो द्विपाद्यजमानः प्रतिष्ठित्यै ।
प्रतितिष्ठति य एवं वेद २६०

प्रजापतिर्वावेदमग्र आसीत् ।
सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति ।
सोऽशोचत् ।
सोऽतप्यत ।

तं शोचन्तं तप्यमानं प्राणा अभ्यवदन्वयं वा इमं यज्ञमदृश्म तेन त्वा याजयामेति ।
सोऽब्रवीत्तं कथमद्राष्ट कतममद्राष्टेति ।
तेऽब्रुवन्नाश्रावयास्तु श्रौषट् ।
यजये यजामहे ।
वौषडित्येतमदृश्मेति ।
सोऽवेददृशन्वा इति ।
यत्पञ्चासन्पाङ्क्तो यज्ञः ।
तेनावेददृशन्वा इति ।
तेषामु यत्पञ्चानां सतां सप्तदशाक्षराण्यासन्सप्तदशः प्रजापतिः प्राजापत्यो यज्ञः ।
तेनो एवावेददृशन्वावेति ।
सोऽब्रवीत्ते केन होष्यामः कस्मिन्होष्याम इति ।
तेऽब्रुवंस्तवैव वपामुत्खिद्य तां तवैव हृदयेऽग्नौ सर्वहुतां होष्याम इति ।
ते प्रजापतेरेव वपामुदखिदन् ।
वाचमेव तेषां प्राण एवाश्रावयदपानः प्रत्याश्रावयत् ।
मन एव होतासीत् ।
प्रजापतिरेव चतुर्थो ब्रह्मा दक्षिणत आस्त ।
तां प्रजापतेरेव हृदयेऽग्नौ सर्वहुतां अजुहवुः ।
तां यदवपंस्तद्वपायै वपात्वम् ।
यद्वो एनां तदजुहवुस्तदेनामवपन् ।
तस्मादु ह वप्तव्यमेव ।
उप्ताद्ध्येवेदं सर्वं जायते तस्यै हुताया अजः - २६१

- श्वेतो लोमशस्तूपरो लप्सुग्यन्यतोदंश्चतुष्पादजायत ।
तस्मिन्सर्वाणि रूपाणि पर्यपश्यन् ।
तेऽब्रुवन्निमानि वा अस्मिन्सर्वाणि रूपाणि ।
एतेममेवालभामहा इति ।
ते तमालभन्त ।
तेषां प्राण एवाश्रावयदपानः प्रत्याश्रावयत् ।

मन एव होतासीत् ।
प्रजापतिरेव चतुर्थो ब्रह्मा दक्षिणत आस्त ।
तं प्रजापतेरेव हृदयेऽग्नौ सर्वहुतं अजुहवुः ।
तस्माद्धुतादग्निर्देवताजायत ।
तदृचो वेदः ।
अनु वायुर्देवताजायत ।
तद्यजूंषि वेदः ।
अन्वादित्यो देवताजायत ।
तत्सामानि वेदः ।
अन्वेते च त्रयो देवानां श्रेष्ठा अजायन्तैताश्च तिस्रो वियाः ।
शश्वद्धैतावदेव प्रजापतिना सृष्टम् ।
अथैताभिरेव देवताभिरिदमितरत्सर्वम् ।
तेऽब्रुवन्येन नः पिता प्रजापतिर्यज्ञेनेष्ट्वारात्सीत्तेन यजामहा इति ।
ते तमाहरन्त ।
तेषां वायुरेवाश्रावयदादित्यः प्रत्याश्रावयत् ।
अग्निरेव होतासीत् ।
प्रजापतिरेव चन्द्रमाश्चतुर्थो ब्रह्मा दक्षिणत आस्त २६२

त एव चतुर्होतारमासत ।
एते ह वाव चतुर्होतारो यानिमानाहुश्चतुर्होतॄन् ।
तेषां सहस्रतम्यामाहुत्यां गौराजायत ।
तस्यां सर्वान्भोगान्पर्यपश्यन्ये के च गवि भोगास्तान् ।
तेऽब्रुवन्निमे वा अस्यां सर्वे भोगाः ।
एतेमामेव प्र णो जनयेति ब्रवामेति ।
तामब्रुवन्प्र णो जनयेति ।
सा त्रयस्त्रिंशतं च त्रीणि च शतान्याग्नये । प्राजनयत् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि वायवे प्राजनयत् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि आदित्याय प्राजनयत् ।
तत्सहस्रमभवत् ।
सैव सहस्रतमी ।

तां पुनराजायत ।
स यो हैवं विद्वान्गा रक्षते प्र हैवास्य सहस्रमाप्नुवन्ति ।
तस्मादु हैवंविदा रक्षितव्या एव गावः ।
तेऽब्रुवन्नलं वै तस्मै स्मो यन्नानाशो विपरेत्य यजमाना आसीमह्येत नानाशो विपरेत्य यजमाना आसामहा इति ।
ते नानाशो विपरेत्य यजमाना आसत ।
ते नैव श्रेयांसोऽभवन्न पापीयांसः ।
तेऽब्रुवन्न वै श्रेयांसोऽभूम न पापीयांसः ।
एत सहस्रेण यजामहा इति २६३

तत्सार्धं सहस्रं समाकुर्वन् ।
तदेषां सहस्रं संख्यान एकस्यै गोर्नोदभवत् ।
तेऽब्रुवन्प्रजापतिमेवेमां सहस्रतमीं याचामहा इति ।
ते प्रजापतिमेव तां सहस्रतमीमयाचन्त ।
स प्रजापतिरैक्षत यद्येभ्यः प्रदास्यामि रेक्ष्ये यद्येभ्यो न प्रदास्याम्यूनमेषां सहस्रं भविष्यति ।
हैन्तैनान्सहैवानयाभ्युपयानीति ।
तानब्रवीत्सहैव वोऽहमनयाभ्युपयानीति ।
तथेति ।
तांस्तयैव सहाभ्युपैत् ।
त एतं त्रिरात्रं यज्ञमपश्यत् ।
तमाहरन्त ।
सोऽब्रवीत्समेना३नेन यज्ञेन यक्षामहा३ असमेना३ इति ।
समेनेत्यब्रुवन् ।
यत्समेनेत्यब्रुवन्सम एव तद्वर्षमकुर्वत समे राष्ट्रं संज्ञां एव तदकुर्वत ।
अथ यदवक्ष्यन्नसमेनेत्यसम एव वर्षमभविष्यदसमे राष्ट्रमसंज्ञाभविष्यत् ।
ते केन समेष्याम इति ।
यज्ञायज्ञीयेनेति ।
तस्माद्यज्ञायज्ञीयेनैव संयन्ति ।
वाग्वै यज्ञायज्ञीयम् ।

वागिमे लोकाः ।
वाचैव तद्वाचमारोहन् ।
ते त्रयस्त्रिंशतं च त्रीणि च शतानि प्रथमेऽहन्नददुः ।
तेनास्मिँल्लोकेऽग्निरराध्नोत् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि द्वितीयेऽहन्नददुः ।
तेनास्मिनन्तरिक्षे लोके वायुरराध्नोत् ।
त्रयस्त्रिंशतं च त्रीणि च शतानि तृतीयेऽहन्नददुः ।
तेनामुष्मिँल्लोक आदित्योऽराध्नोत् ।
स यो हैवं विद्वानेतेन यज्ञक्रतुना यजत एतासु चैव देवतास्वृध्नोत्येतांश्च लोकानाप्नोति २६४

सा या सहस्रतम्यास विद्युद्धैव सा भूत्वा प्रजापतिं विवेश ।
तदेषाभ्यनूच्यते
अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत
इति ।
इमां हैव गां रूपं प्रत्युह्य विद्युदेव भूत्वा पुनः प्रजापतिं प्रविवेश ।
सैषा विद्युत्सा यदेतत्स्तनयति ददददददेति ।
ददानि ददानीति हैव तत्प्रजाभ्यो वृष्टिमन्नाद्यं प्रयच्छति ।
प्रास्मा एषा देवता वृष्टिमन्नाद्यं यच्छति य एवं वेद २६५

अथैषोऽश्वमेधः ।
प्रजननकामो हैतेन यजेत ।
प्रजापतिर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय
वीमाँल्लोकानाप्नुयामवेन्द्रियं वीर्यं रुन्धीयेति ।
स एतं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत वीमाँल्लोकानाप्नोदवेन्द्रियं वीर्यमरुन्द्ध ।

स यः कामयेत बहुः प्रजया पशुभिः प्रजायेय वीमाँल्लोकानाप्नुयामवेन्द्रियं वीर्यं रुन्धीयेति स एतेन यजेत ।
बहुरेव प्रजया पशुभिः प्रजायते वीमाँल्लोकानाप्नोत्यवेन्द्रियं वीर्यं रुन्द्धे ।
स वा एष वीर्यमेव यज्ञः ।
यर्हि वा एतेन पुरेजिरे सर्वमेव वीर्यवदास ऋषिर्ह स्म मन्त्रकृद्ब्राह्मण आजायतेऽतिव्याधी राजन्यश्शूरः पोषयिष्णुर्वैश्यो रयिमानुत्थाता शूद्रो दक्षः कर्मकर्ता कल्याण्य स्त्रियः पतिव्रताः ।
अकृष्टपच्यं ह स्म धान्यं पच्यते ।
अपि ह स्मैको व्रीहिपात्रः पक्वः कुलायालं भवति ।
तथा पयस्वद्ध तर्हि सर्वमेवास ।
अपि ह स्मारण्ये वीर्याण्युपजायन्तेऽघलास्सिंहा अघलाश्शार्दूला अघला ऋक्षा ऋक्षीका अघला अहयोऽजगराः ।
पुरुषव्याघ्रा ह स्मारण्येष्वाददानास्तिष्ठन्ति ।
अपि ह स्मैकः शिंशुमारो बहूनि तीर्थानि गोपायति ।
वीर्येण ह वाव ते तत्तथासुः २६६

तस्य वा एतस्य ललाटादेव सिंहोऽजायतोरसोऽधि शार्दूल उदराद्द्वीप्यक्षीभ्यामपाष्ठिहौ कर्णाभ्यामश्वकर्णौ केसरेभ्य ऋक्षा ऋक्षीका लोमभ्यो दूर्वा अनूकाच्छिंशुमारो वालेभ्योऽश्ववालाः सक्थिभ्यां क्रौञ्चावाण्डाभ्यां वराहौ वक्त्राभ्यां चक्रवाकौ वनिष्ठोरुद्रो गुदाभ्योऽहयोऽजगराः कुष्ठिकाभ्यो वर्तकाः शफेभ्यः शल्यकाः शकृत्पिण्डेभ्यः कूश्मा ऊवध्यादुर्वारु तंतिसन्तदूलः श्यामाको लोहितकमित्येतत्क्षुद्रमन्नाद्यमुपजज्ञे २६७

तदाहुर्यःकथं स आलभ्य इति ।
य एव दूरे श्रुतस्स आलभ्य इत्याहुः ।
वीर्येण वै स श्रुतः ।
वीर्यमेष यज्ञ इति ।
अथो आहुर्य एव युग्ययोर्वहीयान्स आलभ्य इति ।
वीर्येण ह वै स तयोर्वहीयान् ।

वीर्यमेष यज्ञ इति ।
तस्मिन्ह शौनकश्च कापेयोऽभिप्रतारणश्च समूदाते यःकथंरूपस्स आलभ्य इति ।
तौ ह कृष्णपिशङ्गे संपादयां चक्रतुः ।
यस्य श्वेतस्य सतः कृष्णमस्ति कृष्णस्य वा सत श्वेतं स एव सः प्रजापतिन्यङ्गः ।
प्रजापतेरक्ष्यश्वयत् ।
तत्परापतत् ।
तदपः प्राविशत् ।
ततोऽश्वस्समभवत् ।
यदश्वयत्तस्मादश्वः ।
यच्छ्वयथोस्समभवत्तस्मात्पूतिर्यदपः प्राविशत्तस्माच्छ्वेतनः । श्वेतवर्णः श्वेतस्य वा वै सतोऽक्ष्णः कृष्णमस्ति कृष्णस्य वा सत श्वेतम् ।
स एव स प्रजापतिन्यङ्गः ।
तमेतदालभन्ते २६८

तेन हैतेन मौण्डिभ उदन्युरीज उदन्यूनां राजा ।
तद्ध यवक्रीः सौमस्तम्बिरास्तावं प्रति निषसाद ।
तस्य हायं पूषा रयिर्भग इत्येताः प्रतिपदश्चक्रुः ।
स होवाच छंबणमास्था मौण्डिभाप प्राणानरात्सीरिति ।
एष ह तर्ह्यनुव्याहार आस ।
अथ ह मौण्डिभ उदन्युस्त्रय्यै विद्यायै कस्सवित आस ।
स होवाचसंवृहत मे सदोहविर्धाने मृदा मे ग्रहान्संदिह्य निधत्त ।
यर्ह्ययं ब्राह्मणोऽनुव्याहारी मर्ता तर्हि यष्टास इति ।
तस्य ह मृदा ग्रहान्संदिह्य निदधुः ।
अथ ह यवक्रीः सौमस्तंबिस्तेजस्वी ब्रह्मवर्चस्यास ।
स ह स्म यामच्छाब्रूते या ह स्मैनं कामयते म्रियते ह स्म ।
यो ह स्मैनं न कामयते म्रियत उ एव ।
स ह यज्ञवचसो राजस्तंबायनस्य जायामच्छोचे ।
सा हेक्षां चक्रे यदि वा एनं कामयिष्ये यदि च न मरिष्यत्येव स्या ।

हन्तैनं कामयै ।
ब्राह्मणस्य चित्स्या प्रियं कृत्वा म्रियतादिति ।
तं होवाचादस्तिष्ठ ।
अथ त्वाभ्येष्याम इति २६९

तां हालंकुर्वाणां रुदतीं पतिराजगाम ।
तां होवाच किमलंकुरुषे किं रोदिषीति ।
सा होवाच मरिष्यसि हीत्यात्मानमेवैतत्कृपये ।
यवक्रीर्वै त्यामच्छावोचतेति ।
स होवाचाज्यमत आहरतेति ।
तद्ध पवित्राभ्यामुत्पूय जुहवां चकार
या नो अद्य त्रायाति भारद्वाजस्य संस्कृता
प्रेणीमग्निप्रियामग्ने तां मह्यमा वह स्वाहा
इति ।
तस्यै हायःकूटहस्तं गन्धर्वमीर्ष्युमुत्थापयां चकार ।
तं होवाचासौ ते जाया यवक्रियमभ्यगात् ।
तदिहीति ।
तस्यै हायत्या उपतस्तार ।
सा ह सिष्मिये ।
स होवाच नाह किल ते स्त्रिके स्मेतव्यम् ।
अथ स्मयस इति ।
कथा हेति ।
मरिष्यसि हीति ।
सा ह पादं प्रगृह्णत्युवाच न खलु त्वं पुरुषेत्थंपदीं स्त्रियं पेचिष इति ।
लोमशौ हास्या अधस्तात्पादावासतुः ।
संनिपन्नौ वा हासंनिपन्नौ वासतुः ।
अथ हेदमेवायःकूटहस्तो गन्धर्वोऽभिविचक्रमे ।
स होवाच नमस्तेऽस्तु ।
कास्य प्रायश्चित्तिरिति २७०

अस्ति वा न वेति होवाच ।
यदेव ते किं च पितु स्वं तस्य सर्वस्य पुरा सूर्यस्योदेतोश्शिरश्छिन्द्धि ।
सा वैव सा वा नेति ।
स ह तथा छेत्तुमुपचक्रमे ।
ते होचुरदृपद्यवक्रीर्विबध्नामेति ।
नेति ह पितोवाच ।
देवेषितो वै मे पुत्रः करोति ।
एष एव तद्वेद यदत्र श्रेय इति ।
तद्ध बधिरो ग्रामे तन्ना प्रतिषिध्यमानं न शुश्राव ।
तस्य ह घ्नन्परेयाय ।
स ह को नु नो जनस्तृणेढीति ।
स एवास्य प्रजघानेत्येके ।
घ्नन्तमेवैनं सूर्योऽभ्युदियाय ।
तस्योदिते स एव गन्धर्वः प्रजघानेत्येके ।
यथा ह तु ममार तथास ।
शश्वद्धास्य स एव गन्धर्वः प्रजघान २७१

तदु ह मौण्डिभोऽनुबुध्योवाच संमिनुत मे सदोहविधाने याजयत मा ब्राह्मणाः ।
अमृत ह वै स ब्राह्मणोऽनुव्याहारीति ।
तस्य ह तथा चक्रुः ।
तदु ह सौमस्तम्बिरनुबुध्याजगाम ।
स ह तथैवास्तावं प्रतिनिषसाद ।
तस्य हायं पूषा रयिर्भग इत्येता एव प्रतिपदश्चक्रुः ।
स होवाच न वै किलायं राजन्यबन्धुरिमं यज्ञक्रतुं विदां चकार ।
न वै किल मेऽनेनोक्तेन पुत्रमवधीत् ।
एतावद्वाव किल त्यस्य पुत्रस्यायुरभूदिति ।
तं ह तच्छशाप मरिष्यत्यहायं राजन्यबन्धुः परो इमे मौण्डिभा भविष्यन्तीति ।
त एते पराभूता गोतमा ब्रुवाणाश्चरन्ति ।

तस्य वा एतस्य तरत्स मन्दी धावतीत्येव प्रतिपदो भवन्ति तरद्वतीः ।
तस्मादश्वोऽध्वानं तरिष्टः ।
धावद्वतीर्भवन्ति ।
तस्मादश्वोऽध्वानं धावन्समश्नुते ।
समय्येकं पदं भवति ।
तस्मादश्व एकैकं पादमुदङ्कं तिष्ठति २७२

तस्य चतसृषु बहिष्पवमानं भवति ।
चतुष्पादा वा अश्वाः सन्तश्चतुश्शफाः ।
ते ये चतुष्पादाः पशवश्चतुश्शफास्तानेवैतेनावरुन्द्धे ।
अष्टास्वष्टास्वाज्यानि ।
अष्टाशफा वै पशवः ।
ते येऽष्टाशफाः पशवस्तानेवैतेनावरुन्द्धे ।
द्वादशो माध्यंदिनः ।
द्वादशाक्षरा वै जगती ।
पशवो जगती ।
यत्क्षुद्रं पशूनां तज्जागतम् ।
तदेवैतेनावरुन्द्धे ।
सविंश आर्भवः पवमानः ।
द्वे वा एते दशदशिन्यौ विराजौ यद्विंशतिः ।
विंशतिप्रतिष्ठाना वै पशवो वैराजाः ।
ते ये विंशतिप्रतिष्ठानाः पशवो वैराजास्तानेवैतेनावरुन्द्धे ।
अथ चतुर्विंशमग्निष्टोमसाम ।
चतुष्पादा वै पशवो वैराजाः ।
ते ये चतुष्पादाः पशवो वैराजास्तानेवैतेनावरुन्द्धे ।
अथो चतुर्विंशत्यर्धमासस्संवत्सरः संवत्सरेणैवैनत्- २७३

तत्परिगृह्यैतस्मिन्द्वितीयेऽहन्नालभन्ते ।
तदेतदेकविंशं द्वितीयमहर्भवत्येकस्तोमम् ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।

यथा ह वै दृढा मेथी निहतैवमेकवींश स्तोमानाम् ।
तस्मिन्नेतान्पशूनालभन्ते हस्तिनं परमं प्लुषिमवमम् ।
तान्पर्यग्निकृत्वाइकाँल्लभन्त उदेकान्सृजन्ते ।
तस्य महानाम्न्यः पृष्ठं भवन्ति ।
नो ह्येतानन्यन्महानाम्नीभ्यः पृष्ठं पशूनुद्यन्तुमर्हति ।
तास्सप्तपदा भवन्ति सप्त वै ग्राम्याः पशवो ग्राम्याणामेव पशूनामवरुद्ध्यै ।
अति सप्तमं पदं भवत्यारण्यानामेव पशूनामवरुद्ध्यै ।
तस्य पार्थुरश्मं ब्रह्मसाम भवत्यथकारेण समृद्धम् ।
अथगथगितीव ह्यश्वो धावति ।
अथो पृथुर्वाव रश्मिरश्वं यन्तुं अर्हति ।
तदु पाङ्क्तं भवति ।
पाङ्क्तं हि महानाम्नीनां ब्रह्मसाम ।
तस्यैकविंशतिर्यूपा भवन्त्येकविंशत्यरत्नयः ।
नो ह्येताननेकविंशतिर्यूपाः पशूनुद्यन्तुमर्हन्ति ।
षड्बैल्वा द्वादश खादिराः पौतुद्रावावभितोऽग्नेर्वा एतच्छरीरं यत्पूतुद्रु
राज्जुदाल एकविंशतिः ।
सोऽग्निष्ठः ।
प्रजापतिर्वा एष वृक्षाणां यद्राज्जुदालः ।
तस्य यानि फलानि शिश्नान्येव तानि ।
अथ य श्लेष्मा रेत एव तत् ।
प्रजापतिर्वै पिता आदित्यः पुत्रः ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु
प्रतिष्ठायोदृचमश्नवामहा इति २७४

अथैष गोविनतश्छन्दोमपवमानः ।
पशुकामो हैतेन यजेत ।
तस्योभये स्तोमा भवन्त्ययुजश्च युग्मन्तश्च तद्ये ह वा अयुज
स्तोमास्तान्ग्राम्याः पशवोऽन्वथ ये युग्मन्तस्तानारण्याः ।

पशवो वै छन्दोमाः ।
स यो हैवं विद्वाञ्छन्दोमपवमानेन यजेत उभयानेव पशूनवरुन्द्धे ये च ग्राम्या ये चारण्याः ।
अथैतदेकविंशपृष्ठं द्वितीयमहर्भवति ।
यैवासावेकविंशस्य प्रशंसा न उपाप्तासदिति ।
तदेवैतस्य ब्राह्मणम् ।
तस्मिन्नेतमश्वं मेध्यमालभन्ते ।
यद्वेवैतदेकविंशपृष्ठं तस्माद्गोविनतः ।
त्रयस्त्रिंशं पुनरभ्यावर्ति तृतीयस्याह्नो भवति ।
त्रयस्त्रिंसद्वै देवतास्त्रयस्त्रिंशद्देवलोकाः ।
तानेवैतदन्तत आप्त्वाभ्यारोहन्ति ।
अथ यस्यैतस्य पञ्चदशोऽग्निष्टोमः पञ्चदश उक्थ्यः पञ्चदशोऽतिरात्र इति ।
क्षत्रकामो हैतेन यजेत ।
क्षत्रमश्वः क्षत्रं पञ्चदशः क्षत्रं यज्ञः ।
एष तत्तत्सलक्ष्म क्रियते ।
तेन हैतेनर्षभो याज्ञतुर ईजे श्वैक्नो राजैकराट्कामः ।
स हेष्ट्वैवैकराडास श्विक्नानाम् ।
स य श्रीकाम स्यात्स एतेन यजेत ।
क्षत्रं श्रीः ।
क्षत्रयज्ञ एषः ।
अश्नुते श्रियम् २७५

अथ यस्यैतस्य त्रिवृदहः पञ्चदशी रात्रिस्त्रिवृदहः पञ्चदशी रात्रिस्त्रिवृदहः पञ्चदशी रात्रि स्वर्गकामो हेऽतेन यजेत ।
दत्वश्च ह सौतेमनसो मित्रविञ्च दंष्ट्रद्युम्नस्तौ ह प्रतिदर्शस्य वैभावतस्य श्वैक्नस्य राज्ञो ब्रह्मचारिणावासतुः ।
तयोर्ह मित्रविद्दंष्ट्रद्युम्न आचार्यकर्म चकार ।
गा ह स्म रक्षति ।
अथ हेतरोऽध्यायमेव चचार ।
तौ ह स्म सायं समागत्यान्योन्यमाहतुराहर सोम्यानूक्ते हस्तं निधास्याव

आहर सोम्य सुचरिते हस्तं निधास्याव इति ।
अथ ह दत्वं सौतेमनसमाचार्योऽनुशशास ।
तौ ह सायं समागत्यान्योन्यमाहतुराहर सोम्यानूक्ते हस्तं निधास्याव आहर सोम्य सुचरिते हस्तं निधास्याव इति ।
नेति होवाच ।
अति वा अहं त्वदमुष्याचार्यप्रशिष्टो वा अहमस्मीति ।
स ह तां रात्रिमप्रियविद्ध उवास ।
श्वो ह भूते गा अन्वियाय ।
तं ह गौरीद्धित्वैव विजज्ञावप्रियं वा अस्येति २७६

सा होवाच वेद वै यत्तेऽप्रियम् ।
मा तेऽप्रियं भूत् ।
एह्यहं तुभ्यं देवयानं पन्थानं वक्ष्यामीति ।
तथेति ।
तं हास्मा उवाच ।
तौ ह सायं समाजग्मतुः ।
स होवाच दत्वेहीदमाचार्यप्रशिष्टो ब्रूषे ।
पश्यसि त्वं देवयानं पन्थानमिति ।
नेति होवाच ।
अथ वा अहं पश्यामीति ।
तं वै मे ब्रूहीति ।
तथेति ।
तं हास्मा उवाच ।
तस्मादु ह राजन्यबन्धुरेव ब्राह्मणात्सुहृदयतरः ।
स ह दत्वः सौतेमनस उवाच पश्यसि वै त्वं देवयानं पन्थानमेहि स्वर्गं लोकमयावेति २७७

नेति होवाच ।
दानेन वा वै श्रमेण वैतं प्रजानन्नेति ।
हन्त नु ददाव वा श्राम्याव वेति ।

स ह मित्रविद्दंष्ट्रद्युम्नो गोश्रायुर्भ्यामेव संवत्सरमियाय ।
स होपरिष्टादेव संवत्सरस्य स्वर्गं लोकमियाय ।
अथ ह दत्वस्सौतेमनस एतेनैव त्रिरात्रेणेष्ट्वा स्वर्गं लोकमियाय ।
तेन हैतेनेष्ट्वैव स्वर्गं लोकमेति ।
एतेनो एव हिरण्यदन्वेद ईजे द्वन्द्वकामः ।
यदिदं गोअश्वं हस्तिहिरण्यमजाविकं व्रीहियवास्तिलमाषा इति तद्धास्य बह्वास ।
स यो हैवं विद्वानेतेन द्वन्द्वकामो यजते बहु हैवास्यैतद्भवति २७८

अथैषोऽन्तर्वसुः ।
खण्डिकश्च हौद्धारिः केशी च दार्भ्यः पाञ्चालेषु पस्पृधाते ।
स ह खण्डिकः केशिनमभिबभूव ।
स ह केशी खण्डिकेन निबाढ उच्चैःश्रवसं कौवयेयं जगाम कौरव्यं राजानं मातुर्भ्रातरम् ।
तं होवाच यज्ञं मे विधेहीति ।
तथेति होवाच ।
कथं ते विधास्यामि ।
यथास्मिँल्लोक ऋध्नोती३ यथाहो अमुष्मी३निति ।
यथास्मिन्निति होवाच ।
स होवाचोत नु स यज्ञं पृच्छति यो यज्ञस्सहयं न वेदेति ।
कथा हेति ।
अमुष्मै ह्येव लोकाय यज्ञो नास्मा इति ।
नेति होवाच ।
खण्डिको वै त्यमौद्धारिरभ्यभूत् ।
स यथा तमभिभवान्येवं मे विधेहीति ।
तस्मा एतमन्तर्वसुं विदधौ ।
सर्वस्तोमोऽग्निष्टोमः ।
इत-ऊर्ध्व-छन्दोमविधं मध्यममहश्चतुर्विंशं प्रातस्सवनं चतुश्चत्वारिंशं माध्यंदिनं सवनमष्टाचत्वारिंशं तृतीयसवनम् ।
सर्वस्तोमोऽतिरात्रः परस्तात्प्रत्यङ् ।

ब्रह्म वै चतुर्विंशः क्षत्रं चतुश्चत्वारिंशो विडष्टाचत्वारिंशः ।
संवत्सरो वै सर्वस्तोमः ।
एताभ्यामेव सर्वस्तोमाभ्यामेतां त्रयीं विशं परिगृह्यात्मन्दधे ।
तस्यै ह श्रियं जगाम २७९

ततो वै स खण्डिकं निस्सारयां चकार ।
ततो वै केशी दार्भ्योऽभवत्परा खण्डिकः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।
स य श्रीकाम स्यात्स एतेन यजेत ।
एताभ्यामेव सर्वस्तोमाभ्यामेतां त्रयीं विशं परिगृह्यात्मन्धत्ते ।
तस्यै ह श्रियं गच्छति ।
अथैष पराकः ।
स्वर्गकामो हैतेन यजेत ।
तस्य पराञ्चयेव स्तोत्राणि भवन्त्यपरञ्चाञ्चि शस्त्राणि पराञ्चि पृष्ठानि
पराचीर्विष्टतयः पराङेव सर्वो भवति ।
तेन हैतेनोच्चैःश्रवाः कौवेयाय ईजे स्थविरो राजा कौरव्यः ।
स हेष्ट्वैव स्वर्गं लोकमियाय ।
तेन हैतेनेष्ट्वैव स्वर्गं लोकमेति ।
अथ यस्यैतस्य ज्योतिरग्निष्टोमो ज्योतिरुक्थ्यो ज्योतिरतिरात्र इति
ब्रह्मवर्चसकामो हैतेन यजेत ।
ज्योतिरिव ह वै स भाति यो ब्रह्मवर्चसमृध्नोति ।
ऋध्नोति हैनेन ब्रह्मवर्चसं ब्रह्मवर्चसी भवति ।
अथ यस्यैतस्य सप्तदशोऽग्निष्टोमस्सप्तदश उक्थ्यस्सप्तदशोऽतिरात्र इति
प्रजापतेरश्वमेधः ।
प्रजननकामो हैतेन यजेत ।
अथ यस्यैतस्यकविंशोऽग्निष्टोम एकविंश उक्थ्य एकविंशोऽतिरात्र
इत्यादित्यस्याश्वमेधः ।
स्वर्गकामो हैतेन यजेत २८०

अथैते चतूरात्राः ।

अत्रिर्वा अकामयत चत्वारो मे वीरा आजायेरन्निति ।
स एतं चतूरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै तस्य चत्वारो वीरा आजायन्त ।
अस्य चत्वारो वीरा आजायन्ते य एवं वेद ।
अत्र्यृषयो वा अकामयन्त चत्वारश्चत्वारो नो वीरा आजायेरन्निति ।
त एतं चतूरात्रं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै तेषां चत्वारश्चत्वारो वीरा आजायन्त अस्य चत्वारश्चत्वारो वीरा आजायन्ते य एवं वेद ।
आ चतुरं ह खलु वै मिथुनं प्रजननं मिथुनं पराचीनम् ।
एकश्च वा एका च द्वौ च द्वे च त्रयश्च तिस्रश्च चत्वारश्च चतस्रश्च एतद्वा आ चतुरं मिथुनं प्रजननम् ।
न ह वै पञ्च च पञ्च चेति नाम सन्ति ।
तद्यन्मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्य चतुर्विंशाः पवमाना भवन्ति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरः प्रजननं स मा प्रजनयादिति ।
तस्योभे बृहद्रथन्तरे सामनी भवतः ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति ।
तस्योभये स्तोमा भवन्त्ययुजश्च युग्मन्तश्च ।
एतद्वै दैव्यं मिथुनं प्रजननं यदुभये स्तोमाः ।
तद्यद्दैव्यं मिथुनं प्रजननं तन्मा प्रजनयादिति २८१

अयुजश्च उत्तरे स्तोमा भवन्ति ।
ऋतवो वा अयुजः ।
ऋतवो वा इदं सर्वं प्रजनयन्ति ।
ते य इदं सर्वं प्रजनयन्ति ते मा प्रजनयानिति ।

अह्नोऽह्न स्तोममुत्सृजमाना यन्ति ।
अह्नोऽह्न स्तोममभ्युपाहरन्ते ।
वीरो वा एष यत्स्तोमः ।
अह्नोऽह्न एव तद्वीर्यं प्रजनयन्तो यन्त्यह्नोऽह्नो
वीर्यमभ्युपाहरन्तेऽक्षरेणाक्षरेणोत्क्रामन्तो यन्ति ।
एकाक्षरणिधनं प्रथमेऽहनि भवति द्व्यक्षरणिधनं द्वितीये त्र्यक्षरणिधनं तृतीये
चतुरक्षरणिधनं चतुर्थेऽक्षरेष्ठा वीरोऽसदक्षरेष्ठा वीरोऽसदिति ।
नानाग्निष्टोमसामानि भवन्ति वीराणामेव नानावीर्यतायै ।
न ह वै स वीरो योऽन्यस्य वीर्यमनु वीरः ।
स ह वाव वीरो य आत्मन एव वीर्यमनु वीरः ।
तद्यन्नानाग्निष्टोमसामानि भवन्ति वीराणामेव नानावीर्यतायै २८२

तदाहुर्यज्ञायज्ञीयमेवाह्नोऽह्नोऽग्निष्टोमसाम कुर्युः ।
ज्यैष्ठ्यं वै यज्ञायज्ञीयम् ।
ज्यैष्ठ्याद्वीरो न च्यवाता इति ।
तद्यत्समानि स्तोत्राणि स्युस्समावच्छ एव वीर्यमश्नुवीरन् ।
यद्विषमाणि ज्येष्ठेष्वेवैकधा वीर्यं दध्युः ।
तद्यत्समाः पवमाना भवन्ति समावच्छ एव तद्वीर्यमश्नुवते ।
अथ यदुत्तरैस्तोत्रैरुत्क्रामन्तो यन्ति ज्येष्ठेष्वेव तद्भूयो वीर्यं दधतो यन्ति ।
द्विरात्रो ह खलु वा एष तायते ।
यो बृहद्रथन्तराभ्यामभि त्वा वृषभा सुत इत्येतासु तृतीयेऽहनि रथन्तरं पृष्ठं
कुर्युः ।
तद्यदभि त्वेति तेन रथन्तरस्य रूपान्न यन्ति ।
गायत्र्यायातयाम्न्या तृतीयमहस्तायते ।
कस्तमिन्द्र त्वावसविति मैत्रावरुणसाम ।
तासामिहाक्षराणि संपद्यन्ते ।
या गायत्र्यो गायत्र्यस्ता याः ककुभः ककुभस्ता या बृहत्यो बृहत्यस्ताः ।
यथायतनं छन्दांसि युज्यन्ते ।
गायत्र्या वै प्रथममहस्तायते त्रिष्टुभा द्वितीयं जगत्या तृतीयमनुष्टुभा चतुर्थम्
।

तं त्वा यज्ञेभिरीमह इत्येतासु चतुर्थेऽहनि बृहत्पृष्ठं कुर्युः ।
तद्यत्तं त्वेति तेन बृहतो रूपान्न यन्ति ।
अनुष्टुभायातयाम्न्या चतुर्थमहस्तायते ।
वयमु त्वामपूर्व्येति मैत्रावरुणसाम ।
तासामिहाक्षराणि संपद्यन्ते ।
या गायत्र्यो गायत्र्यस्ता या ककुभः ककुभस्ता या बृहत्यो बृहत्यस्ताः ।
यथायतनं छन्दांसि युज्यन्ते २८३

अग्निष्टोमो वै प्रथममहरुक्थ्यो द्वितीयं षोडशिमांस्तृतीयमतिरात्रश्चतुर्थम् ।
नानावीर्याण्यहानि भवन्ति वीराणामेव नानावीर्यतायै ।
अथ ह स्माह तक्षको भागेरथिर्मात्स्यो राजानु चतूरात्रः पृष्ठानि व्याप्नोति ।
द्विरात्रो वै बृहद्रथन्तराभ्यां तायत इति ।
वैरूपं च महानाम्नयश्च तृतीयेऽहनि कुर्युः ।
राथन्तरे वैते ।
राथन्तरं तृतीयमहरिति ।
वैराजं च रेवत्यश्च चतुर्थेऽहनि कुर्युः ।
बार्हते वैते ।
बार्हतं चतुर्थमहरिति ।
एवं वै चतूरात्रः पृष्ठानि व्याप्नोतीति ह स्म स आह ।
तदाहुः को यज्ञानां वर्षिष्ठः को वरिष्ठ इति ।
स ब्रूयात्त्रिरात्र एव यज्ञानां वर्षिष्ठ इति ।
इमे वै लोकास्त्रिरात्रो दिश एव चतूरात्रः २८४

अथैष जामदग्नयः ।
प्रजननकामो हैतेन यजेत ।
जमदग्निर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एतं चतूरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।

अपि हास्य द्वावौर्वौ प्रजायां न संजज्ञाते कयस्त्वमसि कयस्त्वमसीति ।
तथा बहुरिह प्रजज्ञे ।
तस्मादिदमप्येतर्हि द्वावौर्वौ पलितौ समागत्य न संजानाते ।
बहुः प्रजया पशुभिः प्रजायते य एवं वेद ।
तस्याहुस्संवत्सरं एव दीक्षा स्युरिति ।
प्रजननं वै संवत्सरः ।
प्रजननमेष यज्ञः ।
तत्तत्प्रजननं क्रियते ।
तस्मादु हैनेन प्रजननकामो यजेत ।
अथो आहुरष्टाचत्वारिंशदेव स्युरिति ।
अष्टाचत्वारिंशदक्षरा वै जगती ।
पशवो जगती ।
जागत एष यज्ञः ।
तस्मादु हैनेन पशुकामो यजेत ।
अथो आहुष्षट्त्रिंशदेव स्युः ।
षट्त्रिंशदक्षरा वै बृहती ।
बृहती वै स्वर्गं लोकमानशे ।
तद्वा अस्य स्वर्ग्यम् ।
तस्मादु हैनेन स्वर्गकामो यजेत ।
तानि त्रीणि जागतानि ।
त्रीणि जागतानि पदानि भवन्ति ।
तेन जगत्यै रूपान्न यन्ति ।
अथो आहुश्चतुर्विंशतिरेव स्युरिति ।
चतुर्विंशत्यर्धमासस्संवत्सरः प्रजननम् ।
प्रजननमेष यज्ञः ।
तत्तत्प्रजननं क्रियते ।
तस्मादु हैनेन प्रजननकामो यजेत ।
तदेकं जागतं पदं भवति ।
तेनैव जगत्यै रूपान्न यन्ति २८५

तदाहुर्यद्गायत्र्या प्रथममहस्तायते त्रिष्टुभा द्वितीयं जगत्या तृतीयमनुष्टुभा चतुर्थमथ कस्माज्जागत एवैष यज्ञ आख्यायत इति ।
स ब्रूयाद्यदा वै बह्वश्वो वा बह्वश्वतरीको वान्यानन्यानायुञ्जाना एत्येवमेवैतज्जगत्यन्यदन्यच्छन्दोऽभ्यारोहन्त्येतीति ।
अथो यदेवैतानि स्तोत्राणि संस्तुतानि जगतीमभि संपद्यन्ते तेनो एव जागत इति ।
अथो ज्यैष्ठ्यं वै जगती छन्दसाम् ।
तस्माज्ज्यैष्ठ्येन गृह्यानाचष्टतैनेन गृह्यांश्चष्टते य एवं वेद ।
द्विरात्रो ह खलु वा एष तायते यो बृहद्रथन्तराभ्यामभि त्वा वृषभा सुत इत्येतासु तृतीयेऽहनि रथन्तरं पृष्ठं कुर्युः ।
तद्यदभि त्वेति तेन रथन्तरस्य रूपान्न यन्ति ।
गायत्र्यायातयाम्न्या तृतीयमहस्तायते ।
कस्तमिन्द्र त्वावसविति मैत्रावरुणसाम ।
तासामिहाक्षराणि संपद्यन्ते ।
तं त्वा यज्ञेभिरीमह इत्येतासु चतुर्थेऽहनि बृहत्पृष्ठं कुर्युः ।
तद्यत्तं त्वेति तेन बृहतो रूपान्न यन्ति ।
अनुष्टुभायातयाम्न्या चतुर्थमहस्तायते ।
वयमु त्वामपूर्व्येति मैत्रावरुणसाम ।
तासामिहाक्षराणि संपद्यन्ते २८६

व्यूढच्छन्दा ह खलु वा एष चतूरात्रः ।
पूर्वो वै बृहत्यै पृष्ठेषु योग उत्तरो गायत्र्यै पूर्वो वा उष्णिक्ककुभोरार्भवे योग उत्तरोऽनुष्टुभः ।
तद्यदेतानि व्यतिषक्तानि छन्दांसि क्रियन्ते व्यतिषक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते प्रजात्या एव ।
अथो व्यतिषक्तो वै पुरुषः पाप्मभिः ।
व्यतिषक्तैरेव तच्छन्दोभिर्व्यतिषक्तान्पाप्मनोऽपहते ।
तदाहुः किमनु चतूरात्र इति ।
अहोरात्रे इति ब्रूयात् ।
अहोरात्रे ह वा अनु चतूरात्रः ।

अहरेव प्रथमेनाह्ना स्तृणुतेऽह्नः केतुं द्वितीयेन रात्रिमेव तृतीयेनाह्ना स्तृणुते यः प्रातरह्नः केतुस्तं चतुर्थेन ।
अहोरात्रे वा इदं सर्वं प्रजनयतः ।
ते य इदं सर्वं प्रजनयतस्ते मा प्रजनयतामिति ।
अथो ह ब्रूयाद्दिश एवानु चतूरात्र इति ।
चतस्रो दिशः ।
ऊर्ध्वा दिक्पञ्चमी ।
चत्वार्येतान्यहानि भवन्ति ।
रात्रिः पञ्चमी ।
दिश एवैतेनर्ध्नोति ।
दिक्षु प्रतिष्ठाय स्वर्गं लोकमेति ।
तस्यैताः पुरोडाशिनीरुपसदो भवन्ति ।
योनिर्वै पुरोडाशो रेत आज्यम् ।
तद्यत्पुरोडाशं हुत्वाज्येनाभिजुहोति योन्यामेवैतद्रेतः प्रतिष्ठापयन्ति ।
अनुष्ठयास्य रेतस्सिक्तं प्रजायते य एवं वेद ।
अथो याभ्य एवैतद्देवताभ्यो हवींषि निर्वपति तास्वेवैतदृध्नोति ।
तासु प्रतिष्ठाय स्वर्गं लोकमेति २८७

अथैष प्राजापत्यः ।
प्रजननकामो हैतेन यजेत ।
प्रजापतिर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एतं चतूरात्रमपश्यत्तमाहरत् ।
तेनायजत ।
तस्यैते त्रिवृत्पञ्चदशा स्तोमा भवन्ति सप्तदशैकविंशाः ।
ऊनातिरिक्ता मिथुनाः प्रजनयः ।
ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
त्रिवृच्च पञ्चदशश्च तन्मिथुनं प्रजननम् ।
सप्तदशश्चैकविंशश्च तन्मिथुनं प्रजननं तद्यन्मिथुनं प्रजननं तन्मा प्रजनयादिति ।

ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
बहुरेव प्रजया पशुभिः प्रजायते य एवं वेद ।
अथो आहुस्तासामेव प्रजानां सृष्टानां परावापादबिभेदिति ।
स एतं चतूरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तस्याग्निष्टोमावभितो भवत उक्थ्यौ मध्ये ।
ब्रह्म वा अग्निष्टोमः प्रजाः पशव उक्थ्यानि ब्रह्मणैव तदुभयतः प्रजाः पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद २८८

अथैष वसिष्ठस्य संसर्पः ।
वसिष्ठो वा अकामयत समिमाँल्लोकान्सर्पेयमिति ।
स एतं चतूरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स इमाँल्लोकान्समसर्पत् ।
यदिमाँल्लोकान्समसर्पत्तत्संसर्पस्य संसर्पत्वम् ।
समिमाँल्लोकान्सर्पति य एवं वेद ।
तस्य त्रयस्त्रय स्तोमा युक्ता अहर्वहन्ति ।
त्रयस्त्रयो वै युक्तानां वहिष्ठौ ।
युक्तेन तत्र गच्छति यत्र जिगमिषति ।
अथो आहुः प्रजाकाम एवैनेन यजेतेति स्तोमो वा एतत्स्तोमेन संसक्तो भवति ।
संसक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते प्रजात्या एव ।
अह्नोऽह्न स्तोममुत्सृजमाना यन्त्यह्नोऽह्न स्तोममभ्युपाहरन्ते २८९

अथैष गौतमस्य चतुष्टोमः ।
गौतमाय वै न श्रददधत ।
अश्रद्धानीयो राजन्य ऋृषिरिति ।

सोऽकामयत श्रन्मे दधीरञ्श्रद्धानीय स्यामिति ।
स एतं चतूरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै तस्मै श्रददधत श्रद्धानीयोऽभवत् ।
श्रद्धानीयो भवति य एवं वेद ।
स वा एष कृतस्तोमः ।
श्रद्धा वै कृतम् ।
यद्ध वा इदं कृतेन जित्वा हरन्ति श्रद्धया हैव तद्धरन्ति ।
तस्मात्कृतस्तोमः ।
स वा एष चतुरुत्तर्यङ्गिरसाम् ।
द्व्युत्तरेण वा आदित्या स्वर्गं लोकमायंश्चतुरुत्तरेणाङ्गिरसः ।
चतुरुत्तरेण स्वर्गं लोकमेति य एवं वेद ।
तदाहुरपभ्रंशी यज्ञक्रतुरीश्वरः पुरायुषोऽमुं लोकमेतोरिति ।
तद्यत्प्रत्यवरोहीणि स्तोत्राणि भवन्ति तेनानपभ्रंशी तेनो आयुष्यः ।

अथैष विश्वज्योतिः ।
देवा वा अकामयन्त सर्व एव ज्योतिरिव स्यामेति ।
त एतं चतूरात्रं यज्ञमपश्यन् ।
तमाहरंस्तेनायजन्त ।
ततो वै ते सर्व एव ज्योतिरिवासन् ।
तस्माद्यमप्येतर्हि देवानां पश्यन्ति ज्योतिरिवादृश्मेत्येवाहुः ।
स यो ब्रह्मवर्चसकाम स्यात्स एतेन यजेत ।
ज्योतिरिव ह वै स भाति यो ब्रह्मवर्चसमृध्नोति ।
ऋध्नोति हैनेन ब्रह्मवर्चसं ब्रह्मवर्चसी भवति २९०

अथैते पञ्चरात्राः ।
पञ्च वै जयाः ।
पञ्चभिर्वै व्याहृतिभिरिदं देवा अजयन् ।
तद्यावतेदं देवा अजयंस्तावता जयानीति ।

पाङ्क्तो यज्ञः ।
यावती यज्ञस्य मात्रा तामाप्नवानीति ।
पाङ्क्ताः पशवः ।
यावती पशूनां मात्रा तावता मा पशवोऽवरुद्धा उपतिष्ठान्ता इति ।
पाङ्क्तमन्नाद्यम् ।
यावत्यन्नाद्यस मात्रा तावता मान्नाद्यमवरुद्धमुपतिष्ठाता इति ।
पञ्चैतान्यहानि भवन्ति ।
पञ्चर्तवस्संवत्सरः ।
संवत्सरः प्रजापतिर्यज्ञः ।
संवत्सरमेवैतेन प्रजापतिं यज्ञमाप्नोति ।
देवासुरा अस्पर्धन्त ।
ते नैव दण्डैर्नेषुभिर्व्यजयन्त ।
तेऽब्रुवन्न वै दण्डैर्नेषुभिर्विजयामहै ।
वाच्येव वाव नो ब्रह्मन्विजयोऽस्त्विति ।
त षद्यन्त यतरे नो यतरान्पूर्वेऽभिव्याहरिष्यन्ति ते तेषां द्योष्यन्त इति ।
ते देवा असुरानब्रुवन्यूयं पूर्वे ब्रूध्वमिति ।
यूयमिद्धा इत्यसुरा देवान् ।
ते देवा एतद्वाचो मिथुनमपश्यन् २९१

एकोऽस्माकमिति देवा अब्रुवतैकास्माकमित्यसुराः ।
मन एव देवा अब्रुवत वाचमसुराः ।
ते देवा मनसैव वाचमसुराणामवृञ्जत ।
तस्माद्यन्मनसाधिगच्छति तद्वाचा वदति ।
द्वावस्माकमिति देवा अब्रुवत द्वे अस्माकमित्यसुराः ।
प्राणापानावेव देवा अब्रुवत अहोरात्रे असुराः ।
ते देवाः प्राणापानाभ्यामेवाहोरात्रे असुराणामवृञ्जत ।
तस्माज्ज्योग्जीवन्बहून्यहोरात्राण्येवानिति ।
त्रयोऽस्माकमिति देवा अब्रुवत तिस्रोऽस्माकमित्यसुराः ।
इमानेव त्रीँल्लोकान्देवा अब्रुवत तिस्रो विद्या असुराः ।
ते देवा एभिरेव लोकैस्तिस्रो विद्या असुराणामवृञ्जत ।

तस्मादेता विद्या एष्वेव लोकेषु प्रोच्यन्ते ।
चत्वारोऽस्माकमिति देवा अब्रुवत चतस्रोऽस्माकमित्यसुराः ।
चतुष्पद एव पशून्देवा अब्रुवत चतस्रो दिशोऽसुराः ।
ते देवा चतुष्पाद्भिरेव पशुभिश्चतस्रो दिशोऽसुराणामवृञ्जत ।
तस्माद्यां कां चन दिशं पशुमानयति सर्वामेव जितां कॢप्तां
प्रतिष्ठितामन्वेति ।
पञ्चास्माकमिति देवा ऋतूणेवाब्रुवत ।
अथासुरा न प्राविन्दन् ।
न हि पञ्चि किं चनास्ति ।
तेऽसुरा आरम्भमविन्दन्तः पञ्च पञ्चेत्येव वदन्तः पराजयन्त ।
ततो वै देवा अभवन्परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद २९२

जितिर्वा एता व्याहृतयः ।
जितिः पञ्चरात्रः ।
जयति जयति य एवं वेद ।
सा वा एषा सर्वस्यान्या जितिस्सर्वस्यान्या पराजितिः ।
सर्वं वा एतेन देवा असुरानजयन् ।
सर्वमसुराः पराजयन्त ।
सर्वमेव द्विषन्तं भ्रातृव्यं जयति सर्वमस्य द्विषन्भ्रातृव्यः पराजयते य एवं वेद
।
अथैते सन्तता भवन्ति ।
यथा ह वै दारूणि वर्ध्रेण सन्ततानि रथस्य वानसो वैवं स्तोमैः
पञ्चरात्रस्सन्ततः ।
प्राणा ह खलु वै स्तोमाः ।
प्राणैः पुरुषस्सन्ततः ।
सं ह तायते य एवं वेद ।
तस्य द्वौ-द्वौ स्तोमौ युक्तावहर्वहतः ।
द्वौ-द्वौ वै युक्तानां वहिष्ठौ ।
युक्तेन तत्र गच्छति यत्र जिगमिषति २९३

अथ यस्यैतस्य ज्योतिर्गौरायुरिति त्र्यहः पञ्चविंशं महाव्रतं
सर्वस्तोमोऽतिरात्रोऽन्नाद्यकामो हैतेन यजेत ।
तदाहुर्न पुरा संवत्सरान्महाव्रतमुपेत्यमिति ।
तद्यज्ज्योतिर्गौरायुरिति त्र्यहो भवत्ययं वै लोको ज्योतिरयं गौरसावायुः ।
इमे वै लोका ऋतवस्संवत्सरः ।
ऋतवस्संवत्सरः कृत्स्नमन्नाद्यं पचति संवत्सराभिजितमेव तदन्नाद्यमुपयन्ति
।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्धयै ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु
प्रतिष्ठायोदृचमश्नवामहा इति ।
अथ यस्यैतस्य त्रिवृत्पञ्चदशस्सप्तदश इति त्र्यहः पञ्चविंशं महाव्रतं
सर्वस्तोमोऽतिरात्रोऽन्नाद्यकाम उ एवैतेन यजेत ।
तदाहुर्न पुरा संवत्सरान्महाव्रतमुपेत्यमिति ।
तद्यत्त्रिवृत्पञ्चदशस्सप्तदश इति त्र्यहो भवत्ययं वै लोकस्त्रिवृदयं
पञ्चदशोऽसौ सप्तदशः ।
इमे वै लोका ऋतवस्संवत्सरः ।
ऋतवस्संवत्सरः कृत्स्नमन्नाद्यं पचति संवत्सराभिजितमेव तदन्नाद्यमुपयन्ति
।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्धयै ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु
प्रतिष्ठायोदृचमश्नवामहा इति २९४

अथ यस्यैतस्य ज्योतिर्गौरायुरिति त्र्यहश्चतुर्विंशमहस्सर्वस्तोमोऽतिरात्रो यः
कामयेत परोक्षोपेतं मे महाव्रतं स्यादिति स एतेन यजेत ।
तद्यच्चतुर्विंशमहर्भवति तेनैवास्य परोक्षोपेतं महाव्रतं भवति ।

यद्वेव तत्र हिंकारो वा प्रस्तावो वा प्रतिहारो वा किञ्चिद्भवति तेनैवास्य पञ्चविंश्युपाप्ता भवति ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु प्रतिष्ठायोदृचमश्नवामहा इति ।
अथ यस्यैतस्य त्रिवृत्पञ्चदशस्सप्तदश इति त्र्यहश्चतुर्विंशमहर्ज्योतिरतिरात्रो य उ एव कामयेत परोक्षोपेतं मे महाव्रतं स्यादिति स एतेन यजेत ।
तद्यच्चतुर्विंशमहर्भवति तेनैवास्य परोक्षोपेतं महाव्रतं भवति ।
यद्वेव तत्र हिंकारो वा प्रस्तावो वा प्रतिहारो वा किञ्चिद्भवति तेनैवास्य पञ्चविंश्युपाप्ता भवति ।
ज्योतिरतिरात्र एतद्वै प्रज्ञातं देवतीर्थं यज्ज्योतिरतिरात्रः प्रज्ञातेन देवतीर्थेनारिष्टेनारिष्टा उदृचमश्नवामहा इति २९५

अथ यस्यैतस्य ज्योतिषी अग्निष्टोमावभितो भवतो गोआयुषी उक्थ्यावन्तरौ ज्योतिरतिरात्रो मध्ये प्रजननकामो हैतेन यजेत ।
एतद्वै कृत्स्नम्प्रजननं यज्ज्योतिरतिरात्रः ।
मध्यत उ वा आत्मनः प्रजननम् ।
तद्यन्मध्ये ज्योतिरतिरात्रो भवति मध्यत एवैतदात्मनः प्रजननं धत्ते बहुर्भवति प्रजायते ।
गोआयुषी उक्थ्यावन्तरौ भवतः ।
पशवो वा उक्थानि ।
तयोः पञ्चशतानि स्तोत्रियाः ।
पशुभिरेव तदुभयतः प्रजां परिगृह्णीते ।
ज्योतिषी अग्निष्टोमावभितो भवतः ।
ब्रह्म वै ज्योतिरग्निष्टोमः ।
ब्रह्मणैव तदुभयतः प्रजां पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
अथ यस्यैतस्य ज्योतिषी अग्निष्टोमावभितो भवतो गोआयुषी उक्थ्यावन्तरौ ज्योतिरग्निष्टोमो मध्ये यः कामयेता मे ब्रह्मवर्चसी प्रजायां जायेतेति स एतेन

यजेत ।
तेजो वै ब्रह्मवर्चसं ज्योतिरग्निष्टोमः ।
मध्यत उ वा आत्मनः प्रजननम् ।
तद्यन्मध्ये ज्योतिरग्निष्टोमो भवति मध्यत एवैतदात्मनो ज्योतिर्धत्त आ हास्य ब्रह्मवर्चसी प्रजायां जायते ।
गोआयुषी उक्थ्यावन्तरौ भवतः ।
पशवो वा उक्थानि ।
तयोः पञ्चशतानि स्तोत्रियाः ।
पशुभिरेव तदुभयतो ब्रह्मवर्चसिनीं प्रजां परिगृह्णीते ।
ज्योतिषी अतिरात्रावभितो भवतः ।
इमौ वै लोकावतिरात्रौ ।
आभ्यामेवैतल्लोकाभ्यामुभयतः प्रजां पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद २९६

अथैते षड्रात्राः ।
मरुतो वा अकामयन्तौजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानां स्याम जयेम स्वर्गं लोकमिति ।
त एतं षड्रात्रं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
ततो वै त ओजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानामासन्नजयन्स्वर्गं लोकम् ।
ओजिष्ठो बलिष्ठो भूयिष्ठो वीर्यवत्तम स्वानां भवति जयति स्वर्गं लोकं य एवं वेद ।
पृष्ठ्येन षडहेन यन्ति ।
श्रीर्वै वर्ष्म पृष्ठानि ।
श्रियमेव तद्वर्ष्म पृष्ठान्यभ्यारोहति ।
ओजो वै वीर्यं पृष्ठानि ।
ओजसैव तद्वीर्येण यन्ति ।
स्वर्गो वै लोकः पृष्ठानि ।

स्वर्गमेव तल्लोकं रोहन्तो यन्ति ।
तेषां सरस्वत्या उपमज्जने दीक्षा ।
दक्षिणे तीरे दीक्षन्ते २९७

चक्रवती सदोहविर्धाने भवत उलूखलबुध्नो यूप उत्क्रान्त्या अनपभ्रंशाय ।
यद्धि ते तत्र कुर्वाणा इवासीरन्नपभ्रंशो हैषां सः ।
शम्यापरासं यन्ति ।
एते ह वै स्वर्गस्य लोकस्य विक्रमा यच्छम्यापरासाः ।
स्वर्गस्यैव तल्लोकस्य विक्रमान्क्रममाणा यन्ति ।
घ्नन्त आक्रोशन्तो यन्ति ।
एतद्वै बलस्य रूपं यद्धतमाक्रुष्टम् ।
सरस्वत्या यन्ति ।
वाग्वै सरस्वती ।
वागु देवयानः पन्थाः ।
देवयानेनैव तत्पथा यन्ति ।
प्रतीपं यन्ति ।
प्रतीपमिव वै स्वर्गो लोकः ।
स्वर्गमेव तल्लोकं प्रतिपद्यन्ते ।
प्राञ्च उदञ्चो यन्ति ।
प्राङिव ह वा उदङ्स्वर्गो लोकः ।
स्वर्गमेव तल्लोकं रोहन्तो यन्ति ।
आ प्रक्षात्प्रास्रवणाद्यन्ति ।
एष उ ह वै वाचोऽन्तो यत्प्रक्षः प्रास्रवणः ।
यत्रो ह वै वाचोऽन्तस्तत्स्वर्गो लोकः ।
स्वर्गमेवैतल्लोकं गच्छन्ति २९८

तेन हैतेन मरुतो यत इन्द्राग्नी ईक्षां चक्राते इमे चेद्वा इदं समापयन्ति मरुत एवेदं सर्वं भवन्तीति ।
तान्ह सत्रपरिवेषणं सहस्रं जिग्यतुः ।
तद्धैषां विमाथीचक्रिरे ।

पाप्मानं ह वा एषां तद्विमेथिरे ।
तस्मादु ह विमाथ्यस्य न लिप्सेत नेत्पाप्मनोऽपभजा इति ।
तयोर्ह वै ते ज्यान्या रराधुः ।
ते होत्तस्थुररात्स्मेति ।
तेषामेता उदृचो यत्समापयन्ति सैका ।
यदेषाम्म्रियते सैका ।
यद्दश गावश्शतं भवन्ति सैका ।
यच्छतं गावस्सहस्रं भवन्ति सैका ।
तेन हैतेन पुरायु स्थूरगृहपतयः ।
तान्ह त्रिकर्तानां वा सल्वानां वाव्याधिनीः पर्युत्थाय जिग्युः ।
तद्धैषां गृहपतिं जघ्नुः ।
तं हेमं गृहपतिं हतमभितः कृपयमाणा निषेदुः ।
तमु ह ध्रुवगोपः सांकाशिनेनैव द्रवन्तं निर्जज्ञौ ।
स आहवनीयादेवोर्ध्व स्वर्गं लोकमाचक्रमे ।
स होवाच मा कृपयध्वम् ।
यं वा इमं कृपयध्वेऽयं वै स आहवनीयादेवोर्ध्व स्वर्गं लोकमाक्रंस्तेति ।
तेषां यांस्तत्र जघ्नुस्ते स्वर्गं लोकमीयुः ।
अथ ये परिशिशिषिरे त इम एतर्हि पणाय्यतरा इव स्थूराणाम् ।
पापग्रामतरा इव हि ततः पुरासुः ।
तस्मादु स्थौर्यं शम्यापरासिनेत्याख्यापयन्ति २९९

अथ यस्यैतस्य विश्वजिदभिजितावतिरात्रावभितो भवतो गौरायुर्गौरायुरिति चत्वार उक्थ्या मध्ये पशुकामा हैतदुपेयुः ।
अयं वै लोकोऽभिजिदसौ विश्वजित् ।
अथैते चत्वारो मध्य उक्थ्या भवन्ति ।
पशवो वा उक्थानि ।
तेषां सहस्रं स्तोत्रियाः ।
अनेन चैव तल्लोकेनामुना चोभयत एतान्पशून्परिगृह्णतेऽव पशून्रुन्धते ।
बहुपशवो ह भवन्ति ।
एतेन ह वै तदेनेनेन्द्राग्नी मरुतः सहस्रं जिग्यतुः इन्द्रो वै

मरुतस्सहस्रमजिनोत् ।
अग्निरभिजिदिन्द्रो विश्वजित् ।
अथैते चत्वारो मध्य उक्थ्या भवन्ति ।
पशवो वा उक्थानि ।
तेषां सहस्रं स्तोत्रिया ।
एतद्ध वै तदिन्द्राग्नी उभयतस्सहस्रं परिगृह्याजह्रतुः ।
आभ्यां च ह वा एनं तल्लोकाभ्यामिन्द्राग्निभ्यां चोभयतः पशवः परिगृहीता उपतिष्ठन्ते य एवं वेद ।
तेषामु तेषां परीणदिति कुरुक्षेत्रस्य जघनार्धे सरस्कं तद्दीक्षायै ।
ते प्राञ्चो यन्ति समया कुरुक्षेत्रम् ।
एतद्वै देवानां देवयजनं यत्कुरुक्षेत्रम् ।
देवानामेव तद्देवयजनेन यन्ति ।
तेषां यमुनावभृथः ।
एष वै स्वर्गो लोको यद्यमुना ।
स्वर्गमेव तल्लोकं गच्छन्ति ।
अथ यस्यैतस्योर्ध्वस्त्रियहः प्रत्यङ्त्र्यहो यः कामयेत गच्छेयं स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठेयमिति स एतेन यजेत ।
त्र्यहेणैवेत ऊर्ध्व स्वर्गं लोकं गच्छति प्रत्येवामुतस्त्र्यहेणावरोहति ।
गच्छति स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठति ।
अथो ह वेद योऽसावासं सोऽयमस्मीति पुनर्हैवास्मिँल्लोक आजायते ३००

अथैते सप्तरात्राः ।
सप्त वै छन्दांसि ।
छन्दांसि वै सर्वा वाक् ।
वाचस्स षश्वर्यमाधिपत्यं गच्छति य श्रियमश्नुते ।
वाच षश्वर्यमाधिपत्यं गच्छानीति ।
तस्मात्सप्तरात्रेण यजते ।
सप्त वै प्राणाः ।
प्राणैर्वै प्रजाः पशवः परिगृहीता उपतिष्ठन्ते ।
तद्यैः प्राणैः प्रजाः पशवः परिगृहीता उपतिष्ठन्ते तैर्मा प्राणैः प्रजाः पशवः

परिगृहीता उपतिष्ठान्ता इति ।
प्राणैर्वै देवा स्वर्गं लोकमायन् ।
तद्यैः प्राणैर्देवा स्वर्गं लोकमायंस्तैः प्राणै स्वर्गं लोकमयानीति ।
सप्त वै मुख्याः प्राणाः ।
एते वा अपहतपाप्मानः प्राणा यन्मुख्याः ।
ते येऽपहतपाप्मानः प्राणास्तेषां मात्रया यज्ञं तनवा इति ।
सप्तर्षयो वा ऋद्धिकामास्तपोऽतप्यन्त ।
त एतं सप्तरात्रं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ३०१

तेऽहर्भाज आसन् ।
ततो वै तेषामह्नैवैक आर्ध्नोदह्नैकोऽह्नैकः ।
सा ह खलु वै श्रेष्ठर्द्धीनां स लोकानां पुण्यतमो यमेतेन सप्तर्षय आर्ध्नुवन् ।
सा या श्रेष्ठर्द्धीनां यो लोकानां पुण्यतमो यमेतेन सप्तर्षय
आर्ध्नुवंस्तमृध्नवानीति ।
तस्मात्सप्तरात्रेण यजते ।
सप्तैतान्यहानि भवन्ति सप्त स्तोमाः ।
अहरेव स्तोमो वहत्यह स्तोमोऽह स्तोमः ।
सा ह खलु वा अह्नां समृद्धिर्यदेनानि नाना स्तोमा वहन्ति ।
सा यैवाह्नां समृद्धिस्सैवैषा क्रियते ।
त उ सर्वे सप्त संपद्यैकविंशमेवाभिसंपद्यन्ते त्रिवृच्च त्रयस्त्रिंशश्च तौ
द्वावेकविंशौ पञ्चदशश्च त्रिणवश्च तौ द्वावेकविंशौ सप्तदशश्च पञ्चविंशश्च तौ
द्वावेकविंशावेकविंश एवैकविंशः ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एतस्य वा एते सलोकतां गच्छन्ति ये सप्तरात्रयाजिनः ।
एतमभिसंपन्न एषां लोक ऋध्नोति ।
एतं गच्छत्येतस्य सलोकतां य एवं वेद ३०२

तेन हैतेन जनको वैदेह इयक्षां चक्रे ।

तं ह स्म यद्ब्राह्मणाः कुरुपाञ्चाला आहुरनेन त्वा यज्ञेन याजयामानेन त्वा यज्ञेन याजयामेति ।
नेति ह स्माह ।
न स युष्मद्ब्राह्मणो ब्रह्मीयानासीद्यो मह्यमेतं यज्ञक्रतुं व्यदधात् ।
एतेनैव मा याजयतेति ।
तथेति ।
तेन हैनं याजयां चक्रुः ।
स वा एष पृष्ठ्य एव षडहः पञ्चविंशं महाव्रतम् ।
तत एव रात्रिमुपयन्ति ।
श्रीर्वै वर्ष्म पृष्ठानि ।
श्रियमेव तद्वर्ष्म पृष्ठान्यभ्यारोहति ।
अन्नं वै महाव्रतमन्नाद्यस्यैवावरुद्ध्यै ।
तदाहुर्न पुरा संवत्सरान्महाव्रतमुपेत्यमिति ।
तद्यत्पृष्ठ्यष्षडहो भवत्यृतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सरः कृत्स्नमन्नाद्यं पचति संवत्सराभिजितमेव तदन्नाद्यमुपयन्ति ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ३०३

तदाहुस्तत्स्थानं वा एतदहोरात्र्या अग्निष्टोमो वा एतदहरिति ।
तदु वा आहुस्संवत्सरो वा एष यदग्निष्टोमः
संवत्सरः प्रजापतिः ।
प्राजापत्यं महाव्रतमेवाग्निष्टोमसाम्नः पञ्चविंशानि स्तोत्राणि स्युः ।
अथैकविंशैरुक्थ्यै रात्रिमुपावरोहेयुरिति ।
तथा हैतौ यज्ञक्रतू व्याक्रियेते ।
अथ यस्यैतस्य पृष्ठ्यस्य षडहस्य स्तोमाः पञ्चमेऽहनि महाव्रतं विश्वजित्सर्वपृष्ठोऽतिरात्र एतेनो ह क्रतुः कारीरादिरीजे श्रीकामोऽन्नाद्यकामः ।
आत्मा वै पृष्ठ्यष्षडहोऽन्नं महाव्रतम् ।
स मध्यत एवात्मनोऽन्नाद्यं धास्ये सोऽन्नाद श्रेष्ठ स्वानां भविष्यामीति ।
अथो संवत्सरो वै पृष्ठ्यष्षडहः ।

तन्मा संवत्सरेणान्नाद्यं परिगृहीतमुपस्थास्यत इति ।
विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति ।
श्रीर्वै वर्ष्म पृष्ठानि ।
तदु श्रियं वर्ष्म पृष्ठान्यभ्युत्क्रमिष्यामीति ।
तमु ह ब्राह्मण उवाच यावज्जीविष्यत्यन्नाद एव श्रेष्ठ स्वानां भविष्यति विशीर्षास्त्वेव मर्तेति ।
शिरो वा एतद्यज्ञस्य यन्महाव्रतम् ।
तद्यथा शिरश्छित्वा तदुपपद्मयोरुपगूहेत्तद्वै न श्लिष्यति तादृगकृदिति होवाच ।
जानन्त एवास्य शिरश्छेत्तार इति ।
तद्ध तथैवास ।
यावद्ध क्रतुः कारीरादिर्जिजीवान्नाद एव श्रेष्ठ स्वानामास ।
विशीर्षास्त्वेव ममार ।
जानन्तो ह त्वेवास्य शिरश्चिच्छिदुर्भार्यकाः ।
स हैष कल्याण एव यज्ञक्रतुर्यस्त्वैनेनानुपद्रष्ट्रे यजेत ३०४

अथैष बबरसप्तरात्रः ।
तस्य सप्तदशमेव प्रथममहरथ त्रिवृदथ पञ्चदशमथैकविंशमथ त्रिणवमथ त्रयस्त्रिंशं ज्योतिरतिरात्रः ।
एतेनो ह स ईजे श्रीकामोऽन्नाद्यकामः ।
आत्मा वै पृष्ठ्यष्षडह इति ।
मुखं त्रिवृदन्नं सप्तदशः ।
स प्रथमत एव मुखतोऽन्नाद्यं धास्ये सोऽन्नाद श्रेष्ठ स्वानां भविष्यामीति ।
अथो संवत्सरो वै पृष्ठ्यष्षडहस्तन्मा संवत्सरस्य पुरस्तादन्नाद्यमवरुद्धमुपस्थास्यत इति ।
ज्योतिरतिरात्रः ।
एतद्वै प्रज्ञातं देवतीर्थं यज्ज्योतिरतिरात्रः ।
स उ प्रज्ञातेन देवतीर्थेनारिष्टेनारिष्ट उदृचं गमिष्यामीति तमु ह स्व एवान्तेवास्यनुव्याजहार - ३०५

- गोवर्णः खालतेयः पापीयान्भविष्यति ।
प्रथमत एव मुखतोऽन्नाद्यमधित ।
यदा वै मुखमन्नं प्राप्नोति ततो वाव तत्पूयति यदि प्रगिरति पूयति यदि ष्ठीवति पूयत्यपूपुयदन्नाद्यं पापीयान्भविष्यतीति ।
तद्ध तथैवास ।
स ह पापीयानास ।
तस्मै होचुर्यो वै तेऽयं स्व एवान्तेवासी गोवर्णः खालतेयस्स वै त्वानुव्याहार्षीदिति ।
तं होवाच स वै मा त्वमनेन यज्ञेन याजयेति ।
तथेति होवाच ।
तं वै त्वा यथा रथं वा रिष्टं संस्कुर्यादनो वा एवं त्वा संस्करिष्यामीति ।
तस्य ह त्रिवृदेव प्रथममहश्चकार अथ पञ्चदशमथैकविंशमथ त्रिणवमथ त्रयस्त्रिंशमथ सप्तदशमथ सप्तदशम् ।
द्वे सप्तदशे अनूची ।
एतेनो ह गोवर्णः खालतेय आचार्यं याजयां चकार ।
आत्मा वै पृष्ठ्यषडहोऽन्नं सप्तदशः ।
स आत्मन एवाध्यूर्ध्वोऽन्नाद्यमभ्युत्क्रमिष्यते ।
तत्त्वोपरिष्टादन्नाद्यमवरुद्धमुपस्थास्यते सप्तदशात्सप्तदशमन्नादन्नम् ।
अभि ते प्रजान्नादी भवितेति होवाच ३०६

एते बाबरयः कुरुषु पणाय्या एव ।
स ह स्म तद्देवयजने परिचरतीदमयज इदमु नायज इति ।
अथ यस्यैतस्य ज्योतिर्गौरायुरिति त्र्यहो विश्वजित्सर्वपृष्ठ्य उक्थ्यषोडशिमाञ्छन्दोमपवमानः सर्वस्तोम उक्थ्यः पञ्चविंशं महाव्रतं ज्योतिरतिरात्रो यः कामयेतोपेत्याभिप्लवमुपेत्य पृष्ठान्युपेत्य छन्दोमान्महाव्रतं म उपेतं स्यादिति स एतेन यजेत ।
उपेत्य हैवाभिप्लवमुपेत्य पृष्ठान्युपेत्य छन्दोमान्महाव्रतमस्योपेतं भवत्यन्नं वै महाव्रतमन्नाद्यस्यैवावरुद्धयै ।
तदाहुर्न पुरा संवत्सरान्महाव्रतमुपेत्यमिति ।
तद्यत्पृष्ठ्यषडहो भवत्यृतवो वै पृष्ठानि ।

संवत्सर ऋतवः ।
संवत्सरः कृत्स्नमन्नाद्यं पचति संवत्सराभिजितमेव तदन्नाद्यमुपयन्ति ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
ज्योतिरतिरात्रः ।
एतद्वै प्रज्ञातं देवतीर्थं यज्ज्योतिरतिरात्रः ।
प्रज्ञातेन देवतीर्थेनारिष्टेनारिष्ट उदृचं अश्नवा इति ३०७

पृष्ठ्यष्षडहोऽथ यत्सप्तममहस्तस्य चतुर्विंशं बहिष्पवमानं त्रयस्त्रिंशान्युत्तराणि स्तोत्राणि पञ्चविंशं महाव्रतं चतुस्त्रिंशमग्निष्टोमसाम ।
आप्यत इव वा एतद्यज्ञो यदेष पृष्ठ्यष्षडह आप्यत इति ।
तद्यत्सप्तमस्याह्नश्चतुर्विंशं बहिष्पवमानं भवति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरो यज्ञो यज्ञमेवैतद्यज्ञमुख आरभन्ते ।
अथो चतुर्विंशत्यक्षरा वै गायत्री ।
गायत्र्यो वा आप्तं यज्ञक्रतुं पुनस्तन्वते ।
तेनो ह्यन्या गायत्र्या आप्तं यज्ञक्रतुमुद्यन्तुमर्हति ।
त्रयस्त्रिंशान्युत्तराणि स्तोत्राणि त्रयस्त्रिंशद्वै देवता देवतानामेवाप्त्यै ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
चतुस्त्रिंशमग्निष्टोमसाम ।
त्रयस्त्रिंशद्वै देवताः ।
प्रजापतिश्चतुस्त्रिंशः ।
सप्रजापतिकास्वेवैतद्देवतासु यज्ञस्यान्ततः प्रतितिष्ठति ।
पृष्ठ्य एव षडहोऽथ यत्सप्तममहस्तस्य चतुर्विंशाः पवमानास्त्रयस्त्रिंशं पुनरभ्यावर्ति पञ्चविंशं महाव्रतं चतुस्त्रिंशमग्निष्टोमसाम ।
आप्यत इव वा एतद्यज्ञो यदेष पृष्ठ्यष्षडह आप्यत इति ।
तद्यत्सप्तमस्याह्नश्चतुर्विंशाः पवमाना भवन्ति सवनमुखे सवनमुखे नो यज्ञ आरब्धोऽसदिति ।
त्रयस्त्रिंशं पुनरभ्यावर्ति त्रयस्त्रिंशद्वै देवता देवतानामेवाप्त्यै ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
चतुस्त्रिंशमग्निष्टोमसाम ।

त्रयस्त्रिंशद्वै देवताः ।
प्रजापतिश्चतुस्त्रिंशः ।
सप्रजापतिकास्वेवैतद्देवतासु यज्ञस्यान्ततः प्रतितिष्ठति ३०८

पृष्ठ्य एव षडहोऽथ यत्सप्तममहस्तत्सर्वमेव चतुर्विंशं पञ्चविंशं महाव्रतं चतुस्त्रिंशमग्निष्टोमसाम ।
आप्यत इव वा एतद्यज्ञो यदेष पृष्ठ्यष्षडह आप्यत इति ।
तद्यत्सप्तममहस्सर्वमेव चतुर्विंशं भवति सर्वेणैवाह्ना यज्ञ आरब्धोऽसदिति
।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
चतुस्त्रिंशमग्निष्टोमसाम ।
त्रयस्त्रिंशद्वै देवताः ।
प्रजापतिश्चतुस्त्रिंशः ।
सप्रजापतिकास्वेवैतद्देवतासु यज्ञस्यान्ततः प्रतितिष्ठति ।
पृष्ठ्य एव षडहोऽथ यत्सप्तममहस्तस्य छन्दोमाः पवमानाश्चतुस्त्रिंशं पुनरभ्यावर्ति पञ्चविंशं महाव्रतं त्रयस्त्रिंशमग्निष्टोमसाम ।
यः कामयेतोपेत्य पृष्ठान्युपेत्य छन्दोमान्महाव्रतं म उपेतं स्यादिति स एतेन यजेत ।
उपेत्य हैव पृष्ठान्युपेत्य छन्दोमान्महाव्रतमस्योपेतं भवत्यन्नं वै महाव्रतमन्नाद्यस्यैवावरुद्ध्यै ।
चतुस्त्रिंशं पुनरभ्यावर्ति ।
त्रयस्त्रिंशद्वै देवताः ।
प्रजापतिश्चतुस्त्रिंशः ।
सप्रजापतिकास्वेवैतद्देवतासु प्रतितिष्ठति ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
त्रयस्त्रिंशमग्निष्टोमसाम त्रयस्त्रिंशद्वै देवता देवतानामेवाप्त्यै ३०९

अथैतौ संसङ्ग्यौ ।
जमदग्निर्ह वै माहेनानां पुरोहित आस ।
तान्ह वित्तेनात्यादधौ ।

त उ हैनमुपजिहिंसुः ।
स हेक्षां चक्रे कथं न्वहमेषां सप्त सप्तैकाहनि ग्राम्याणां पशूनां हन्यामिति ।
स एतौ यज्ञावपश्यत् ।
तावाहरत ।
ताभ्यामयजत ।
ततो वै स तेषां सप्त-सप्तैकाहनि ग्राम्याणां पशूनामहन् ।
स वा एषोऽछिद्रो वज्रः ।
तान्ह स्मैतेनैवाछिद्रेण वज्रेणोपप्रवर्तयति ।
तद्यथा मत्येन तिलांस्तृंह्यादेवं ह स्मैवैनांस्तत्तृढानपोप्तानभिव्युच्छति ।
स यो भ्रातृव्यवान्स्याद्योऽभिचरेद्य स्पर्धेत स एताभ्यां यजेत ।
एतेनैवाछिद्रेण वज्रेण द्विषन्तं पाप्मानं भ्रातृव्यं स्तृणुते ।
अथो आहुः प्रजाकाम एवाभ्यां यजेतेति ।
स्तोमो वा एतत्स्तोमेन संसक्तो भवति संसक्ताद्वै मिथुनात्प्रजाः पशवः
प्रजायन्ते प्रजात्या एव ।
अथैतत्सप्तदशं सप्तममहर्भवति ।
तस्मिन्महाव्रतमुपयन्ति ।
प्रजापतिर्वै सप्तदशः ।
अन्नं महाव्रतं स्व एव तदायतने प्रजापतिमन्नाद्येन समर्धयन्ति ३१०

अथैतेऽष्टरात्राः ।
बृहस्पतिर्वा अकामयत तेजस्वी ब्रह्मवर्चसी स्यां यशो देवेषु गच्छेयमिति ।
स एतमष्टरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स तेजस्वी ब्रह्मवर्चस्यभवद्यशो देवेष्वगच्छत् ।
यशो ह्येष तदगच्छद्यदेषां पुरोधामाश्नुत ।
तेजस्वी ब्रह्मवर्चसी भवति यशो देवेषु गच्छति य एवं वेद ।
अथो आहुरायुष्काम एवैनेन यजेतेति ।
प्राणो वै गायत्री ।
गायत्रीमेष यज्ञोऽभि संपन्नः ।

तस्मादु हैनेनायुष्कामो यजेत ।
अथो आहुः पशुकाम एवैनेन यजेतेति ।
अष्टाक्षरा वै गायत्री ।
अष्टाशफाः पशवः ।
पशवो गायत्री ।
गायत्रीमेष यज्ञोऽभि संपन्नः ।
तस्मादु हैनेन पशुकामो यजेत ।
प्रजापतिर्वा अकामयतास्माल्लोकादमुं लोकं गच्छेयमिति ।
स एतमष्टरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै सोऽस्माल्लोकादमुं लोकमाष्ट ।
यदस्माल्लोकादमुं लोकमाष्ट तदष्टरात्राणामष्टरात्रत्वम् ।
अष्टे हास्माल्लोकादमुं लोकं य एवं वेद ।
तदाहुः किमन्वष्टरात्र इति ।
दिश इति ब्रूयात् ।
दिशो ह वा अन्वष्टरात्रः ।
चतस्रो दिशश्चत्वारोऽवान्तरदेषाः ।
ऊर्ध्वा दिङ्नवमी ।
अष्टावेतान्यहानि भवन्ति रात्रिर्नवमी ।
दिश एवैतेनर्ध्नोति दिक्षु प्रतिष्ठाय स्वर्गं लोकमेति ३११

अथ यस्यैतस्य ज्योतिरग्निष्टोमः पृष्ठ्यषडहो ज्योतिरग्निष्टोमो यः कामयेत तेजस्वी ब्रह्मवर्चस्यस्मिँल्लोके स्यां गच्छेयं स्वर्गं लोकं तेजस्वी ब्रह्मवर्चस्यमुष्मिँल्लोके स्यामिति स एतेन यजेत ।
तद्यत्पुरस्ताज्ज्योतिरग्निष्टोमो भवति तेजो वै ब्रह्मवर्चसं ज्योतिरग्निष्टोमस्तेनैवास्मिँल्लोके तेजस्वी ब्रमवर्चसी भवति ।
पृष्ठ्यषडहो भवति स्वर्गो वै लोकः पृष्ठ्यषडह स्वर्गमेवैतेन लोकं गच्छति ।
ज्योतिरग्निष्टोम उपरिष्टाद्भवति तेजो वै ब्रह्मवर्चसं

ज्योतिरग्निष्टोमस्तेनैवामुष्मिँल्लोके ब्रह्मवर्चसी भवति ।
अथ यस्यैतस्य ज्योतिरतिरात्रः पृष्ठ्यष्षडहो ज्योतिरतिरात्रो यः कामयेत प्रत्यस्मिँल्लोके तिष्ठेयं गच्छेयं स्वर्गं लोकं प्रत्यमुष्मिँल्लोके तिष्ठेयमिति स एतेन यजेत ।
तद्यत्पुरस्ताज्ज्योतिरतिरात्रो भवत्येषा वै कृत्स्ना प्रतिष्ठा यज्ज्योतिरतिरात्रस्तेनैवास्मिँल्लोके प्रतितिष्ठति ।
पृष्ठ्यष्षडहो भवति स्वर्गो वै लोकः पृष्ठ्यष्षडह स्वर्गमेवैतेन लोकं गच्छति ।
ज्योतिरतिरात्र उपरिष्टाद्भवत्येष वै कृत्स्ना प्रतिष्ठा यज्ज्योतिरतिरात्रस्तेनैवामुष्मिँल्लोके प्रतितिष्ठति ३१२

अथ यस्यैतस्य ज्योतिरग्निष्टोमः पृष्ठ्यष्षडहो ज्योतिरतिरात्रो यः कामयेत तेजस्वी ब्रह्मवर्चस्यस्मिँल्लोके स्यां गच्छेयं स्वर्गं लोकं प्रत्यमुष्मिँल्लोके तिष्ठेयमिति स एतेन यजेत ।
तद्यत्पुरस्ताज्ज्योतिरग्निष्टोमो भवति तेजो वै ब्रह्मवर्चसं ज्योतिरग्निष्टोमस्तेनैवास्मिँल्लोके तेजस्वी ब्रमवर्चसी भवति ।
पृष्ठ्यष्षडहो भवति स्वर्गो वै लोकः पृष्ठ्यष्षडह स्वर्गमेवैतेन लोकं गच्छति ।
ज्योतिरतिरात्र उपरिष्टाद्भवति एषा वै कृत्स्ना प्रतिष्ठा यज्ज्योतिरतिरात्रस्तेनैवामुष्मिँल्लोके प्रतितिष्ठति ।
अथ यस्यैतस्य ज्योतिरतिरात्रः पृष्ठ्यष्षडहो ज्योतिरग्निष्टोमो यः कामयेत प्रत्यस्मिँल्लोके तिष्ठेयं गच्छेयं स्वर्गं लोकं तेजस्वी ब्रह्मवर्चस्यमुष्मिँल्लोके स्यामिति स एतेन यजेत ।
तद्यत्पुरस्ताज्ज्योतिरतिरात्रो भवत्येषा वै कृत्स्ना प्रतिष्ठा यज्ज्योतिरतिरात्रस्तेनैवास्मिँल्लोके प्रतितिष्ठति ।
पृष्ठ्यष्षडहो भवति स्वर्गो वै लोकः पृष्ठ्यष्षडह स्वर्गमेवैतेन लोकं गच्छति ।
ज्योतिरग्निष्टोम उपरिष्टाद्भवति तेजो वै ब्रह्मवर्चसं ज्योतिरग्निष्टोमस्तेनैवामुष्मिँल्लोके तेजस्वी ब्रह्मवर्चसी भवति ३१३

अथैष पृष्ठ्यष्षडहः पञ्चविंशं महाव्रतं सर्वस्तोमोऽतिरात्रः ।
अन्नाद्यकामो हैतेन यजेत ।
तदाहुर्न पुरा संवत्सरान्महाव्रतमुपेत्यमिति ।
तद्यत्पृष्ठ्यष्षडहो भवत्यृतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सरः कृत्स्नमन्नाद्यं पचति संवत्सराभिजितमेव तदन्नाद्यमुपयन्ति ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु
प्रतिष्ठायोदृचमश्नवामहा इति ।
अथ यस्यैतस्य पृष्ठ्यस्य षडहस्य
स्तोमाश्चतुर्विंशमहर्विश्वजित्सर्वपृष्ठोऽतिरात्रो यः कामयेत परोक्षोपेतं मे
महाव्रतं स्यादिति स एतेन यजेत ।
तद्यच्चतुर्विंशमहर्भवति तेनैवास्य परोक्षोपेतं महाव्रतं भवति ।
यद्वेव तत्र हिंकारो वा प्रस्तावो वा प्रतिहारो वा किञ्चिद्भवति तेनैवास्य
पञ्चविंश्युपाप्ता भवति ।
विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति ।
श्रीर्वै वर्ष्म पृष्ठानि ।
श्रियमेव तद्वर्ष्म पृष्ठान्यभ्यारोहन्ति ३१४

अथ यस्यैतस्य पृष्ठ्यस्य षडहस्य ज्योतिरग्निष्टोमो मध्ये भवति ज्योतिरतिरात्र
उपरिष्टाद्यः कामयेता मे ब्रह्मवर्चसी प्रजायां जायेतेति स एतेन यजेत ।
आत्म वै पृष्ठ्यष्षडहः ।
तेजो वै ब्रह्मवर्चसं ज्योतिरग्निष्टोमः ।
मध्यत उ वा आत्मनः प्रजननम् ।
तद्यन्मध्ये ज्योतिरग्निष्टोमो भवति मध्यत एवैतदात्मनो ज्योतिर्धत्त आ हास्य
ब्रह्मवर्चसी प्रजायां जायते ।
ज्योतिरतिरात्र उपरिष्टादेतद्वै प्रज्ञातं देवतीर्थं यज्ज्योतिरतिरात्रः प्रज्ञातेन
देवतीर्थेनारिष्टेनारिष्टा उदृचमश्नवामहा इति ।

अथ यस्यैतस्य विश्वजिदभिजितावग्निष्टोमावभितो भवत उभयतो
ज्योतिष्षडहो मध्ये पशुकामो हैतेन यजेत ।
चत्वार एते मध्य उक्थ्या भवन्ति ।
पशवो वा उक्थानि ।
तेषां सहस्रं स्तोत्रियाः ।
चत्वार उ वैतेऽग्निष्टोमा अभितो भवन्ति ।
ब्रह्म वै ज्योतिरग्निष्टोमः ।
ब्रह्मणैव तदुभयतः पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
ईश्वरो ह तु यादृश एव सन्यजते तादृङ्भवितोः ।
स यदैवान्तगत इव श्रियै मन्येताथ हैनेन यजेत ।
इष्ट्वा हैव स्वर्गं लोकं एति ३१५

अथैते नवरात्राः ।
तेजस्कामो हैतेन यजेत यन्नवरात्रः ।
तेजो वै त्रिवृत्स्तोमः ।
त्रिवृतमेष स्तोमं यज्ञोऽभिसंपन्नः ।
तस्मादु हैनेन तेजस्कामो यजेत ।
अथो आहुर्ब्रह्मवर्चसकाम एवैनेन यजेतेति ।
ब्रह्म वै त्रिवृत्स्तोमः ।
त्रिवृतमेष स्तोमं यज्ञोऽभिसंपन्नः ।
तस्मादु हैनेन ब्रह्मवर्चसकामो यजेत ।
अथो आहुरायुष्काम एवैनेन यजेतेति ।
प्राणो वै त्रिवृत्स्तोमः ।
नवैतान्यहानि भवन्ति रात्रिर्दशमी ।
नव पुरुषे प्राणा नाभिर्दशमी ।
प्राणानेवैतेनाभिजयति प्राणानाप्नोति ।
तदाहुः किमनु नवरात्र इति ।
दिश इति ब्रूयात् ।
दिशो ह वा अनु नवरात्रः ।

चतस्रो दिशश्चत्वारोऽवान्तरदेशा ऊर्ध्वा दिङ्नवम्यर्वाची दशमी ।
दिश एवैतेनर्ध्नोति ।
दिक्षु प्रतिष्ठाय स्वर्गं लोकमेति ३१६

अथ यस्यैतस्य ज्योतिर्गौरायुरिति त्र्यहो ज्योतिर्गौरायुरिति त्र्यहो
ज्योतिर्गौरायुरतिरात्रो यः कामयेत अनन्तर्हितानिमाँल्लोकानभ्यारोहेयमिति
स एतेन यजेत ।
तद्यज्ज्योतिर्गौरायुरिति त्र्यहो भवत्ययं वै लोको ज्योतिरयं
गौरसावायुरनन्तर्हितानेवैतेनेमाँल्लोकानभ्यारोहति ।
अतिरात्रावनुत्तमस्त्र्यहो भवति ।
एवंविधा इव वा इमे लोका अग्निष्टोम इवायं लोक उक्थ्य इवायमतिरात्र
इवासौ ।
तद्यथाविधा इमे लोका एवमेवैनानेतदभ्यारोहन्नेति ।
अथ यस्यैतस्य ज्योतिर्गौरायुरतिरात्रो ज्योतिर्गौरायुरतिरात्रो
ज्योतिर्गौरायुरतिरात्रो य उ एव कामयेत
अनन्तर्हितानिमाँल्लोकानभ्यारोहेयमिति स एतेन यजेत ।
तद्यज्ज्योतिर्गौरायुरतिरात्रो भवत्ययं वै लोको ज्योतिरयं
गौरसावायुरनन्तर्हितानेवैतेनेमाँल्लोकानभ्यारोहति ।
अतिरात्रवन्तस्त्र्यहा भवन्ति ।
अथो एवंविधा इव वा इमे लोका अग्निष्टोम इवायं लोक उक्थ्य
इवायमतिरात्र इवासौ ।
तद्यथाविधा इमे लोका एवमेवैनानेतदभ्यारोहन्नेति ३१७

त्रयो ह वा एषां लोकानां विषुवन्तोऽग्निर्वा अस्य लोकस्य
विषुवान्वायुरन्तरिक्षस्य आदित्यो दिवः ।
तानेवैतेनातितरति ।
त्र्यनीको भवत्यैन्द्रो विजित्यै ।
त्र्यनीकेन वै देवसदनेन देवा असुरानजयन् ।
तस्माद्या अप्येतर्हि त्र्यनीका सेना भवति जयत्येव ।
तद्यथा त्र्यनीकया सेनया जेष्यन्त्योपप्रेयादेवमेवैतेन जेष्यन्स्वर्गं

लोकमुपप्रैति जयति स्वर्गं लोकं य एवं वेद ।
अथ यस्यैतस्य ज्योतिरतिरात्रः पृष्ठ्यष्षडहः पञ्चविंशं महाव्रतं
ज्योतिरतिरात्रोऽन्नाद्यकामो हैतेन यजेत ।
तदाहुर्न पुरा संवत्सरान्महाव्रतमुपेत्यमिति ।
तद्यत्पृष्ठ्यष्षडहो भवत्यृतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सरः कृत्स्नमन्नाद्यं पचति संवत्सराभिजितमेव तदन्नाद्यमुपयन्ति ।
पञ्चविंशं महाव्रतमन्नं वै पञ्चविंशमन्नाद्यस्यैवावरुद्ध्यै ।
ज्योतिरतिरात्र एतद्वै प्रज्ञातं देवतीर्थं यज्ज्योतिरतिरात्रः ।
प्रज्ञातेन देवतीर्थेनारिष्टेनारिष्ट उदृचं अश्नवा इति ३१८

तद्वेतस्य परिचक्षते यदेनत्सत्रमेव मन्यन्ते सत्रं ह स्मैतत्पुरोपयन्ति ।
अनेन ह त्वाव सत्रियाश्च दक्षिणावन्तश्च स्तोमा विज्ञायन्ते ।
उभयतोऽतिरात्रा एव सत्रिया अन्यतरतोऽतिरात्रा दक्षिणावन्तः ।
स य एनेन दक्षिणावता यजेत पुरस्तादग्निष्टोमं कृत्वा यजेत ।
अथ यस्यैतस्य पृष्ठ्यस्य षडहस्य स्तोमाः पञ्चमेऽहनि महाव्रतं
विश्वजित्स्तोमोऽतिरात्रः ।
इहेव च ह खलु वा एत इहेव च वाचं विप्रयुञ्जते ये यजन्ते ये सत्रमासते
।
तां दशमेनैवाह्ना संपादयन्ति ।
संपन्नायै वाचोऽविकृष्टायै प्रतिष्ठितायै महाव्रतमुपेतमसदिति ।
अन्नं वै महाव्रतम् ।
अन्नाद्यस्यैवावरुद्ध्यै ।
विश्वजित्स्तोमोऽतिरात्रो भवति ।
पराङिव ह वा एषः ।
स्वर्गमेव लोकमभिनिर्मृष्टो यद्विश्वजित्स्तोमोऽतिरात्रः ।
पराङेवैतेन स्वर्गं लोकमेति ।
तद्यच्चतुर्थस्तोम एकविंशो भवति प्रतिष्ठा वा एकविंशस्तेनैवास्यां
प्रतितिष्ठति ३१९

अथ यस्यैतस्य पृष्ठ्यस्य षडहस्य ज्योतिर्गौरायुरिति मध्ये त्र्यहो भवति प्रजननकामो हैतेन यजेत ।
आत्मा वै पृष्ठ्यष्षडहः ।
प्रजननमेते स्तोमाः ।
तद्यन्मध्ये ज्योतिर्गौरायुरिति त्र्यहो भवति मध्यत एवैतदात्मनः प्रजननं धत्ते बहुर्भवति प्रजायते ।
अथ यस्यैतस्योर्ध्वष्षडहः प्रत्यङ्त्र्यहो यः कामयेत गच्छेयं स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठेयमिति स एतेन यजेत ।
षडहेनैवेत ऊर्ध्व स्वर्गं लोकं गच्छति प्रत्येवामुतस्त्र्यहेणावरोहति ।
गच्छति स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठति ।
अथो ह वेद योऽसावासं सोऽयमस्मीति पुनर्हैवास्मिँल्लोक आजायते ।
अथ यस्यैतस्योर्ध्वस्त्र्यहः प्रत्यङ्षडहो य उ एव कामयेत गच्छेयं स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठेयमिति स एतेन यजेत ।
त्र्यहेणैवेत ऊर्ध्व स्वर्गं लोकं गच्छति प्रत्येवामुतष्षडहेनावरोहति ।
गच्छति स्वर्गं लोकं प्रत्यस्मिँल्लोके तिष्ठति ।
अथो ह वेद योऽसावासं सोऽयमस्मीति पुनर्हैवास्मिँल्लोक आजायते ।
अथ यस्यैतस्योर्ध्वष्षडह ऊर्ध्वस्त्र्यह स्वर्गकामो हैतेन यजेत ।
ऊर्ध्वा एते स्तोमा भवन्त्यूर्ध्वो वै स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्टचै
३२०

अथैष विवधः ।
तस्य ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो ज्योतिरग्निष्टोम आयुरतिरात्रो ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो ज्योतिरग्निष्टोमः ।
पशुकामो हैतेन यजेत ।
तस्यैषोऽन्यतस्सङ्गो गोआयुषी उक्थ्यावन्तरौ भवतः ।
पशवो वा उक्थानि ।
तयोः पञ्च शतानि स्तोत्र्याः ।
ज्योतिषी अग्निष्टोमावभितो भवतः ।
ब्रह्म वै ज्योतिरग्निष्टोमः ।
ब्रह्मणैव तदुभयतः पशून्परिगृह्णीतेऽपरावापाय ।

नास्य वित्तं परोप्यते य एवं वेद ।
आयुरतिरात्रो मध्ये भवति ।
तद्यथा ह वै विवधस्तस्य मध्ये पृथ्विवानवमर्दाय तादृक्तद् ।
तस्यैषोऽन्यतस्सङ्गो गोआयुषी उक्थ्यावन्तरौ भवतः ।
पशवो वा उक्थानि ।
तयोः पञ्च शतानि स्तोत्रियाः ।
ज्योतिषी अग्निष्टोमावभितो भवतः ।
ब्रह्म वै ज्योतिरग्निष्टोमः ।
ब्रह्मणैव तदुभयतः पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ३२१

अथैते दशरात्राः ।
अभिचर्यमाणो हैतेन यजेत यद्दशरात्रः ।
दशैतान्यहानि भवन्ति ।
दश पुरुषे प्राणाः ।
अह्नैव प्राणं परिगृह्णीतेऽह्ना प्राणमह्ना प्राणं न ततस्तस्य स प्राणोऽतिशये यमस्याभिचरंस्स्तृणवीत ।
अथो आहुरभिचरन्नेवैनेन यजेतेति ।
दशैतान्यहानि भवन्ति ।
दश पुरुषे प्राणाः ।
अह्नैव परस्य प्राणं स्तृणुतेऽह्ना प्राणमह्ना प्राणम् ।
न ततः परस्य स प्राणः परिशिष्यते येनाभिचर्यमाणो जीवेत् ।
एतद्ध वै ज्यैष्ठ्यं कर्मणां यदेष सौम्योऽध्वरो दशरात्रो विधया विधीयते ।
तद्यज्ञ्यैष्ठ्यं कर्मणां तेन नो यज्ञो विहितोऽसदिति ३२२

एतद्ध वै परमं वाचः क्रान्तं यद्दशेति ।
एतावद्ध परमं वाक्चक्रमे ।
तद्यत्परमं वाचः क्रान्तं तत्सर्वमाप्नवानीति ।
अथो आहुरन्नाद्यकाम एवैनेन यजेतेति ।
सर्वो ह वा अन्यो विराजमतिष्टौति ।

एष ह वाव विराजं नातिष्टौति यो दशभि स्तुते ।
दशाक्षरा विराट् ।
अन्नं विराट् ।
अह्नैव विराजमवरुन्द्धेऽह्ना विराजमह्ना विराजं स दशमेनैवाह्ना सर्वां विराजमन्नाद्यमवरुद्ध्यान्तत उत्तिष्ठति ।
पुरुषो ह वाव विराजमतिशये ।
दशैतान्यहानि भवन्ति रात्रिरेकादशी ।
दश पुरुषे प्राणा आत्मैकादशः ।
पुरुषो ह वा एष विराज्यध्यूढोऽनिष्पादाय ।
न ह वै गौर्नाश्वो नाश्वतरो विराजमधितिष्ठति ।
पुरुषो ह वाव विराजमधितिष्ठति ।
तस्मात्पुरुषः पशूनामत्ता ।
अत्ता पशूनां भवत्यधि विराजं तिष्ठति य एवं वेद ३२३

इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मन्यमानस्स व्यस्मयत ।
स हरितो विस्मितोऽजरत् ।
स षक्षत कथं न्वहमस्य हरिम्णः पाप्मनो दशमीं निर्दश्यं गच्छेयमिति ।
स एतं दशरात्रं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
ततो वै स तस्य हरिम्णः पाप्मनो दशमीं निर्दश्यमगच्छत् ।
गच्छति ह हरिम्णः पाप्मनो दशमीं निर्दश्यं य एवं वेद ।
तस्मादुत विद्धं वा विजातं वावतीर्णिनं वा पृच्छन्ति निर्दश्योऽभूदिति ।
तस्य ह वाव ते तद्धरिम्णः पाप्मनो दशमीं निर्दश्यं गच्छन्ति ।
गच्छति ह हरिम्णः पाप्मनो दशमीं निर्दश्यं य एवं वेद ३२४

अथैष त्रिककुप् ।
प्रजननकामो हैतेन यजेत ।
त्रिवृत्पञ्चदशौ स्तोमौ भवतः ।
ऊनातिरिक्तौ मिथुनौ प्रजनी ।

ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
ताभ्यां त्रिवृतं स्तोमं पर्यूहन्ति ।
तमेव तौ प्रजनयतः ।
सप्तदशैकविंशौ स्तोमौ भवतः ।
ऊनातिरिक्तौ मिथुनौ प्रजनी ।
ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
ताभ्यां सप्तदशं स्तोमं पर्यूहन्ति ।
तमेव तौ प्रजनयतः ।
त्रिणवस्त्रयस्त्रिंशौ स्तोमौ भवतः ।
ऊनातिरिक्तौ मिथुनौ प्रजनी ।
ऊनमन्यस्यातिरिक्तमन्यस्य ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
ताभ्यां त्रिणवं स्तोमं पर्यूहन्ति ।
तमेव तौ प्रजनयतः ।
तदाहुराप्यन्ते वा एतत्स्तोमा आप्यन्ते छन्दांस्याप्यन्ते देवता आप्यन्त ऋतवो गृहा यदेष पृष्ठ्यष्षडह आप्यन्त इति ।
आग्नेयीष्वयातयाम्नीषु सप्तमेऽहनि स्तुवीरन् ।
अग्निर्वै देवानामयातयामा ।
अग्निमेव तद्देवानामयातयामानं पश्यन्तो यजन्ते ।
षन्द्रीष्वयातयाम्नीष्वष्टमेऽहनि स्तुवीरन् ।
इन्द्रो वै देवानामयातयामा ।
इन्द्रमेव तद्देवानां अयातयामानं पश्यन्तो यजन्ते ।
वैश्वदेवीष्वयातयाम्नीषु नवमेऽहनि स्तुवीरन् ।
विश्वे वै देवा देवानामयातयामानः ।
विश्वानेव देवांस्तद्देवानामयातयाम्नः पश्यन्तो यजन्ते ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्धवा तेषु

प्रतिष्ठायोदृचमश्नवामहा इति ३२५

अथैष पञ्चयज्ञक्रतुः ।
याः पञ्च दैवीराच्छदस्तासामेषर्द्धिः ।
यः पाङ्क्तो यज्ञो ये पाङ्क्ताः पशवो यत्पाङ्क्तमन्नाद्यं ये पञ्चर्तवो यत्किं च पञ्च पञ्च
तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।
तस्यो एतस्य न रात्रिमुपयन्ति नेद्विराजमतिष्टवामेति ।
तदाहुरति वै दशरात्रो यज्ञस्य मात्रामेति ।
तद्यदेष पञ्चयज्ञक्रतुर्भवति पञ्चाहे श्रुतस्तं काममृध्नवानि यो दशरात्र इति ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु
प्रतिष्ठायोदृचमश्नवामहा इति ।
अथैष सप्तयज्ञक्रतुः ।
यास्सप्त दैवीराच्छदस्तासामेषर्द्धिः ।
यास्सप्तपदाश्शक्वर्यो ये सप्त ग्राम्याः पशवो यानि सप्त चतुरुत्तराणि
छन्दांसि ये सप्त मुख्याः प्राणा यानि सप्तविंशतिर्दिव्यानि नक्षत्राणि
यस्सप्तविंश स्तोमो यत्किं च सप्त सप्त तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।
तदाहुरति वै दशरात्रो यज्ञस्य मात्रामेति ।
तद्यदेष सप्तयज्ञक्रतुर्भवति सप्ताहे श्रुतस्तं काममृध्नवानि यो दशरात्र इति ।
सर्वस्तोमोऽतिरात्रो भवति सर्वेषां लोकानामभिजित्या अभिक्रान्त्यै ।
सर्वं हीदं स्तोमा एव ।
अथो यानिमानेकैकान्स्तोमानुपागाम तान्सार्धमृद्ध्वा तेषु
प्रतिष्ठायोदृचमश्नवामहा इति ३२६

अथैष महात्रिककुप् ।
य श्रीकामः पुरोधाकाम स्यात्स एतेन यजेत ।
त्रीणि वर्ष्माणि तिस्र श्रियस्त्रय इमे लोकाः ।
तदेवैतेनावरुन्द्धे ।
त्रिवृता पञ्चदशं परिष्टुवन्ति ।

ब्रह्म वै त्रिवृत्क्षत्रं पञ्चदशः ।
ब्रह्मणैव तत्क्षत्रं परिगृह्णन्ति ।
सप्तदशेनैकविंशं परिष्टुवन्ति ।
ब्रह्म वै सप्तदशः क्षत्रमेकविंशः ।
ब्रह्मणैव तत्क्षत्रं परिगृह्णन्ति ।
त्रिणवेन त्रयस्त्रिंशं परिष्टुवन्ति ।
ब्रह्म वै त्रिणवः क्षत्रं त्रयस्त्रिंशः ।
ब्रह्मणैव तत्क्षत्रं परिगृह्णन्ति ।
यदो वै ब्रह्मणा क्षत्रं परिगृह्णात्यथ स तस्य पुरोधां गच्छति गच्छति पुरोधां पुर एनं दधते ३२७

स वा एष महात्रिककुब्भवति ।
त्रयो ह वा एषां लोकानां ककुभः ।
अग्निर्वा अस्य लोकस्य ककुब्वायुरन्तरिक्षस्यादित्यो दिवः ।
ककुभामेको भवति य एवं वेद ।
विश्वजित्सर्वपृष्ठातिरात्रो भवति ।
श्रीर्वै वर्ष्म पृष्ठानि ।
श्रियमेव तद्वर्ष्म पृष्ठान्यभ्यारोहति ।
ओजो वै वीर्यं पृष्ठानि ।
ओजसैव तद्वीर्येणान्ततः पुरोधां परिगृह्णीते ।
नानाग्निष्टोमसामानि भवन्त्यन्योऽन्यस्याननुयानाय ।
शं नो देवीरभिष्टये तं गूर्धया स्वर्णरमिति यज्ञायज्ञीयं च साकमश्वं च ।
अग्ने वाजस्य गोमतो विशोविशो वोऽतिथिमिति श्रुधीयं च विशोविशीयं च ।
आ ते अग्न इधीमहि मूर्धानं दिवो अरतिं पृथिव्या इति संजयं च दैर्घश्रवसं च ।
अग्निं नरो दीधितिभिररण्योस्त्वमग्ने गृहपतिरिति बृहच्चाग्नेयं समन्तं च ।
समिद्धमग्निं समिधा गिरा गृण आ नो यज्ञं दिविस्पृशमिति राजोवाजीयं च बृहच्च ३२८

तेन हैतेन जबालमारुणिर्याजयां चकार ।
स ह त्रयाणां निगृध्नानानां पुरोधां जगाम काश्यस्य कौसल्यस्यैक्ष्वाकस्येति
।
तस्य ह श्रीरास कल्याणी ।
तस्य ह स्म तच्छ्रियं दृष्ट्वा श्वेतकेतुः पित्रा विवदते पलित यज्ञकाम
अन्यानेव श्रिया यशसा समञ्जंश्चरसि नात्मानमिति ।
नेति ह स्माह ।
मा मा पुत्रक वोचः ।
यज्ञक्रतुरेव मे विज्ञात आस ।
तं पापक इव ब्रह्मबन्धुके व्यजिज्ञासे ।
स किल तहैवास यथा म एनमनूचुः ।
ततो वा अतितरामिव ।
स वा एष यज्ञो मृत्योरेव निकृतिः ।
देवा वै मृत्योरबिभयुर्य स्वर्गे लोके ।
तस्मात्ते प्रजापतिमेवोपाधावन् ।
तेभ्य एतं दशरात्रं यज्ञं व्यदधात् ।
तमाहरन् ।
तेनायजन्त ३२९

ते त्रिवृतास्तुवत ।
त्रिवृत वै स्तुवत इति मृत्युः पञ्चदशमभिपर्येत्यातिष्ठदिदमत एष्यन्तीति ।
तं पञ्चदशेऽन्वागच्छन् ।
तं तत उदरुन्धन् ।
स सप्तदशमभ्युदक्रामत् ।
अथेतरे पञ्चदशेन स्तुत्वा त्रिवृतैव पुनरस्तुवत ।
त्रिवृता वै स्तुवत इति मृत्युः पञ्चदशमेवाभिप्रत्याद्रवदिदमेवात एष्यन्तीति
।
अथेतरे सप्तदशमभ्यत्यक्रामन् ।
ते सप्तदशेनास्तुवत ।
सप्तदशेन वै स्तुवत इति मृत्युरेकविंशमभिपर्येत्यातिष्ठदिदमत एष्यन्तीति ।

तमेकविंशेऽन्वागच्छन् ।
तं तत उदरुन्धन् ।
स त्रिणवमभ्युदक्रामत् ।
अथेतर एकविंशेन स्तुत्वा सप्तदशेनैव पुनरस्तुवत ।
सप्तदशेन वै स्तुवत इति मृत्युरेकविंशमेवाभिप्रत्याद्रवदिदमेवात एष्यन्तीति ।
अथेतरे त्रिणवमभ्यत्यक्रामन् ।
ते त्रिणवेनास्तुवत ।
त्रिणवेन वै स्तुवत इति मृत्युस्त्रयस्त्रिंशमभिपर्येत्यातिष्ठदिदमत एष्यन्तीति ।
तं त्रयस्त्रिंशेऽन्वागच्छन् ।
तं तत उदरुन्धन् ।
स छन्दोमानभ्युदक्रामत् ।
अथेतरे त्रयस्त्रिंशेन स्तुत्वा त्रिणवेनैव पुनरस्तुवत ।
त्रिणवेन वै स्तुवत इति मृत्युस्त्रयस्त्रिंशमेवाभिप्रत्याद्रवदिदमेवात एष्यन्तीति
३३०

अथेतरे विश्वजितमेव सर्वपृष्ठं पितरं प्रजापतिं प्रापद्यन्त ।
ततो वै ते निकृत्य मृत्युममृता अभवन् ।
निकृत्य हैव मृत्युममृतो भवति य एवं वेद ।
अथैतेऽग्निष्टोमा एव दशाहानि भवन्ति ।
एतेभ्यो ह वै सामभ्यः प्रजापतिस्सोमपीथं प्रददौ ।
तानि वा एतानि प्रत्तसोमपीथान्यपहतपाप्मानि सामानि ।
अपहत्य पाप्मानं श्रेयान्भवति य एवं वेद ।
एतान्यु ह वै सामानि कामानां पूर्णानि ।
यथा दृति स्वासिक्त स्याद्दध्नो वा घृतस्य वा मधुनो वैवमेतानि सामानि कामानां पूर्णानि ।
एतान्यु ह स्म वै तत्कुंस्थः कालाशभिरुपगायति
अरुणान्सदमुन्नन्नश्वान्काष्ठातो यथा
पूर्णान्परिस्रुतः कुम्भाञ्जनमेजयसादन
इति ।

यं ह वा एतैस्सामभिः कामं कामयते तमेवावरुन्द्धे ।
अथैतानि द्वादशाहस्य दशाहानि भवन्ति ।
एतान्यु ह वै वीर्यवन्त्यहानि यानि द्वादशाहस्य ।
तद्यानि वीर्यवन्त्यहानि तैर्न स्तुतमसदिति ।
तान्यु नाना स्तोमा वहन्ति ।
एषा ह वा अह्नां समृद्धिर्यदेनानि नाना स्तोमा वहन्ति ।
सा याइवाह्नां समृद्धिस्सैवैषा क्रियते ३३१

अथैष कुसुर्विन्ददशरात्रः ।
तस्य त्रयस्त्रिवृतोऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्यास्त्रयस्सप्तदशा उक्थ्या ज्योतिरतिरात्रो यः कामयेत तेजस्वी ब्रह्मवर्चस्योजस्वी वीर्यावानन्नादः प्रतितिष्ठेयमिति स एतेन यजेत ।
तेजो वै ब्रह्मवर्चसं त्रिवृत्स्तोम ओजो वीर्यं पञ्चदशोऽन्नं सप्तदशः प्रतिष्ठा ज्योतिरतिरात्र ऋध्नोति हैनेनैतान्कामान्य एतस्मिन्कामाः ।
अतो ज्योतिष्टोमेऽतिरात्रे श्रुतस्तं काममृध्नवानि यो दशरात्र इति ।
एतं ह स्म वै तत्प्रसृप्तौ ब्राह्मणौ समूदाते कं नु सोम्य यज्ञक्रतुं प्रसृप्तौ स्व इति ।
तयोर्हान्यतर उवाच यदि न्वा इदमेवाप्यह श्वो भविताग्निष्टोमा एव तर्हि दशो एव त्वयि नूनमहान्यासिष्यावहा इति ।
तं हैतं तावग्निष्टोममेव मेनाते ये ह्येवामी अग्निष्टिमस्य स्तोमास्त एवैते अथैषोऽभ्रिरुभयतःद्व्णूः - ३३२

- तस्य त्रिवृदग्निष्टोमः पुरस्ताद्भवति त्रिवृदग्निष्टोम उपरिष्टादष्टावुक्थ्याः सप्तदशा मध्ये ।
अन्नाद्यकामो हैतेन यजेत ।
अग्निर्वै पूर्वस्त्रिवृदादित्य उत्तरः ।
अग्निर्वा अस्य लोकस्याभ्रिरादित्योऽमुष्य ।
अथैतदन्नमेव यजेत ।
अष्टावुक्थ्यास्सप्तदशा मध्ये ।
अयमेवास्मा अग्निरित एतदन्नाद्यं रदत्यादित्योऽमुतो वृष्टिं प्रयच्छति ।

ता अस्मा एतदुभयतोऽन्नाद्यं रदतोऽन्नादो ह भवति य एवं वेद ।
अथो आहुः पशुकाम एवैनेन यजेतेति ।
तस्याग्निष्टोमावभितो भवत उक्थ्या मध्ये ।
ब्रह्म वा अग्निष्टोमः पशव उक्थानि ।
ब्रह्मणैव तदुभयतः पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
अथ यस्यैतस्योर्ध्वषडह ऊर्ध्वस्त्र्यहो ज्योतिरतिरात्र स्वर्गकामो हैतेन यजेत
।
ऊर्ध्वा एते स्तोमा भवन्त्यूर्ध्वो वै स्वर्गो लोक स्वर्गस्यैव लोकस्य समष्ट्यै
।
अथ यस्यैतस्य ज्योतिर्गौरायुरतिरात्रो ज्योतिर्गौरायुरतिरात्रो ज्योतिरतिरात्रो यः
कामयेत ज्योतिष्मतो लोकाञ्जयेयमिति स एतेन यजेत ।
चत्वार्यु ह वै देवानामाविष्टमानीव ज्योतींष्यग्निः पृथिव्यामादित्यो दिवि
चन्द्रमा नक्षत्रेषु विद्युदप्सु ।
एतानेव ज्योतिष्मतो लोकाञ्जयति य एवं विद्वानेतेन यज्ञक्रतुना यजते य उ
चैनमेवं वेद य उ चैनमेवं वेद ३३३

सत्रम्

अथैष त्रयोदशरात्रः ।
असौ वा आदित्यस्सदृङ्ङेवान्यैर्देवैरासीदनेनाग्निना वायुना
चन्द्रमसान्यैर्देवैः ।
सऽकामयत सर्वेषां देवानां श्रैष्ठ्यं गच्छेयं त्रयोदशो मासो भूत्वेदं
सर्वमभ्यारोहेयमिति ।
स एतं त्रयोदशरात्रमपश्यत् ।
तमुपैत् ।
ततो वै स सर्वेषां देवानां श्रैष्ठ्यमगच्छत् ।
त्रयोदशो मासो भूत्वेदं सर्वमभ्यारोहत् ।
संवत्सरो वा इदं सर्वम् ।
त एव सर्वे स्तोमास्तानि सर्वाणि पृष्ठानि तानि सर्वाणि छन्दांसि तानि

सर्वाणि सवनानि ते सर्वे देवास्ते सर्वे लोकास्ते सर्वे कामाः ।
स द्वादशभिरेवाहोभिर्द्वादश मासानाप्त्वा त्रयोदशेनैवाह्ना त्रयोदशो मासो भूत्वेदं सर्वमभ्यारोहत् ।
ते य एवं विद्वांसस्त्रयोदशरात्रमुपयन्त्येतमेवर्ध्नुवन्त्येतस्य सलोकतां गच्छन्ति ३३४

मास्यं वा एतत्सत्रम् ।
तेन यर्द्धिस्सैवर्द्धिः ।
मासो ह खलु वै पुनःपुनः पल्ययमानस्संवत्सरमाप्नोति ।
संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यच्चतुर्दश ।
सप्त परस्तादहानि सप्तावस्तात् ।
अथ यो मध्ये लोकस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
ता वा एता रात्रयस्संपद्यन्ते विराजं च गायत्रीं च ।
एते ह खलु वै छन्दसां वीर्यवत्तमे यद्विराट्च गायत्री च ।
ते ये छन्दसां वीर्यवत्तमे तयोर्ऋध्नवाम तयोः प्रतितिष्ठाम ताभ्यां न स्तुतमसदिति ।
उपो विराजं गच्छन्ति ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।
द्व्यूना विराड्द्वे ते स्त्रिया ऊने यतस्सा प्रजायते तेनो प्रजननम् ।
वैश्वानरः प्रायणीयोऽतिरात्रो भवति ।
वैश्वानरप्रायणा ह्यहीनास्सोमाः ३३५

अथैष पृष्ठ्यष्षडहो भवति ।
श्रीर्वै पृष्ठानि वर्ष्म वै पृष्ठानि ।
तच्छ्रियं वर्ष्म पृष्ठानि रोहन्ति ।
तदु सत्रिणो भवन्ति ।

तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं पृष्ठ्यं षडहमुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यङ्पृष्ठ्यष्षडहो भवति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
तत्त्वेतस्य परिचक्षते यदारभमाणा एवं पृष्ठ्यं षडहमारभन्ते ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ।
अथैते ज्योतिर्गौरायुरिति स्तोमा भवन्ति ।
एते ह वै शिवाश्शान्ताः पथ्या स्तोमा ये ज्योतिर्गौरायुरिति ।
ते ये शिवाश्शान्ताः पथ्या स्तोमास्तैर्न स्तुतमसदिति । उ विराजं संपन्नाः ।
तदु विराजमन्नाद्यमारभन्ते ।
यो वै श्रेयांसमसंविद्योपाधिरोहत्युद्वै स तं हिंस्ते ।
यया वै स तमार्त्या कामयते तयैनं निनयति ।
अथ य एनमनु संविदमनुसमासाद्योपाधिरोहति न वै स तमुद्धिंस्ते ।
तद्यदेते ज्योतिर्गौरायुरिति स्तोमा भवन्ति यथा श्रेयांसमनु संविदमनुसमासाद्योपाधिरोहेत्तादृक्तत् ३३६

अथैष पृष्ठ्यष्षडहो भवति ।
श्रीर्वै पृष्ठानि वर्ष्म वै पृष्ठानि ।
तच्छ्रियं वर्ष्म पृष्ठानि रोहन्ति ।
तदु सत्रिणो भवन्ति ।
तदाहुरग्रमिव वा एते रोहन्ति य एतं पृष्ठ्यं षडहमुपयन्तीति ।
यो वै महावृक्षस्याग्रं रूढ्वा प्रत्यवरोढुं न वेद भङ्क्ं वै स न्येत्यव वा हि पद्यते तद्वै वोपरि शुष्यति ।
तद्यत्परस्तात्प्रत्यङ्त्र्यहो भवति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
ज्योतिषोऽध्यह्न उत्तिष्ठन्ति प्रज्ञाताज्ज्यैष्ठ्यात्स्तोमात् ।
प्रज्ञाते ज्यैष्ठ्ये स्तोमे प्रतिष्ठायोदृचमश्नवामहा इति ।
तस्य द्वादश स्तोत्राणि भवन्ति द्वादश मासास्संवत्सरः ।
संवत्सरो ज्यैष्ठ्यं तस्य भ्रातृव्यो नास्त्यभ्रातृव्ये ज्यैष्ठ्ये स्तोमे प्रतिष्ठायोदृचमश्नवामहा इति ।

वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३३७

अथैता द्वादशाहवतीर्भवन्ति देवसत्रं ह खलु वा एतत्प्रजापतिसत्रं यद्द्वादशाहः ।
एतेन वै सत्रेण प्रजापतिराध्नोर्त्तद्येन सत्रेण प्रजापतिराध्नोर्त्तेनर्ध्नवामेति ।
तदाहुः किं वर्ष्म सत्राणामिति ।
द्वादशाह इति ब्रूयात् ।
द्वादशाहो ह वै वर्ष्म सत्राणां न ह्यन्यस्मिन्सत्रे चतुश्चत्वारिंश स्तोमोऽस्ति नाष्टाचत्वारिंशः ।
तद्यद्वर्ष्म सत्राणां तन्न उपेतमसदिति ।
इहेव च ह खलु वा एत इहेव च वाचं विप्रयुञ्जते ये यजन्ते ये सत्रमासते ।
तां दशमेनैवाह्ना संपादयन्ति ।
संपन्नायै नो वाचोऽविकृष्टायै प्रतिष्ठिताया उदृचमश्नवामहा इति ।
एकेनो च सत्रेण द्वे सत्रे उपयन्ति द्वादशाहं च चतुर्दशरात्रं च ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३३८

मास्यं वा एतत्सत्रम् ।
तेन यर्द्धिस्सैवर्द्धिः ।
मासो ह खलु वै पुनःपुनः पल्ययमानस्संवत्सरमाप्नोति ।
संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यत्पञ्चदश ।
सप्त परस्तादहानि सप्तावस्तात् ।
अथ यन्मध्येऽहस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
वज्रो ह खलु वा एष यत्पञ्चदशरात्रः ।

पञ्चदशरात्रेण वै वज्रेण देवा असुरानभ्यभवन् ।
ते ये पाप्मगृहीता इव मन्येरंस्त एतमेव पञ्चदशरात्रमुपेयुः ।
पञ्चदशरात्रेणैव वज्रेण द्विषन्तं पाप्मानं भ्रातृव्यमभिभूयोत्तिष्ठन्ति ।
तदु होवाच यामनो भ्रातलायनो यामहं सरस्वतीं पञ्चदशरात्रेण वज्रेणाजयं कस्तस्यामुदन्योऽवसातुमर्हति ।
वज्रेण वा अहमेतामजयम् ।
दुरपजय्यं वै वज्रजितमिति ।
ता वा एता रात्रयस्संपद्यन्ते विराजं च गायत्रीं च ।
एते ह खलु वै छन्दसां वीर्यवत्तमे यद्विराट्च गायत्री च ।
ते ये छन्दसां वीर्यवत्तमे तयोर्ऋध्नवाम तयोः प्रतितिष्ठाम ताभ्यां न स्तुतमसदिति ।
उपो विराजं गच्छन्ति ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।
एकोना विराडूनं तत्स्त्रियै यतस्सा प्रजायते तेनो प्रजननम् ।
वैश्वानरः प्रायणीयोऽतिरात्रो भवति ।
वैश्वानरप्रायणा ह्यहीनास्सोमाः ३३९

अथैते ज्योतिर्गौरायुरिति स्तोमा भवन्ति ।
एते ह वै शिवाश्शान्ताः पथ्या स्तोमा ये ज्योतिर्गौरायुरिति ।
ते ये शिवाश्शान्ताः पथ्या स्तोमास्तैर्न स्तुतमसदिति ।
त उ विराजं संपन्नाः ।
तदु विराजमन्नाद्यमारभन्ते ।
यो वै श्रेयांसमसंविद्योपाधिरोहत्युद्वै स तं हिंस्ते । यया वै स तमार्त्या कामयते तयैनं निनयति ।
अथ य एनमनु संविदमनुसमासाद्योपाधिरोहति न वै स तमुद्धिंस्ते ।
तद्यदेते ज्योतिर्गौरायुरिति स्तोमा भवन्ति यथा श्रेयांसमनु संविदमनुसमासाद्योपाधिरोहेत्तादृक्तत् ।
अथैष त्रिवृदग्निष्टुदग्निष्टोमो भवति ।
ब्रह्म वै त्रिवृत् ।
क्षत्रं पृष्ठ्यष्षडहः ।

तद्यत्पुरस्तात्पृष्ठ्यस्य षडहस्याग्निष्टुतमुपयन्ति ब्रह्मैव तत्क्षत्रस्य पुरस्ताद्दधाति ।
तस्माद्ब्राह्मणः क्षत्रियस्य पुरोहितः ।
एकेनो च सत्रेण द्वे सत्रे उपयन्ति द्वादशाहं च पञ्चदशरात्रं च ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३४०

द्विमास्यं वा एतत्सत्रम् ।
तेन यर्द्धिस्सैवर्द्धिः ।
यौ ह खलु वै द्वौ मासावृतोस्सर्द्धिः ।
ऋतुरु प्रत्यक्षं संवत्सरस्यर्द्धिः ।
संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यदेकविंशतिर्दश परस्तादहानि दशावस्तात् ।
अथ यन्मध्येऽहस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
ता वा एता रात्रयस्संपद्यन्ते विराजमेव ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।
पञ्च च विराट्च ।
ता याः पञ्च दैवीराच्छदस्तासामेषर्द्धिः ।
यः पाङ्क्तो यज्ञो ये पाङ्क्ताः पशवो यत्पाङ्क्तमन्नाद्यं ये पञ्चर्तवो यत्किं च पञ्च पञ्च तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।

दशैतानि परस्तादहानि भवन्ति दशावस्ताद्विषुवानेकविंशः ।
दश वै पुरुषस्य हस्त्या अङ्गुलयो दश पद्या आत्मैकविंशः ।
पुरुषो ह वा एष विराज्यध्यूढोऽनिष्पादाय ।
न ह वै गौर्नाश्वो नाश्वतरो विराजमधितिष्ठति ।
पुरुषो ह वाव विराजमधितिष्ठति ।
तस्मात्पुरुषः पशूनामत्ता ।

अत्ता पशूनां भवत्यधि विराजं तिष्ठति य एवं वेद ।
ता हैता रात्रीर्नैदाघीये मास्युपेयुः ।
नैदाघीये वै मासि प्रजापतिरादित्याय रुचं प्रायच्छत् ।
तस्मादेष नैदाघीये मासि बलिष्ठं तपत्यपि द्विगुणाश्छाया उपसर्पन्ति ।
ता हाग्रदेवो राजनिर्ब्रह्मवर्चसकाम उपेयाय ।
तमु ह ब्राह्मण उवाच यावद्ब्रह्मवर्चसमवारुद्धाभिश्वेतो भविष्यतीति ।
स यथाश्व श्वेत एवमास ।
तावत्तेजस्विनीस्तावद्ब्रह्मवर्चसिनीस्तावद्वीर्यवतीरेता रात्रयः ।
ते य एवं विद्वांस एता रात्रीरुपयन्ति सर्व एवर्ध्नुवते सर्वे ब्रह्मवर्चसिनो भवन्ति ।
तासु वायव्यं पशुमालभेरन्वायुर्वै शान्तिश्शान्त्या एवानिर्दाहाय ।
वैश्वानरः प्रायणीयोऽतिरात्रो भवति ।
वैश्वानरप्रायणा ह्यहीनास्सोमाः ३४२

अथैष पृष्ठ्यष्षडहो भवति ।
श्रीर्वै पृष्ठानि वर्ष्म वै पृष्ठानि ।
तच्छ्रियं वर्ष्म पृष्ठानि रोहन्ति ।
तदु सत्रिणो भवन्ति ।
अथैते सप्तदशा स्वरसामानो भवन्ति प्राजापत्यान्यहानि त्रयः परस्तात्त्रयोऽवस्तात् ।
प्रजापतिर्वा एष द्वेधा व्यूढ आदित्याय रुचं प्रयच्छति ।
तद्यो रुचः प्रदाता येन रुक्प्रत्ता स नो रुचं प्रयच्छादिति ।
अथैष एकविंशो विषुवान्भवति ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एतस्य वा एते सलोकतां गच्छन्त्येतमभ्यारोहन्ति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं आदित्यमिति ।
तद्यत्परस्ताद्प्रत्यङ्पृष्ठ्यष्षडहो भवति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३४३

अथ यस्यैतस्य पृष्ठ्यस्य षडहस्य यन्मध्ये
सप्तदशमहस्तदुपरिष्टात्त्रयस्त्रिंशस्य पर्यूहन्ति ।
प्रजननकामा हैतदुपेयुः ।
प्रजननं वै पृष्ठ्यष्षडहः ।
षडुत्तरेण वै स्तोमाः प्रजनयन्ति चतुरुत्तरेण छन्दांसि ।
अथैष षडुत्तरै स्तोमैस्स्तोमस्सप्तदशो मध्ये व्यवहितः ।
प्रजननमन्तर्धायेव तिष्ठति ।
तं यदुपरिष्टात्त्रयस्त्रिंशस्य पर्यूहन्त्यनन्तर्हितात्प्रजननात्प्रजायामहा इति ।
द्वयोरु वै सप्तदशयोस्तृतीयतायै ।
अथैतौ विश्वजिदभिजितावभित स्तोमानां वीर्यम् ।
वीर्येण ह वा एतौ विषुवन्तं दाधर्तुः ।
यज्ञस्य ह खलु वा मेथ्यौ यद्विश्वजिदभिजितौ ।
एताभ्यां वै यज्ञो धृतः ।
देवतल्पो ह खलु वा एष यद्विश्वजिदभिजितौ क्षत्रमसावादित्यः ।
देवतल्प एव तत्क्षत्रमध्यूहन्ति ।
तस्मात्क्षत्रियो विश्यध्यूढः ।
अथैष एकविंशो विषुवान्भवति ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
एतस्य वा एते सलोकतां गच्छन्त्येतमभ्यारोहन्ति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं आदित्यमिति ।
तद्यत्परस्ताद्प्रत्यङ्ङेवंविधष्षडहो भवति निह्नवायैवानार्त्यै शिवत्वाय
शान्त्यै ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३४४

अथैतत्पञ्चाहविधं भवति ।
न ह खलु वै स एकविंशतिरात्रो यो विषुवान् ।
को नु स विषुवान्यस्मिन्न विश्वजिन्नभिजितौ भवतः ।
तद्यद्विश्वजिदभिजितौ भवतः कृत्स्नं विषुवन्तमृध्नवाम कृत्स्नो नो

विषुवानुपेतोऽसदिति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एता रात्रीरुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यङ्पञ्चाहो भवति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३४५

द्विमास्यं वा एतत्सत्रम् ।
तेन यर्द्धिस्सैवर्द्धिः ।
यौ ह खलु वै द्वौ मासावृतोस्सर्द्धिः ।
ऋतुरु प्रत्यक्षं संवत्सरस्यर्द्धिः ।
संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यद्चतुर्विंशतिर्द्वादश परस्तादहानि द्वादशावस्तात् ।
अथ यो मध्ये लोकस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
ता वा एता रात्रयस्संपद्यन्ते जगतीमेव ।
पशवो वै जगती ।
तेनैतत्सत्रं पशव्यम् ।
उपो विराजं गच्छन्ति ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।
द्व्यूना विराट्द्वे ते स्त्रिया ऊने यतस्सा प्रजायते तेनो प्रजननम् ।
गायत्रीमु दीक्षोपसद्भिश्च सुत्याभिश्च संपद्यन्ते ।
प्राणो वै गायत्री तेनैतत्सत्रमायुष्यम् ।
तेजो वै गायत्री तत्तेजस्विनो ब्रह्मवर्चसिनो भवन्ति ।
ज्यैष्ट्यं वै गायत्री तद्भ्रातृव्ये ज्यैष्ठ्ये प्रतितिष्ठन्ति ३४६

अथैते सप्ताहा भवन्ति सप्त वै छन्दांसि ।
छन्दांसि वै स्वाराज्यो लोकस्तद्यावान्स्वाराज्यो लोकस्तावन्तं स्वाराज्यं

लोकमृध्नवामेति ।
सप्त वै प्राणाः ।
प्राणैर्वै प्रजाः पशवः परिगृहीता उपतिष्ठन्ते ।
तद्यैः प्राणैः प्रजाः पशवः परिगृहीता उपतिष्ठन्ते तैर्नः प्राणैः प्रजाः पशवः परिगृहीता उपतिष्ठान्ता इति ।
प्राणैर्वै देवा स्वर्गं लोकमायन् ।
तद्यैः प्राणैर्देवा स्वर्गं लोकमायंस्तैः प्राणै स्वर्गं लोकमायामेति ।
सप्त वै मुख्याः प्राणाः ।
एते वा अपहतपाप्मानः प्राणा यन्मुख्याः ।
ते येऽपहतपाप्मानः प्राणास्तेषां मात्रया यज्ञं तनवामहा इति ।
अग्निष्टोमा भूयांस उक्थ्येभ्यो भवन्ति ।
ब्रह्म वा अग्निष्टोमः ।
तद्ब्रह्मवर्चसमृध्नुवन्ति ।
तदु ब्रह्मवर्चसिनो भवन्ति ।
अग्निष्टोमाः परस्ताद्भवन्त्यग्निष्टोमा अवस्तादुक्थ्या मध्ये ।
ब्रह्म वा अग्निष्टोमः पशव उक्थ्यानि ।
ब्रह्मणैव तदुभयतः पशून्परिगृह्णन्त्यपरावापाय नास्य वित्तं परोप्यते य एवं वेद ।
वैश्वानरः प्रायणीयोऽतिरात्रो भवति ।
वैश्वानरप्रायणा ह्यहीनास्सोमाः ३४७

अथैते पृष्ठ्यस्य षडहस्य स्तोमा भवन्ति ।
श्रीर्वै पृष्ठानि वर्ष्म वै पृष्ठानि ।
तच्छ्रियं वर्ष्म पृष्ठानि रोहन्ति ।
तदु सत्रिणो भवन्ति ।
अथैतत्त्रयस्त्रिंशमहर्भवति ।
त्रयस्त्रिंशादेवाधि त्रयस्त्रिंशम् ।
स ह्यन्तः ।
कुतो ह्यन्यदाहरेयुः ।
तस्य चतुस्त्रिंशं बहिष्पवमानं भवति ।

त्रयस्त्रिंशद्वै देवताः ।
प्रजापतिश्चतुस्त्रिंशः ।
षष्ठायतनो वै प्रजापतिर्देवतानाम् ।
अथ यत्सप्तममह स्वाराज्यस्स लोकः ।
स्वाराज्यमु चतुस्त्रिंशी ।
तद्यत्सप्तमस्याह्नश्चतुस्त्रिंशं बहिष्पवमानं भवति तद्यावान्स्वाराज्यो लोकस्तावन्तं स्वाराज्यं लोकमृध्नवामेति ।
त्रयाणामु चैव त्रयस्त्रिंशानामननूचीनतायै ।
प्रोष्ठस्य ह खलु वा एता रूपं रात्रयः ।
ऊर्ध्वो वा अयमितष्षडहस्तिर्यङ्मध्येऽर्वाङसावमुतः ।
उपरिषद्यस्यो वा एता रूपं रात्रयः ।
उपरिषद्यं वै सोऽश्नुते य श्रियमश्नुते ।
उपरिषद्यं ज्यैष्ठ्यं श्रैष्ठ्यं श्रियमश्नवामहा इति ।
तस्मादेता रात्रीरुपयन्ति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एता रात्रीरुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यञ्चः पृष्ठ्यस्य षडहस्य स्तोमा भवन्ति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
ज्योतिषोऽध्यह्न उत्तिष्ठन्त्युक्तब्राह्मणात् ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३४८

अथ यस्यैतस्य सर्वमेव चतुस्त्रिंशमहर्भवति सर्वेणैवाह्ना स्वाराज्यं लोकमृध्नवामेति ।
त्रयाणामु चैव त्रयस्त्रिंशानामननूचीनतायै ।
अथ ह स्माह भाल्लबेयो न पुरा संवत्सरान्महाव्रतमुपेत्यम् ।
उपो चेदियुश्चतुर्विंशत्यामेवैनद्रात्रीषूपेयुरिति ।
संवत्सरो वा एता रात्रयो यच्चतुर्विंशतिः ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सर एवैष उभयतः पर्यूढः ।
तस्य यन्मध्ये सप्तदशमहस्तस्मिन्नेवोपेत्यमिति ।

सप्तदशो वै प्रजापतिः ।
प्राजापत्यं महाव्रतम् ।
मध्यायतनो वै प्रजापतिर्देवतानाम् ।
तद्यत्रायतनः प्रजापतिर्देवतानां तत्प्रजापतिमृध्नवामेति ।
मध्यतो वा अन्नमशितं धिनोति ।
तद्यदेवमुपयन्ति मध्यत एवैतदशनयामपहत्योत्तिष्ठन्ति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एता रात्रीरुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यञ्चः पृष्ठ्यस्य षडहस्य स्तोमा भवन्ति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
ज्योतिषोऽध्यह्न उत्तिष्ठन्त्युक्तब्राह्मणात् ।
यदिति ह खलु वा एतच्छन्दो यद्गायत्री ।
यद्गायत्र्या अध्युत्तिष्ठेयुरीश्वरा अप्रतिष्ठिताश्चरितोः ।
सविता यन्त्रैः पृथिवीमरम्णादिति सावित्रं वैश्वदेवे होतारमनुशंस्तवै ब्रूयात्
।
तदु दृढात्प्रतिष्ठितादुत्तिष्ठन्ति ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३४९

अथैतास्संसदो भवन्ति ।
एतद्ध वै संसदां संसत्त्वं यदेते स्तोमाश्च छन्दांसि च मध्यतः संसन्नाः ।
स्तोमाश्च ह खलु वै छन्दांसि च सर्वा देवताः ।
देवा वै मृत्योरबिभयुर्य स्वर्गे लोके ।
तस्मात्ते प्रजापतिमेवोपाधावन् ।
तान्प्रजापतिरब्रवीन्मा बिभीत ।
अहं वस्तं मृत्युमतिनेष्यामि य स्वर्गे लोक इति ।
तान्पृष्ठ्ये षडहे समसादयत् ।
ऋतवो वै पृष्ठानि ।
संवत्सर ऋतवः ।
संवत्सरो मृत्युः ।
मृत्योर्वावैनांस्तत्पृष्ठे प्रतिष्ठितस्समसादयत् ।

तानेतेनानिरुक्तेन त्रयस्त्रिंशेनात्यनयत् ।
स षद्यत मानिरुक्ता भूवन्निति ।
तान्निरुक्तेन निरब्रवीत् ।
ते स्तोमांश्च छन्दांसि चाक्रममाणा आयन् ।
मृत्योर्वाव ते तत्पदयोपनं कुर्वन्त ईयुस्तद्यदेते स्तोमाश्च छन्दांसि च मध्यतो विष्वञ्चो भवन्ति ३५०

यथा विषूची पदे विनिहिते अनेनागा३दनेना३ इत्यप्रजानंस्तिष्ठेदेवमेवैतन्मृत्योः पदयोपनं कृतं भवति पाप्मनोऽनन्ववायाय ।
न ह वा एनं पुनर्मृत्युरन्वेत्यप पाप्मानं हते गच्छति स्वर्गं लोकम् ।
ते परमन्तमित्वा पुनरेवाबिभयुः ।
तानेतेनैवानिरुक्तेन त्रयस्त्रिंशेनात्यनयन्निरुक्तेन निरब्रवीत् ।
ततो वै ते तं मृत्युमपाजयन्य स्वर्गे लोके ।
अप ह वै तं मृत्युं जयति य स्वर्गे लोके य एवं वेद ।
संवत्सरो वा एता रात्रयस्संवत्सरस्य गर्भः ।
संवत्सरस्य वै गर्भं प्रजाः पशव उपजीवन्ति ।
गर्भिणीरु एता रात्रयः ।
यथा वा अजगरो गीर्णवानेवमेता रात्रयः ।
यद्यु वा अजगरो गीर्णवान्भवत्युभावन्तावणू स्थूलं मध्यम् ।
सुहित्यस्यो वा एता रूपं रात्रयः ।
सुहित्यं वै सोऽश्नुते य श्रियमश्नुते ।
सुहित्यं ज्यैष्ठ्यं श्रैष्ठ्यं श्रियमश्नवामहा इति तस्मादेता रात्रीरुपयन्ति ३५१

अथ ह स्माहाषाढस्सावयसो यादोवश्यं यस्मिन्नेव मे संवत्सरे समाना दास्युदकं चौदनं चाहरत्तस्मिन्नेव मे संवत्सरे चतुर्विंशतिः परिष्कन्दा निष्कग्रीवाः परिवेषणमन्वायन् ।
नो तान्संपश्यामो येऽनिष्का आसन्निति ।
तावत्तेजस्विनीस्तावद्ब्रह्मवर्चसिनीस्तावद्वीर्यावतीरेता रात्रयः ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एता रात्रीरुपयन्तीति ।

तद्यत्परस्ताद्प्रत्यञ्चः पृष्ठ्यस्य षडहस्य स्तोमा भवन्ति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
त्रिवृतोऽध्यह्न उत्तिष्ठन्ति ।
ब्रह्म वै त्रिवृत् ।
ब्रह्मण्येवैतत्प्रतिष्ठायोदृचमश्नुवते ।
त्रिवृत्त्रिवृतोऽनुचरो भवति ।
तस्माद्ब्राह्मणो ब्राह्मणस्यानुचरो भवति ।
विन्दतेऽनुचरितृन्बहवोऽस्यानुचरा भवन्ति य एता रात्रीरुपैति ।
न ह खलु वा एषा क्षमा रमते यद्गायत्री ।
ऊर्ध्वा ह वा एषा सह यजमानेन स्वर्गं लोकमेति ।
ऊर्ध्वा हैवास्य कीर्तिरूर्ध्वा श्रीरूर्ध स्वर्गं लोकमेति य एवं वेद ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३५२

द्विमास्यं वा एतत्सत्रम् ।
तेन यर्द्धिस्सैवर्द्धिः ।
यौ ह खलु वै द्वौ मासावृतोस्सर्द्धिः ।
ऋतुरु प्रत्यक्षं संवत्सरस्यर्द्धिः ।
संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यत्पञ्चविंशतिर्द्वादश परस्तादहानि द्वादशावस्तात् ।
अथ यन्मध्ये अहस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
ता वा एता रात्रयस्संपद्यन्ते जगतीमेव ।
पशवो वै जगती ।
तेनैतत्सत्रं पशव्यम् ।
उपो विराजं गच्छन्ति ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।

एकोना विराडूनं तत्स्त्रियै यतस्सा प्रजायते तेनो प्रजननम् ।
गायत्रीमु दीक्षोपसद्भिश्च सुत्याभिश्च संपद्यन्ते ।
प्राणो वै गायत्री तेनैनत्सत्रमायुष्यम् ।
तेजो वै गायत्री तत्तेजस्विनो ब्रह्मवर्चसिनो भवन्ति ।
ज्यैष्ट्यं वै गायत्री तद्भ्रातृव्ये ज्यैष्ठ्ये प्रतितिष्ठन्ति ३५३

संवत्सरस्य ह खलु वा एष रसः प्रवृढो यदेष पञ्चविंशतिरात्रः ।
एतद्धि सर्वं संवत्सररूपं क्रियते ।
एतावतिरात्रावेते आरम्भणीयमहाव्रतीये अहनी एतौ पृष्ठ्यावेतौ
विश्वजिदभिजितावेते स्वरसामान एष विषुवान् ।
ते ये कामंकामं समारेभाणा इव मन्येरंस्त एतमेव पञ्चविंशतिरात्रमुपेयुः ।
आप्त्वा हैवैतत्सत्रमुत्तिष्ठन्ति ।
पुरुषसंमितं ह खलु वा एतत्सत्रं यदेष पञ्चविंशतिरात्रः ।
दश वै पुरुषस्य हस्त्या अङ्गुलयो दश पद्याश्चत्वारि प्राङ्गाण्यात्मा पञ्चविंशः
।
षडिमानि पर्वाणि षडिमानि षडिमानि षडिमान्यात्मा पञ्चविंशः ।
द्वादशेमाः परिशवो द्वादशेमा आत्मैव पञ्चविंशः ।
पुरुषं वावैतेन संस्कुर्वन्ति पुरुषं प्रजनयन्ति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं पञ्चविंशतिरात्रमुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यङ्पृष्ठ्यष्षडहो भवति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै
।
महाव्रतीयादध्यह्न उत्तिष्ठन्त्यन्नं वै महाव्रतमन्नाद्य
एवैतत्प्रतिष्ठायोदृचमश्नुवते ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३५४

द्विमास्यं वा एतत्सत्रम् ।
तेन यर्द्धिस्सैवर्द्धिः ।
यौ ह खलु वै द्वौ मासावृतोस्सर्द्धिः ।
ऋतुरु प्रत्यक्षं संवत्सरस्यर्द्धिः ।

संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यत्त्रयस्त्रिंशत्षोडश परस्तादहानि षोडशावस्तात्
।
अथ यन्मध्ये अहस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
ता वा एता रात्रयस्संपद्यन्ते विराजमेव ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।
तिस्रश्च विराट्च ।
ता यास्तिस्रो दैवीराच्छदस्तासामेषर्द्धिर्यानि त्रीणि छन्दांसि यानि त्रीणि
सवनानि ये त्रयः प्राणापानाव्याना ये त्रय इमे लोकाः ।
यत्किं च त्रिस्त्रिस्तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।
देवसत्रं ह खलु वा एतद्यदेष त्रयस्त्रिंशद्रात्रः ।
त्रयस्त्रिंशद्वै देवताः ।
देवता वा ऋद्धिकामास्तपोऽतप्यन्त ।
ता एतदयनमपश्यन् ।
तदुपायन् ।
ततो वै तासामह्नैवैकार्ध्नोदह्नैकाह्नैका ।
सा ह खलु वै श्रेष्ठर्द्धीनां स लोकानां पुण्यतमो यमेतेन देवता आर्ध्नुवन् ।
सा या श्रेष्ठर्द्धीनां यो लोकानां पुण्यतमो यमेतेन देवता आर्ध्नुवंस्तमृध्नवामेति
।
तस्मादेता रात्रीरुपयन्ति ३५५

अथैते पञ्चाहा भवन्ति पञ्च वै जयाः ।
पञ्चभिर्वै व्याहृतिभिरिदं देवा अजयंस्तद्यावतेदं देवा अजयंस्तावता
जयामेति ।
पाङ्क्तो यज्ञः ।
यावती यज्ञस्य मात्रा तामाप्नवामेति ।
पाङ्क्ताः पशवः ।

यावती पशूनां मात्रा तावता नः पशवोऽवरुद्धा उपतिष्ठान्ता इति ।
पाङ्क्तमन्नाद्यं यावत्यन्नाद्यस्य मात्रा तावता नोऽन्नाद्यमवरुद्धमुपतिष्ठाता इति ।
अथ स्माहुः कापेया अनृतौ वा एष प्रतिष्ठितो यत्षडहः ।
पञ्चाहो वा ऋतौ प्रतिष्ठित इति ।
वसन्तो वै प्रथम ऋतूनां ग्रीष्मो द्वितीयो वर्षास्तृतीयाश्शरच्चतुर्थी हेमन्तः पञ्चमश्शिशिरष्षष्ठः ।
स एष श्रेष्ठ ऋतूनां यद्धेमन्तः पीवगुः पीववत्सः ।
तमनु पञ्चाहः प्रतितिष्ठन्नेति ।
अथैष परिचद्यैव यच्छिशिरः कृशगुः कृशपुरुषः ।
तमनु षडहः प्रतितिष्ठति ।
स य श्रेष्ठ ऋतूनां हेमन्तस्तस्य प्रतिष्ठामनु प्रतितिष्ठन्तोऽयामेति ।
तस्मादेतत्पञ्चाहविधमुपयन्ति ।
वैश्वानरः प्रायणीयोऽतिरात्रो भवति ।
वैश्वानरप्रायणा ह्यहीनास्सोमाः ३५६

अथैते ज्योतिर्गौरायुरिति स्तोमा भवन्ति ।
एते ह वै शिवाश्शान्ताः पथ्या स्तोमा ये ज्योतिर्गौरायुरिति ।
ते ये शिवाश्शान्ताः पथ्या स्तोमास्तैर्न स्तुतमसदिति ।
त उ विराजं संपन्नाः ।
तदु विराजमन्नाद्यमारभन्ते ।
तामान्तं नावसृजेयुः ।
बृहद्रथन्तरे सामनी भवतः ।
सा ह्यृद्धिस्स पन्थाः ।
श्यैतनौधसे ब्रह्मसामनी भवतः ।
प्रस्पष्टमाजिमनु शूकरवामेति ।
तद्यत्तृतीयेऽहनि रथन्तरं संपद्येत तद्वैरूपमुपेयुः ।
इदं वै रथन्तरमदो बृहदिदमेवान्तरिक्षं वैरूपम् ।
एतयोरेव साम्नोरसमदे ।
अथ ह वै निष्करणीया इति ब्राह्मणाः पूर्विणस्सत्रं निषेदुः ।
तेषां ह स्म वासिष्ठस्सात्यहव्य आसद्य सोमं भक्षयित्वा प्रधावति ।

ते हाभिशस्तिं चक्रिरे कथं नु नो दीक्षितानामदीक्षितास्सोमं भक्षयेयुरिति ।
ते हैतदेकमहर्वैरूपमुपेयुः ।
स ह पुनरासद्य तूष्णीमेवेक्षमाणो निषसाद ।
तं होचुः कथं न सर्पसि कथं न भक्षयसीति ।
स होवाच सत्रिणो वा अभूत दीर्घसोमो वाव वः पुराभूदिति ।
तद्यत्तृतीयेऽहनि वैरूपमुपयन्ति सत्रिताया एव ।
ते वा एते सामनी अन्यदन्यदहरुपपद्यमाने इतः यत्र गवि रथन्तरं संपद्येत -
३५७

- तद्धोतारं ब्रूयादुभे रूपे संस यच्च राथन्तरं यच्च बार्हतमिति ।
यत्रायुषि बृहत्संपद्येत तद्धोतारं ब्रूयादुभे रूपे शंस यच्च बार्हतं यच्च राथन्तरमिति ।
यद्युभे राथन्तरे अहनी संपद्येयातां पूर्वस्याह्नस्सौभरमुक्थ्येषु ब्रह्मसाम कुर्युर् ।
यद्युभे बार्हते अहनी संपद्येयातामुत्तरस्याह्नः कण्वरथन्तरं माध्यन्दिने पवमाने प्रोहेयुः ।
प्रजा वा एषा बृहद्रथन्तयोर्यदेते सामनी ।
तद्यदेवमुपयन्त्यजामिताया एव ।
अथैष विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति प्राजापत्यमहरहोरात्रे वै कृत्स्नः प्रजापतिः कृत्स्नं प्रजापतिमृध्नवाम कृत्स्नो नः प्रजापतिरुपेतोऽसदिति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं विश्वजितमतिरात्रमुपयन्ति ।
प्रजापतिं ह्येव प्रत्यक्षमुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यञ्चः त्रयः पञ्चाहा भवन्ति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३५८

अथैता द्वादशाहवतीर्भवन्ति यैवासौ द्वादशाहवतीनां प्रशंसा सा न उपाप्तासदिति ।
इदमिव त्वत्रोपाधीयते ।

ता वा त्वै पुरस्तादुपेयुस्ता वोपरिष्टात् ।
यदि पुरस्तादुपेयुः प्रायणीयस्यैवाह्नोऽछंबट्काराय ।
तदिव त्वत्र परिचक्षते यद्वाचमोहुषीं दशमेनाह्नासंपाद्य तस्यै विकृष्टायै वाचोऽप्रतिष्ठिताया उदृचमश्नुवते ।
यदेव तत्र प्रायणीयरूपं मन्येरंस्तदेव तत्र कुर्युः ।
प्रव्रवत्प्रेतिवत्संपन्नायै वाचोऽविकृष्टायै प्रतिष्ठाया उदृचमश्नवामहा इति ।
अथैष विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति प्राजापत्यमहरहोरात्रे वै कृत्स्नः प्रजापतिः कृत्स्नं प्रजापतिमृध्नवाम कृत्स्नो नः प्रजापतिरुपेतोऽसदिति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं विश्वजितमतिरात्रमुपयन्ति ।
प्रजापतिं ह्येव प्रत्यक्षमुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यङ्पञ्चाहो भवति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३५९

अथैतत्त्र्यहविधं भवति ।
त्रयो ह वा ऋतवोऽनृतवोऽन्ये ।
ग्रीष्मो वर्षा हेमन्त एते ह वा ऋद्धा ऋतव उपश्लेषगा इवान्ये ।
ते य ऋद्धा ऋतवस्ते न उपाप्ता असन्निति ।
त्रीणि वाव छन्दांसि त्रीणि सवनानि त्रयः प्राणापानाव्यानास्त्रय इमे लोकाः ।
यत्किं च त्रिस्त्रिस्तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।
पञ्चैते परस्तात्त्र्यहा भवन्ति पञ्चावस्तात् ।
तेनो एव पञ्चाहविधतायै न यन्ति ।
अथैष विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति प्राजापत्यमहरहोरात्रे वै कृत्स्नः प्रजापतिः कृत्स्नं प्रजापतिमृध्नवाम कृत्स्नो नः प्रजापतिरुपेतोऽसदिति ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति य एतं विश्वजितमतिरात्रमुपयन्ति ।
प्रजापतिं ह्येव प्रत्यक्षमुपयन्तीति ।
तद्यत्परस्ताद्प्रत्यञ्चः पञ्च त्र्यहा भवन्ति निह्नवायैवानार्त्यै शिवत्वाय शान्त्यै ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।

वैश्वानरोदयना ह्यहीनास्सोमाः ३६०

त्रिमास्यं वा एतत्सत्रं तेन यर्द्धिस्सैवर्द्धिः ।
यौ ह खलु वै द्वौ मासावृतोस्सर्द्धिः ।
ऋतुरु प्रत्यक्षं संवत्सरस्यर्द्धिः ।
अथ यस्तृतीयो मासस्त्रयोदशस्य स मासस्यर्द्धिः ।
संवत्सरं वा एतदीर्त्सन्ति संवत्सरमीप्सन्ति यद्यजन्ते यत्सत्रमासते ।
न हि किं चन बहिस्संवत्सरादस्ति ।
स्वाराज्यं वा एता रात्रयो यदेकान्नपञ्चाशच्चतुर्विंशतिः परस्तादहानि चतुर्विंशतिरवस्तात् ।
चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सर एवैष उभयतः पर्यूढः । यन्मध्ये अहस्स स्वराट्स स्वर्गो लोकः ।
तद्ब्रध्नस्य विष्टपं गच्छन्ति तत्स्वाराज्यं गच्छन्ति ।
तदन्यस्याननुयाना भवन्ति ।
ता वा एता रात्रयस्संपद्यन्ते जगतीमेव ।
पशवो वै जगती ।
तेनैतत्सत्रं पशव्यमुपो विराजं गच्छन्ति ।
तदु विराजोऽन्नाद्यस्यैश्वर्यमाधिपत्यं गच्छन्ति ।
एकोना विराडूनं तत्स्त्रियै यतस्सा प्रजायते तेनो प्रजननम् ।
गायत्रीमु दीक्षोपसद्भिश्च सुत्याभिश्च संपद्यन्ते ।
प्राणो वै गायत्री तेनैतत्सत्रमायुष्यम् ।
तेजो वै गायत्री तत्तेजस्विनो ब्रह्मवर्चसिनो भवन्ति ।
ज्यैष्ट्यं वै गायत्री तद्भ्रातृव्ये ज्यैष्ठ्ये प्रतितिष्ठन्ति ३६१

आदित्याश्च वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त ।
त आदित्या अकामयन्त वयं पूर्वे स्वर्गं लोकं गच्छेमेति ।
त एतदयनमपश्यन् ।
तदुपायन् ।
ततो वा आदित्याः पूर्वे स्वर्गं लोकमगच्छन्नहीयन्ताङ्गिरसः ।

सा ह खलु वै श्रेष्ठर्द्धीनां स लोकानां पुरयतमो यमेतेनादित्या अगच्छन् ।
सा या श्रेष्ठर्द्धीनां यो लोकानां पुरयतमो यमेतेनादित्या अगच्छंस्तं गच्छामेति तस्मादेता रात्रीरुपयन्ति ।
वैश्वानरः प्रायणीयोऽतिरात्रो भवति ।
वैश्वानरप्रायणा ह्यहीनास्सोमाः ३६२

अथैते ज्योतिर्गौरायुरिति स्तोमा भवन्ति ।
एते ह वै शिवाश्शान्ताः पथ्या स्तोमा ये ज्योतिर्गौरायुरिति ।
ते ये शिवाश्शान्ताः पथ्या स्तोमास्तैर्न स्तुतमसदिति ।
त उ विराजं संपन्नाः ।
तदु विराजमन्नाद्यमारभन्ते ।
बृहद्रथन्तरे सामनी भवतः ।
सा ह्यृद्धिस्स पन्थाः ।
श्यैतनौधसे ब्रह्मसामनी भवतः ।
प्रस्पष्टमाजिमनु शूकरवामेति ।
अथैते षडतिरात्रा भवन्ति ।
षड्वै पुरुषे पाप्मानष्षड्विषुवन्त स्वप्नश्च तन्द्री च मन्युश्चाशनया चान्नकाम्या च स्त्रीकाम्या च ।
तानेवैतैरपघ्नतेताननतितरन्ति ।
अथैते त्रयस्त्र्यहा भवन्ति ।
नवाहानि ।
नव वै पुरुषे प्राणाः ।
प्राणानामेवैषा संमा प्राणानामृद्धिः ।
अथैतद्वैराजपृष्ठं दशममहर्भवति ।
नाभिर्ह सा तद्वा एतदाच्चित्सदहरेतेष्वहस्सु नियुक्तम् ।
यस्मादेतदाच्चित्सदहरेतेष्वहस्सु नियुक्तं तस्मादाच्चित्सती नाभिः प्राणेसु नियुक्ता ।
प्राणतो ह्येनामनूदनित्यपानतोऽन्वपानिति ।
तदेतेषामह्नां दशमं भवति दशाक्षरा विराट् ।
अन्नं विराड्विराज एवान्नाद्यस्यावरुद्ध्यै ३६३

तद्वैराजपृष्ठं भवत्यन्नं वै वैराजमन्नाद्यस्यैवावरुद्ध्यै ।
तदुक्थ्यं भवति पशवो वा उक्थान्यन्नं पशवोऽभिपूर्वस्यैवान्नाद्यस्यावरुद्ध्यै
।
तत्षोडशिमद्भवति वज्रो वै षोडश्यन्नं विराड्वज्रेणैवान्नाद्यं परिगृह्णन्ति ।
तदेकविंशं भवति द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य
एकविंशः ।
एतद्वै दैव्यं क्षत्रम् ।
क्षत्रिय उ वा अन्नाद्यस्य प्रदाता ।
स योऽन्नाद्यस्य प्रदाता स नोऽन्नाद्यं प्रयच्छादिति ।
अथैते चत्वारस्त्रियहा भवन्ति द्वादशाहानि ।
द्वादश वै संवत्सरस्य पौर्णमास्यः ।
पौर्णमासीनामेवैषा संमा पौर्णमासीनामृद्धिः ।
अथैष पृष्ठ्यष्षडहो भवति ।
श्रीर्वै पृष्ठानि वर्ष्म वै पृष्ठानि ।
तच्छ्रियं वर्ष्म पृष्ठानि रोहन्ति ।
तदु सत्रिणो भवन्ति ।
अथैते चत्वार उत्तरे त्र्यहा भवन्ति द्वादशो एवाहानि ।
द्वादश वै संवत्सरस्यामावास्याः ।
अमावास्यानामेवैषा संमामावास्यानामृद्धिः ।
द्वादशैतानि परस्तात्पृष्ठ्यस्य षडहस्याहानि भवन्ति द्वादशावस्तात् ।
तस्मात्समावतीस्संवत्सरस्य पौर्णमास्यश्चामावास्याश्च ।
वैश्वनर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३६४

आदित्याश्च वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त ।
त आदित्याः पूर्वे स्वर्गं लोकमगच्छन् ।
तेऽङ्गिरसोऽकामयन्त वयमपि तं लोकं गच्छेम यमादित्या अग्मन्निति ।
ते येन येनैवायनेनायंस्ततस्तत एनान्प्रत्यपानुदन्त ।
तान्ह परश्चत्वारिंशानि वर्षाणि प्रत्येव नुनुदिरे ।

त एतदयनमपश्यन् ।
तदेवासीदन् ।
यथाविधमिव तदुपायन् ।
ततो वा अङ्गिरसस्तं लोकमगच्छन्यमादित्याः ।
सा ह खलु वै श्रेष्ठर्द्धीनां स लोकानां पुण्यतमो यमेतेनाङ्गिरसोऽगच्छन् ।
सा या श्रेष्ठर्द्धीनां यो लोकानां पुण्यतमो यमेतेनाङ्गिरसोऽगच्छंस्तं गच्छामेति
३६५

तद्ये ह वा एत आदित्यस्योदञ्चो रश्मयस्त आदित्या ये दक्षिणास्तेऽङ्गिरसः
।
ते हैत आदित्याश्चाङ्गिरसश्च सलोकाः ।
सलोको ह वा आदित्यैश्चाङ्गिरोभिश्च भवति य एवं वेद ।
अथैतौ द्वौ त्र्यहौ भवतष्षडहानि ।
षड्वा ऋतवः ।
ऋतुष्वेव तत्प्रतितिष्ठन्ति ।
अथैतौ द्वावुत्तरौ त्र्यहौ भवतष्षड् एवाहानि ।
अभिपूर्वमेव तदृतुषु प्रतितिष्ठन्ति ।
अथैते षडतिरात्रा भवन्त्युक्तब्राह्मणाः ।
अथैते त्रयस्त्र्यहा भवन्त्युक्तब्राह्मणाः ।
अथैते चत्वारस्त्र्यहा भवन्ति द्वादशाहानि ।
द्वादश मासास्संवत्सरः ।
मासा एव तद्भूत्वा मध्यतस्संवत्सरमतीत्य स्वर्गं लोकं रुरुहुः ३६६

अथैता द्वादशाहवतीर्भवन्ति यैवासौ द्वादशाहवतीनां प्रशंसा सा न
उपाप्तासदिति ।
अथैतानि चतुरुत्तराणि छन्दांस्युपयन्ति ।
चतुरुत्तरा वै वाचो रोहाः ।
वाचमेवैते रोहन्ति ।
अथो चतुष्पदा वै पशवः ।
तद्यदेतानि चतुरुत्तराणि छन्दांस्युपयन्ति चतुष्पदामेव पशूनामवरुद्ध्यै ।

अथैतानि अथैतानि द्वियन्तराण्युपाहरन्ति ।
चतुरुत्तराणि द्वियन्तराणि ।
न ह वै तावच्छ्रियमश्नुते यावद्द्विपदां चतुष्पदां पशूनामैश्वर्यमाधिपत्यं न गच्छति ।
तद्यदेतानि द्वियन्तराण्युपाहरन्ति चतुरुत्तरद्वियन्तराणि द्विपदां चतुष्पदां पशूनामैश्वर्यमाधिपत्यं गच्छामेति ।
अथैतान्यष्टान्तराण्युपाहरन्ति चतुरुत्तरद्वियन्तराणि सर्वाणि चतस्रो दिशश्चत्वारोऽवान्तरदेशा दिशां स उपरिष्टाल्लोको यः पुण्यस्सर्वासु दिक्षु प्रतिष्ठाय स्वर्गं लोकं गच्छामेति ।
अथैतानि पञ्च सन्धिषामानि भवन्ति रथन्तरं जराबोधीयं श्रुधीयं नानदगौरिवीते इति ।
एतद्ध वा एकं प्रज्ञातं सन्धिषाम यद्रथन्तरम् तद्यदेकं प्रज्ञातम् ३६७

- सन्धिषाम तेन न स्तुतमसदिति ।
अथो वाग्वै रथन्तरं वागाश्विनं वाग्वै वाचं प्रति विभवितुमर्हतीयं वाग्वाचं प्रति विभवादिति ।
एतदु ह वै द्वितीयं प्रज्ञातं सन्धिषाम यज्जराबोधीयम् ।
तद्यद्द्वितीयं प्रज्ञातं सन्धिषाम तेन न स्तुतमसदिति ।
अथ श्रुधीयं कीर्तिमत् ।
सामवृक्तिरु सन्धिषामनी ।
तद्यदाभ्यां सन्धिषामभ्यामवृन्महि तन्नोऽस्य लोकवतस्साम्नः पशवो लोकमनूपतिष्ठान्ता इति ।
अथ नानदगौरिवीते लोकवती सामनी भूयांसं नो लोकमनूपतिष्ठान्ता इति ।
तदाहुस्त्रिरेवाश्विनं शस्तव्यमिति त्रिषत्या वै वाक् ।
त्रय इमे लोकाः ।
यदतिरात्रेऽतिरात्र आश्विनं शंसेद्विकर्षस्स वाचः ।
होतारं ब्रूयादाश्विनक्रतूनेवान्येष्वतिरात्रेष्वशंस त्रिरेवाश्विनं शस्तव्यमिति प्रायणतो मध्यत उदयनतः ।
एतद्ध वै समृद्धमाश्विनं यद्रथन्तरेण संपद्यते ।

यद्येकेन संपद्येत रथन्तरमेव प्रायणतो मध्यत उदयनतो यदि द्वाभ्यां रथन्तरमेव प्रायणतो मध्यत उदयनतो यदि त्रिभी रथन्तरमेव प्रायणतो मध्यत उदयनतो न चतुर्भिस्संपद्यते नो एव पञ्चभिः ३६८

अथैता एणय एककृष्णाः ।
एणयो ह वै नामैता रात्रयः ।
तासु कृष्णोऽपि मिथुनत्वाय प्रजननाय ।
प्र मिथुनेन जायते य एवं वेद ।
तं वा त्वै पुरस्तादुपेयुस्तं वोपरिष्टात् ।
यदि पुरस्तादुपेयुः पुंस्प्रणेत्रा असन्निति ।
यद्युपरिष्टात्पश्चाद्धि पुमान्योषायां रेतो दधाति रेतोधेयाय ।
प्रजापतिर्वाविदमग्र एकोऽसृज्यत नान्यं द्वितीयं पश्यमानः ।
स षत्ततहं वाव प्रथमोऽजनिष्यहं श्रेष्ठोऽस्म्यस्ति स्विन्मदिहान्या३ इति ।
स व्यैत्तत ।
सोऽन्यदात्मनोऽध्युत्तरतो ज्यायस्तिष्ठदपृश्यत् ।
तदपृच्छत्किमिदमसि यदिदमसीति ।
ब्रह्म वा अस्मीत्यब्रवीत् ।
तदब्रवीतावं वाव प्रथमावजनिष्वह्यावं श्रेष्ठौ स्वस्संसृजावहै सहासावेति
।
नेत्यब्रवीत् ।
पाप्मगृहीतो वा असीति ।
स मे क्व स पाप्मेति ।
एष ते शीर्षन्निति ।
तं वै मेऽवजहीति ।
तथेति ।
तमवाहन् ।
तं ग्रीवास्वसिनात् ।
तं समपीडयत् ।
तदेतत्परिगृहीतकमिवावजहीति ।
तमवाहन् ।

तं नीव्यामसिनात् ।
तं समपीडयत् ।
तदेतत्परिगृहीतकमिवावजहीति ।
तमवाहन् ।
तं कुल्फयोरसिनात् ।
तं समपीडयत् ।
तदेतत्परिगृहीतकमिवावैव जहीति ।
तमवाहन् ।
पदाभितिष्ठेति ।
तं पदाभ्यतिष्ठत् ३६९

स एवैष पदोरुच्छ्लङ्कः ।
त्रेधा विच्छिन्द्धीति ।
तं त्रेधा व्यच्छिनत् ।
सैवास्य श्रीरभवद्द्यौस्तृतीयं स्वप्नस्तृतीयं छाया तृतीयम् ।
तस्मादेतानि श्रेष्ठस्य भूयिष्ठानि ।
भूयिष्ठाः पशवो ज्येष्ठा छाया स्वपिति ।
स षक्षत यं म इमं पाप्मानमवोचद्धन्तेममपैव छिनदा इति ।
स एतदेव ब्रह्माष्टधा व्यौहत् ।
अष्टाक्षरा गायत्री ।
ब्रह्म गायत्री ।
ब्रह्मैव तदष्टधा व्यौहत् ।
तमष्टाभिस्त्रिवृद्भिः पराञ्चमपौहत् ।
तमष्टाभिः पञ्चदशैः पराञ्चमपौहत् ।
तमष्टाभिः सप्तदशैः पराञ्चमपौहत् ।
तमष्टाभिरेकविंशैः पराञ्चमपौहत् ।
तमष्टाभिस्त्रिणवैः परार्धमगमयत् ।
तमष्टाभिस्त्रयस्त्रिंशैरपैवाछिनत् ।
स एवैष उपरिष्टादतिरात्रः ।
पाप्मा हास्यैषोऽपोढः ।

अथो एष एव प्रजापतिर्योऽसौ तपति ।
स एषोऽपहतपाप्मा तपति ।
तस्य छाया नास्ति ।
तस्मादु छायामभि च ष्ठीवेदभि च मेहेत् ।
पाप्मानमेव तद्धते ।
सुप्त्वोदकमाचामेत् ।
पाप्मानमेव तद्धते ।
गामुपाष्टां हनीत ।
पाप्मानमेव तद्धते ।
ते य एवं विद्वांस एता रात्रीरुपयन्ति सर्वमेव पाप्मानमपहत्योत्तिष्ठन्ति ।
ईश्वरा ह त्वपशवो भवितोः पशवो वा उक्थानि पशून्हि स तत्राप्यपौहत् ।
ते ये श्रीकामा स्युस्त एता रात्रीरुपेयुः ।
एता ह स्म वै तत्पुरा कुरुपाञ्चालानां ब्राह्मणा श्रीकामा उपयन्ति ।
ते हागवोऽभद्रा आसुः ।
सजातेषु हैवैषां पशव आसुः ।
ततो ह स्मैव गोरुहायागताय गामुपाञ्चन्ति ।
ततोऽदेयाय ददुः ।
तदु होवाच शाट्यायनिर्न तां वदेद्या परिचक्षा ।
यदाकामीना वै श्रियां पशवो यदाकामीनं वित्तं पशुमन्तश्च भविष्याम
श्रेष्ठाश्च रात्स्यामश्चेत्येवं मन्यमाना एता रात्रीरुपेयुरिति ।
तथा हैव भवति ।
वैश्वानर उदयनीयोऽतिरात्रो भवति ।
वैश्वानरोदयना ह्यहीनास्सोमाः ३७०

गवामयनशेषः

सावित्रं पूर्वेद्युः पशुमालभन्ते ।
सविता वै देवानां प्रसविता सवितृप्रसूता एवैतत्संवत्सरमारभन्ते ।
को ह्येतमर्हत्यप्रसूत आरभम् ।
प्राजापत्यं श्वो भूत आलभन्ते ।

प्रजापतिश्रेष्ठा वै देवाः ।
श्रेष्ठत एवैतद्देवताः प्रीणन्ति ।
यो वै श्रेष्ठमराधयित्वाथान्यानीप्सति सर्वे वाव तस्य तेऽराधिता भवन्ति ।
अथ य श्रेष्ठं राधयित्वाथाप्यन्यानाद्रियते सर्वे वाव तस्य तेऽभीष्ठाः प्रीता भवन्ति ।
प्रजापतिश्रेष्ठा वै देवाः ।
श्रेष्ठत एवैतत्सर्वा देवताः प्रीणन्ति ।
श्वेतो लोमशस्तूपरो लप्सुग्यन्यतोदञ्चतुष्पाद् ।
यच्छ्वेतो लोमशस्तदवीनां रूपम् ।
यत्तूपरस्तदश्वानाम् ।
यल्लप्सुगी तत्पुषाणाम् ।
यदन्यतोदळ्स्तद्गवाम् ।
यदजस्तदजानाम् ।
सर्वेषां वा एष पशूनां मेहृदः ।
सर्वेषामेवैतत्पशूनां मेधेन संवत्सरं पितरं प्रजापतिं प्रीणन्ति ।
स एनान्प्रीतः प्रीणाति ।
देवा वा ऋद्धिकामास्तपोऽतप्यन्त ३७१

स इन्द्र एतामष्टकामपश्यत् ।
तस्यामदीक्षत ।
स एकयाश्नुत ।
यदेकयाश्नुत तदेकाष्टकाया एकाष्टकात्वम् ।
ते य एवं विद्वांसो दीक्षन्ते सर्व एवाश्नुवते सर्वे विषुवन्तो भवन्ति ।
विषुवान्ह्येषोऽभवत् ।
ते यत्पुरस्ताद्दीक्षेरन्पितृलोके दीक्षेरन्प्रमायुकाः स्युर् ।
यदुपरिष्टाद्दीक्षेरन्यथा पूर्वं पलायितुमीप्सेत्तं वाप्नुयात्तं वा न तादृक्तत् ।
त एतस्यामेवाष्टकायां दीक्षेरन् ।
तद्यथा रथमुपस्थितमातिष्ठेद्धस्तिनं वा निषादितं तथा ।
कद्रियञ्चस्सत्त्रिण इति वै पृच्छन्ति ।
नार्वाञ्चो न पराञ्च इति ब्रूयाद्यथासावादित्य इति ।

न ह वा एतेऽर्वाञ्चो न पराञ्चः ।
तिर्यञ्चो ह वा एते ।
नो ह वा असावादित्योऽर्वाङ्न पराङ्तिर्यङ् ह वा एष ।
षड्वा एष मासो दक्षिणैति षडुदङ् ।
यान्दक्षिणैति ते पितृदेवत्या यानुदङ्ते देवदेवत्याः ३७२

एतं वा एत आरभ्य यन्तीन्द्रं प्रजापतिं विप्रं पदमृतुपात्रं विश्वान्देवान्स्वर्गं लोकम् ।
एतस्य वा एत आवृतमन्वावर्तन्त ।
एतस्य वा एत आवृतमन्वावर्तन्त एतस्य विमुक्तिमनु विमुच्यन्ते ।
तस्यैषा परिचक्षा यदपक्षीयमाणे सुत्यां गच्छन्त्यपक्षीयमाण उदृचमश्नुवते ।
द्वादश दीक्षाः कुर्वीरंस्तिस्र उपसदः ।
तेनैतदुभयमुपाप्नुवन्ति ।
तदु वा आहुरुपाहैवैतेनैतदुभयमाप्नुवन्तीति ।
सेव तु परिचक्षा यदपोऽनभिनन्दन्तश्शिशिरेऽवभृथमह्व्यवयन्ति ।
समिव कोपयति हिमः ।
स य एनांस्तथा चक्रुषोऽनुव्याहरेदिति वेति वा भविष्यन्तीति तथा हैव स्युः ।
यैवासौ फाल्गुनस्यामावास्या तस्या उपरिष्टात्पञ्चाह षडहे दीक्षेरन् ।
यो वै श्रेयसो नियानेनैतीदमयासीदिदमयासीदिति न वै स रिष्यति श्रेयसो वा एते नियानेन यन्ति य आदित्यस्य ते स्वस्त्यरिष्टा उदृचमश्नुवते ते तद्गच्छन्ति यत्रैष आदित्यो गच्छति तत्ते तद्गत्वैतस्यैवायनेन पुनरायन्ति ३७३

गावो वा एतदग्रे सत्रमासतान्नाद्यमवरुरुत्समानाः ।
ता दशमे मास्युदतिष्ठन्सर्वमन्नाद्यमवारुत्स्महीति मन्यमानाः ।
ता एता शृङ्गिणीः ।
तासां त्वा इवाब्रुवन्सर्वानिवैतान्द्वादश मासः समापयामेति ।
ता अतिप्रायुञ्जत ।
तासां द्वादशे मासि शृङ्गाणि प्रावर्तन्त ।

ता एतास्तूपराः ।
तस्मात्सत्रिणो द्वादशे मास्यपि शिखाः प्रवपन्ते ।
गवां हि तर्ह्यनुरूपा भवन्ति ।
ता उदतिष्ठन्नरात्स्मेत्याप्त्वा सत्रमाप्त्वा सर्वमन्नाद्यम् ।
तस्मादेतास्सर्वान्द्वादश मास उत्तिष्ठन्ति प्रत्वापि वार्षिकावपि शिशिरौ ।
सत्राभिजितं ह्यासामवरुद्धं ह्यासाम् ।
ते य एवं विद्वांसो द्वादश मासः समापयन्ति सर्वमेवान्नाद्यमवरुध्योत्तिष्ठन्ति
।
आत्मदक्षिणं ह खलु वै सत्रम् ।
लोमैव प्रथमाभ्यामुपसद्भ्यां स्पृणवते त्वचं द्वितीयाभ्यां मांसं
तृतीयाभ्यामस्थि चतुर्थीभ्यां मज्जानं पञ्चमीभ्याम् ।
यदेवैषां तत्र किं चास्पृतं भवति तदेव षष्ठीभ्यां स्पृणवते ।
ते शुद्धाः पूता मेध्याश्शुचयो भूत्वा देवलोकमपियन्ति ३७४

प्रजापतिर्वावेदमग्र आसीत् ।
सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति ।
स तपोऽतप्यत ।
स एतं वैश्वानरं प्रायणीयमतिरात्रमपश्यत् ।
तस्मादहोरात्रे प्राजनयत् ।
अहोरात्रयोः प्रत्यतिष्ठत् ।
तद्यदेष वैश्वानरः प्रायणीयोऽतिरात्रो भवत्यहोरात्रे
एवैतस्मात्प्रजनयन्त्यहोरात्रयोः प्रतितिष्ठन्ति ।
सोऽकामयत प्रैव जायेयेति ।
स एतस्मादेव वैश्वानरात्प्रायणीयादतिरात्रात्त्र्यहं निरमिमीत अग्निष्टोमादेव
ज्योतिर्निरमिमीत उक्थ्येभ्यो गां रात्र्या आयुः ।
तस्मात्त्र्यहात्त्रीनृतून्प्राजनयत्त्रिष्वृतुषु प्रत्यतिष्ठत् ।
तद्यदेष त्र्यहो भवति त्रीनेवैतस्मादृतून्प्रजनयन्ति त्रिष्वृतुषु प्रतितिष्ठन्ति ।
सोऽकामयत प्रैव जायेयेति ।
स एतमेव षडहं परस्तात्पर्यौहत् ।
तौ द्वौ षडहावभवताम् ।

ताभ्यां द्वाभ्यां षडहाभ्यां द्वादश मासः प्राजनयद्द्वादशसु मासेषु प्रत्यतिष्ठत्
।
तद्यदेतौ द्वौ षडहौ भवतो द्वादशैवैताभ्यां मासः प्रजनयन्ति द्वादशसु मासेषु प्रतितिष्ठन्ति ।
सोऽकामयत प्रैव जायेयेति ।
स एतावेव षडहौ परस्तात्पर्यौहत् ।
ते चत्वारष्षडहा अभवन् ।
तेभ्यश्चतुर्भ्यष्षडहेभ्यश्चतुर्विंशतिमर्धमासान्प्राजनयच्चतुर्विंशत्यामर्धमासेषु प्रत्यतिष्ठत् ।
तद्यदेते चत्वारष्षडहा भवन्ति चतुर्विंशतिमेवैतेभ्योऽर्धमासान्प्रजनयन्ति चतुर्विंशत्यामर्धमासेषु प्रतितिष्ठन्ति ३७५

स इदं सर्वं भुवनं प्रजन्य पृष्ठ्येन षडहेनात्मन्नधत्त ।
तद्यदेष पृष्ठ्यष्षडहो भवति सर्वमेवैतेन भुवनं प्रजन्यात्मसु दधते ।
वर्ष्म वै पृष्ठानि ।
वर्ष्मण्येवैतत्प्रतितिष्ठन्ति ।
श्रीर्वै पृष्ठानि ।
श्रियामेवैतत्प्रतितिष्ठन्ति ।
ज्यैष्ठ्यं वै पृष्ठानि ।
ज्यैष्ठ्य एवैतत्प्रतितिष्ठन्ति ।
तेजो वै पृष्ठानि तेजस्येवैतत्प्रतितिष्ठन्ति ।
पशवो ह खलु वा अभिप्लवष्षडह आत्मा पृष्ठ्यः ।
यदभिप्लवं षडहमुपेत्याथ पृष्ठ्यमुपयन्ति पुरुषमेवैतत्पशुष्वध्यूहन्ति ।
तस्मात्पुरुष उपरिष्टात्पशूनधीव तिष्ठति ।
मूलं ह खलु वा अभिप्लवष्षडहोऽग्रं पृष्ठ्यः ।
यदभिप्लवं षडहमुपेत्याथ पृष्ठ्यमुपयन्ति तस्मादोषधयो मूलतो जायन्तेऽग्रतः पच्यन्ते ।
पञ्चैते षडहा भवन्ति ।
पाङ्क्तो यज्ञः ।
यावती यज्ञस्य मात्रा तस्यामेवैतत्प्रतितिष्ठन्ति ।

स मासस्संपद्यते ।
संवत्सरो वै मासः ।
मासश एव तत्संवत्सरमाप्नुवन्ति ।
तस्य त्रिंशद्रात्रयो भवन्ति त्रिंशदक्षरा विराडन्नं विराड्विराज्येव तदन्नाद्ये प्रतितिष्ठन्तो यन्ति ३७६

प्रायणीयमहर्भवति ।
प्रायणीयेन वा अह्ना देवा स्वर्गं लोकं प्रायन् ।
यत्प्रायंस्तत्प्रायणीयस्य प्रायणीयत्वम् ।
तद्यत्प्रायणीयमहर्भवति स्वर्गस्यैव लोकस्य समष्ट्यै ।
तस्मादु हैतस्याह्न ऋत्विजा बुभूषितव्यं स्वर्गस्य ह्येतल्लोकस्य नेदिष्ठम् ।
तच्चतुर्विंशं भवति ।
चतुर्विंशत्यर्धमासो वै संवत्सरः ।
अर्धमासश एव तत्संवत्सरमाप्नुवन्ति ।
एतदु ह वा एके सत्रिणोऽहरुपेत्योत्तस्थुरापाम संवत्सरमिति वदन्तः ।
ते ये कामंकामं समारेभाणा इव स्युस्त एतदेवाहरुपेत्योतिष्ठेयुः ।
आप्तो हैषां संवत्सरो भवति ।
तस्य त्रीणि च शतानि स्तोत्रिया भवन्ति षष्टिश्च ।
तावतीस्संवत्सरस्य रात्रयः ।
रात्रिश एव तत्संवत्सरमाप्नुवन्ति ।
तदाहुर्यत्संवत्सरसदस्संवत्सरस्याहानि सुन्वन्त आसतेऽथ केन रात्रीराप्नुवन्तीति ।
स ब्रूयाद्यावतीः प्रायणीयस्याह्न स्तोत्र्यास्तावतीस्संवत्सरस्य रात्रयः ।
प्रायणीयस्याह्न एव स्तोत्र्याभी रात्रीराप्त्वा अहानि सुन्वन्त आसत इति ।
तदुक्थ्यं भवति पशवो वा उक्थानि पशूनामेवावरुद्ध्यै ।
तस्य पञ्चदश स्तोत्राणि भवन्ति ।
पञ्चदश वा अर्धमासस्य रात्रयः ।
अर्धमासश एव तत्संवत्सरमाप्नुवन्ति ।
त्रिंशत्स्तुतशस्त्राणि भवन्ति ।
त्रिंशन्मासस्य रात्रयः ।

मासश एव तत्संवत्सरमाप्नुवन्ति ३७७

तदाहुरीर्म इव वा एषा होत्राणां यदच्छावाको यदच्छावाकमनुसंतिष्ठेतेर्म इव तुष्टुवाना स्युरिति ।
तस्य त्रैककुभं ब्रह्मसाम भवत्युद्वंशीयमच्छावाकसाम ।
इन्द्रियं वै वीर्यं त्रैककुभं सर्वं पृष्ठरूपमुद्वंशीयम् ।
इन्द्रिये चैव तद्वीर्ये सर्वस्मिंश्च पृष्ठरूपेऽन्ततः प्रतितिष्ठन्ति ।
तद्वा एनत्तत्प्राशंसत् ।
तदाहुरग्निष्टोम एव कार्य इति ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
द्वादश मासास्संवत्सरः ।
एतदु ह वै संवत्सरस्य ज्यैष्ठ्यं पर्व यन्मासः ।
तद्यत्संवत्सरस्य ज्यैष्ठ्यं पर्व तेन नस्संवत्सर आरब्धोऽसदिति ।
ईश्वरा ह त्वपशवो भवितोः पशवो वा उक्थानि तेभ्यो हि यन्ति ।
तस्य त्रीणि स्तोत्राण्यष्टाचत्वारिंशानि कुर्युरुभौ पवमानौ ब्रह्मसाम ।
तावतीरुक्थ्यस्य स्तोत्र्याः ।
आप्नुवन्ति तं कामं य उक्थ्ये नो वा अग्निष्टोमाद्यन्ति ।
वर्ष्म वा अग्निष्टोमो वर्ष्म होता वर्ष्मणैव तद्वर्ष्म संदधति वर्ष्मणा वर्ष्मन्प्रतितिष्ठन्ति ।
श्रीर्वा अग्निष्टोमो ज्यैष्ठ्यं होता ज्यैष्ठ्येनैव तज्ज्यैष्ठ्यं संदधति ज्यैष्ठ्येन ज्यैष्ठ्ये प्रतितिष्ठन्ति ३७८

तदाहुः प्लवमिव वा एतच्छन्दो यज्जगती न प्रायणाय ।
तत्स्थानं षडेव षट्त्रिंशानि स्तोत्राणि कुर्युष्षट्चतुर्विंशानीति ।
षट्त्रिंशदक्षरा वै बृहती ।
बृहती स्वर्गो लोकः साम्राज्यं ।
बृहत्यामेव तत्स्वर्गे लोके साम्राज्ये प्रतितिष्ठन्तो यन्ति ।
बृहत्यु ह वा इमान्सर्वाँल्लोकानक्षरैर्व्याप्नोति दशभिरेवाक्षरैरिमं लोकं व्याप्नोति दशभिरन्तरिक्षं दशभिरमुं चतुर्भिर्दिशो द्वाभ्यामहोरात्रे ।
सा येमांल्लोकान्व्याप्नोति तयेमांल्लोकान्व्याप्नवामेति ।

तस्मात्षडेव षट्त्रिंशानि स्तोत्राणि कुर्युष्षट्चतुर्विंशानीति ।
अथो चतुर्विंशत्यर्धमासो वै संवत्सरः ।
अर्धमासश एव तत्संवत्सरमाप्नुवन्ति ।
एते असृग्रमिन्दव इति बहुरूपां प्रतिपदं कुर्वीरन् ।
बहवो ह्येते दीक्षन्ते ।
तदु वा आहुः पवस्व वाचो अग्रिय इत्येव प्रतिपत्कार्या ।
एषा वै बहुरूपा ।
एतस्यां वै सर्वाणिरूपाणि ।
उभे प्रतिपदौ भवत उभे ह्यत्र सामनी क्रियेते ।
तर्हि यथौजिष्ठौ बलिष्ठौ वहिष्ठौ संपारयिष्णू महान्तमध्वानं
संयुज्योपप्रेयात्तादृक्तत् ।
सर्वं पृष्ठरूपमनु समावर्तयन्ति यथा पित्रे च मात्रे च वत्साननु
समावर्तयेत्तादृक्तथा ।
तदग्ने युङ्क्वा हि ये तवेत्येतास्वग्निष्टोमसाम कार्यमाहुः ।
अग्निर्वा एष वैश्वानरो यत्संवत्सरः ।
तस्यैव युक्त्या अश्वासो देव साधव इति सिद्ध्यै अरं वहन्त्याशव इति
समष्ट्यै ।
तदाहुर्यज्ञेन वा एते यज्ञानभियन्ति ये यज्ञायज्ञीयस्यर्ग्भ्योऽधि यज्ञायज्ञीयं
च्यावयन्ति ।
अथैते यज्ञेन यज्ञे प्रतितिष्ठन्ति ये यज्ञायज्ञीयस्यर्क्षु यज्ञायज्ञीयं च्यावयन्ति ।
तस्माद्यज्ञायज्ञीयं स्वास्वेव कार्यमिति ३७९

अभीवर्तो ब्रह्मसाम भवति ।
अभीवर्तेन वै देवा इमाँल्लोकानभ्य-वर्तन्त ।
यदभ्यवर्तन्त तदभीवर्तस्याभीवर्तत्वम् ।
तद्यदभीवर्तो ब्रह्मसाम भवत्येषामेव लोकानामभिवृत्यै ।
प्रजापतिर्वा अभीवर्तः प्रजाश्छन्दांसि ।
स एष प्रजापतिः प्रजासु गर्भं दधदेति ।
अन्यास्वन्यास्वस्तुवन्ति समानेन साम्ना ।
रेत एव तत्सिञ्चन्ति ।

तस्माद्समानो बह्वीष्वेतो दधाति ।
समानीः परस्तादृचो भवन्त्यन्यदन्यत्साम ।
रेत एव तत्सिक्तं प्रजनयन्ति ।
तस्मात्समाना बहून्सूते ।
अन्यास्वन्यास्वस्तुवन्ति समानेन साम्ना ।
अन्यदन्यद्धि यन्तः पश्यन्ति ।
समानीः परस्तादृचो भवन्त्यन्यदन्यत्साम ।
यानेवेतो लोकान्प्रगाथैरभ्यारोहन्तो यन्ति तानमुतस्सामभिः प्रत्यवरोहन्त आयन्ति ।
ऋग्वा अयं लोकस्सामासौ ।
यदितो यन्तस्सामारभ्य यन्त्यमुं तल्लोकमारभ्य यन्ति ।
ते यत्पुरस्ताद्विषुवत उत्सृजेरन्नवामुष्माल्लोकाच्छिद्येरन् ।
यदमुत आयन्त ऋचमारभ्यायन्तीमं तल्लोकमारभ्यन्ति ।
ते यत्पुरस्ताद्द्वादशाहीयेभ्योऽहोभ्य उत्सृजेरन्नवास्माल्लोकाच्छिद्येरन् ३८०

सकृत्परस्तादभीवर्तं पर्यस्यन्ति ।
तस्माद्गर्भा जायमानाः पर्यावर्तन्ते ।
पुरा ह खलु वै पञ्चमान्मासो बार्हताः प्रगाथा आप्यन्त ।
उष्णिहं च त्रिष्टुभं च द्वे छन्दसी संयुज्य पञ्च मासस्समापयेयुः ।
अनुष्टुभं च पङ्क्तिं च द्वे छन्दसी संयुज्य षण्मासस्समापयेयुरेकच्छन्दः परिशिष्य ।
जगतीं तद्विषुवत्युपेयुः ।
जागतो वै विषुवान् ।
स्व एव तदायतने विषुवन्तं समर्धयन्ति ।
छन्दांसि वै स्वर्गो लोकः ।
स्वर्गमेव तल्लोकं रोहन्तो यन्ति ।
तदाहुर्वीव वा एतच्छन्दांसि विशन्ति यदेतानि द्वे द्वे संयुज्यन्ति ।
क्व ह्यद्यतनं च श्वस्तनं चाहनी संपत्स्यतः ।
सर्वाण्येव सप्त चतुरुत्तराण्युपेत्यानीति ।
गायत्रीमेव प्रथमेऽहन्नुपेत्योष्णिहं द्वितीयेऽनुष्टुभं तृतीये बृहत्या पञ्च

मासस्समापयेयुः ।
पङ्क्तिमेव प्रथमेऽहन्नुपेत्य त्रिष्टुभा षण्मासस्समापयेयुरेकच्छन्दः परिशिष्य ।
जगतीं तद्विषुवत्युपेयुः ।
जागतो वै विषुवान् ।
स्व एव तदायतने विषुवन्तं समर्धयन्ति ।
छन्दांसि वै स्वर्गो लोकः ।
स्वर्गमेव तल्लोकं रोहन्तो यन्ति ३८१

तदाहुरयातयामानीव वा एतच्छन्दांसि युञ्जति यदेनानि यातयामानि सन्ति ।
तानि सर्वाणि पुनः पुनः प्रयुञ्जते ।
यानेव वीर्यवत्तमान्प्रगाथान्मन्येरंस्तान्प्रणिश्रित्य षट्त्रिंशदुपेयुरिति ।
षट्त्रिंशदक्षरा वै बृहती ।
बृहती स्वर्गो लोकस्साम्राज्यम् ।
बृहत्यामेव तत्स्वर्गे लोके साम्राज्ये प्रतितिष्ठन्तो यन्ति ।
षडुत्सर्गं त्रिंशता पुनरभ्यावर्तमयातयामतायै ।
अथो आहुस्त्रयस्त्रिंशदेवोपेत्या इति ।
त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वास्वेवैतद्देवतासु प्रतितिष्ठन्तो यन्ति ।
त्रीनुत्सर्गं त्रिंशता पुनरभ्यावर्तमयातयामतायै ।
अथो आहुस्त्रिंशदेवोपेत्या इति ।
त्रिंशदक्षरा विराडन्नं विराट् ।
विराज्येव तदन्नाद्ये प्रतितिष्ठन्तो यन्ति ।
अथो आहुश्चतुर्विंशतिरेवोपेत्या इति ।
चतुर्विंशत्यर्धमासो वै संवत्सरः ।
अर्धमासश एव तत्संवत्सरे प्रतितिष्ठन्तो यन्ति ।
अथो आहुर्द्वादशैवोपेत्या इति ।
द्वादश मासास्संवत्सरः ।
मासश एव तत्संवत्सरे प्रतितिष्ठन्तो यन्ति ।
अथो आहुष्षडेवोपेत्या इति ।

षड्वा ऋृतवः ।
ऋृतुष्वेव तत्प्रतितिष्ठन्तो यन्ति ।
अथो आहुश्चत्वार एवोपेत्या इति ।
चतस्रो दिशश्चतुष्पदाः पशवः ।
दिक्षु चैतत्पशुषु च प्रतितिष्ठन्तो यन्ति ।
अथो आहुस्त्रय एवोपेत्या इति ।
त्रयो वा इमे लोकाः ।
एष्वेव तल्लोकेषु प्रतितिष्ठन्तो यन्ति ।
अथो आहुर्द्वावेवोपेत्याविति श्यैतनौधसयोरेव प्रगाथाविति ।
श्यैतनौधसयोर्ह खलु वै प्रगाथौ वीर्यवत्तमौ ।
द्विपाद्यजमानः प्रतिष्ठित्यै ३८२

यो वै पुनर्निवृत्तमध्वानमेति नैनं स समश्नुते ।
अथ य एनमपुनर्निवृत्तमेति स एवैनं समश्नुते ।
पुनर्निवृत्तमिवैते यन्ति ये द्वा उपयन्ति ।
त्रैष्टुभबार्हता एवोपेत्या इति ।
त्रैष्टुभबार्हतो वै माध्यन्दिनः ।
तद्यद्राथन्तरमह स्यात्तस्मिन्बार्हतमुपेयुर्बार्हतेऽहंस्त्रैष्टुभम् ।
नैषां त्रैष्टुभाः प्रगाथा आप्यन्ते न बार्हताः ।
यथायतनं छन्दांसि युज्यन्तेऽयातयामानमु संवत्सरमासते ।
तदु वा आहुर्द्वावेवोपेत्यौ श्यैतनौधसयोरेव प्रगाथाविति ।
अथा उ ह वै वीर्यवत्तमावेता उ ह वै स्वर्गस्य लोकस्य मे पन्थावञ्जसायनौ यद्बृहद्रथन्तरे ।
तयोरेतेऽञ्जसायने यच्छ्यैतनौधसे ।
अहरहरेवैतदञ्जसा स्वर्गं लोकमुपयन्ति ।
तस्यैष श्लोको
महापथाद्विश्चवयो यदुद्बुध्यते पुरुषः
तमेव सृप्त्वाजिं श्रान्तः पुनरभ्याजिगांसति
इति ।
महापथे वा एते सत्यपथं प्रतिपद्यन्ते येऽन्यान्प्रगाथानुपयन्ति ।

अथैते अहरहरेवाञ्जसा स्वर्गं लोकमुपयन्ति ये श्यैतनौधसयोः प्रगाथावुपयन्ति ।
तस्माद्द्वावेवोपेत्यौ श्यैतनौधसयोरेव प्रगाथाविति ३८३

अनुष्टुभो वा अन्यानि सामान्यन्नम् ।
अनुष्टुबेवान्येषां साम्नामन्नम् ।
यानि वा अभिक्रान्त्यपक्रान्तानि सामानि तान्यनुष्टुबोऽन्नम् ।
तैरेनां ये व्यर्धयन्ति तानेषाविभूषिताप्रीताज्ञातास्वा वागभिवदत्यलूलुभन्नृतूनश्रद्दधाना अयक्षत नारात्सुरिति ।
अथ य एनां तैस्समर्धयन्ति तानेषा तृप्ता प्रीता ज्ञाता स्वा वागभिवदत्यचीकॢपन्नृतूञ्श्रद्दधाना अयक्षतारात्सुरिति ।
अन्वहं सुज्ञानं भवति ।
स ह वा उद्गाता सत्रिणस्सत्राय दीक्षयेद्यदि य एनान्देवानां देवक्षेत्रमभ्यारोहयेत् ।
न ह वै देवानां देवक्षेत्रमभ्यारुह्य बिभेति नाशनायति न पिपासति नार्तिमार्च्छति ।
सुज्ञानं ह वाव देवानां देवक्षेत्रम् ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते येऽन्वहं सुज्ञानमुपयन्तीति ।
तद्यद्राथन्तरमह स्यात्तस्मिन्पौष्कलमुपेयुर्बार्हतेऽहन्सुज्ञानम् ।
तदु वा आहुस्सुज्ञाने वावैतानि सर्वाणि रूपाणीति ।
सुवर्विद इत्येवास्य लोकस्य रूपमे इत्यन्तरिक्षस्य सुवरित्यमुष्य ३८४

तत्सप्ताक्षरणिधनं भवति ।
सप्त वै प्राणाः ।
प्राणैरेव तत्समृध्यमाना यन्ति प्राणेषु प्रतितिष्ठन्तः ।
अन्वहं गौरिवीतं भवति ।
अतिरिक्तं वा एतद्ब्रह्मणो यद्गौरिवीतम् ।
अतिरिक्तान्येतान्यहानि यान्यहीनस्य ।
अतिरिक्ता एव तदतिरिक्तं ब्रह्मणो रसं दधतो यन्ति ।
अन्वहं प्लवो भवति स्वर्गस्यैव लोकस्य समष्ट्यै ।

ए इत्येवान्तरिक्षमतिप्लवन्ते ।
आति विश्वानि दुरिता तरेमेति यत्किं च यज्ञस्य दुष्टुतं दुश्शस्तं विधुरं तदतितरन्ति ।
तद्द्वादशाक्षरणिधनं भवति ।
द्वादश मासास्संवत्सरः ।
मासेष्वेव तत्संवत्सरे प्रतितिष्ठन्तो यन्ति ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते य एतान्पराचष्षडहानुपयन्तीति ।
ओकोनिधनं षष्ठेऽहनि कुर्युः ।
अयं वै लोकः पुरुषस्यौकः ।
अस्मिन्नेवैतल्लोके प्रतितिष्ठन्ति ।
तद्वेवाचक्षते प्रहितोस्संयोजनमिति ।
अहोरात्रे वै प्रहितौ ।
प्रहिते इव ह्येते चरतः ।
अथ ह वा एतत्षडहा वीव छिद्यन्ते यदा षष्ठमहरागच्छन्ति ।
स यथाश्वं संयोजनेन संयुज्यादेवमेवैतेन साम्ना षडहान्संयुञ्जन्तो यन्ति ।
तदाहुः कार्यमोकोनिधनं पृष्ठ्ये षडहा३ इति ना३ इति ।
नेति ब्रूयात् ।
एतदग्रा वै षडहा यत्पृष्ठ्य एतदन्ता ।
एतं वावैतेन प्रेप्स्यन्त्येतमभीवर्तेनैतं प्लवेनैतं सुज्ञानेन ।
पुनःप्रयोग इव स्याद्यदेतदत्र कुर्युः ।
तस्मादेतदत्र न कार्यमिति ३८५

स्वर्भानुर्वा आसुर आदित्यंतमसाविध्यत् ।
तं देवाश्चर्षयश्चाभिषज्यन् ।
त एतानि स्वराण्यपश्यन् ।
तैरेनमस्पृण्वन् ।
यदस्पृण्वंस्तत्स्वराणां स्वरत्वम् ।
तद्यदेतानि स्वराणि भवन्त्यादित्यमेवैतै स्पृण्वन्ति ।
यादृगह वै मनुष्यो देवेभ्यः करोति तादृगस्मै देवाः कुर्वन्ति ।
तद्यदेतानि स्वराणि भवन्त्यात्मानमेवैतै स्पृण्वते ।

सप्तदशा स्वरसामानो भवन्त्येकविंशो विषुवान् ।
प्रजापतिर्वै सप्तदशोऽसावादित्य एकविंशः ।
पित्रैव तत्पुत्रं पर्यूहन्ति ।
पिता हि पुत्राय कन्तमः पुत्रो हि पित्रे कन्तमः ।
यदत्रान्यं स्तोममवदध्युः प्रासौ तं तेजसा दहेदग्निर्वैश्वानरः प्रजा आददीत ।
षडेते स्वरसामानो भवन्ति ।
षडृतवः ।
ऋतुष्वेवैनं तदध्यूहन्ति तस्मादेषस्त्रीनृतून्दक्षिणैति त्रीनुदङ ।
स यथा पुत्रः पितॄननुसंचरेत्तादृगेवैतदजामितायै ।
अजामि हि पुत्रः पितॄननुसंचरति ।
अथैतौ विश्वजिदभिजितावभित स्तोमानां वीर्यम् ।
वीर्येण ह वा एतौ विषुवन्तं दाधर्तुः ।
तदाहु स्तोमकृन्तत्रमिव वा एतत्स्तोमा यन्ति
यत्त्रयस्त्रिंशात्सप्तदशमुपयन्तीति ।
पुरस्तादेव पृष्ठ्यस्य षडहस्याभिजितमुपेत्य पृष्ठ्यस्यैव षडहस्य यन्मध्ये
सप्तदशमहस्तदुपरिष्टात्त्रयस्त्रिंशस्य पर्यूहेयुः ।
तद्यत्सप्तदशादेव सप्तदशमुपयन्ति समात्समं न स्तोमकृन्तत्रं स्तोमा यन्ति
नार्तिमार्च्छन्ति ३८६

तद् आहुरात्मा वै पृष्ठ्यष्षडहोऽन्नं सप्तदशः ।
यत्पृष्ठ्यात्षडहात्सप्तदशं निर्हरेयुरन्नाद्यं बहिर्धा कुर्युरशनायुका स्युः ।
त्रयस्त्रिंशादेवोपेत्यमिति ।
त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वा उ ह वै देवतास्संपद्य प्रजापतिमुद्वा आप्नुवन्ति न वा ।
तत्तत्समादेव सममुपयन्ति ।
वर्ष्मणो वा वर्ष्म ।
वर्ष्म हि पिता ।
अथो उत्क्रान्तिरेव ।
पिता हि पुत्राच्छ्रेयान् ।
त उक्थ्या भवन्ति पशवो वा उक्थानि पशूनामेवावरुद्ध्यै ।

तदाहुर्विलोमेव वा एतद्यज्ञः क्रियते यदाग्निष्टोमौ विश्वजिदभिजितौ
भवतोऽग्निष्टोमो विषुवानुक्थ्या स्वरसामानः ।
सर्व एवाग्निष्टोमाः कार्या इति ।
वर्ष्म वा अग्निष्टोमो वर्ष्म विषुवान् ।
वर्ष्मणैव तद्वर्ष्म संदधति ।
वर्ष्मणा वर्ष्म रोहन्ति ।
तेजो वा अग्निष्टोमस्तेजो विषुवांस्तेजसैव तत्तेजस्संदधति तेजसा तेजो
रोहन्ति ।
अथ ह काम्यकीया इति सत्रिणोऽयस्थूणगृहपतयस्सत्रं निषेदुः ।
तान्हेन्द्रद्युम्नो भाल्लबेयोऽभिप्रधावयां चकार -पुत्रं विषुवता
स्तावयिष्यामीति ।
तेषां ह पृष्ठ्यस्य षडहस्यैकेनाह्नास्तुतमाजगाम ।
स होवाच साधु हैवाकृत यदस्तोढ्वम् ।
यत्त्वहमिहाभविष्यमन्यथातो विषुवन्तमकल्पयिष्यमिति ।
कथं भगवोऽकल्पयिष्य इति हैनं पुत्र उवाच ।
स होवाच पुरस्तादेव पृष्ठ्यस्य षडहस्याभिजितमुपेत्य पृष्ठ्यादेव
षडहात्स्वरसाम्न उपैष्यमिति ३८७

आत्मा वै पृष्ठ्यष्षडहः प्रजा स्वरसामानः ।
प्रजो वा अस्मत्परेति ।
वाग्वै वयमिमे स्मः ।
वागस्मत्परेति ।
तद्यदेषोऽभिजिदन्तरेण भवति प्रजननं वा एष एतदन्तर्धायैव तिष्ठति ।
तं यत्पुरस्तात्पृष्ठ्यस्य षडहस्य पर्यूहन्त्यनन्तर्हितात्प्रजननात्प्रजायामहा इति
।
त उ वै सप्तदशा भवन्ति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतिः प्रजानां प्रजनयिता ।
स यः प्रजानां प्रजनयिता तेन प्रजाताः प्रजायामहा इति ।
त उ वा आनुष्टुभा भवन्ति वाग्वा अनुष्टुब्वाक्प्रजननं वाचः

प्रजननात्प्रजायामहा इति ।
त उ वा उक्थ्या भवन्ति पशवो वा उक्थान्यन्नं पशवः पशुभ्योऽन्नाद्यात्प्रजां नेदन्तरयामेति ।
तदु होवाच शाट्यायनिरनादृत्य भाल्लबेयस्य वदनमभिजित एवाध्युपेत्यम् ।
यो वा एष पृष्ठ्यष्षडहस्स एवाभिजित् ।
आयतनेन ये वा एते पृष्ठ्यस्य षडहस्य स्तोमास्त एवैते ।
एको वै पृष्ठ्ये षडहे सप्तदशः ।
अथैतस्मिंस्त्रयस्सप्तदशाः ।
तं वावैतदेतं स्तोमं कृत्वा प्रजनयन्ति ।
तद्यत्सप्तदशादेव सप्तदशं प्रजनयन्ति सप्तदशात्सप्तदशं सप्तदशात्सप्तदशम् ।
परस्तादु वै विश्वजिति त्रयस्सप्तदशाः ।
ते वावैतदुभये संपद्य प्रजनयन्ति ।
तेषां वा अत्र प्रतिष्ठा ।
अभिजित एवाध्युपेत्यमिति ३८८

एकविंशो विषुवान्भवति ।
एकविंशो वा अस्य भुवनस्य विषुवान् ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
सर्वस्मिन्वा एषोऽस्मिन्नधि प्रतिष्ठितः ।
तद्यस्मिन्नेष सर्वस्मिन्नधि प्रतिष्ठितस्तस्मिन्सर्वस्मिन्नधि प्रतितिष्ठामेति ।
तस्माद्वायव्यानुष्टुप्प्रतिपद्भवति ।
वाक्च वै वायुश्चैतं देवतानामानशानौ ।
तौ यावेतं देवतानामानशानौ ताभ्यामेनमश्नवामहा इति ।
यद्ध वै वायुर्न पवेत प्रासाविदं तेजसा दहेदग्निर्वैश्वानरः प्रजा आददीत ।
वायव्या प्रतिपद्भवत्यग्नेरेव वैश्वानरस्य शान्त्या अप्रदाहाय ।
तदाहुर्वीव वा एते प्राणैर्ऋध्यन्ते ये पावमानीभिः प्रतिपद्यन्त इति ।
तद्यदेषा वायव्या प्रतिपद्भवति प्राणो वै वायुः प्राणैरेव तत्समृध्यन्ते ।
वायो शुक्रो अयामि त इति शुक्रवती भवति ।

शुक्रियं ह्येतदहः ।
मध्वो अग्रं दिविष्टिष्विति तदु मधव्या अग्र्या ब्रह्मवर्चसिनो भवन्ति ।
आ याहि सोमपीतय इति सौमी तेन पावमानी क्रियते ।
स्पार्हो देव नियुत्वतेत्यस्यौ वै स्पार्होऽन्नं नियुत्वदेतमेव तदन्नाद्येनाभ्युपयन्ति ।
यो वै श्रेयांसमाहरन्नुपैति प्रति वै स तं नन्दति ।
अथ य एनमनाहरन्नुपैति न वै स तं प्रतिनन्दति ।
तद्यदेषा वायव्यानुष्टुप्प्रतिपद्भवत्येष नः प्रतिनन्दादेतमृध्नवामेति ।
तदु वा आहुः पवस्व वाचो अग्रिय इत्येव प्रतिपत्कार्येति ।
वाग्वा इयं वितता यदिमे लोकाः ।
तस्या अदोऽग्रं तपति यदसावादित्यः ।
तद्यदेषा पवस्व वाचो अग्रिय इति प्रतिपद्भवत्येतमेवैतदेतया अभिप्रतिपद्यन्ते ।
स यथात्मनात्मानमारभेतैवमेवैनमेतत्स्वेन रूपेणारभन्ते ।
यद्वेवैतत्पदं पवस्वेत्यवस्तात्पर्यूढं भवति तेनायं वायुरवस्तात्पर्यूढः पवतेऽनिर्दाहाय ३८९

स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत् ।
तं देवाश्चर्षयश्चाभिषज्यन् ।
त एतानि दिवाकीर्त्यानि सामान्यपश्यन् ।
तैरस्य तमोऽपघ्नन् ।
तद्यदेतानि दिवाकीर्त्यानि भवन्त्यादित्यस्यैवैतैस्तमोऽपघ्नन्ति ।
यादृगह वै मनुष्यो देवेभ्यः करोति तादृगस्मै देवाः कुर्वन्ति ।
तद्यदेतानि दिवाकीर्त्यानि भवन्त्यात्मन एवैतैस्तमोऽपघ्नते ।
भ्राजाभ्राजे पवमानयोर्मुखे भवतः ।
अङ्गेभ्य एवास्य तत्तमोऽपघ्नन्ति ।
महादिवाकीर्त्यं पृष्ठं विकर्णं ब्रह्मसाम ।
मध्यत एवास्य तत्तमोऽपघ्नन्ति ।
दशस्तोभं भासमग्निष्टोमसाम ।
शीर्षत एवास्य तत्तमोऽपघ्नन्ति ।

असावादित्य एकविंशो विषुवांस्तस्य दिवाकीर्त्यान्येव रश्मयः ।
तद्यदेतानि दिवाकीर्त्यानि भवन्त्येतमेवैतैः पर्यूहन्त्येतं समर्धयन्ति ।
तदाहुः केन संवत्सरसद स्वर्गलोक इति ।
मूर्धानं दिवो अरतिं पृथिव्या इत्यग्निष्टोमसाम भवतीति ब्रूयात् ।
तेनेति ।
असौ वै दिवो मूर्धा योऽसौ तपत्येतमेवैतेनाभ्यारोहन्ति ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते य एतमभ्यारोहन्तीति ।
अरतिं पृथिव्या इति भवति ।
अयं वै लोकोऽरतिः पृथिव्या अस्मिन्नेवैतल्लोके प्रतितिष्ठन्ति ।
दशस्तोभं भासमग्निष्टोमसाम भवति दशाक्षरा विराडन्नं विराड्विराज एवान्नाद्यस्यावरुद्ध्यै ।
ईश्वरा ह त्वन्यस्मै मूर्ध्नान्नाद्यं हर्तोर्य एतासु मूर्धन्वतीष्वग्निष्टोमसाम कुर्वन्तीति ।
तदनुष्टुभ्येव कार्यम् ।
वाग्वा अनुष्टुबन्नं दशस्तोभम् ।
मुखतो वै वागियं मुखतो एवैतदात्मनोऽन्नाद्यं दधते तस्मादनुष्टुभ्येव कार्यमिति ३९०

आत्मा वै संवत्सरस्य विषुवान्पक्षावभितो येन चेतोऽभीवर्तेन यन्ति येन चामुतः प्रगाथेन प्रत्यवरोहन्ति तावुभौ विषुवति कुर्युः ।
आत्मन्नेव तत्पक्षौ प्रतिदधते स्वर्गस्य लोकस्य पतनाय ।
तस्मादात्मन्पक्षौ प्रतिहितौ ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते य एतान्पराचष्षडहान्पराच स्तोमान्पराञ्चि पृष्ठानि पराञ्चि छन्दांस्युपयन्तीति ।
तद्यत्परस्ताद्विषुवतोऽर्वाचष्षडहानुपयन्त्यस्मिन्नेवैतल्लोके प्रतितिष्ठन्ति ।
अद्याद्या श्वश्वो वयमेनमिदा ह्यस्त्वामिदा ह्यो नरः क्वेयथ क्वेदसि । इन्द्र त्रिधातु शरणमिति संतनयः प्रगाथा भवन्त्यद्यश्वस्यैव संतत्यै ।
अद्य चैव ते श्वश्च संतन्वन्ति ।
अयातयामानमु संवत्सरमासते ।
तदाहुरिन्द्र क्रतुं न आ भरेत्येतास्वावतीषु स्तोतव्यमह्नो रूपेणेति ।

पिता पुत्रेभ्यो यथा
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि
इति ।
एते ह वै जीवा ज्योतिरश्नुवते ये संवत्सरस्योदृचमश्नुवते ।
मा नो अज्ञाता वृजना दुराध्यो माशिवासो अव क्रमुः
त्वया वयं प्रवतः शश्वतीरपो अति शूर तरामसि
इत्येता ह वै प्रवतः शश्वतीरापो यत्संवत्सर ऋतवो मासा अर्धमासा
अहोरात्राण्युषसः ।
ता एवैतेनातितरन्ति ३९१

शक्तिं ह वासिष्ठं सौदासा अग्नौ प्रासुः ।
स ह प्रास्यमान उवाचेन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथेति ।
एतावद्धैवास्य व्याहृतमास ।
अथ हैनमग्नौ प्रासुः ।
अथ ह वसिष्ठ आजगाम ।
स होवाच किं मे पुत्रः प्रास्यमानोऽब्रवीदिति ।
तस्मै होचुरिन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथेत्येतावदेवास्य
व्याहृतमासीदथैनमग्नौ प्रास्यन्निति ।
स होवाच शिक्षा णोऽस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहीति यन्म
एतमुत्तरमर्धर्चं पुत्रः प्राप्स्यन्न चैवैनमग्नौ प्रासिष्यन्सर्वमु चायुरयिष्यत् ।
यैव कुरुतमा देवतानामभूत्तामुपासरत् ।
ऋध्नुवंस्ते सत्रिणो ये म एतेन पुत्रस्य प्रगाथेन स्तवान्ता इति ।
स एष ऋद्धिप्रागुभितः प्रगाथः ।
ऋद्धिष्णवो ह भवन्त्येनेन तुष्टुवानाः ।
गौश्चायुश्च स्तोमौ भवतः प्रतिष्टित्यै ।
ऊनातिरिक्तौ भवतः प्रजननाय ।
वैराजौ भवतोऽन्नाद्यस्यैवावरुद्ध्यै ।
पृष्ठ्यष्षडहो भवति ।
श्रीर्वै वर्ष्म पृष्ठानि ।
तदु श्रियं वर्ष्म पृष्ठान्यूर्ध्वा रोहन्ति ।

छन्दोमा भवन्ति पशवो वै छन्दोमाः पशूनामेवावरुद्ध्यै ।
दशममहर्भवति दशाक्षरा विराडन्नं विराड्विराज एवान्नाद्यस्यावरुद्ध्यै ।
अयं सहस्रमानव इति पुरा तूष्णीं स्तोमादेतास्वतिछन्दस्सु स्तोतव्यमाहुः ।
अति वा एषो अन्यानि छन्दांसि यदतिछन्दाः ।
अत्येतेऽन्यान्ये संवत्सरसदः ।
स्व एवैतच्छन्दसि प्रतितिष्ठन्ति ।
एकाक्षरणिधनं साम भवति ।
एकाक्षरा वै वाक् ।
वाचमेवैतद्दशमेनाह्ना संपादयन्ति ।
गोरिति निधनं भवति गौर्वै कृत्स्नमन्नाद्यं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ।
तदाहुरतिष्टुतानुष्टुप्स्याद्यदेतदत्र कुर्युः ।
नेद्वाचमतिष्टवामेति वै मनसा तूष्णीं स्तोमेन स्तुवन्ति ।
अत्रो वावैतद्वाचा संपन्नम् ।
तस्मादेतदत्र न कार्यमिति ३९२

उत्सृज्या३ं नोत्सृज्या३मिति मीमांसन्ते ।
तदाहुरुत्सृज्यमेवेति ।
यो वा अविमोकं यात्युद्वा वै स कृन्तति प्र वा क्षिणोति ।
अविमोकमिवैते यन्ति ये नोत्सृजन्ते ।
तद्यत्पौर्णमासीरुत्सृजन्तेऽरिष्ट्या एव ।
यो वै पूर्ण आवपति वि वा वै तत्पतति प्र वा शीर्यते ।
पूर्ण एष यत्संवत्सरः ।
तद्यत्पौर्णमासीरुत्सृजन्तेऽरिष्ट्या एव ।
ऊनाद्वै रेतस्सिच्यत ऊनात्प्रजाः प्रजायन्ते ।
पूर्ण एष यत्संवत्सरः ।
तद्यत्पौर्णमासीरुत्सृजन्ते रेतस एव तल्लोकं कुर्वन्ति प्रजननाय ।
ऊनाद्वै प्राणा ईरते ।
प्रजापतिरेष यत्संवत्सरः ।
तस्यैते प्राणा यत्पौर्णमास्यः ।
तद्यत्पौर्णमासीरुत्सृजन्ते प्रजापतेरेव तत्प्राणानुत्सृजन्ते ।

पौर्णमासीस्तोमा ह खलु वै देवाः ।
तद्यत्पौर्णमासीरुत्सृजन्ते को देवान्प्रत्यभिष्टोतुमर्हतीति ३९३

ते यदहरुत्सृजेरन्निन्द्राय वसुमते पूर्वाह्णे पुरोडाशमष्टाकपालं निर्वपेयुः ।
इन्द्राय रुद्रवते मध्यन्दिने पुरोडाशमेकादशकपालं निर्वपेयुः ।
इन्द्रायादित्यवतेऽपराह्णे पुरोडाशं द्वादशकपालं निर्वपेयुः ।
एतासां वै देवतानां सवनानि भाजनं तन्न सवनेनैभ्यो यन्ति न देवता अन्तर्यन्ति ।
प्रजापतिरेष यत्संवत्सरः ।
तस्यैते प्राणापाना यत्पौर्णमास्यश्चामावास्याश्च ।
तद्यत्पौर्णमासीश्चामावास्याश्चोत्सृज्यन्ते प्रजापतेरेव तत्प्राणापानानुत्सृजन्ते ।
तमेतमुपरिष्टात्संवत्सरस्य चतुर्विंशतिरात्रमुपयन्ति ।
अथो आहुः पौर्णमासीरेवोत्सृज्या इति ।
प्राणभाजना वै पौर्णमास्यपानभाजनामावास्या ।
बहिर्वै सन्तं प्राणमुपजीवन्त्यन्तस्सन्तमपानम् ।
तद्यत्पौर्णमासीरुत्सृजन्ते बहिस्सन्तं प्राणमुपजीवामान्तस्सन्तमपानमिति ।
तमेतमुपरिष्टाद्द्वादशरात्रमुपयन्ति ३९४

तदु होवाचारुणिरषाढं सावयसमुत्ससृजानं होता छिद्रे संवत्सर आस्त इति ।
स होवाच मा न एवं ब्रवीरुप वै वयं तमुपरिष्टाद्द्वादशरात्रमैमेति ।
तं ह तदुपजगौ
ज्यायो वा हि कनीयो वा न हि वा तेन तत्समम्
कपालमन्यथा सत्यछिद्र उपधीयते
इति वा अहमेतद्धोतुर्मन्ये ।
छिद्रं वा अहं तेषां संवत्सरं मन्ये य उत्सृजन्ते ।
अथो हैषां तदन्यथेव सत्रमुपेतं भवति ।
यथा वै शश एवं यज्ञः ।
यो वै शशमुत्सर्गं लिप्सते नैनं स गृह्णाति ।
अथ य एनमनुत्सर्गं लिप्सते स एवैनं गृह्णाति ।

उत्सर्गमेवैतल्लिप्सन्ते य उत्सृजन्ते ।
तस्मान्नैवोत्सृज्यमिति ३६५

अथ ह स्माह कुसुर्बिन्द औद्दालकिरुत्सृज्यं चैव न नेति ।
यदेवाद्याहरुत्सृजेरंस्तच्छ्वो भूते प्रतिसंख्यायोपप्रस्तुयुः ।
तेनैवोत्सृष्टं च न चेति ।
अथो यावन्त्येवाहान्युत्सृजेरंस्तानि संख्यायोपरिष्टादतिरात्रस्योपेयुः ।
तेनो एवोत्सृष्टं च न चेति ।
अथ ह स्माह भाल्लबेय उक्थान्येवोत्सृज्यानीति ।
प्रजा वै पशव उक्थानि ।
प्रजा एव तत्पशूनुत्सृजन्ते ।
अथो यथा दृतिम्पदोच्छ्वासयेत्तादृक्तत् ।
तदाहुरुत्सृज्यमेवेति ।
प्रजापतिरेष यत्संवत्सरः ।
तस्यैते प्राणाः पर्वाणि यत्पौर्णमास्यश्चामावास्याश्च ।
यथा ह वा इदं दृतिरभिध्मातश्शोचेदेवं ह वा एष प्रजापतिः
पशूञ्छोचयत्यनुत्सृज्यमानः ।
तद्यत्पौर्णमासीश्चामावास्याश्चोत्सृजन्तेऽङ्गान्येवास्य तत्प्राणान्पर्वाणि
प्रसारयन्ति नेन्नस्संवत्सरश्शुशुचानो हिनसदिति ।
तमीं हिन्वन्त्यग्रुव इति श्वो भूते प्रतिपदं कुर्वीरन् ।
तद्यथा दृतिमुच्छ्वासितं पुनरभिधमेत्तादृक्तत् ।
धमन्ति बाकुरं दृतिं त्रिधातु सारघं मध्विति संवत्सरो वै बाकुरो
दृतिर्यज्ञस्त्रिधातुर्ब्राह्मणास्सरघास्त एवैतन्मधु कुर्वन्ति ३६६

अथ ह स्माह सिरिन्दः पालालिरमावास्यायामेवोत्सृज्यमिति ।
अमावास्यायां वा एतद्देवता उदसृजन्त ।
देवतानामुत्सृष्टिमनूत्सृजामहा इति ।
एते उ ह वै संवत्सरस्य मेध्ये रात्री यत्पौर्णमासी चामावास्या च ।
तद्यत्पौर्णमासीं चामावास्यां चोत्सृजेरन्संवत्सरं मेधेनव्यर्धयेयुः ।
त्रिवृदेवाग्निष्टोमः कार्य इति ।

तस्य यन्नयूनानि स्तोत्राणि भवन्ति तेनैवोत्सृष्टं च न चेति ।
अथ ह स्माह नगरी जानश्रुतेय एकत्रिक एवोपेत्य इति ।
तस्य यच्छ्वाङ्गितानीव स्तोत्राणि भवन्ति तेनैवोत्सृष्टं च न चेति ।
अथ ह स्माहारुणिर्यावेवैतौ गोआयुषी स्तोमौ ताभ्यामेवोत्सृष्टं च न चेति ।
तयोर्यस्य न्यूनानि स्तोत्राणि तेनोत्सृष्टं यस्यातिरिक्तानि तेनानुत्सृष्टम् ।
तस्मादेतावेवोपेत्याविति ३९७

अध्वर्युर्ग्रहं गृहीत्वा द्रवति ।
स आहोपावर्तध्वमिति ।
ते हिंकृत्यैव प्राञ्चो निष्क्रम्याग्रेणाग्नीध्रं तिष्ठन्तो विश्वेषां देवानां व्रतेन स्तुवते
।
विश्वेभ्य एव तद्देवेभ्यो निवेदयन्तेऽरात्स्मेति ।
ते प्राञ्चोऽभिक्रम्य चात्वालमवेक्षमाणाः क्रोशेन स्तुवते ।
देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत् ।
तत्क्रोशेनैवावरुन्धत ।
अन्तमिवैते गच्छन्ति ये संवत्सरस्योदृचमश्नुवते ।
तद्यत्क्रोशेन स्तुवत इन्द्रियस्यैव वीर्यस्यावरुद्ध्यै ।
अथानुक्रोशम् ।
देवा वै यत्र त्र्यहेण स्वर्गं लोकमायंस्तद्धैषामेतत्तृतीयमहर्वैरूपं व्यार ।
तस्यैष् श्लोको
वैरूपं देवा अभिसंवसानास्तदातस्थुस्तदु हैषां व्यार
ते हिंकृत्य पुनरारुह्य सर्व अवाधून्वत जरसं तनूनाम्
इति ।
तस्य एवैषा श्लोको
यद्वैरूप उपहते व्यद्धवे हिंकृण्वन्तस्समतिष्ठन्त यामन्
तद्देवस्थानमसृजन्त साम तेन देवासो अमृतत्वमायन्
इति ।
ते यत्र स्वर्गं लोकमायंस्तद्विधाता पुत्रानब्रवीन्मा यूयमादृढ्वमिहैवाहं
युष्मान्विधास्यामीति ३९८

सोऽस्यां प्राच्यां दिशि पुरं वैधात्रमदधात् ।
तस्य प्राचीन आहुर्यायणः पुरोहितः ।
सोऽस्यां दक्षिणायां दिश्यधराहिं वैधात्रमदधात् ।
तस्य दक्षिण आहुर्यायणः पुरोहितः ।
सोऽस्यां प्रतीच्यां दिशि पश्चं वैधात्रमदधात् ।
तस्य प्रतीचीन आहुर्यायणः पुरोहितः ।
सोऽस्यामुदीच्यां दिश्युत्तराहिं वैधात्रमदधात् ।
तस्योदीचीन आहुर्यायणः पुरोहितः ।
ते देवा विधातारमब्रुवन्नेवमु चेत्त्वमेतदधिथास्तथास्मानन्वीक्षस्व यथा वयं स्वस्ति स्वर्गं लोकं गच्छेमेति ।
तानेतेन क्रोशेनान्वैक्षत ३९९

इन्द्रासुतेषु सोमेषु होयेहूहो इत्येवैनान्प्रासेधत् ।
तेऽब्रुवन्सत्रा वै नोऽत्युदसीत्सस् ।
तथा नोऽन्वीक्षस्व यथा न एतस्मिँल्लोके अन्वाभजा इति ।
तानेतेनैवानुक्रोशेनेन्द्रा हो इह वेहो इत्येवास्मिँल्लोकेऽन्वाभजत् ।
ततो वै त उभयोरनयोर्लोकयोः प्रत्यतिष्ठन् ।
क्रोशेनैव स्वर्गं लोकमगच्छन्ननुक्रोशेनास्मिन्प्रत्यतिष्ठन् ।
ते य एवं विद्वांसः क्रोशानुक्रोशाभ्यां स्तुवत उभयोरेवानयोर्लोकयोप्रतितिष्ठन्ति क्रोशेनैव स्वर्गं लोकं गच्छन्त्यनुक्रोशेनास्मिन्प्रतितिष्ठन्ति ४००

अग्नेरपिपक्षं प्रति सत्रस्यर्द्ध्या स्तुवते ।
अग्नय एव तद्देवेभ्यो निवेदयन्तेऽरात्स्मेति ।
व्रतपक्षाभ्यामभितो हविर्धाने ।
स्वर्गाय वा एते लोकाय दीक्षन्ते ये संवत्सराय ।
तद्यद्व्रतपक्षाभ्यां स्तुवते आत्मन्नेव तत्पक्षौ प्रतिदधते स्वर्गस्य लोकस्य पतनाय ।
तस्मादात्मन्पक्षौ प्रतिहितौ ।
प्राणापानाभ्यां स्तुवते ।

प्राणेन पुरस्तादपानेन पश्चात् ।
तदाहुर्वीव वा एते प्राणापानाभ्यामृध्यन्ते ये यज्ञियस्य कर्मणोऽतिपादयन्ति यदि वा नातिपादयन्ति ।
को हि तद्वेद यदि तेऽति वा पादयन्ति न वा ।
तद्यत्प्राणापानाभ्यां स्तुवते प्राणापानाभ्यामेव तत्समृध्यन्ते ४०१

श्लोकानुश्लोकाभ्यां स्तुवते ।
श्लोकेन पुरस्तादनुश्लोकेन पश्चात् ।
तद्यच्छ्लोकेन स्तुवते पुण्यं श्लोकमवरुणधामहा इति ।
अथ यदनुश्लोकेन पुण्योऽनुश्लोक उत्तस्थुषोऽनूत्तिष्ठादिति ।
निह्नवाभिनिह्नवाभ्यां स्तुवते ।
निह्नवेन पुरस्तादभिनिह्नवेन पश्चात् ।
तदाहु श्रेयांसं वा एतेऽभ्यारोहन्ति ये संवत्सरमिति ।
तद्यन्निह्नवेन स्तुवते श्रेयस एव तन्निह्नुवतेऽभ्येवाभिनिह्नवेनारोहन्ति ।
यदु चेहाकर्म तदु च मापह्नोष्महा इति ।
तथा हैषां तदनुमोदितं भवति ।
अङ्गिरसां षड्विंशत्यक्षरणिधनेनान्तस्सदसं स्तुवते ।
जघनेनौदुम्बरीमङ्गिरोभ्य एतद्देवेभ्यो निवेदयन्तेऽरात्स्मेति ४०२

तत्पञ्चविंशं कृत्वा स्तुवते व्रतस्यानतिष्टवाय यद्वेव प्रति भूतेच्छन्दसांव्रतेन स्तुवते
हरी त इन्द्र श्मश्रूण्युतो ते हरिता हरी
तं त्वा स्तुवन्ति कारवः पुरुषासो वनर्गवः
ऋद्ध्यास इन्द्र भुङ्ङति मघवन्निन्द्र भुङ्ङति
इन्द्रस्त्रसरपूतः
स्फिगि पुनःपुनस्त्रसरस्फिगिर्
इति ।
एतावद्ध वा अस्यैकमङ्गमनास्तुतमास यत्स्फिगौ ।
अनास्तुतेनैनमङ्गेन स्तुवन्ति ।
ऋद्धिष्णवो ह भवन्त्येनेन तुष्टुवानाः ।

तदाहुः कस्मै कं परिमादः क्रियन्त इति ।
यथा ह वै शारद उक्षैवं महाव्रतम् ।
स यथा शारदमुक्षाणं वागराभिः
परितत्यालभेरन्नेवमेवैतत्परिमाद्भिर्महाव्रतमालभन्ते व्रतस्याप्रक्षयाय ।
अथो यथैवेदं पुरुषस्य केशा नखा लोमानि श्मश्रूणि तथैवास्यैतदिति ।
अथो यदेवेदं पुरुषमभितो गौरश्वोऽजाविर्व्रीहयो यवास्तदेवास्यैतदिति ४०३

सप्ताशीतिर्महाव्रतस्य स्तोत्र्या भवन्ति त्रयोदश परिमादः ।
तच्छतम् ।
शतायुर्वै पुरुषश्शतेन्द्रियश्शतवीर्यस्तस्यैवेन्द्रियस्य वीर्यस्यावरुद्ध्यै ।
अथैता वाचः प्रवदन्ति ।
क्षुद्राः परिमादः कर्करी चालाबुश्च वक्रा च कपिशीर्ष्णी चैषीकी
चापाघाटलीका च वीणा च कश्यपी च भूमिदुन्दुभिश्चार्षभेण
चर्मणाभिविहतो वाणश्च शततन्त्रीः ।
अन्तरिक्षे दुन्दुभयो वितता वदन्ति ।
अधिकुम्भाः पर्यायन्ति ।
एता वाचः प्रवदन्ति सर्वस्यै वाचोऽवरुद्ध्यै कृत्स्नायै वाचः कृत्स्नां
वाचमवरुणधामहा इति ।
तद्यद्भूमिदुन्दुभिरार्षभेण चर्मणाभिविहतो वदति परमा वा ऋषभो
वाक्परमस्या एव वाचोऽवरुद्ध्यै ।
अन्तरिक्षे दुन्दुभयो वितता वदन्ति यैवान्तरिक्षे वाक्तामेव तेनावरुन्धते ।
अधिकुम्भाः पर्यायन्त्येतद्वै प्रत्यक्षं दिवो रूपं यन्मूर्धा यैवामुष्यां वाक्तामेव
तेनावरुन्धते ।
वाणं शततन्त्रीमाघ्नन्ति शतायुर्वै पुरुषश्शतेन्द्रियश्शतवीर्यस्तस्यैवेन्द्रियस्य
वीर्यस्यावरुद्ध्यै ४०४

मागधं च पुंश्चलूं च दक्षिणे वेद्यन्ते मिथुनीकारयन्ति मिथुनत्वाय प्रजननाय
।
प्र मिथुनेन जायते य एवं वेद ।
आर्यं च वर्णं शौद्रं चोपर्युपरि चात्वालं बस्ताजिने व्यायमयन्त्यार्षभे वा

चर्मणि ।
तयोरन्तर्वेद्यार्यो वर्णो भवति बहिर्वेदि शौद्रः ।
तयोरार्येण वर्णेन शौद्रं वर्णं ज्यापयन्ति ।
देवाश्च वा असुराश्चामुष्मिन्नादित्येऽस्पर्धन्त ।
तं देवा असुराणामवृञ्जत ।
तद्यदार्येण वर्णेन शौद्रं वर्णं ज्यापयन्त्येतमेव तद्द्विषतो भ्रातृव्यस्य वृञ्जते ।
तयोरान्यः क्रोशति प्रान्यश्शंसति ।
य आक्रोशति पुनात्येवैनान्सः ।
अथ यः प्रशंसति पूतेष्वेवैतेषु स इन्द्रियं वीर्यं दधाति ।
आजिं धावन्ति ।
परमं वा एतन्महो यदाजिः परमस्यैव महसोऽवरुद्ध्यै ।
संनद्धा भवन्ति ।
परमा वै संनद्धे त्विषिः ।
परमामेव तत्त्विषिमात्मसु दधते ।
पूर्णकुम्भा मार्जालीयं पर्यायन्ति पूर्णस्यैवावरुद्ध्यै ।
है महा है महा इति महसोऽवरुद्ध्यै ।
इदं मध्विदं मध्विति मध्विव वा एतद्देवेभ्यः क्रियते यन्महाव्रतम् ।
परमो वै मधुनि रसः परमस्यैव रसस्यावरुद्ध्यै ।
तदाहुरीश्वरा आद्या भवितोर्यद्धै महा इदं मध्विति गायन्तीः पर्येयुः ।
है महामेव गायन्तीः पर्येयुरिति ।
तदु होवाच शाट्यायनिर्यदा वै भवति यदास्त्यथाद्यो भवति ।
किमसतोऽद्युः ।
है महा इदं मध्वित्येव गायन्तीः पर्येयुरिति ४०५

ते स्तोष्यन्तो विपरायन्ति ।
अध्वर्युस्त्रिवृता शीर्ष्णा गायत्रेण स्तोष्यन्नग्रेण हविर्धाने उपविशति
मैत्रावरुणः पञ्चदशेन पक्षेण बृहता स्तोष्यन्दक्षिणत उपविशति
ब्राह्मणाच्छंसी सप्तदशेन पक्षेण रथन्तरेण स्तोष्यन्नुत्तरत उपविशति
नेष्टैकविंशेन पुच्छेन भद्रेण स्तोष्यन्पत्नीनां मध्य उपविशत्युद्गाता
पञ्चविंशेनात्मना राजनेन स्तोष्यन्नौदुम्बरीमधिरोहत्यूर्ग्वा अन्नमुदुम्बर ऊर्ज

एवान्नाद्यस्यावरुद्ध्यै ।
तामभिमन्त्रयते बृहद्रथन्तरे ते पूर्वौ पादौ वैरूपवैराजेऽपरौ
शाक्वररैवतेऽनूच्यानि छन्दांस्यास्तरणं यजूंषि विवयनं स्योनामासदं
सुषदामासदमिति ।
तस्यै प्रत्यवरोहो
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्
पिपृतां नो भरीमभिः
इति ४०६

ते सकृदेव सर्वे हिंकुर्वन्ति ।
तस्मात्पुरुषस्संविद्धो जायते ।
उद्गातुर्हिंकारमनु हिंकुर्वन्ति ।
तस्मादात्मनो वशमङ्गानि यन्ति ।
अध्वर्युस्त्रिवृता शीर्ष्णा गायत्रेणोद्गायति ।
इदं तच्छिरः प्रतिदधाति ।
तस्मादिदं शिरः प्रतिहितम् ।
पराचीभिरपुनरभ्यावर्तम् ।
तस्मादिदं शिरः पराङेव नेति नेति ।
नवभिरुद्गायति ।
तस्मादिदं शिरो न मेद्यतोऽनुमेद्यति न कृश्यतोऽनुकृश्यति ।
मैत्रावरुणः पञ्चदशपक्षेण बृहतोद्गायति ।
इमं तद्बाहुं प्रतिदधाति ।
तस्मादयं बाहुः प्रतिहितः ।
पराचीभिरपुनरभ्यावर्तम् ।
तस्मादिदं बाहुं सं चाञ्चति प्र च सारयति ।
तिस्रस्सतीः पञ्चदस करोति ।
तस्मादयं बाहुर्मेद्यतोऽनुमेद्यति कृश्यतोऽनुकृश्यति ।
वीर्यं वै बृहद्वीर्यं पञ्चदशः ।
तद्यत्पञ्चदशेन पक्षेण बृहतोद्गायति तस्मादयं बाह्वोर्वीर्यवत्तरः ।
तस्मादु दक्षिणं पक्षं वयांस्यनु परिप्लवन्ते ।

पुंसो वा एतद्रूपं यद्बृहत्स्त्रियै रथन्तरम् ।
तद्यदितो बृहता स्तुवत इतो रथन्तरेण तस्मात्पुमान्दक्षिणतो योषामुपशेते ।
ब्राह्मणाच्छंसी सप्तदशेन पक्षेण रथन्तरेणोद्गायति ।
इमं तं बाहुं प्रतिदधाति ।
तस्मादयं बाहुः प्रतिहितः ।
पराचीभिरपुनरभ्यावर्तम् ।
तस्मादिमं बाहुं सं चाञ्चति प्र च सारयति ।
तिस्रस्सतीस्सप्तदश करोति ।
तस्मादयं बाहुर्मेद्यतोऽनुमेद्यति कृश्यतोऽनुकृश्यति ४०७

नेष्टैकविंशेन पुच्छेन भद्रेणोद्गायति ।
इदं तत्पुच्छं प्रतिदधाति ।
तस्मादिदं पुच्छं प्रतिहितम् ।
पराचीभिरपुनरभ्यावर्तम् ।
तस्मादिदं पुच्छं सं चाञ्चति प्र च सारयति ।
तिस्रस्सतीरेकविंशतिं करोति ।
तस्मादिदं पुच्छं मेद्यतोऽनुमेद्यति कृश्यतोऽनुकृश्यति ।
उद्गाता पञ्चविंशेनात्मना राजनेनोद्गायति ।
इमं तदात्मानं प्रतिदधाति ।
तस्मादयमामा प्रतिहितः ।
पराचीभिरपुनरभ्यावर्तम् ।
तस्मादिदमात्मानं सं चाञ्चति प्र च सारयति ।
तिस्रस्सतीः पञ्चविंशतिं करोति ।
तस्मादयमात्मा मेद्यतोऽनुमेद्यति कृश्यतोऽनुकृश्यति ।
त एकैकयास्तुतयोद्गातारमुपसमायन्ति ।
ताभिरुद्गातोद्गायति ।
आत्मन्नेव तदङ्गानि प्रतिदधाति ।
तस्मादात्मन्नङ्गानि प्रतिहितानि ।
आत्मन्ययोत्तमयोद्गायति ।
तस्मादिदमात्मन उदिव शेते ४०८

प्रजापतिः प्रजास्ससृजानस्स व्यस्त्रंसत ।
तस्माद्देवता व्युदक्रामन् ।
तमिन्द्र एव देवतानां नाजहात् ।
स इन्द्रमब्रवीत्कथं न्वहमितः पुनरन्वाभवेयमिति ।
किंखलु वै तेऽस्तीत्यब्रवीत् ।
स्तो न्वै म इमौ प्राणापानाविति ।
यत्स्तो म इत्यब्रवीत्तत्स्तोमस्य स्तोमत्वम् ।
स्तुवत एनं स्वा अयं न श्रेष्ठ इति य एवं वेद ।
तमब्रवीत्स वा एताभ्यामेव संवत्सरं स्तुष्व ।
तं त्वैताभ्यामेव तुष्टुवानमुपरिष्टात् संवत्सरस्य सर्वा
देवतास्समभ्यवैष्यन्तीति ।
स एताभ्यामेव संवत्सरमस्तुत ।
तमेताभ्यामेव तुष्टुवानमुपरिष्टात्संवत्सरस्य सर्वा देवतास्समभ्यवायन्दिशां
रसं प्रवृह्यापां रसं वेदस्य रसमन्नस्य रसं महते व्रतं हरामो महते व्रतं हराम
इति वदन्तीः ।
ता यदब्रुवन्महते व्रतं हराम इति तन्महाव्रतस्य महाव्रतत्वम् ।
तदस्मै प्रायच्छन् ।
तदव्रतयत् ।
ताः प्रामोदन्त महाव्रतयतीति महाव्रतयतीति ।
तस्मादेतस्मिन्नहन्प्रैव मोदन्ते ।
देवता ह्यस्मिन्प्रामोदन्त ।
तदाहुर्मध्यतस्संवत्सरस्य विषुवत्युपेत्यम् ४०९

- अन्नं वै व्रतम् ।
मध्यतो वा अन्नमशितं धिनोतीति ।
तदु वा आहुरर्धं वा एतेऽन्नाद्यस्यावरुन्धते ये मध्यतस्संवत्सरस्य विषुवति
महाव्रतमुपयन्ति ।
संवत्सरः कृत्स्नमन्नाद्यं पचति ।
तदुपरिष्टात्संवत्सरस्योपेत्यं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्या इति ।

अथ ह स्माह नगरी जानश्रुतेय उग्रो वा एष मध्यमशीवा यन्महाव्रतम् ।
यद्वा उग्रो मध्यमशीवा भवति सर्वान्वै सोऽन्यान्व्यवकीर्याथैकश्शेते ।
तदुपरिष्टादेव संवत्सरस्योपेत्यं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्या इति ।
तत्पञ्चविंशं भवति ।
चतुर्विंशत्यर्धमासो वै संवत्सरः ।
अन्नाद्यं पञ्चविंश्यन्नाद्यमेवैतत्पञ्चविंश्योपधीयते ।
स यथा पूर्णोध्नीमुपसद्य दुहीतैवमेवैतत्पञ्चविंश्यान्नाद्यं दुह्रे ४१०

तदाहुस्तवश्शाव्यमेवैतस्याह्नः पृष्ठं कार्यमिति ।
देवा वै यदग्रे व्रतं समभरंस्तत्तवश्शाव्यमभवत् ।
तद्यदेतस्याह्नस्तवश्शाव्यं पृष्ठं भवति व्रतमेवैतत्प्रत्यक्षमुपयन्ति ।
तदु वा आहुर्दुष्प्रज्ञाना वै तवश्शाव्यस्य स्तोभाः पदवृत्तीः प्रस्तावाः
प्रतिहारा देवता निधनानि ।
वामदेव्यमेवैतस्याह्नः पृष्ठं कार्यमिति ।
आत्मा वै व्रतस्य वामदेव्यम् ।
स यथागत्य गृहान्न विन्देत्तादृक्तद्यदेतस्याह्नोऽन्यद्वामदेव्यात्पृष्ठं कुर्युः ।
तदाहु स्वारं न पृष्ठतायै ।
तत्स्थानं राजनमेवैतस्याह्नः पृष्ठं कार्यमिति ।
राजनेन वै प्रजापतिः प्रजानां राज्यमैश्वर्यमाधिपत्यमगच्छत् ।
तद्येन प्रजापतिः प्रजानां राज्यमैश्वर्यमाधिपत्यमगच्छत्तेन प्रजानां
राज्यमैश्वर्यमाधिपत्यं गच्छामेति ।
परोक्षमिव ह खलु वा एतद्वामदेव्यं यद्राजनम् ।
राजनं पृष्ठं भवति ।
वामदेव्यं मैत्रावरुणसाम ।
पञ्चनिधनं वामदेव्यं ब्रह्मसाम ।
सामाभिपूर्वमेवैतद्वामदेव्येन मध्यत आत्मानं संदधतो यन्ति ४११

तत्पञ्चस्तोभं भवति पञ्चपदवृत्तीकं पञ्चदेवतं पञ्चप्रतिहारं पञ्चनिधनम् ।
यः पाङ्क्तो यज्ञो ये पाङ्क्ताः पशवो यत्पाङ्क्तमन्नाद्यं ये पञ्चर्तवो यत्किं च पञ्च पञ्च
तस्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः ।

पञ्चनिधनं वामदेव्यं ब्रह्मसाम भवति ।
पञ्चधेव हि व्रतेन स्तुवते ।
तदतिच्छन्दस्सु भवति त्रिकद्रुकेषु महिषो यवाशिरमित्येतासु ।
अति वा एषोऽन्यानि छन्दांसि यदतिच्छन्दाः ।
अत्येतेऽन्यान्ये संवत्सरसदः ।
स्व एवैतच्छन्दसि प्रतितिष्ठन्ति ।
तद्वतिच्छन्दस्स्वेव तदेहिवदिहवद्भवत्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
तदाहुरिलान्दमेवैतस्याह्नोऽग्निष्टोमसाम कार्यमिति ।
इलान्देन वै प्रजापतिः प्रजाभ्य इरामन्नाद्यं प्रायच्छत् ।
तद्येन प्रजापतिः प्रजाभ्य इरामन्नाद्यं प्रायच्छत्तेनेरामन्नाद्यमवरुध्योत्तिष्ठामेति ।
तद्वतिच्छन्दस्स्वेव भवति ।
अति वा एषोऽन्यानि छन्दांसि यदतिच्छन्दाः ।
अत्येतेऽन्यान्ये संवत्सरसदः ।
स्व एवैतच्छन्दसि प्रतितिष्ठन्ति ४१२

तद्वैश्वानरीयासु भवति ।
वैश्वानरस्य ह्येतत्स्तोत्रम् ।
अशीत्यक्षरासु भवत्यश्नवामहा इति ।
समुद्र इवाक्षितमिव ह खलु वा एतच्छन्दो यदतिच्छन्दास्समुद्र
इवाक्षितास्तुष्टुवाना असामेति ।
तत्पक्षि भवति ।
पक्षि ह्येतस्याह्नो व्रतम् ।
ए व्रतमित्याह - अन्नं वै व्रतमन्नाद्यस्यैवावरुद्ध्यै ।
ए सुवरित्याह स्वर्गस्यैव लोकस्य समष्ट्यै ।
ए शकुना इत्याह वय एवैतच्छकुना भूत्वा स्वर्गं लोकं समश्नुवते ।
तदाहुर्वारवन्तीयमेवैतस्याह्नोऽग्निष्टोमसाम कार्यमिति ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
तान्वारवन्तीयेनैव वरणशाखामाच्छिद्यावारयत ।

यदवारयत तद्वारवन्तीयस्य वारवन्तीयत्वम् ।
तस्माद्वरणं भिषज्यमाहुः ।
तद्यदेतस्याह्नो वारवन्तीयमग्निष्टोमसाम भवति यदनेन कर्मणावारुत्स्महि तन्नो वारवन्तीयेन वारितमन्तत उपतिष्ठाता इति ।
तदेहिवदिहवद्भवत्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
तदु वा आहुर्यद्वावान्या वाङ्नातिवदति तदेतस्याह्नोऽग्निष्टोमसाम कार्यम् ।
यज्ञायज्ञीयं वावान्या वाङ्नातिवदति ।
वाग्वै यज्ञायज्ञीयम् ।
कुतो हि वाग्वाचमतिवदिष्यति ।
तस्मादेतस्याह्नो यज्ञायज्ञीयमेवाग्निष्टोमसाम कार्यमिति ४१३

अन्नं वै व्रतं श्रीर्वै व्रतम् ।
व्रतेन वा अन्नमद्यते व्रतेन श्रीराप्यते ।
तदाहुरुपरिष्टादेव संवत्सरस्योपेत्यम् ।
दूरूपं वै ततो व्रतं विज्ञायते यत्रोपजायत इति ।
तत्पञ्चविंशं भवति ।
चतुर्विंशत्यर्धमासो वै संवत्सरोऽन्नाद्यं पञ्चविंशत्यन्नाद्यमेवैतत्पञ्चविंश्योपधीयते ।
पञ्चविंशो ह खलु वै पुरुषः ।
पुरुषस्यैतत्स्तोत्रमित्याहुर्दश वै पुरुषस्य हस्त्या अङ्गुलयो दश पद्याश्चत्वारि प्राङ्गाण्यात्मा पञ्चविंशष्षडिमानि पर्वाणि षडिमानि षडिमानि षडिमान्यात्मा पञ्चविंशो द्वादशेमाः परिशवो द्वादशेमा आत्मैव पञ्चविंशः ।
पुरुषं वावैतेन संस्कुर्वन्ति पुरुषं प्रजनयन्ति ।
तदाहुस्सर्वमेवैतदहः पञ्चविंशमुपेत्यमिति ।
पञ्चविंशमेव शिर उपेयुः पञ्चविंशमन्यं पक्षं पञ्चविंशमन्यं पञ्चविंशं पुच्छं पञ्चविंशमात्मानमेवं व्रतस्योपाप्तिरङ्गेनाङ्गेन व्रतमुपाप्नवामेति ।
तस्मादथ ह स्माहर्जिश्वा वातवात एकं वावैतत्स्तोत्रं सत्तत्पञ्चधा विहृत्य स्तुयुः पञ्चभिरेव शिर स्तुयुः पञ्चभिरन्यं पक्षं पञ्चभिरन्यं पञ्चभिः पुच्छं पञ्चभिरात्मानम् ।

तथैकमेव पञ्चविंशं नातिरिच्यते ।
एवं व्रतस्योपाप्तिरिति ४१४

अथ ह स्माहारुणिर्न वा अन्यान्यङ्गान्यात्मना समानि ।
नोऽन्यैरङ्गैरात्मा समः ।
विषमेण वै पुरुषः कल्पते विषमेण समः ।
तद्यथाविधमेवैतदेवमुपेत्यमिति ।
ब्रह्म वै व्रतस्य शिरो द्यावापृथिवी पक्षावन्तरिक्षमात्मा साम पुच्छम् ।
गायत्रं वै व्रतस्य शिरस्तद्धि ब्रह्म ।
बृहद्रथन्तरे पक्षौ ते हि द्यावापृथिवी ।
वामदेव्यमात्मा तद्ध्यन्तरिक्षम् ।
यज्ञायज्ञीयम्पुच्छं तद्धि साम ।
नवभिश्शिर स्तुवन्ति ।
नव वै पुरुषे प्राणाः ।
प्राणानामेवैषा संमा प्राणानामृद्धिः ।
तस्मिन्गायत्रसामाध्यूहन्ति ।
प्राणो वै गायत्रसाम ।
प्राणमेव तच्छीर्षन्दधति ।
तस्माच्छीर्षन्प्राणो हितः ।
ते प्रत्यञ्चो निःसृप्यार्कशीर्षमिति तेन स्तुवते ।
ग्रीवा ह तास्तद्यदिमाँल्लोकाननुदाख्यायमिव गायति ।
शिर्तश्चैव तदात्मानं च संदधाति ।
तस्माच्छिरश्चात्मा च संहितौ ।
तदाहुरपञ्चविंशं भवत्यतिरिच्यते तस्मादेतदत्र न कार्यमिति ४१५

त एतेन त्रिवृता स्तोमेन रथन्तरमभ्यायन्ति ।
ब्रह्म वै त्रिवृदन्नं रथन्तरम् ।
ब्रह्मणैव तदन्नाद्यं स्पृणवन्ति ।
तस्मिन्पञ्चदशं स्तोममध्यूहन्ति ।
वज्रो वै पञ्चदशोऽन्नं रथन्तरम् ।

वज्रेणैव तदन्नाद्यं परिगृह्णन्ति ।
त एतेन पञ्चदशेन सप्तदशमभ्यायन्ति ।
वज्रो वै पञ्चदशो विट्सप्तदशः ।
वज्रेणैव तद्विशं स्पृणवन्ति ।
तस्मिन्ब्रह्मसामाध्यूहन्ति ।
क्षत्रं वै बृहत् ।
क्षत्रमेव तद्विश्यध्यूहन्ति ।
स तस्मात्क्षत्रियो विश्यध्यूढः ।
तदाहुरितो बृहता स्तोतव्यमितो रथन्तरेणेति ।
प्राणमिव वा इदं सर्वं प्रत्युद्यत्या इति ।
तदु ह स्माह कीजो वाकायनः पृष्ठतो वा एतेऽन्नाद्यं कुर्वते य इतो बृहता स्तुवत इतो रथन्तरेण ।
अन्नं वै रथन्तरम् ।
दक्षिणतो वा अन्नाद्यमवरुद्धमुपाचरति ।
तस्मादित एव बृहता स्तुवत इतो रथन्तरेणान्नाद्यस्यावरुद्धया इति ।
य उ एवैष पञ्चदश स्तोमस्स उ प्रत्युद्यत्या इति ।
तस्मादु सव्यं पक्षं वयांस्यनु परिप्लवन्ते ।
त एतेन सर्वेणैकविंशं प्रतिष्ठामायन्ति ।
द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ।
सर्वस्मिन्वा एषोऽस्मिन्नधि प्रतिष्ठितः ।
तद्यस्मिन्नेष सर्वस्मिन्नधि प्रतिष्ठितस्तस्मिन्सर्वस्मिन्नधि प्रतिष्ठामेत्येतं प्रतिष्ठापयन्ति ४१६

तस्मिन्भद्रं सामाध्यूहन्ति ।
प्रजा वै भद्रम् ।
पुच्छतो वै प्रजाः प्रजायन्ते ।
पुच्छत एवैतत्प्रजनने प्रजां दधते प्रजात्यै ।
तत्रापि श्रेयः कार्यमाहुः ।
प्रजा वै भद्रं प्रजायै या प्रजा सा श्रेयः ।
अपि ह प्रजायै प्रजां पश्यते य एवं वेद ।

तदाहुस्सकृदेव सर्वेण स्तोतव्यं वयसोऽनुरूपं कृत्वेति ।
यद्वै वयः प्रपतति सर्वाण्यङ्गानि नानाशो युक्त्वा प्रपतति ।
अथ यदुपविशति सर्वाण्यङ्गान्यात्मानमुपसमाहृत्योपविशतीति ।
तद्यत्सकृदेव सर्वेण स्तुवन्ति यथा वयः प्रपतत्सर्वाण्यङ्गानि नानाशो युक्त्वा प्रपतेत्तादृक्तत् ।
अथ यदेकैकया स्तुतयोपसमायन्ति यथा वय उपविशत्सर्वाण्येवाङ्गान्यात्मानमुपसमाहृत्योपविशेत्तादृगु तत् ।
अथ ह स्माह भाल्लबेयो नैतस्मिन्नहन्नन्य उद्गातुस्साम्नार्त्विज्यं कुर्यात् ।
श्रीर्वा एतदहः श्रीरुद्गाता ।
यदेतस्मिन्नहन्नन्य उद्गातुस्साम्नार्त्विज्यं कुर्यादनववदितैनानववदेदनभ्यारोढाभ्यारोहेत्पापवस्यसं स्यात्स वैवानुपरिसर्पं संस्थापयेत्स वैकैकया स्तुतयोपसमेयादिति ।
तदिव त्वत्र परिचक्षते यन्नवविंश स्तोमस्संपद्यते ।
तदाहुर्नवविंश स्तोमस्संपद्यते वाश्यमानानुपतेत्स्वं यूथं जानमेजय गौर्गास्साहस्रयाजिन शलकाण्डाणि विगच्छतीतीव वा एता यथायथमपियन्तीति ।
शिर एव शीर्षन्नाप्येति पक्षौ पक्षे पुच्छं पुच्छ आत्मानमिदात्मन्नाप्येति ।
नवविंश स्तोमस्संपद्यते कार्यमेवाप्येवमिति ४१७

आसन्दीमुद्गाताधिर्हति प्लेङ्खं होता कूर्चावध्वर्यू कूर्चसद एवान्या होत्रा भवन्ति ।
तदाहुर्न दीक्षितेनासन्द्यधिरुह्येति ।
उत्थिता ह खलु वा एतदहरागच्छन्ति ।
यद्वावादो दशममहस्तदेवोक्थानि ।
इयमधिरुह्यैवेत्याहुः ।
अन्तरिक्षसाच्येव वै श्रीः ।
एवं श्रिया उपाप्तिरिति ।
वाणश्शततन्त्रीर्भवति ।
शतायुर्वै पुरुषश्शतेन्द्रियश्शतवीर्यस्तस्यैवेन्द्रियस्य वीर्यस्यावरुद्ध्यै ।
तदाहुर्न वाणश्शततन्त्रीः कार्यो यर्हि वा एतस्य

ब्राह्मणास्सन्तानमविदुस्सकृत्सन्ततो वा एष तर्हि राज्ञां सभासु प्रविशामि ब्रुवन्नशयत्तं किं तत्कुर्युर्यस्तथैतर्हि न यथा पुरेति ।
तदु वा आहुः किं खलु तथैतर्हि यथा पुरा ।
एकसाम्ना ह स्म वै पुरा स्तुत्वा स्वर्गं लोकं गच्छन्त्यथो अवभृथादेवोदेत्य कार्यः ।
एवं वाणश्शततन्त्रीर्वाचः कृत्स्नत्वायेति ।
तस्यैष सन्तानो भूर्भुव स्वर्वदा वदा वदा वदी वदा वदोरुः पृथुस्सुगस्सुगन्तुः कर्मः करणः करः करिष्यन्नैन्द्रीं वाचं बृहतीं विश्वरूपां शतायुषं प्रवद देव वाणेति ।
अथेन्द्रेणतया चेषीकया वेतसशाखया चोल्लिखति मनो ज्योतिरिति वाक्सत्यमिति मनो भद्र इति ४१८

अहीनसं हाश्वत्थिं पुत्रा उपसमेत्योचुस्सत्रायामो वै भगवोऽनु नश्शाधीति ।
स होवाच मैवं वोचत ।
दुरुपधर्षो वै संवत्सरः ।
यथा वै रथनाभावराः प्रतिष्ठिता एवं वै संवत्सरे सर्वे मृत्यवः प्रतिष्ठिताः ।
अथैतदेवं ब्रूथेति ।
ते होचुस्तेषां वै त्वमेव भिषगसि त्वं प्रायश्चित्तिरन्वेव नश्शाधीति ।
तद्धास्य प्रियमास ।
स होवाचैवं चेद्ब्रूथ षट्सु स्म प्रतिष्ठासु प्रतितिष्ठत ।
षड्भ्य स्म हरित्मतीभ्यो मेत ।
चतुश्चक्रं स्म पारयिष्णुं समारोहत ।
स्वर्गस्य स्म लोकस्य पथोऽञ्जसायनान्मेत ।
संवत्सरस्य स्म व्याप्तमतिप्लवध्वम् ।
दैव्यं स्म मिथुनमुपेत ।
प्रस्पष्टात्स्म सार्थान्मा हीयध्वम् ।
अच्युतं स्म यज्ञस्य मा च्यावयत ।
यज्ञस्य स्म श्वस्तनमुपेत ।
वाचं स्म सत्यवतीमुपेत ।
वर्षिष्ठान्स्माजौ युङ्ग्ध्वमुत्तरावतीं स्म श्रियमुपेत ।

स्वर्गे स्म लोके प्रतितिष्ठत ।
ग्रामात्स्मारण्यं मेत ।
ज्ञानात्स्माविर्भवान्मेत ।
दैव्यात्स्म विवाहान्मेत ।
यज्ञात्स्म मेतेति ।
एतानि हैनाननुशशास ।
ते होचुरनु न इदमशिषः परोक्षेणेव ।
तथा नोऽनुशाधि यथेदं विजानीयामेति ४१९

स होवाच यद्वोऽवोचं षट्सु स्म प्रतिष्ठासु प्रतितिष्ठेति निधनवन्ति स्म पवमानमुखेभ्यो मा च्यावयतेत्येव वस्तदवोचमिति ।
एषा ह वै साम्नः प्रतिष्ठा यन्निधनम् ।
षडेतानि निधनवन्ति भवन्ति षड्तवस्संवत्सरः ।
स यथा वृक्षमाक्रमणैराक्रममाण इयादेवमेवैतैस्सामनिधनै स्वर्गं लोकं रोहन्तो यन्ति ।
तस्मान्निधनवन्ति पवमानमुखेभ्यो न च्यावयितव्यानि ।
अथ यद्वोऽवाचं षड्भ्य स्म हरित्मतीभ्यो मेतेतीळाविभक्तिरेव वस्तदवोचमिळाभि स्म बृहतीरारभध्वमित्येव वस्तदवोचमिति ।
ता एताष्षड्ढरित्मतीः ।
स यथा षड्ढरित्मतीरश्वतरीस्संयुज्य यत्र जिगमिषेत्तद्गच्छेदेवमेवैताभिरिळाविभक्तिभि स्वर्गं लोकमभ्यश्नुवते ।
तस्मादिळाभिरेव बृहतीरारभ्याः ४२०

अथ यद्वोऽवोचं चतुश्चक्रं स्म पारयिष्णुं समारोहतेति प्र सोम देववीतये परीतो षिञ्चता सुतमभि सोमास आयवः पुनानस्सोम धारयेत्येता एव वस्तच्चतस्रो बृहतीरवोचमिति ।
एष ह वै चतुश्चक्रः पारयिष्णुर्यदेता बृहत्यः ।
स यथा चतुश्चक्रेण पारयिष्णुना यत्र जिगमिषेत्तद्गच्छेदेवमेवैताभिर्बृहतीभि स्वर्गं लोकं गच्छन्ति ।
अथो एष वाव देवरथः ।

स यथा देवरथेन सुयुक्तेन यत्र जिगमिषेत्तद्गच्छेदेवमेवैताभिर्बृहतीभि स्वर्गं लोकं गच्छन्ति ।
तस्मादेता एव बृहतीः कार्याः ।
अथ यद्वोऽवोचं स्वर्गस्य स्म लोकस्य पथोऽञ्जसायनान्मेतेत्यौशनकावे एव वस्तदवोचमिति ।
एष ह वै स्वर्गस्य लोकस्य पन्था अञ्जसायनो यदौशन्कावे ।
औशनं पुरस्ताद्भवति कावमुपरिष्टात् ।
तावेतत्पितापुत्रावेव नावमजतः ।
स यथा पितापुत्रौ नावमजन्तौ तामरिष्टां स्वस्ति पारं गमयेयातामेवमेवैतदौशनकावाभ्यां स्वस्त्यरिष्टा उदृचमश्नुवते ।
तस्मादौशनकावे नावसृज्ये ४२१

अथ यद्वोऽवोचं संवत्सरस्य स्म व्याप्तमतिप्लवध्वमित्यभीवर्तं वा स्म पवमाने कुरुध्वं प्लवं वेत्येव वस्तदवोचमिति ।
एतद्ध वै संवत्सरस्य व्याप्तं यदृतवो यन्मासा यदृतुसन्धयः ।
तदु वा आहुर्य ऋतवो ये मासा य ऋतुसन्धयोऽहोरात्रे वाव तद्भवतः ।
अहोरात्रे वाव संवत्सरस्य व्याप्तमिति ।
तत्प्लवः कार्यः ।
अव वै गौः प्लवतेऽव हस्त्यव पुरुषः प्लवो नावप्लवते ।
तदेतेन प्लवेनानवप्लाविनैतत्संवत्सरस्य व्याप्तमतिप्लवामहा इति ।
तदाहुरस्ति परिचक्षा प्लवातिप्लिता इति वै निन्दन्ति ।
यो वै जीयते यो हीयते तमाहुरप्लोष्टेति ।
अभीवर्त एव कार्यः ।
तस्यैकाक्षरं निधनं भवति ।
एकाक्षरा वै वाक् ।
वागु कृत्स्नं ब्रह्म ।
तदेतेन कृत्स्नेन ब्रह्मणा यथा चर्मणा कुदीकराटकान्प्रावृत्यातीयादेवमेवैतत्संवत्सरस्य व्याप्तं प्रावृत्यातियन्ति ।
अथो यथा तप्तान्पांसूनुपानह्यतीयात्तादृक्तत् ।
तस्मादभीवर्त एव कार्यः ।

अथ यद्वोऽवोचं दैव्यं स्म मिथुनमुपेतेत्युच्चा ते जातमन्धसा स्वादिष्ठया मदिष्ठयेत्येते एव वस्तद्गायत्र्याववोचमिति ।
एतद्वै दैव्यं मिथुनं यदेते गायत्र्या उच्चा त इति पुंसो रूपं स्वादिष्ठयेति स्त्रियै ।
तदेतन्मिथुनं प्रजननं क्रियते ।
प्र मिथुनेन जायते य एवं वेद ।
तस्मादेते एव गायत्र्यौ कार्ये ४२२

अथ यद्वोऽवोचं प्रस्पष्टात्स्म सार्थान्मा हीयध्वमिति बृहद्रथन्तरे एव वस्तदवोचमिति ।
एष ह वै प्रस्पष्टः सार्थो यद्बृहद्रथन्तरे ।
एते ह वा एतान्यरण्यान्यतिनयतो यान्येतानि सवनारण्यानि ।
तदेतद्षड्ग्राममिति त्रिवृत्स्तोमः ।
अस्ति परस्तरामिति पञ्चदशः ।
अस्ति परस्तरामिति सप्तदशः ।
अस्त्येव परस्तरामित्येकविंशः ।
श्रान्त एनद्गच्छेदिति त्रिणवः ।
आसायैनदिति त्रयस्त्रिंशः ।
अथ यथैकां वा द्वे वान्तरोष्यैव तद्यच्छन्दोमाः ।
क्षत्रं वा एते साम्नां यद्बृहद्रथन्तरे ।
क्षत्रिय उ वा अरण्यस्यातिनेता ।
तद्यत्र वै क्षत्रेणारण्येनैति यो वै तत्र तं दस्युर्जानाति यद्यत्स्याल्वं वा मधु वा भवति तेनास्मा आविर्भवति ।
अथ येऽन्ये नंष्ट्राः परिपन्थिनः पराञ्चस्ते कक्षं गहनान्यभ्यवयन्ति ।
स यथा क्षत्रियेण सहाबिभ्यदरण्यमतीयादेवमेवैतद्बृहद्रथन्तराभ्यामतियन्ति ।
अथो एष वाव देवयानः पन्था यत्पृष्ठ्यष्षडहः ।
ते देवा एतेन देवयानेन पथैतं स्वर्गं लोकं गत्वान्वागमान्मनुष्याणामबिभयुः ।
ते होचुरुप तज्जानीत यथा नो मनुष्या नान्वागच्छानिति ।

त एतान्यज्ञमुहो रक्षांसि प्रत्यौहन् ।
तद्यद्दीक्षितो मीयते यद्बध्यते एते हैव तत्कुर्वन्ति ।
तद्बृहद्रथन्तरे एवातिनयतः ।
तान्यानेते घ्नन्त्यनेत्रान्हैव तान्घ्नन्ति ये बृहद्रथन्तरे अवसृजन्ति ।
तस्माद्बृहद्रथन्तरे नावसृज्ये ४२३

अथ ह स्माह नगरी जानश्रुतेयो वृकस्य चरतस्सर्पणमिति ।
को वृक इति ।
प्रजापतिरिति ।
कः प्रजापतिरिति ।
संवत्सर इति ।
तस्य किं सर्पणमिति ।
अहोरात्रे इति ।
के अहोरात्रे इति ।
बृहद्रथन्तरे इति ।
एताभ्यां ह वा एष एतत्सर्पति ।
तौ प्राणापानौ ताविमौ लोकौ यद्दैव्यं मिथुनम् ।
तौ हैतत्संवत्सरस्यैव पादावारभ्य यन्ति ।
ते स्वस्त्यरिष्टा उदृचमश्नुवते ।
अथ यद्वोऽवोचमच्युतं स्म यज्ञस्य मा च्यावयतेति वामदेव्यमेव वस्तदवोचमिति ।
एतद्ध वै यज्ञस्याच्युतं यद्वामदेव्यम् ।
प्राणो हि वामदेव्यम् ।
प्राणान्नेदवच्छिद्यामहा इति ।
अथ यद्वोऽवोचं यज्ञस्य स्म श्वस्तनमुपेति गौरिवीतमेव वस्तदवोचमिति ।
एतद्ध वै यज्ञस्य श्वस्तनं यद्गौरिवीतं प्रजा श्वस्तनं पशव श्वस्तनं स्वर्गो लोक श्वस्तनम् ।
स यथा क्षेत्रज्ञो ग्रामं यापयेददस्सुगं तेन यास्यामोऽदस्सुतीर्थं तेन तरिष्यामोऽदस्सुवसं तद्वत्स्याम इत्येवमेतौ गौरिवीतस्योदासाववसानदर्शौ चरतः ।

अथो यथा सोमप्रवाकस्सोमं प्राहैवमेतौ गौरिवीतस्योदासौ देवेभ्यस्सोमं प्राहतुः ।
प्रोक्तसोमो ह स तां रात्रिं वसति यस्मिनहनि गौरिवीतं भवति ।
अथो हैनं देवा ईद्धन्ते धावत श्वो यष्टेति ।
तद्यदेकाहे गौरिवीतं न कुर्वन्ति नेद्देवाँल्लापयामहा इति ४२४

अथ यद्वोऽवोचं वाचं स्म सत्यवतीमुपेतेति पुरोजिती वो अन्धस इत्येतामेव वस्तदनुष्टुभमवोचमिति ।
एषा वै वाक्सत्यवती यदेषानुष्टुप् ।
अनुष्टुप्पूर्वा भवति गायत्र्या उत्तरे ।
वाग्वा अनुष्टुप्प्राणो गायत्री ।
एतद्वै वाचस्सत्यं यत्प्राणः ।
सैषा वाक्सत्यवती ।
अथो यथान्यौ नवतरौ चक्रावुपास्येदेवमेवैतामनुष्टुभं त्र्यहमुखेषु पर्याहरन्ति स्वर्गस्य लोकस्य समष्ट्यै ।
तस्मादेषैवानुष्टुप्कार्या ।
अथ यद्वोऽवोचं वर्षिष्ठान्स्माजौ युङ्ध्वमित्यग्निष्टोमसामान्येव वस्तदवोचमिति ।
एते ह वै वर्षिष्ठा आजौ युज्यन्ते यदग्निष्टोमसामानि यानि वै तान्यद्व्यन्त्यहानि ।
अथ यद्वोऽवोचमुत्तरावतीं स्म श्रियमुपेतेति पृष्ठान्येव वस्तदवोचमिति ।
एषा ह वा उत्तरावती श्रीर्यत्पृष्ठानि त्रिवृत्पञ्चदशं सप्तदशमेकविंशं त्रिणवमित्या त्रयस्त्रिंशादुत्क्रामन्ति ।
अथ यद्वोऽवोचं स्वर्गे स्म लोके प्रतितिष्ठतेति यज्ञायज्ञीयं स्म वोऽग्निष्टोमसामास्त्वित्येव वस्तदवोचमिति ।
एष ह वै स्वर्गो लोको यद्यज्ञायज्ञीयमसावादित्य एकविंशः ।
एतस्मिन्नेव तत्स्वर्गे लोकेऽन्ततः प्रतितिष्ठन्ति ४२५

अथ यद्वोऽवोचं ग्रामात्स्मारण्यं मेतेत्याहार्याणि स्म सामानि माभिध्यायतेत्येव वस्तदवोचमिति ।

स यथा ग्रामाद्ग्रामं संव्रजेदबिभ्यदेवं तद्यदग्निष्टोमसामानि ।
अथ यथारण्यादरण्यं यन्स कण्टकेन वा शलाकया वा परितृण्ण
आगच्छेदथो इयतो नोऽव्यात्सुरियन्तो वि विध्यमानानाममुच्महीत्येवं तद्यदाहार्याणि सामानि ।
तस्मादाहार्याणां साम्नां नाशयितव्यानि ।
अथ यद्वोऽवोचं ज्ञानात्स्माविर्भवान्मेतेति सुज्ञानमेव वस्तदवोचमिति ।
अथ यद्वोऽवोचं दैव्यात्स्म विवाहान्मेतेति श्यैतनौधसे एव वस्तदवोचमिति ।
अथ यद्वोऽवोचं यज्ञात्स्म मेतेति श्रद्धा स्म वो मा व्यैदित्येव वस्तदवोचमिति ।
एषा ह वै देवानां राज्ञि यच्छ्रद्धा ।
सैषा प्रातरुपक्रम्य तिष्ठति ।
तां देवा उपतिष्ठन्ते याद्रीच्येष्यति तद्र्यञ्च एष्याम इति ।
तस्यै सर्वे देवा अनुवर्त्मानस्सायं जुषन्ते ।
तमाविशति स जुहोति स यजते ।
तद्देवा उपजीवन्ति ।
एतां हैभ्यस्तत्संवत्सरेऽरिष्टिमुवाच ।
ते य एवं विद्वांसस्संवत्सरमुपयन्ति स्वस्त्येवारिष्टा उदृचमश्नुवते ४२६

पुरुषं वावैतदासते यत्संवत्सरम् ।
पुरुषो वै प्रजापतिः प्रजापतिस्संवत्सरः ।
तमेवैतदीप्सन्त आसत आत्मानं यज्ञं कृत्वा ।
तस्य पादावेव प्रायणीयोऽतिरात्रः ।
तयोर्यदधस्ताच्छुक्लं तदह्नो रूपं यदुपरिष्टात्कृष्णं तद्रात्रेर्नखान्येव नक्षत्राणामिमान्येव चत्वार्यूर्वष्ठीवानि आरम्भणीयमहरयमभिप्लवोऽयं पृष्ठ्योऽयमितोऽर्वाचीनोऽभिजिदयं विश्वजिदिमे त्रय स्वरसामान इमे त्रयोऽयं विषुवानिदं महाव्रतीयमहरयमुदयनीयोऽतिरात्रः ।
इदमह्नो रूपमिदं रात्रेर्नखान्येव नक्षत्राणाम् ।
तमेतं पुरुषं प्रजापतिं संवत्सरमाप्नुवन्त्यात्मानमेव यथाङ्गम् ४२७

ते मनोमयाः प्राणमयाश्चक्षुर्मयाः श्रोत्रमया वाङ्मया ऋङ्मया यजुर्मयास्साममया ब्रह्ममया हिरण्मया अमृतास्संभवन्ति ।
देवासुरा अस्पर्धन्त ।
ते देवाः प्रजापतिमुपाधावञ्जयामासुरानिति ।
सोऽब्रवीन्न वै मां यूयं वित्थ नासुराः ।
यद्वै मां यूयं विद्यात ततो वै यूयमेव स्यात परासुरा भवेयुरिति ।
तद्वै ब्रूहीत्यब्रुवन् ।
सोऽब्रवीत्पुरुषः प्रजापतिस्संवत्सर इति मोपाद्ध्वम् ।
ततो वै यूयमेव भविष्यथ परासुरा भविष्यन्तीति ।
तं पुरुषः प्रजापतिस्संवत्सर इत्युपासत ततो वै देवा अभवन्परासुराः ।
स यो हैवं विद्वान्पुरुषः प्रजापतिस्संवत्सर इत्युपास्ते भविष्यत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति ४२८

अथाधिदैवतम् ।
अयमेव लोकः प्रायणीयोऽतिरात्रः ।
तस्य यच्छुक्लं तदह्नो रूपं यत्कृष्णं तद्रात्रेश्चित्राण्येव नक्षत्राणाम् ।
संवत्सर एव स्वर्गो लोक आरम्भणीयमहर्ब्रह्माभिप्लवः क्षत्रं पृष्ठ्योऽग्निरभिजिद्विश्वे देवा स्वरसामान आदित्यो विषुवानिन्द्रो विश्वजिद-होरात्रे एव गोआयुषी लोका एव द्वादशाहस्याहानि प्रजापतिरेव महाव्रतीयमहरसावेव लोक उदयनीयोऽतिरात्रः ।
इदमह्नो रूपमिदं रात्रेर्नक्षत्राण्येव नक्षत्राणाम् ४२९

ते सतिसदो ह वा अन्ये सत्रसदोऽन्ये ।
ते यां प्रायणीयमतिरात्रमुपेत्य वसन्त्यस्मिन्नेव तां लोके वसन्ति ।
तद्यदस्मिँल्लोकेऽन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युरस्मिन्निदमेतर्हि लोके स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यामारम्भणीयमहरुपेत्य वसन्ति संवत्सर एव तां स्वर्गे लोके वसन्ति ।
तद्यत्संवत्सरे स्वर्गे लोकेऽन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विदुस्संवत्सर इदमेतर्हि स्वर्गे लोके स्मस्तेषां नो न का

चनार्तिरस्तीति ।
अथ यामभिप्लवमुपेत्य वसन्ति ब्रह्मरायेव तां वसन्ति ।
तद्यद्ब्रह्मरायन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युर्ब्रह्मणीदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां पृष्ठ्यमुपेत्य वसन्ति च्चत्र एव तां वसन्ति ।
तद्यत्च्चत्रेऽन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युः च्चत्र इदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां अभिजितमुपेत्य वसन्त्यग्नावेव तां वसन्ति ।
तद्यदग्नावन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युरग्नाविदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां स्वरसाम्न उपेत्य वसन्ति विश्वेषु एव तां देवेषु वसन्ति ।
तद्यद्विश्वेषु देवेष्वन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युर्विश्वेष्विदमेतर्हि देवेषु स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां विषुवतमुपेत्य वसन्त्यादित्य एव तां वसन्ति ।
तद्यदादित्येऽन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युरादित्य इदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां विश्वजितमुपेत्य वसन्तीन्द्र एव तां वसन्ति ।
तद्यदिन्द्रेऽन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युरिन्द्र इदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां गोआयुषी उपेत्य वसन्त्यहोरात्रयोरेव तां वसन्ति ।
तद्यदहोरात्रयोरन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युरहोरात्रयोरिदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां द्वादशाहस्याहान्युपेत्य वसन्ति लोकेष्वेव तां वसन्ति ।
तद्यल्लोकेष्वन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युर्लोकेष्विदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां महाव्रतीयमहरुपेत्य वसन्ति प्रजापतावेव तां वसन्ति ।
तद्यत्प्रजापतावन्नाद्यं तदेव तेनावरुन्धते ।
अथो ह विद्युः प्रजापताविदमेतर्हि स्मस्तेषां नो न का चनार्तिरस्तीति ।
अथ यां उदयनीयमतिरात्रमुपेत्य वसन्त्यमुष्मिन्नेव तां लोके वसन्ति ।
तद्यदमुष्मिँल्लोकेऽन्नाद्यं तदेव तेनावरुन्धते ।

अथो ह विद्युरमुष्मिन्निदमेतर्हि लोके स्मस्तेषां नो न का चनार्तिरस्तीति
४३०

ते सतिसदो ह वा अन्ये सत्रसदोऽन्ये ।
सत्येवान्ये सीदन्ति सत्रमन्य आसते ।
ते हैव सतिसदो य एवं विद्वांसो दीक्षन्ते ।
एतासु हि देवतासु सति सीदन्तो यन्ति ।
ते ह ते सर्वं पाप्मानमपघ्नते ।
अथ य एते शिखाच्छिन्नाः प्रसर्पमिच्छमाना आवेष्टन्ते ते हैव सत्रसदः ।
य एवं विद्वांसमुपवदति यथैता देवता ऋत्वानीयादेवं नेत्येतासु ह्येवैनं देवतासु प्रपन्नमेतासु वसन्तमुपवदति तस्य हैतस्य नैव का चनार्तिरस्ति य एवं वेद ।
य एवैनमुपवदति स आर्तिमार्च्छति ।
तानि वा एतानि संवत्सरस्य दशैवाहान्यतिरात्रावारम्भणीयमहाव्रतीये अहनी पृष्ठ्याभिप्लवौ विश्वजिदभिजितौ स्वरसामानश्च विषुवांश्च ।
प्रवतिर्ह कौशान्तेयः कुसुर्बिन्दस्यौद्दालकेर्ब्रह्मचार्यास ।
तं होवाच सोम्य सूतपुत्र कति ते पिता संवत्सरस्याहान्यमन्यतेति ।
दशेति होवाच ।
दश वावेति होवाच दशाक्षरा विराडन्नं विराड्वैराजो यज्ञः ।
कत्येवामन्यतेति ।
नवेति होवाच ।
नव वावेति होवाच ।
नव वै पुरुषे प्राणाः ।
प्राणैरु यज्ञस्तायते ।
कत्येवामन्यतेति ।
आष्टाविति होवाच ।
अष्टौ वावेति होवाच ।
अष्टाक्षरा गायत्री ।
गायत्रो यज्ञः ।
कत्येवामन्यतेति ।

सप्तेति होवाच ।
सप्त वावेति होवाच ।
सप्त वै छन्दांसि छन्दोभिर्यज्ञस्तायते ।
कत्येवामन्यतेति ।
षडिति होवाच ।
षड्वावेति होवाच ।
षड्वा ऋृतवस्संवत्सरः ।
संवत्सरो यज्ञः ।
कत्येवामन्यतेति ।
पञ्चेति होवाच ।
पञ्च वावेति होवाच ।
पाङ्क्तो यज्ञः ।
पाङ्क्ताः पशवः ।
पशवो यज्ञः ।
कत्येवामन्यतेति ।
चत्वारीति होवाच ।
चत्वारि वावेति होवाच ।
चतस्रो दिशश्चतुष्पदाः पशवश्चत्वारि छन्दांसि यज्ञवाहो गायत्री त्रिष्टुब्जगत्यनुष्टुप् ।
कत्येवामन्यतेति ।
त्रीणीति होवाच ।
त्रीणि वावेति होवाच ।
त्रिषवणो यज्ञस्त्रयः प्राणापानव्यानास्त्रय इमे लोकाः ।
कत्येवामन्यतेति ।
द्वे इति होवाच ।
द्वे वावेति होवाच ।
ऋहोरात्रावेवेति ।
द्वाविमौ लोकावाविष्टमाविव द्वौ प्राणापानौ द्विपात्पुरुषः ।
कत्येवामन्यतेति ।
एकमिति होवाच ।

एकं वावेति होवाच ।
अहरेवेति ।
तदिदमहरभूदह श्वो भविता ।
तदेतदहरहरित्येव प्रोच्यते ।
सा हैषा संवत्सरस्य प्रतिष्ठा यदहः ।
स यो हास्यतां प्रतिष्ठां वेद प्रतितिष्ठति ।
एषो एवास्यैकता ।
स यो हास्यैतामेकतां वेदैकधा हैनं भूत्वा श्रीस्सचते ।
तदाहुर्भूतं भूया३ भविष्या३दिति ।
भूतमेव भूयो भविष्यत इति ब्रूयात् ।
भूता इमे लोका भूतोऽयमग्निर्वायुरसावादित्य इन्द्रश्चन्द्रमाः ।
एते वै भूतस्य भविष्यतश्चेशते ।
तस्माद्भूतमेव भूयो भविष्यत इति ४३१

अथैष वैश्वानरः प्रायणीयोऽतिरात्रः ।
तस्यैषोर्ध्वा क्ळिप्त स्वर्ग्या ।
तस्य रथन्तरं पृष्ठं भवति वामदेव्यं मैत्रावरुणसाम बृहदार्भवे पवमाने ।
इदं वै रथन्तरमन्तरिक्षं वामदेव्यमद एव बृहत् ।
सैषोर्ध्वा क्ळिप्त स्वर्ग्या ।
तया हैतया क्ळप्त्योर्ध्वं स्वर्गं लोकं रोहन्ति ।
अथो हैषामेतदेव साम क्ळप्तं कृत्स्नं युक्तं यज्ञं वहति ४३२

तस्य गायत्रमेव हिंकारो रथन्तरं प्रस्तावो वामदेव्यमुद्गीथो बृहत्प्रतिहारो यज्ञायज्ञीयं निधनम् ।
एकैकमु ह वा एतेषां स्वर्गस्य लोकस्येशे ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
अथो हैतदेवार्क्यमेतन्महाव्रतम् ।
तस्य गायत्रमेव शिरो बृहद्रथन्तरे पक्षौ वामदेव्यमात्मा यज्ञायज्ञीयं पुच्छम् ।
स यावदर्क्यवता महाव्रतवतावरुन्द्धे तावदवरुन्द्धे य एवं वेद ।

अथो हैषायुष्यैव क्ळ्प्तिः ।
आयुर्वै गायत्रं विश्वायू रथन्तरं समायुर्वामदेव्यं सर्वायुर्बृहदत्यायुर्यज्ञायज्ञीयम् ।
आयुष्मन्तो ह भवन्त्येनया तुष्टुवानाः ।
अथो हैषामेतान्येव पञ्च ज्योतींषिद्धान्येषु लोकेषु दीप्यन्तेऽग्निः पृथिव्यां वायुरन्तरिक्ष आदित्यो दिवि चन्द्रमा नक्षत्रेषु विद्युदप्सु ।
अग्निरेव रथन्तरस्य वायुर्वामदेव्यस्यादित्यो बृहतश्चन्द्रमा गायत्रस्य विद्युद्यज्ञायज्ञीयस्य ।
आपो हि यज्ञायज्ञीयम् ।
एतान्येव पञ्च ज्योतींषीद्धान्येषु लोकेषु दीप्यन्ते ४३३

तस्य वा एतस्याग्निष्टोमस्य सोक्थकस्य द्वे त्रयः पञ्चाशे शते स्तोत्रिया भवन्ति ।
अथ रात्रेस्सह राथन्तरेण सन्धिनैकान्ननवतिशतं स्तोत्रिया भवन्ति ।
त्रीणि तानि पुंसोऽतिरिक्तानि यैस्स प्रजनयति द्वे ते स्त्रिया ऊने यतस्सा प्रजायते ।
पुंसो वा एतद्रूपं यदह स्त्रियै रात्रिः ।
तदिदं पुंसोऽतिरिक्तममुष्मिन्स्त्रिया ऊने दधाति मिथुनत्वाय प्रजननाय ।
प्र मिथुनेन जायते य एवं वेद ।
अथ ये द्वे स्तोत्र्ये अतिरिच्येते आण्डावेव तावतिरिच्येते ।
ते बृहद्रथन्तरे युक्ते यज्ञं वहतः ।
स यत्र षोडशिनं कुर्युरर्शो वैषां जायेत वर्ध्म वा ।
यद्ध्येतेषु त्रिषु पुंसोऽतिरिक्तेषूप चतुर्थं जायेतार्शो वास्याजनि वर्ध्म वेति ब्रूयुः ।
एवमेव यत्स्त्रियै जायेत ।
स योऽत्र षोडशिनं कुर्वाणान्ब्रूयादर्शो वैषां जनिष्यते वर्ध्म वेति तथा हैव स्युः ।
तस्मादत्र षोडशी न कार्यः ४३४

स वा एषोऽतिरात्र ऋृते षोडशिन एकविंशतिं चैकविंशान्संपद्यत एकां च

स्तोत्र्याम् ।
ततो य एकविंशतिरेकविंशा आदित्य एव सः ।
आदित्यस्य वा अमुष्य लोकस्यैश्वर्यमाधिपत्यम् ।
गच्छन्त्यमुष्य लोकस्यैश्वर्यमाधिपत्यं य एवं वेद ।
स यदत्र षोडशिनं कुर्युर्द्वाविंशतिश्चैकविंशास्संपद्येरन्नेका च स्तोत्र्या ।
संपदं लोभयेत् ।
स उ एवैकान्नपञ्चाशतं त्रिवृतोऽभिसंपद्यत एकां च स्तोत्र्याम् ।
ततो य एकान्नपञ्चाशतं त्रिवृतोऽग्निरेव सः ।
अग्नेर्वा अस्य लोकस्यैश्वर्यमाधिपत्यम् ।
गच्छत्यस्य लोकस्यैश्वर्यमाधिपत्यं य एवं वेद ।
स यदत्र षोडशिनं कुर्युरेकपञ्चाशच्च त्रिवृतस्संपद्येरंश्चतस्रश्च स्तोत्र्याः ।
संपदं लोभयेयुः ।
नैवेतरां संपदमुपपद्येत नेतराम् ।
देवतीर्थं वा एतद्यदेष वैश्वानरः प्रायणीयोऽतिरात्रः ।
तस्मिन्नेष स्थाणुः क्रियते यत्षोडशी ।
वैराजो वै षोडशी विराजि विराजि प्रतिष्ठितः ।
स यत्रैवैतं विराजं संपद्यमानं मन्येत तदेवैतेन स्तोतव्यम् ४३५

अथैतच्चतुर्विंशमारम्भणीयमहः ।
तस्यैषोर्ध्वा क्ळ्प्तिः स्वर्ग्या ।
तस्य रथन्तरं माध्यन्दिने भवत्यथ दैर्घश्रवसमथ नौधसम् ।
इदं वै रथन्तरम् ।
अन्तरिक्षं दैर्घश्रवसम् ।
वामदेव्यं ह्येतन्निधानेन ।
अद एव नौधसम् ।
बृहतो ह्येषा तनूः ।
सैषोर्ध्वा क्ळ्प्तिः स्वर्ग्या ।
तया हैतया क्ळ्प्त्योर्ध्वा एव स्वर्गं लोकं रोहन्ति ।
तस्य हैतस्याह्न एके रथन्तरमेव पृष्ठं कुर्वन्ति यथाइवातिरात्रस्य रथन्तरं पृष्ठं भवति तथा ।

पराङ्वै स्वर्गो लोकः ।
पराञ्च एतं स्वर्गं लोकं रोहाम ।
प्रत्यवरोहस्स यद्रथन्तरं माध्यन्दिने स्यात् ।
अथैवमप्रत्यवरूढमिति वदन्तः ।
तदु ह तत्पराङिवानायुष्यमिव ।
स य एनांस्तथा चक्रुषोऽनुव्याहरेदिति वेति वा भविष्यन्तीति तथा हैव स्युः ।
तस्मादु बृहदेव पृष्ठं स्यान्माध्यन्दिने रथन्तरम् ।
तस्यैषा तनूः ।
सैषा समीची क्ळ्प्ति स्वर्ग्या ४३६

तस्य बृहत्पृष्ठं भवति वामदेव्यं मैत्रावरुणसाम श्यैतं ब्रह्मसाम ।
अदो वै बृहदन्तरिक्षं वामदेव्यमिदमेव श्यैतम् ।
रथन्तरस्यैषा तनूः ।
सैषा समीची क्ळ्प्ति स्वर्ग्या ।
तया हैतया क्ळ्प्त्या सम्यञ्च एव स्वर्गं लोकं रोहन्ति ।
सम्यञ्चो वै प्राणापानव्यानाः ।
आ च परा च संचरन्त्ययातयामानः ।
आयुष्मन्तो ह भवन्त्येनया तुष्टुवानाः ।
तस्य द्वयानि स्तोत्राणि भवन्ति चतुर्विंशान्येकानि षट्त्रिंशान्येकानि ।
ततो यानि चतुर्विंशानि चतुर्विंशत्यर्धमासो वै संवत्सरोऽर्धमासश एव तैस्संवत्सरमाप्नुवन्ति ।
अथ यानि षट्त्रिंशानि षट्त्रिंशदक्षरा वै बृहती ।
बृहती स्वर्गो लोकस्साम्राज्यं बृहत्यामेव तत्स्वर्गे लोके साम्राज्ये प्रतितिष्ठन्तो यन्ति ।
अथो हैषामेतेनैव षट्त्रिंशेन स्तोमेन पर्वशस्संवत्सर आरब्धो भवति ।
द्वादश वै संवत्सरस्य पौर्णमासीर्द्वादशाष्टका द्वादशामावास्याः ।
तदेवैतेन षट्त्रिंशेन स्तोमेन पर्वशस्संवत्सरमारभन्ते ४३७

तस्यैतौ श्लोकावयुजो युक्ताः प्रवहन्त्यग्रे ततो युग्मन्तो अनुसंवहन्ति

त एकं छन्दोभिस्संवत्सरमा द्वादश परिसर्पन्ति मासः
द्वादशस्य मास उत्तमेऽहन्षट्त्रिंशं ह दध्रिरे व्यावृता एकं
ततो युग्मभिर्व्ययुञ्जताध्यन्य आयन्सुवरन्ये परायन्
इति ।
तस्य द्वादश स्तोत्राणि भवन्ति ।
तेनाग्निष्टोमः ।
तान्यु एव द्वादश सन्ति पञ्चदश चतुर्विंशानि स्तोत्राणि भवन्ति ।
तेनोक्थ्यः ।
स वा एषोऽग्निष्टोमस्सन्नुक्थ्य उक्थ्यस्सन्नग्निष्टोमः ।
उभौ ह तौ कामावुपाप्नोति यश्चाग्निष्टोमे यश्चोक्थ्ये य एवं वेद ४३८

अथैते ज्योतिर्गौरायुरिति स्तोमा भवन्ति ।
गौरायुरस्कन्दत् ।
ततो ज्योतिरजायत ।
अयं वै लोक आयुरसौ गौरिदमेवान्तरिक्षं ज्योतिः ।
तमेतं पुरस्तादकुर्वातां यथा पुत्रमेवम् ।
इतो वा अयमूर्ध्वो लोकोऽर्वाङसावमुतः ।
तदिदमेनयोः पुरस्ताज्ज्योतिः पर्यूढम् ।
तेन पश्यामः ।
तौ योगमुपप्रयन्तावन्तमभि ज्योतिर्व्युदौहताम् ।
स यथा पितरौ पुत्रं पूर्वं यन्तं पश्चादन्वियातां तादृक्तत् ।
तदेतन्मिथुनी स्तोमा भवन्ति यद्युज्यन्ते ।
मध्ये वै जायापत्योः पुत्रश्शेते ।
तौ यथा मिथुनीभविष्यन्तावित्थाद्वेत्थाद्वा पुत्रं परिहरेयातां तादृगेवैतत् ।
त एत ऊनातिरिक्ता मिथुनाः प्रजनय स्तोमाः ४३९

अथ ह वै पणयो नामासुरा देवानां गोरक्षा आसुः ।
ताभिरहापातस्थुः ।
ता ह रसायां निरुध्य वलेनापिदधुः ।
ते देवा अलिक्लवमूचुस्सुपर्णेमा नो गा अन्विच्छेति ।

तथेति ।
स हानुप्रपपात ।
ता हान्वाजगाम रसायामन्तर्वलेनापिहिताः ।
तस्मै हान्वागताय सर्पिः क्षीरमामिक्षां दधीत्येतदुपनिदधुः ।
तस्य ह सुहित आस ।
तं होचुस्सुपर्णैष एव ते बलिर्भविष्यत्येतदन्नं मा नः प्रवोच इति ।
स ह पुनरापपात ।
तं होचुस्सुपर्णाविदो गा इति ।
का कीर्तिश्चिद्गवामिति होवाच ।
एषैव कीर्तिर्गवामिति तस्य हेन्द्रो गलमुत्पीळयन्नुवाच गोष्वेवाह किल तवोषुषो मुखमिति ।
स ह दधिद्रप्सं वामिक्षां वोदास ।
सोऽयं बभूव योऽयं वसन्ता भूमिकपठुर्जायते ।
तं ह तच्छशापाश्लीलं जाल्म ते जीवनं भूयाद्यो नो गा अनुविद्य ता न प्रावोच इति । तस्य हैतद्ग्रामस्य जघनार्धे यत्पापिष्ठं तज्जीवनम् ४४०

ते सरमामब्रुवन्सरम इमा नस्त्वं गा अन्विच्छेति ।
तथेति सा हानुप्रससार ।
सा ह रसामाजगाम ।
एषा ह वै सा रसा यैषार्वाक्समुद्रस्य वापायती ।
तां होवाच प्लोष्ये वा त्वा गाधा वा मे भविष्यसीति ।
प्लवस्व मेति होवाच न ते गाधा भविष्यामीति ।
सा हावाच्य कर्णौ प्लोष्यमाणाससार ।
सा हेक्षां चक्रे कथं नु मा शुनी प्लवेत हन्तास्यै गाधासानीति ।
तां होवाच मा मा प्लोष्ठा गाधा ते भविष्यामीति ।
तहृतेति ।
तस्यै ह गाध आस ।
सा ह गाधेनातिससार ।
ता हान्वाजगाम रसायामन्तर्वलेनापिहिताः ।
तस्यै हान्वागतायै तथैव सर्पिः क्षीरमामिक्षां दधीत्येतदेवोपनिदधुः ।

सा होवाच नाहमेतावदप्रिया देवानां गा अविदं यद्वोऽश्नीयाम् ।
त उ वै देवानां स्तेयं कृत्वा चरथैतासां वा अहं गवां पदवीरस्मि ।
न मा लापयिष्यध्वे नेन्द्रस्य गा उपहरिष्यध्व इति ।
सा हानाशुष्युवास ।
सा ह जराय्वपास्तं विवेद ।
तद्ध चखाद ।
तां हैक उपजगौ त्यमिव वै घ्नती सरमा जारु खादतीति ।
तदिदमप्येतर्हि निवचनं त्यमिव वै घ्नती सरमा जारु खादतीति ।
जरायु ह सा तच्चखाद ।
सा ह पुनराससार ।
तां होचुस्सरमेऽविदो गा इति ४४१

अविदमिति होवाचेमा रसायामन्तर्वलेनापिहिताः ।
ता यथा मन्यध्वमेवमाजिहीर्षतेति ।
तां ह तदिन्द्र उवाचान्नादीमरे ते सरमे प्रजां करोमि या नो गा अन्वविद इति
।
ते हैते विदर्भेषु माचलास्सारमेयाः ।
अपि ह शार्दूलं मारयन्ति ।
ते देवा एतमभिप्लवं समभरन् ।
तेनैना अहब्यप्लवन्त ।
यदभ्यप्लवन्त तदभिप्लवस्याभिप्लवत्वम् ।
तेऽग्निनैव वलमभ्यौषन्वज्रेणाभिन्दन् ।
स य एष पुरस्ताज्ज्योतिस्सोऽग्निरथ यत्पञ्चदशं गोर्बहिष्पवमानं स वज्रः ।
ता आयुषैवायुवत ।
यदायुषैवायुवत तदायुष आयुष्ट्वम् ।
ता एतेनैव ज्योतिषोभयतः पर्यौहन् ।
त एते चत्वारो मध्य उक्थ्या भवन्ति ।
पशवो वा उक्थानि ।
तेषां सहस्रं स्तोत्र्याः ।
ब्रह्म वै ज्योतिरग्निष्टोमः ।

ता एतेनैव ब्रह्मणा ज्योतिषोभयतः परिगृह्योदाहरन् ।
ते य एवं विद्वांसोऽभिप्लवमुपयन्ति सहस्रसनयो हैवोत्थिता भवन्ति ।
तदाहुर्यदेष चतुरहो मध्ये व्यतिषक्तो गौरायुर्गौरायुरित्यथ कस्माज्ज्योतिषी विपर्यूढे इति ।
मिथुनत्वाय प्रजननायेति ह ब्रूयात् ।
प्र मिथुनेन जायते य एवं वेद ४४२

तृतीयो भागः
प्रजापतिर्वावेदमग्र आसीत् ।
सोऽकामयत बहु स्यां । प्रजायेय । भूमानं गच्छेयमिति ।
स तपोऽतप्यत ।
स आत्मन्नृत्वियमपश्यत् ।
ततस्त्रीनृतूनसृजतेमानेव लोकान् ।
यदृत्वियादसृजत तदृतूनामृतुत्वम् ।
यदृत्वियादजनयत्तस्मादृत्विज इत्याख्यायन्ते ।
स यत्प्रथममतप्यत ततो ग्रीष्ममसृजत ।
तस्मात्स बलिष्ठं तपति ।
स यत्प्रथममतप्यत ततो ग्रीष्ममसृजत ।
तस्मात्स बलिष्ठं तपति ।
यद्द्वितीयमतप्यत ततो वर्षा असृजत ।
तस्मात्ता उभयं कुर्वन्त्या च तपन्ति वर्षन्ति च ।
यत्तृतीयमतप्यत ततो हेमन्तमसृजत ।
तस्मात्स शीततम इव ।
त्रीन्सतोऽभ्यतप्यत ।
तान्द्वेधा व्यौगत् ।
ते षड्तवोऽभवन् ।
स ग्रीष्मादेव वसन्तं निरममीत । वर्षाभ्यश्शरदं । हेमन्ताश्छिशिरम् ।
तस्मादेत ऋतूनामुपश्लेषा इव निर्मिता हि ।
षट्सतोऽभ्यतप्यत ।
तान्द्वेधा व्यौहत् ।

ते द्वादश मासा अभवन् ।
द्वादश सतोऽभ्यतप्यत ।
तान्द्वेधा व्यौहत् ।
ते चतुर्विंशतिरर्धमासा अभवन् ।
चतुर्विंशतिं सतोऽभ्यतप्यत ।
स षद्मत यदि द्वेधा व्यूहिष्यामि । न विभविष्यन्ति । हन्त । निर्मिमा इति ।
तेभ्यस्सप्त च शतानि विंशतिं चाहोरात्राणि निरममीत ।
स इदं सर्वं व्यकरोत् ।
यथा ह वै हिरण्यमविकृतमेवमिदं ततः पुरा ।
स सर्वमधि हास्मिञ्छिल्पानि गम्यन्ते विकृतानि चाविकृतानि च य एवं वेद १

ञ्च्स एवैष प्रजापतिस्संवत्सरोऽभवत् ।
स इदं सर्वं स्तब्ध्वा व्याप्यातिष्ष्थत् ।
स षद्मत कया स्वधया केनान्नाद्येन कयोर्जेदमयं व्यापदिति ।
तस्मिन्नेतां स्वधामूर्जमन्नाद्यमद्मितिं पर्यपश्यद्द्वादश पौर्णमासीर्द्वादशाष्टका द्वादशामावास्याः ।
तामवारुरुत्सत ।
सैनमब्रवीन्न मानभिश्रान्तामवरोत्स्यस इति ।
स तपोऽतप्यत ।
स एतं द्वादशाहं यज्ञमपश्यत् ।
तमाहरत ।
सोऽकामयत दीद्मितं मा दीद्मिता याजयेयुरिति ।
स मासांश्चर्तूंश्चाब्रवीद्याजयत मेति ।
तं मासा नाब्रुवन् ।
स वा अस्मास्वेव सत्या भुनजासा इति ।
तस्मादेता मास्येव सर्वाः पौर्णमास्यष्टकामावास्याः ।
तदृतवः प्रसुते पश्चेवान्वबुध्यन्त प्र हैभ्योऽदादिति ।
तमब्रुवन्नस्मभ्यमपि दद्मिणां प्रयच्छेति ।

तेभ्योऽन्नाद्यं प्रायच्छत् ।
तदेतद्यथर्त्वन्नाद्यं पच्यते ।
स दीक्षाभिरेव पौर्णमासीरवारुन्धोपसद्भिरष्टकाः प्रसुतेनामावास्याः ।
स यो हैवं विद्वान्द्वादशाहेन यजत एतामेव स्वधामूर्जमन्नाद्यमक्षितिमवरुन्द्धे ।
प्रत्यृतवोऽगृह्णन्न मासाः प्रतिग्रहमकामयन्त ।
तस्मान्मासा आख्याततरा इव ।
आख्याततर उप ह्येवाप्रतिगृह्णन्भवति ।
तस्मादृतवो ज्यायांसः ।
ज्यायान्ह्येव प्रतिगृह्णन्भवति ।
ता ह वा एतास्तिस्र एव रात्रयः पौर्णमास्यष्टकामावास्याः २

ऽच्पुरो इन्द्राय देवा श्रैष्ठ्याय नातिष्ठन्त ।
स प्रजापतिमुपाधावत्प्र म इमा यच्छेति ।
तस्मा एते द्वे प्रायच्छत्पौर्णमासीं चामावास्यां च ।
अस्मिन्नेवाष्टकामधत्त ।
ततो वा इन्द्राय देवा श्रैष्ठ्यायातिष्ठन्त ।
तिष्ठन्तेऽस्मै स्वा श्रैष्ठ्याय य एवं वेद ।
तस्मादेतां रात्रिं सर्व एव सुहिता वसन्ति ।
पितर्ह्येवैतां प्रजापतौ वसन्ति ।
तस्मादेतां रात्रिं न जुहुयाद् । यज्जुहुयान्न ब्रूयात् ।
अनिरुक्तो वै प्रजापतिः ।
स यदेव तत्र त्रिर्विलां कुरुते यदस्य गृहे सुहिता वसन्ति सा हैवास्यै समृद्धिः ।
ते मासाश्चर्तवश्चाब्रुवन्येन नः पिता प्रजापतिर्यज्ञेनेष्ट्वारात्सीत्तेन यजामहा इति ।
ते तमाहरन्त ।
स प्रजापतिरैक्षत यदि वा इदमिमे समापयन्ति यथा वा
अहमिदमस्म्येवमिमे तर्हि भवन्तीति ।
तानब्रवीन्मयैव गृहपतिना दीक्षध्वमिति ।

तं वै त्वास्माभिराचक्षान्ता इत्यब्रुवन् ।
मयो युष्मानिति ।
तस्मान्मासैश्चतुर्भिश्च संवत्सरमाचक्षते । संवत्सरेणर्तूंश्च मासांश्च ।
तस्मात्पुत्रेण पितरमाचक्षते । पित्रा पुत्रान् ।
षतेन गृह्यांश्चक्षते य एवं वेद ३

ऽच्तेऽयजन्त । ते मासाश्चत्रवश्च संवत्सरे प्रत्यतिष्ठन् । संवत्सर ऋतुषु च मासेषु च ।
तस्मादाहुस्समावन्मात्रियेवर्द्धिर्यं च याजयन्ति ये च याजयन्तीति ।
समावन्मात्रियेव ममानेनर्द्धिरिति हेक्षेत ।
यथैवास्यैवमेव ममेति ।
तेन हैतेनैक एव यजेत ।
एको ह्येव प्रजापतिरार्ध्नोत् ।
यद्यु भूयांसो यजेरन्द्वादश वा त्रयोदश वा यजेरन्निमे चत्वार इमे चत्वार इमे चत्वारोऽयमेक इति निर्मिमीरन् ।
यं कामयेरन्निमं यज्ञस्य व्यृद्धिरन्वियादिति तं हैव यज्ञस्य वृद्धिरन्वेति ।
यद्यु भूयांसो यजेरन्षोडश वा सप्तदश वा यजेरन्निमे चत्वार इमे चत्वार इमे चत्वार इमे चत्वारोऽयमेक इति निर्मिमीरन् । यं कामयेरन्निमं यज्ञस्य वृद्धिरन्वियादिति तं हैव यज्ञस्य व्यृद्धिरन्वेति ।
यद्यु भूयांसो यजेरंश्चतुर्विंशतिर्वा पञ्चविंशतिर्वा यजेरन्निमे पञ्चेमे पञ्चेमे पञ्चेमे पञ्चेमे चत्वारोऽयमेक इति निर्मिनीरन् । यं कामयेरन्निमं यज्ञस्य व्यृद्धिरन्वियादिति तं हैव यज्ञस्य व्यृद्धिरन्वेति ।
सर्व इतर ऋध्नुवन्ति ।
यो वै सत्रस्य गृहपतिं च गृहपत्नीं च वेदाश्नुते गार्हपत्यं प्र गार्हपत्यमाप्नोति ।
संवत्सरो वाव गृहपतिरियमेव गृहपत्नी ।
अश्नुते गार्हपत्यं प्र गार्हपत्यमाप्नोति य एवं वेद ४

ऽच्यो वै छन्दसां स्वाराज्यं वेद गच्छति स्वाराज्यं प्र स्वाराज्यं लोकमाप्नोति ।

बृहती वै छन्दसां स्वराट् ।
तामेतां प्रतीचीं पराचीं तिरश्चीमन्नाद्यायासते ।
तस्मात्पशुं प्रत्यञ्चं पराञ्चं तिर्यञ्वमुपजीवन्ति ।
एतावद्वाव संवत्सर इन्द्रियं वीर्यं यद्द्वादशाहो द्वादश पौर्णमासीर्द्वादशाष्टका द्वादशामावास्यास् । तदेवैतेनावरुन्द्धे ।
यो वै विराजमृतुप्रतिष्ठितां वेदर्तून्विराजि प्रतिष्ठितान् । गच्छति प्रतिष्ठामवान्नाद्यं रुन्द्धे ।
त्रिंशदक्षरा विराट् ।
षड्तवः ।
एतद्वै विराड्तुषु प्रतितिष्ठत्य् । ऋतवो विराजि ।
गच्छति प्रतिष्ठामवान्नाद्यं रुन्द्धे य एवं वेद ।
अनुष्टुभं वावैतामासते यद्द्वादशाहम् ।
द्वात्रिंशदक्षरानुष्टुप् ।
चतुष्पदाः पशवः ।
वागनुष्टुप् ।
वाचा पशून्दाधार ।
तस्मात्पश्वो वाचा सिद्धा वाचाहूता आयन्ति ५

ऽच्गायत्रमुखो वै प्रथमस्त्र्यहः ।
तस्मादयमग्निरूर्ध्वो दीदाय ।
गायत्रमध्यो द्वितीयस्त्रियहः ।
तस्मादयं वायुस्तिर्यङ्पवते ।
गायत्रोत्तमस्तृतीयस्त्रियहः ।
तस्मादसाववार्ङादित्यस्तपति ।
तेजसा वै गायत्री प्रथमं त्रियहं दाधार । पदैर्द्वितीयम् । अक्षरैस्तृतीयम् ।
त्रिवृद्वै गायत्री तेजः ।
त्रिवृत्प्रथममहः ।
तेन प्रथमस्त्रियहो धृतः ।
त्रिपदा गायत्री । त्रियहो मध्ये । तेन द्वीतीयस्त्रियहो धृतः ।

चतुर्विंशत्यक्षरा गायत्री । चतुर्विंशं सप्तममहस् । तेनैव तृतीयस्त्रियहो धृतः ।
कथं गायत्री द्वादशाहमित्याहुः ।
यथारान्नेमिस्सर्वतः पर्येत्य् । एवं गायत्री द्वादशाहं सरतः पर्येत्यविस्रंसाय ।
यथा रथनाभावरा धृता एवं गायत्र्यां द्वादशाहो धृतोऽसंप्लवाय ।
मयूखो वा एष वा धरुणो यद्गायत्री ।
तस्यां द्वादशाहो धृतोऽसंव्याथाय ।
अनुष्टुब्वा एषा प्रतायते यद्द्वादशाहः ।
अष्टाभिर्वा अक्षरैरनुष्टुप्प्रथममहरुद्यच्छत्य् । एकादशभिर्द्वितीयं ।
द्वादशभिस्तृतीयम् ।
अक्षरमेव त्रियक्षरं परिशिष्यते ।
तदेवोत्तरं त्रियहमनुविदधाति ६

ऽच्छन्दांस्येवास्यै तुरीयं वहन्ति ।
तामेतां प्रतीचीं पराचीं तिरश्चीमन्नाद्यायासते ।
तस्मात्पशुं प्रत्यञ्चं पराञ्चं तिर्यञ्चमुपजीवन्ति ।
प्रजापतिर्जायमान एव सह पाप्मनाजायत ।
सोऽकामयताप पाप्मानं हनीयेति ।
स एतं व्यूढछन्दसं द्वादशाहं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तेन विष्वञ्चं पाप्मानं व्यौहत ।
स यः पाप्मगृहीत इव मन्यते स एतेन व्यूढछन्दसा द्वादशाहेन यजेत ।
विष्वञ्चं हैव पाप्मानं व्यूहते ।
प्रजा ह तु संसर्पका इव भवन्ति ।
तद्यद्गायत्र्याण्युत्तराणयाज्यानि भवन्ति प्रजानामेवासंसर्पाय ।
मयूखो वा एष वा धरुणो यद्गायत्री ।
तस्यां द्वादशाहो धृतोऽसंसर्पाय ७

ञ्च्दशाहेन वै प्रजापतिः प्रजा असृजत ।
ता अस्य सृष्टा विषूचीर्विपरौप्यन्त ।
स एतौ वैश्वानरावतिरात्रावपश्यत् ।
ताभ्यामेना उभयतः पर्यगृह्णादनेनेति उपरिष्टादमुतः ।
ता एताभ्यामेवावारयत ।
यद्विश्वं भूतमवारयत तद्वैश्वानरयोर्वैश्वानरत्वम् ।
प्रजापतिरेष यदुद्गाता ।
स एतद्दशाहेनैव प्रजास्सृजते ।
ता एताभ्यामेव वैश्वानराभ्यां वारयतेऽनेनेत उपरिष्टादमुना प्रजानां धृत्या अपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
प्राणो वै पूर्वो वैश्वानरोऽपान उत्तरः ।
प्राणापानाभ्यामेवैतत्समृद्ध्योदृचमश्नुवते ।
तस्मादु हैतयो स्तोत्रेण सुप्यात्प्राणान्नेत्संलुंपानीति ।
तदु वा आहुः को हास्वप्नस्येशे ।
यद्वाव प्राणो जागर्ति तदेव जागरितम् ।
काममेव स्वप्तव्यमिति ।
तदाहुर्यन्नु परम एष यज्ञक्रतुर्यदतिरात्रः कस्मादेतं परमं सन्तं प्रथममुपयन्तीति ।
यज्ञक्रतूनामेवाप्त्या इति ब्रूयात् ।
एते वै सर्वे यज्ञक्रतवो यदग्निष्टोम उक्थोऽतिरात्रः ।
तानेवैतेनाप्नोति यो वा अग्निष्टोमेन दशाहं कल्पमानं वेद ।
कल्पतेऽस्मै प्रातस्सवनेनैव प्रथमस्त्रियहः । कल्पते माध्यन्दिनेन द्वितीयस् । तृतीयसवनेनतृतीयोऽग्निष्टोमसाम्नैव दशममहः कल्पते ।
कल्पतेऽस्मै य एवं वेद ८

ञ्च्प्राणः पूर्वो वैश्वानरोऽपान उत्तरोऽथ यदस्ति यत्सत्रं तदितराण्यहानि ।
गायत्री वा एषा ज्योतिष्पक्षाय द्वादशाहः ।
पक्षावतिरात्रावग्निष्टोमौ चक्षुषी बाह्यावतिरात्रावन्तरा । वग्निष्टोमौ ।
तस्मादन्तरे अक्ष्योः कनीनिके ।

अथ यान्यष्टावहानि सा गायत्री ।
तया देवा स्वर्गं लोकमायन् ।
गच्छति स्वर्गं लोकं य एवं वेद ।
जामि द्वादशाहस्यास्तीत्याहुः ।
यदेतान्यष्टावहानि मध्य उक्थ्यानीति । न तत्र जाम्यस्तीति ब्रूयात् ।
पशवो वा उक्थानि ।
पशूनेवैतत्पशुभिस्समाकरोति ।
भूयो वै पशवः पशुभिस्समाकृताश्शोभन्त इति ।
ज्योतिष्टोमोऽतिरात्रो विराजं संपद्यते ।
संवत्सरो विराट्प्रजननं संवत्सरः ।
द्वे स्तोत्रिये पूर्वस्याह्नो विराजमतीतो । द्वे उत्तरस्य ।
ते ये पूर्वस्याह्नो विराजमभितो बृहद्रथन्तरे ते युक्ते यज्ञं वहतोऽथ ये उत्तरस्य विराजस्स दोहः प्रतिष्ठितिः ।
आयुष्टोममाहरेत स्वर्गकामः ।
ऊर्ध्वा स्तोमा यन्त्यनपभ्रंशाय ९

गोष्टोममाहरेत वीर्यकामः ।
इन्द्रियं वै वीर्यं पञ्चदशः ।
यावज्जीवन्ति तावद्वीर्यावन्तो भवन्ति ।
ईश्वरा ह तु प्रमायुका भवितोः ।
प्राणेभ्यो हि यन्ति ।
त्रिवृतो य ईजानाः क्ळ्सं तेषामथ येऽनीजाना अक्ळ्सं तेषाम् ।
यदि बृहत्पृष्ठं भवति रथन्तरेणाश्विभ्यां स्तुवन्ति ।
इदं वै रथन्तरमदो बृहत् ।
अनाक्रम्यास्याममुष्यामाक्रमन्ते ।
ते प्रमायुका भवन्ति ज्यायुका वा ।
अथो यथा परेण बिलेन प्रतिदधीत तद्वै परैव सिच्यते न पिबति ।
तादृग्यदि रथन्तरं पृष्ठं भवति रथन्तरेणाश्विभ्यां स्तुवन्ति १०

दुग्धोपसद्यं तदित्याहुः ।

न तत्र दुग्धोपसद्यमस्तीति ब्रूयात् ।
वाग्वै रथन्तरं । वागाश्विनं । कुतो वा ह्नेष्यत इति ।
एतदु ह वा एकच्छन्दो दुग्ध यद्वाग्यदीजाना अनीजानाः ।
तदु वा आहुः
पवस्व वाचोऽग्रिय । उपास्मै गायता नरः ।
पवमानस्य ते कव
इति प्रतिपदो भवन्ति ।
पवमाने रथन्तरं प्रोहन्ति ।
बृहत्पृष्ठं भवति ।
जराबोधीयेनाश्विभ्यां स्तुवन्ति ।
रुद्रस्य वा एतद्देवस्य साम यज्जराबोधीयम् ।
एतेन वै रुद्रो देवः पशूनामैश्वर्यमाधिपत्यमगछत् । तद्येन रुद्रो देवः पशूनामैश्वर्यमाधिपत्यमगच्छत्तेन पशूनामैश्वर्यमाधिपत्यं गच्छामेति ।
तदाहुः क्रूरमशान्तमीश्वरो यजमानस्य पशूनभिमन्तोरिति ।
तदु वा आहुस्सर्वा वा एषा वाग्ब्रह्म यदाश्विनम् ।
सर्वयैवैनदेतद्वाचा ब्रह्मणाश्विनेन शमं यन्तीति ।
और्ध्वसद्मनमापिशर्वरेषु प्रोहन्ति ।
और्ध्वसद्मनेन वै देवा असुरानेभ्यो लोकेभ्यो नुत्वा स्व आयतने सत्रमासत ।
और्ध्वसद्मनेनैव द्विषन्तं भ्रातृव्यमेभ्यो लोकेभ्यो नुत्वा स्व आयतने सत्रमास्ते य एवं वेद ११

ब्रह्म वा अग्निष्टोमः ।
ब्रह्म प्रायणीयमहः ।
एषा वै यज्ञस्य मात्रा यदग्निष्टोमः ।
यैव यज्ञस्य मात्रा तयैवैतत्सत्र आक्रमन्ते यादृक्प्रवयणत स्पर्शस्तादृगुपप्राञ्जनतः ।
तस्मादग्निष्टोमेनैव प्रयन्त्य् । अग्निष्टोमेनोद्यन्ति ।
मनो वै पूर्वमथ वाक् ।
मनो वै बृहद्वाग्रथन्तरम् ।

प्रवं वै बृहदुप रथन्तरम् ।
तद्यदेताः प्रवत्वतीश्चोपवतीश्च भवन्ति बृहद्रथन्तरे एवैतत्सत्राय युज्येते ।
प्रेति च वा एति च गायत्र्यै रूपम् ।
तद्यत्प्रेति चेति च भवति गायत्र्या एवैतद्रूपेण प्रयन्ति न वैता भवन्ति न वा हस्यैव युक्त्या ऋचर्चैवाहर्युज्यते यथा नद्धयुगस्य शम्या अवदध्यात्तादृक्तत् ।
तदाहुर्वीव वा एते प्राणैर्ऋध्यन्ते ये प्रायणीयस्याह्नस्तृचान्विच्छिन्दन्तीति ।
सलक्ष्माणो भवन्ति सलक्ष्माणो वै प्राणाः प्राणानामेव संतत्या अव्यवच्छेदाय ।
अग्न आ याहि वीतये । आ नो मित्रावरुणा ।
आ याहि सुषुमा हि त । इन्द्राग्नी आ गतं सुतम्
इत्या याह्या याहीत्याज्यानि भवन्ति ।
आ याह्या याहीति युक्तानां पुरस्तात्प्रयन्ति ।
यथा युक्तानां पुरस्तादा याह्या याहीति प्रेयात्तादृक्तत् ।
त्रिवृत्स्तोमो भवति ।
ब्रह्म वै त्रिवृत् ।
ब्रह्मण्येवैतत्प्रतितिष्ठन्तो यन्ति १२

प्र सोमासो विपश्चितः । प्र सोम देववीतये ।
प्र तु द्रव परि कोशं नि षीदे
ति प्रवतीर्भवन्ति राथन्तरेऽहन् ।
प्रणिनीषेण्यं वा एतदहः ।
प्रेति गायत्र्यै रूपम् ।
गायत्र्या एवैतद्रूपेण प्रयन्ति ।
यत्पञ्चसामा विलों तदसमृद्धम् ।
प्राणोऽपानो व्यानस्स तृचः ।
तं विच्छिन्दन्ति ।
आत्मानं प्रजां जायामिमाँल्लोकांस्तद्विच्छिन्दन्ति ।
त्रीणि सामानि ।
तत्कृत्स्नं त्रिवृत्त्रिषामा ।

अथाश्वं पदनिधनमपरिष्टोभं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
इळावान्पवमानस्सोमसाम्ना क्रियते ।
पञ्चसामा ह खलु वै संवत्सरं यन्तुमर्हति ।
तद्यत्षडक्षरणिधनं यौधाजयं भवति षड्वा ऋतवस्संवत्सरस्यैव युक्त्यै ।
अभि द्रोणानि बभ्रव
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
सुता इन्द्राय वायवे वरुणाय मरुद्भ्य
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
तासु गायत्रमुक्तब्राह्मणम् १३

अथाश्वम् ।
प्रजापतिः प्रजा असृजत ।
ता आश्वेनैवाश्वो भूत्वासृजत ।
यदाश्वेनाश्वो भूत्वासृजत तदाश्वस्याश्वत्वम् ।
तत्प्रजननं साम ।
प्रजननेऽहन्क्रियते ।
प्रजया पशुभिर्जायते य एवं वेद ।
तस्मादु हैतत्सामैतस्मादह्नो नान्तरित्यम् ।
प्रजननं वा एतत्साम ।
प्रजननमेतदहः ।
प्रजनन एवैतत्प्रजननं क्रियते ।
तद्वेवाचक्षतेऽश्वस्य सामुद्रेरिति ।
अश्वो वै सामुद्रिरकामयताव पशून्रुन्धीय भूमानं पशूनां गच्छेयमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स पशूनवारुन्ध भूमानं पशूनामगच्छत् ।

तदेतत्पशव्यं साम ।
अव पशूनुन्द्धे । भूमानं पशूनां गच्छति य एवं वेद ।
यदश्वस्सामुद्रिरपश्यत्तस्मादाश्वमित्याख्यायते ।
अथो आहुराश्वेन वै देवा अश्वा भूत्वा स्वर्गं लोकमायन्निति ।
तद्वेवाश्वस्याश्वत्वम् ।
तद्वा अस्य स्वर्ग्यम् ।
अश्नुते स्वर्गं लोकं य एवं वेद १४

अथ सोमसाम ।
सोमो वै राजा सधमादमिवान्याभिर्देवताभिरासीत् ।
सोऽकामयत सर्वेषां देवानां राज्याय सूयेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत
ततो वै स सर्वेषां देवानां राज्यायासूयत ।
सूयते स्वानां श्रेष्ठतायै य एवं वेद ।
तेभ्यस्तिरोऽभवत् ।
तदन्वैच्छन् ।
तेभ्य एतेन रूपेणादृश्यत यदेतच्चन्द्रमसः ।
तमभिसमगच्छन्तादश्र्यदर्शीति ।
तस्माद्यदा दर्शयतेऽथाभिसंगच्छन्तेऽदश्र्यदर्शीति ।
तमेतदभ्यषिञ्चन्त ।
स एतदभवत् ।
तदेतच्छ्रीस्सवस्साम ।
अश्नुते श्रियं गच्छति राज्यं य एवं वेद ।
यदु सोमो राजा अपश्यत्तस्मात्सोमसामेत्याख्यायते ।
अथ वज्रम् ।
वज्र आङ्गिरसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत्तेनास्तुत ।
स एतामिळामुपैत् ।
पशवो वा इळा ।

ततो वै स पशूनवारुन्धत ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु वज्र आङ्गिरसोऽपश्यत्तस्माद्वज्रमित्याख्यायते ।
अथ यौधाजयं त्रिणिधनं सवनानां कॢप्त्यै ।
अथौशनमन्त्यं सामान्त्येन साम्नान्त्यं स्वर्गं लोकमश्नवामहा इति ।
अथ रथन्तरम् ।
ब्रह्म वा अग्निष्टोमो । ब्रह्म रथन्तरम् ।
ब्रह्मण्येवैतत्प्रतितिष्ठन्तो यन्ति ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
अथ नौधसम् ।
सलोके वै कालेयं च रथन्तरं च १५

प्र सोमासो मदच्युत
इत्यार्भवस्य पवमानस्य प्रवतीर्गायत्र्यो भवन्ति राथन्तरेऽहन् ।
प्रणिनीषेण्यं वा एतदहः ।
प्रेति गायत्र्यै रूपम् ।
गायत्र्या एवैतद्रूपेण प्रयन्ति ।
ता मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति । रसमेवास्मिन्नेतद्दधति ।
षवैनदेतेन प्याययन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ संहितं द्व्यक्षरणिधनं प्रतिष्ठायै ।
द्विपाद्वै यजमानः प्रतिष्ठित्यै ।
अया पवस्व देवयुः । पवते हर्यतो हरिर्
इत्युष्णिक्ककुभौ भवतः ।

गायत्र्यौ रूपेण राथन्तरे सभं पूर्वस्यां विजित्या एव ।
अथाक्षरं पदनिधनमपरिष्टोभं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
प्रजापतिर्वा एतं यज्ञमसृजत यद्द्वादशाहम् ।
तस्य तृचैरन्यान्यहान्यकल्पन्तैकर्चैरेतत् ।
तदस्य समिवाप्लीयत ।
स एते सामनी अपश्यत् ।
ताभ्यामेनद्यथा शांकुभ्यां चर्म विहन्यादेवमेवाभ्यामेतदहर्व्यहन् ।
आश्वेन पुरस्तादाक्षारेणोपरिष्टात् ।
तद्यदेते सामनी भवतोऽह्न एव धृत्यै ।
प्र सुन्वानायान्धस
इति प्रवतीरनुष्टुभो भवन्ति राथन्तरेऽहन् ।
प्रणिनीषेणयं वा एतदहः ।
प्रेति गायत्र्यै रूपम् ।
गायत्र्या एवैतद्रूपेण प्रयन्ति १६

तासु गौरिवीतम् ।
यथा ह वा इदमवसानदर्शाववसानं विन्दत एवमेतौ गौरिवीतस्योदासौ देवेभ्य श्वस्तनं विन्दतः ।
श्वस्तनं नोऽसदिति वै सत्रमासते ।
श्वस्तनं हैवैभ्यो भवति ।
एतद्ध वा अद्यश्वं देवानां यद्गौरिवीतम् ।
अक्षितमस्याद्यश्वं भवति य एवं वेद ।
अवसानदर्शो वा एतयोरुदासोऽन्यतरोऽवसाययितान्यः ।
स यथा प्र स्पष्टं तृणोदकमन्ववस्येत्तादृक्तत् ।
यथा ह वा इदं सोमप्रवाकस्सोमं प्राहैवमेतौ गैरिवीतस्योदासौ देवेभ्यस्सोमं प्राहतुः ।
प्रोक्तसोमो ह स तां रात्रिं वसति यस्मिन्नहनि गौरिवीतं भवति ।
अथो हैनं देवा ईक्षन्ते धावत श्वो यष्टेति ।
तद्यदेकाहे गौरिवीतं न कुर्वन्ति नेद्देवाँल्लापयामहा इति ।

यथा ह वा इदं वृक्षस्याक्रमणानि कृतान्येवमेतानि गौरिवीतस्याक्रमणानि कृतानि स्वर्गस्य लोकस्य समष्ट्यै ।
प्र स्वर्गं लोकमाप्नोति य एवं वेद ।
यथा ह वा इदमभीयायमुप विमोकं यायादेवमेतद्यद्गौरिवीतम् ।
तत्तथैव गेयम् १७

शाक्त्यास्तरसपुरोडाशास्सत्रमासत ।
स गौरिवीतिश्शाक्त्यो मृगमहन् ।
तं तार्क्ष्यस्सुपर्ण उपरिष्टादभ्यवापतत् ।
तस्मा उपप्रत्यधत्त ।
तमब्रवीद् ऋषे । मा मेऽस्थः ।
श्वस्तनं ते वक्ष्यामि ।
अद्य वाव त्वं वेत्थ न श्व इति ।
तस्मा एतद्गौरिवीतमब्रवीत् ।
ततो वै स श्वस्तनमपश्यत् ।
तत्प्रजा वै श्वस्तनं पशव श्वस्तनं स्वर्गो लोक श्वस्तनम् ।
तद्यद्गौरिवीतं भवति । एतस्यैव सर्वस्यावरुद्ध्या एतस्योपाप्त्यै ।
वाचो वै रसोऽत्यक्षरत् ।
तद्गौरिवीतमभवत् । यदन्वहं गौरिवीतं भवति । अन्वहमेवैतद्वाचो रसं दधतो यन्ति ।
ये गौरिवीतमहीनेऽवसृजेयुस्तान्ब्रूयादश्वस्तना अप्रजसो भविष्यथेति ।
अश्वस्तना हैवाप्रजसो भवन्ति १८

अथ त्वाषृतीसाम मध्येनिधनं भवति प्रतिष्ठायै ।
समुद्रं वा एतेनारम्भणं प्रप्लवन्ते य आर्भवं पवमानमुपयन्ति ।
तद्यन्मध्येनिधनं भवति प्रतिष्ठित्या एव ।
तस्य पुरस्तान्निधनस्य प्रतिहारमुपयन्ति ।
प्रस्तावप्रतिहाराभ्यां वै यजमानो धृतः ।
प्रद्रुतमिवैतदहर्यत्त्रिवृत् ।
तद्यत्पुरस्तान्निधनस्य प्रतिहारमुपयन्त्यप्रस्रंसायैव ।

इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मयमानो गाः प्राविशत् ।
ता अकामयन्तेन्द्रं जनयेमेति ।
ता एतानि सामान्यपश्यंस्त्वाष्ट्रीसामानि ।
तैरिन्द्रमजनयन् ।
तानि वा एतानि वीरजननानि सामानि ।
आस्य वीरो जायते य एवं वेद ।
अथो पशवो वै त्वाष्ट्र्यः ।
तद्यदेतानि सामानि भवन्ति पशूनामेवावरुध्यै ।
तदैळं भवति पशवो वा इळा पशूनामेवावरुद्ध्यै ।
यदु त्वाष्ट्र्योऽपश्यंस्तस्मात्त्वाष्ट्रीसामेत्याख्यायते ।
अभि प्रियाणि पवते चनोहित
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
तासु कावमुक्तब्राह्मणम् ।
अथ यज्ञायज्ञीयमुक्तब्राह्मणम् १९

पवस्व वाचो अग्रिय
इति प्रतिपदो भवन्ति ।
बृअद्रथन्तरे यदसृज्येतां बृहत्पूर्वमसृज्यताथ रथन्तरम् ।
तस्मात्
पवस्व वाचोऽग्रिय
इति प्रतिपदो भवन्ति ।
प्रेत्यन्य ऋषयोऽपश्यन्नेत्यन्ये ।
अथैतन्न प्रेति नेति स्थितम् ।
वाचो बार्हतं रूपं भरद्वाज ऋषिरपश्यत् ।
भरद्वाजस्य वा एतदार्षेयं यद्बृहत् ।
मनो बृहत् ।
प्रजापतिर्बृहत् ।
प्रजापतितामेवाश्नुते य एवं वेद ।
सोम चित्राभिरूतिभिरभि विश्वानि काव्या

त्वं समुद्रिया अप इति ।
त्वमिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
अग्रियो वाच ईरयन्न्
इत्यग्रं वा एतदहः ।
द्वितीयं वा एतदहस्सत्तदग्रमित्याख्यायते ।
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिर इति ।
प्रद्रुतमिव वा इत एतदहर्यद्बार्हतम् ।
अदो हि बृहत् ।
तद्यन्
महिम्ने सोम तस्थिर
इत्यह्न एवोपस्थित्यै ।
तुभ्यं धावन्ति धेनव
इति समष्ट्यै २०

ता एता भवन्ति गायत्र्यस्त्रिष्टुब्वर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समर्धयन्ति सं तत्रर्ध्यन्ते ।
समस्मा ऋध्यते य एवं वेद ।
पवस्वेन्दो वृषा सुत
इति वृषण्वाननुरूपो भवति ।
बार्हतं वा एतदहः ।
त्रैष्टुभं क्षत्रस्य रूपम् ।
तदाहुरह्न एव रूपं स्तोत्रियेणारभन्तेऽनुरूपेण साम्न इति ।
स्तोत्रियानुरूपौ भवतः ।
प्राणो वै स्तोत्रियेणारभन्तेऽनुरूपेण साम्न इति ।
स्तोत्रियानुरूपौ भवतः ।
प्राणो वै स्तोत्रियोऽपानोऽनुरूपः ।
प्राणापानाभ्यामेवैतत्समृध्य प्रयन्ति ।
मनो वै स्तोत्रियो । वागनुरूपः ।
साम वै स्तोत्रिय । ऋगनुरूपः ।

अहर्वै स्तोत्रियो । रात्रिरनुरूपः ।
इयं वै स्तोत्रियोऽसावनुरूपः ।
आत्मा वै स्तोत्रियः । प्रजानुरूपः ।
स्तोत्रियानुरूपयोर्ह खलु वै तद्रूपं । यस्माद्यां श्रेष्ठीं वाचं वदति तां
पापीयाननुवदति । यस्मात्कर्ता च करणश्च सदृशौ सन्तौ विज्ञायेते ।
स्तोत्रियानुरूपयोर्वै हेतोः प्रजा अनुरूपा आजायन्त ।
आ हास्यानुरूपः प्रजायां जायते य एवं वेद ।
तदाहुर्वीव वा एते प्राणैर्ऋध्यन्ते ये प्रायणीयस्याह्नस्तृचान्विच्छिन्दन्तीति ।
संततानत्र पञ्च तृचानुपयन्ति प्राणानामेव संतत्या अव्यवच्छेदाय ।
सर्वे वृषण्वन्तो भवन्ति ।
बार्हतं वा एतदहः ।
त्रैष्टुभं क्षत्रस्य रूपम् ।
पर्यासो भवति प्रजानां धृत्यै पशूनामुपस्थित्यै ।
पञ्चदशस्तोमो भवति -- इन्द्रियं वै वीर्यं पञ्चदश -- इन्द्रिय एवैतद्वीर्ये
प्रतितिष्ठन्तो यन्ति २१

अग्निं दूतं वृणीमह
इत्याग्नेयं आज्यं भवति ।
प्रेत्यन्य ऋषयोऽपश्यन्नेत्यन्ये ।
अथैतन्न प्रेति नेति स्थितम् ।
वाचो बार्हतं रूपं भरद्वाज ऋषिरपश्यत् ।
भरद्वाजस्य वा एतदार्षेयं यद्बृहत् ।
मनो बृहत् ।
प्रजापतिर्बृहत् ।
प्रजापतितामेवाश्नुते य एवं वेद ।
होतारं विश्ववेदसमिति ।
हो इति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
मित्रं वयं हवामह । इन्द्रमिद्गाथिनो बृहद् ।
इन्द्रे अग्ना नमो बृहद्

इत्येकरूपाण्याज्यानि भवन्ति । सर्वाण्येव बार्हतानि ।
क्षत्रं वा एतदहः ।
तस्मात्सर्वे राजान एकमन्त्रा एकवचसः ।
महद्वती द्वे भवतो बृहद्वती द्वे ।
एतद्वै प्रत्यक्षं बृहतो रूपं यन्महद्यद्बृहत् ।
बृहदेवैतत्प्रत्यक्षमुपयन्ति ।
पञ्चदशस्तोमो भवति -- इन्द्रियं वै वीर्यं पञ्चदश -- इन्द्रिय एवैतद्वीर्ये प्रतितिष्ठन्तो यन्ति २२

वृषा पवस्व धारये
ति माध्यन्दिनस्य पवमानस्य वृषण्वतीर्गायत्र्यो भवन्ति ।
बार्हतं वा एतदहः ।
त्रैष्टुभं क्षत्रस्य रूपम् ।
मरुत्वते च मत्सर
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यंदिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
तं त्वा धर्तारमोण्योर्
इत्यह्न एव धृत्यै ।
अया चित्तो विपानया हरिः पवस्व धारये
ति हरिवतीर्भवन्ति ।
हरिवद्वै त्रिष्टुभो रूपम् ।
त्रैष्टुभमेतदहः ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ यौक्ताश्वं परिष्टोभवद्बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
वसिष्ठो वै सुदासः पैजवनस्यैक्ष्वाकस्य राज्ञः पुरोहित आस ।
स सुदाः पैजवनो वसिष्ठे वळवान्न्यधत्त यथा पुरोहिते निदधते तथा ।
वसिष्ठस्सनिं प्रयन्नब्रवीद्युक्ताश्वं कनीयांसं भ्रातरमेतेषां नो भार्याणामध्यक्षः स्या इति ।

स युक्ताश्वो राजवळवानां शिशूञ्जातान्विपर्यहरत् ।
ये कल्याणा आसंस्तानात्मनेऽकृत ।
ये पापीयांसस्तान्राजवळवासु ।
ते तदन्वबुध्यन्त शिशून्ह जातान्विपर्यहार्षीदिति ।
तमबाधन्त --स्तेनोऽस्यनृषिरिति ।
सोऽकामयत श्रद्धां विन्देयोप मा ह्वयेरन्निति ।
स एतत्सामापश्यत् ।
तेनास्तुत २३

स ओ इ ज्वरेत्येव निधनमुपैत् ।
ततो वै स श्रद्धामुपहवमविन्दत ।
श्रद्धां विन्दामहा इति सत्रमासते ।
श्रद्धामेव विन्दन्ते ।
एतद्ध वै वाचस्सत्यं यद्
ओ इ ज्वरे
ति ।
ज्वरेतीव ह वै चाचस्सत्यम् ।
सत्येन वै स तद्वाचश्श्रद्धामुपहवमविन्दत ।
श्रद्धानीयो भवति । विन्दत उपहवं य एवं वेद ।
तदु प्रजनिष्णु पशव्यं साम ।
ओ इ ज्वरे
ति निधनं भवति ।
अज्यत इति पशुं प्रवीयमाणमाहुः ।
अज्वरा हास्य पशवः प्रजनिष्णवो भवन्ति य एवं वेद ।
यदु युक्ताश्वोऽपश्यत्तस्माद्यौक्ताश्वमित्याख्यायते ।
पुनानस्सोम धारये
त्युभयरूपा बृहती भवति ।
एषा ह वा उभे सामनी उद्ययाम ।
तस्मादेतां कुर्वन्त्येव बृहत्साम्नः कुर्वन्ति रथन्तरसाम्नः ।
तासु सोमसामनी परिष्टोभवती बार्हते ।

तस्माद्बार्हतेऽहनि क्रियेते ।
वृषा वै सोमो । वृषेन्द्र । षन्द्रमेतदहः ।
क्षत्रं वै सोमः । क्षत्रमिन्द्र । षन्द्रमेतदहः ।
रेतो वै सोमः प्रजननमेतदहः ।
तद्यदेते सामनी एतस्मिन्नहनि क्रियेते प्रजनन एवैतद्रेतस्सिच्यते ।
अनुष्ठयास्य रेतस्सिक्तं प्रजापते य एवं वेद ।
ऊर्ध्वेळमन्यद्भवति बृहतो रूपं बार्हतेऽहन् ।
बार्हतमन्यत्त्रिणिधनं माध्यन्दिनस्य रूपं पवमानस्य धृत्यै ।
यदु सोमो राजाऽपश्यत्तस्मात्सोमसामनी इत्याख्यायेते ।
वृषा शोणो अभिकनिक्रदद्गा
इति वृषण्वतीर्भवन्ति ।
बार्हतं वा एतदहस्त्रैष्टुभं क्षत्रस्य रूपम् २४

तासु पार्थं द्वियभ्यासं द्वितीयस्याह्नो रूपं परिष्टोभवद्बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
पृथुर्वै वैन्योऽकामयत सर्वेषां पशूनां राज्याय सूयेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स सर्वेषां पशूनां राज्याय सूयेयत ।
स एतच्छ्रीस्साम ।
सर्वेषां पशूनां राज्याय सूयते य एवं वेद ।
तदु स्तोभप्रस्तावं स्वरं भवति स्वराणां विभक्त्यै ।
एतद्ध्येतस्याह्न स्वारं यत्स्तोभप्रस्तावम् ।
स्वारमूर्ध्वमिवैतदहर् । ऊर्ध्वमिवैतत्साम ।
अहरेवैतेन रोहति तुष्टुवानः ।
यदु पृथुर्वैन्योऽपश्यत्तस्मात्पार्थमित्याख्यायते २५

वासिष्ठं तु कार्यतरमाहुः ।
क्षत्रमेतद्यत्पार्थं । क्षत्रमेतद्यत्सोमसामनी । क्षत्रमेतदहः । क्षत्रं तेन
यदैन्द्रं । क्षत्रं तेन यत्त्रैष्टुभं । क्षत्रं तेन यद्बार्हतं । क्षत्रं तेन

यत्पञ्चदशस्तोमः ।
एकधैव क्षत्रं भवति ।
तद्यत्पुरस्ताद्यौक्ताश्वं भवति वासिष्ठमुपरिष्टादृषिसामनी ब्रह्मण एव स
विवधतायै ।
ब्रह्म क्षत्रेण समद्याम्यसदिति ।
वसिष्ठो वै जीतो हतपुत्रोऽकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
तदेतत्प्रजननं साम ।
बहुः प्रजया पशुभिः प्रजायते य एवं वेद ।
यदु वसिष्ठोऽपश्यत्तस्माद्वासिष्ठमित्याख्यायते ।
अथ बृहत् ।
वर्ष्म वै बृहत् ।
वर्ष्मण्येवैतत्प्रतितिष्ठन्तो यन्ति ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
अथ श्यैतं । साम्नोर्विवाहो यज्ञस्य सन्ततिः ।
एकं वावाहस्तद्यत्
त्वामिदा ह्यो नर
इति भवति ।
तेनैव द्वितीयमहः क्रियते २६

तासु माधुच्छन्दसम् ।
मधुच्छन्दा वै वैश्वामित्रोऽकामयताग्र्यो मुख्यो ब्रह्मवर्चसी स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽग्र्यो मुख्यो ब्रह्मवर्चस्यभवत् ।
अग्र्या मुख्या ब्रह्मवर्चसिनोऽसामेति सत्रमासते ।

अग्र्या एव मुख्या ब्रह्मवर्चसिनो भवन्ति ।
यदु मधुच्छन्दा वैश्वामित्रोऽपश्यत्तस्मान्माधुच्छन्दसमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति २७

यस्ते मदो वरेण्य
इत्यार्भवस्य पवमानस्य मद्वतीर्गायत्र्यो भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयं सवनम् ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधत्यैवैनदेतेन प्याययन्ति ।
तेना पवस्वान्धसेत्यन्धस्वतीर्भवन्त्यन्नं वा अन्धोऽन्नाद्यस्यैवावरुद्ध्यै ।
जघ्निर्वृत्रममित्रियम्
इति त्रैष्टुभं रूपम् ।
यद्वै घ्नद्वत्तत्त्रिष्टुभो रूपम् ।
क्षत्रं हि त्रिष्टुप् ।
संमिश्लो अरुषो भुवस्सूपस्थाभिर्न धेनुभिर्
इति प्रद्रुतमिव वा इत एतदहर्यद्बार्हतम् ।
अदो हि बृहत् ।
तद्यत्सूपस्थाभिरित्यह्न एवोपस्थित्यै ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ हाविष्मतं परिष्टोभवद्बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
हविष्मांश्च वै हविष्कृच्चाङ्गिरसावङ्गिरसां स्वर्गं लोकं यताम् । अहीयेताम्
।
तावकामयेतामनूत्पतेव स्वर्गं लोकं यताम् । अहीयेताम् ।
तावकामयेतामनूत्पतेव स्वर्गं लोकमिति ।
तौ तपोऽतप्येताम् ।
तावेते सामनी अपश्यताम् ।
ताभ्यामस्तुवताम् ।

तौ स्तुत्वेव हविष्मते हविष्कृत इत्येव स्वर्गं लोकमनूदपतताम् ।
पशवो ह खलु वै हविष्मन्तः । पशवो हविष्कृतः ।
पशून्वाव तौ तदेताभ्यामवारुन्धेताम् ।
तैरु पशुभिरिष्ट्वा स्वर्गमेव लोकमगच्छताम् ।
ते एते पशव्ये स्वर्ग्ये सामनी ।
अव पशूनुन्द्धे गच्छति स्वर्गं लोकं य एवं वेद २८

प्रोक्तिश्च ह खलु वा एते सामनी हविषो निरुक्तिश्च ।
तद्यद्धाविष्मतं द्वितीयेऽहनि भवति । हविष्मन्त स्म इत्येवैतद्देवेभ्यः प्राहुः
।
हविष्मन्त इव ह्येतर्हि भवन्ति ।
अथ यद्धाविष्कृतं नवमेऽहनि भवति । हविष्कृत स्म इत्येवैतद्देवेभ्यो
निराहुः ।
हविष्कृत इव हि तर्हि भवन्ति ।
ते ह वा एते सामनी प्रोक्तिश्चैव हविषो निरुक्तिश्च ।
यदु हविष्मांश्च हविष्कृच्चाङ्गिरसावपश्यतां तस्माद्धाविष्मत-हाविष्कृते
इत्याख्यायेते ।
पवस्व मधुमत्तम
इति मधुमतीः ककुभो भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मधुमतीर्भवन्ति रसमेवास्मिन्नेतद्दधत्यैवैनदेतेन प्यययन्ति ।
इन्द्राय सोम ऋतुवित्तमो मदः ।
महि द्युक्षतमो मदः ।
इत्यभिपूर्वमेवास्मिंस्तद्रसं मदं दधति २९

तासु सीदन्तीयम् ।
देवा वा अकामयन्त स्वर्गे लोके सीदेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।

ततो वै ते स्वर्गे लोकेऽसीदन् ।
स्वर्गे लोके सीदामेति सत्रमासते ।
स्वर्ग एव लोके सीदन्ति ।
यदु देवा एतेन साम्ना स्वर्गे लोकेऽसीदंस्तस्मात्सीदन्तीयमित्याख्यायते ।
तद्वेवाचक्षते शंक्विति ।
शंकुना वै तद्दृंहन्ति यद्दधिषेरयं भवति ।
दधिषेरयमिवैतदहर्यद्द्वितीयम् ।
तस्माद्द्वितीयेऽहन्क्रियते ।
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
श्रुष्टे जातास इन्दव स्वर्विदः ।
इत्यृचा वै पूर्वमह स्वर्वत्क्रियते । साम्नैतत् ।
राथन्तरं हि पूर्वमहर् । बार्हतमेतत् ३०

तासु सुज्ञानं ।
देवान्वा असुरा व्यवंह्वारमजिघांसन्यद्रूपं देवानामासीत्तेन रूपेणानुप्रविश्य
तेषां ह देवानां येऽररये स्वाध्यायं चेरुर् ।
ये ग्राम आसुस् । तेषां तान्रूपेण जिघांसांचक्रुः ।
अथ ये ग्राम आसुर् । येऽररये स्वाध्यायं चेरुर् । तेषामु तान्रूपेण
जिघांसांचक्रुः ।
तान्हैव व्यवंह्वारं जिघांसां चक्रुः ।
तद्देवाः प्रत्यबुध्यन्ते ।
तेऽब्रुवन्संवाचनं करवामहा इति ।
ते संवाचनमकुर्वत यं पृच्छाम चरन्तं कमच्छ चरसीति । इन्द्रमच्छ
चरामीत्येव स ब्रूतादिति ।
ते ह स्म यं पृच्छन्ति चरन्तं कमच्छ चरसीति । इन्द्रमच्छ चरामीति ह
स्मैवाह ।
सुज्ञानोऽसीति ह स्माहुः ।
तदेव सुज्ञानस्य सुज्ञानत्वम् ।
तत्संज्ञानं वा एतत्साम ।
संज्ञानमेवास्मै तेन भवति । येन कामयतेऽनेन संजानीयेति । य एवं वेद

।
तेषामु यो य एव पृष्टो न प्रत्यमनुत । तस्यैतदेव प्राघ्नन् ।
तदु भ्रातृव्यहा ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
देवा वै स्वर्गं लोकं यन्तो ज्ञानादबिभयुः ।
तेऽकामयन्त ज्ञानमाविर्भावं गच्छेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते ज्ञानमाविर्भावमगच्छन् ।
ज्ञानमाविर्भावं गच्छति य एवं वेद ।
अयं पूषा रयिर्भगस्सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ।
इत्युभयोरेवाह्नोस्समारम्भाय ।
यथा ह वा इदं श्रमणं व्यवलम्बमानं नयेदेवं ह वा एतदहरेते अहनी नयतो बार्हतं राथन्तरे ।
तासु गौरिवीतमुक्तब्राह्मणम् ३१

अथ क्रौञ्चम् ।
क्रुंङांगिरस ईष्यमिवाहरविन्दत् ।
ईष्यमिवैतदहर्यद्द्वितीयम् ।
तस्माद्द्वितीयेऽहन्क्रियते ।
एकं वावाहरासीत् ।
स क्रुंङाङ्गिरसोऽकामयताह्न एवाहर्निर्मिमीयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽह्ने एवाहर्निरमिमत ।
तद्यदेतत्साम भवत्य् । अह्न एवैतेनाहर्निर्मिमत ।
एतद्ध स्म वै तत्क्रुङ्ङाङ्गिरसोऽह्ने एवाहर्विपिपीते ।
यद्ध वा इदमाहुः क्रुङ्ङीरं विपिपीत इति । न ह वै तत्क्रुङ्विपिपीते ।
क्रुङ्ह स्म वै तदाङ्गिरसोऽह्न एवाहर्विपिपीते ।

क्रुंङाङ्गिरस स्वर्गकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स स्वर्गं लोकमाश्नुत ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
तदूर्ध्वेळं भवति बृहतो रूपं बार्हतेऽहन् ।
तेन वै रूपसमृद्धम् ।
यदु क्रुंङाङ्गिरसोऽपश्यत्तस्मात्क्रौञ्चमित्याख्यायते ।
वृषा मतीनां पवते विचक्षण इति वृषण्वतीर्भवन्ति ।
बार्हतं वा एतदहस्त्रौष्टुभं क्षत्रस्य रूपम् ३२

तासु यामम् ।
यममिव वा एतदहर्यद्द्वितीयम् ।
यथा वै यमौ जायेयातामेवमेतदहः ।
यमैर्वै यमोत्गमोरवं लोकान्निरुंह्य लोकमस्याभ्यारोहत् ।
लोकादेव द्विषन्तं भ्रातृव्यं रुंह्य लोकमस्याभ्यारोहति य एवं वेद ।
मन्त्रेणर्षयो निदानवन्तो यामेन यमः ।
निदानवन्तोऽसामेति सत्रमासते ।
निदानवन्त एव भवन्ति ।
तद्गृहा वै निदानं । प्रजा निदानं । पशवो निदानं । स्वर्गो लोको निदानम् ।
निदानवान्भवति य एवं वेद ।
यमं वैवस्वतं देवा अमुष्मै लोकायासुवत ।
सोऽकामयत निदानवानस्मिँल्लोके स्यामिति ।
स एतानि यामानि सामान्यपश्यत् ।
तैरस्तुत ।
तैरस्मिँल्लोके निदानवानभवत् ।
एतन्निदानो ह वाव सोऽस्मिँल्लोके एतत्प्रजा एतैरेव सामभिर्य एवैतानि सामानि वेद ।

तेनास्मिँल्लोके निदानवान्यमस्य पुत्रतां गच्छति य एवं वेद ।
तदाहुः पितृदेवत्यानि सामानि ।
ईश्वरः पुरायुषोऽमुं लोकमेतोरित्यायुरिति वा स्तोभत्यथो वायुरिति ।
तथा ह पुरायुषोऽमुं लोकं नैति ।
यदु यमोऽपश्यत्तस्माद्यामिमित्याख्यायते ।
अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
एह्यू षु ब्रवाणि ते अग्न इत्थतरा गिरः ।
एभिर्वर्धास इन्दुभिः
इति वृद्धं ह्येतदहर्यद्बार्हतम् ३३

तासु साकमश्वं स्वर्ग्यं साम स्वर्गस्य लोकस्य समष्ट्यै ।
एवा ह्यसि वीरयुर्
इत्येवेति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
तास्वामहीयवं प्राजापत्यं साम ।
क्षत्रं वै प्रजापतिः ।
प्राजापत्यमेतदहः ।
तद्गायत्रीषु भवति ।
ब्रह्म वै गायत्री ।
क्षत्रमेतदहः ।
तद्यद्गायत्रीष्वामहीयवं भवति । ब्रह्मैव तद्यशसार्पयन्ति ।
ब्रह्मणोऽस्य सतः क्षत्रस्येव प्रकाशो भवति य एवं वेद ।
एतस्माद्ध वा इदं ब्राह्मणानां राज्ञामिव प्रकाशो यद्गायत्रीषूक्थं ब्रह्मसाम भवति ।
तत्समानं वदन्तीषु भवति ।
यद्ध वै बहवस्समानमाचक्षते तत्सत्यम् ।
तद्यद्
एवा ह्यसि वीरयुरेवाशूर उत स्थिरः ।
एवा ते राध्यं मनः
इति भवति सत्यस्यैवद्धर्यै ।

इन्द्रं विश्वा अवीवृधन्न्
इति वृद्धं ह्येतदहर्यद्बार्हतम् ।
तास्वाष्टादंष्ट्रमुक्तब्राह्मणम् ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळ ।
पशुष्वेवैतत्प्रतितिष्ठन्ति ।
अभीळायै स्वरेण तृतीयमह स्वरति ३४

दविद्युतत्या रुचे
ति प्रतिपदो भवन्ति ।
दविद्युतत्या रुचे
ति वै गायत्र्यै रूपम् ।
परिष्टोभन्त्या
 कृपेति त्रिष्टुभः ।
सोमाश्शुक्रा गवाशिर
इति जगत्यै ।
छन्दसां वा एषां रूपं छन्दोभिस्तृतीयसवनं क्रियते ।
तृतीयसवनमिव वै तृतीयमहः ।
ता एता भवन्ति गायत्र्यो जगद्वर्णा अह्नोरूपेण समृद्धाः ।
यत्र वा अहारूपेण समृद्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद ।
एते असृग्रमिन्दव
 इत्यनुरूपो भवति ।
भूतानुवादिनीरेत एत इति वै पूर्वाण्यतोऽनुदिशन्ति ।
बृहद्रथन्तरयोरेवैतद्यातेन यान्ति त्रिवृत्पञ्चदशयो स्तोमयोः ।
तदाहुस्साम्न एव रूपं स्तोत्रियेणारभन्तेऽनुरूपेणाह्न इति ।
स्तोत्रियानुरूपौ भवतः ।
प्राणो वै स्तोत्रियोऽपानोऽनुरूपः ।
प्राणापानाभ्यामेवैतत्समृध्य प्रयन्ति ३५

ता गोमतीरिळावतीरश्ववतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
अन्तरिक्षवतीर्भवन्ति ।
अन्तरिक्षं ह्येतदहः ।
आशीर्वतीर्भवन्ति ।
आशीर्वद्ध्येतदहः ।
अथो आशिरं वै तृतीयसवनेऽवनयन्ति ।
तृतीयसवनभाजनमेतदहः ।
पञ्चर्चं भवति पञ्च वै दिशो दिशामेव धृत्यै ।
अथो पांक्तो वै यज्ञो यज्ञस्यैवारम्भाय ।
पर्यासो भवति प्रजानां धृत्यै पशूनामुपस्थित्यै ।
सप्तदशस्तोमो भवति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतावेवैतत्प्रतितिष्ठन्तो यन्ति ३६

अग्निनाग्निस्समिध्यत
इत्याग्नेयमाज्यं भवति राथन्तरम् ।
राथन्तरं ह्येतदहः ।
यद्ध वा अग्निनाग्निस्समिद्ध्यते वैरूपं ह वै तद्रथन्तरेण समिध्यते ।
रथन्तरं वा वैरूपेण ।
तदु होवाच सौजातस्याराटेर्जाया यन्नु मे द्वे एव पृष्ठे पतिरमन्यताथ क्रोऽयं गर्दभ औदुम्बरिमभिनानद्यत इति ।
तदाहू राथन्तरमेतदहः ।
तस्मादेतस्याह्नो रथन्तरं पृष्ठं कार्यमिति ।
तदु वा आहुः को वा न्वै स्यात्पुरुषः को वा यदस्यात्मेव स्यान्न पशवः ।
आत्मा वै बृहद्रथन्तरे ।
पशवः पृष्ठानि ।
तस्मादेतस्याह्नो वैरूपमेव पृष्थं कार्यमिति ।

तद्यदेतस्याह्नो वैरूपं पृष्ठं भवत्यात्मन्नेवैतद्पशून्प्रतिष्ठापयन्ति ३७

मित्रं हुवे पूतदत्तम्
इति मैत्रावरुणं भवति ।
हु इति वै रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
वरुणं च रिशादसं धियं घृताचीं साधन्ते
ति सिद्ध्या एव ।
ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
ऋतुं बृहन्तमाशाथे
कवी नो मित्रावरुणा
इति वीति भवत्यन्तरिक्षस्य रूपम् ।
अन्तरिक्षभाजनमेतदहः ।
इन्द्रेण सं हि दृक्षस
इत्यैन्द्रं भवति ।
समिति च वै वीति वान्तरिक्षस्य रूपम् ।
इतो वा अयं ऊर्ध्वो लोकोऽर्वाङसावमुतः ।
समिति च वा इदमन्तरिक्षं वीति च ।
संजग्मानो अबिभ्युषा मन्दू समानवर्चसे
ति ।
समानं वै तृतीयं च चतुर्थं चाहनी ।
तृतीयाद्वा अह्नश्चतुर्थमहः प्रजातम् ।
आदह स्वधामनु पुनर्गर्भत्वमेरिर
इति पुनरेवैतत्तृतीयेऽहनि गर्भत्वमेरयन्ते चतुर्थस्याह्नः प्रजात्यै ।
दधाना नाम यज्ञियं
वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
अविन्द उस्त्रिया अनु
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ३८

तो हुवे ययोरिदम्
 इत्यैन्द्राग्नं भवति ।
वाचमेवैतद्यज्ञमूहिषीमन्त त उपह्वयन्ते
पप्रे विश्वं पुरा कृतम्
इति ।
पुरेव ह्येतदेतर्हि कृतं भवति ।
इन्द्राग्नी न मर्धतः
उग्रा विघनिना मृध
इति ।
वीति भवत्यन्तरिक्षस्य रूपम् ।
अन्तरिक्षभाजनमेतदहः ।
हथो वृत्राण्यार्या हथो दासानि सत्पती ।
हथो विश्वा अप द्विषः
इति वार्त्रघ्नं भवत्यन्ततो विजित्यै ।
एतेन वै त्र्यहेण देवा अग्रे व्यजयन्त ।
तद्यदेतद्वार्त्रघ्नमन्तत आज्यं क्रियते । विजित्या एव भ्रातृव्यस्यैव वधाय ।
विजयते । हन्ति द्विषन्तं भ्रातृव्यं । य एवं वेद ।
सप्तदश स्तोमो भवति ।
प्रजापतिर्वै सप्तदशः ।
प्रजापतावेवैतत्प्रतितिष्ठन्तो यन्ति ३९

उच्चा ते जातमन्धसे
 ति माध्यन्दिनस्य पवमानस्यान्धस्वतीर्गायत्र्यो भवन्त्यन्नं वा
अन्धोऽन्नाद्यस्यैवावरुद्ध्यै ।
दिवि सद्भूम्या दद
इति द्यावापृथिवीया भवन्ति ।
अप्रतिष्ठितमिव वा एतदहर्यद्वैरूपम् ।
तद्यदेता द्यावापृथिवीया भवन्त्यहरेवैताभिः प्रतिष्ठापयन्ति ।
स न इन्द्राय यज्यवे वरुणाय मरुद्भ्य
इति मरुत्वतीर्भवन्ति ।

मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
एना विश्वान्यर्य आ
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ वैष्टम्भम् ।
ऊर्ध्वा वै देवा स्वर्गं लोकमुदक्रामन् ।
ते दिशो नापश्यन् ।
तेऽकामयन्त दिशः पश्येमेति ।
त एते सामनी अपश्यन् ।
ताभ्यामस्तुवत ।
ततो दिशोऽपश्यन् ।
तास्वाक्रमन्त ।
तास्समिवाप्लीयन्त ।
ता एताभ्यां निधनाभ्यां यथा चर्म कुशीभ्यामन्वस्येदेवमेवाभ्यामन्वास्यन् ।
ता अध्रियन्त ।
तद्यदेते सामनी भवतो दिशामेव धृत्यै स्वर्गस्य च लोकस्योज्जित्यै ।
दिशो वा एतदहर् । दिश एते सामनी ।
तद्यदेते सामनी एतस्मिन्नहनि क्रियेते । दिश एवैतत्प्रत्यक्षमारभन्ते ।
अभि सोमास आयव
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ४०

यद्यद्वै देवा यज्ञेऽकुर्वत । तत्तद्वेवासुरा अन्वकुर्वत ।
ते देवा अब्रुवन्यद्यद्वाव वयं यज्ञे कुर्महे । तत्तन्नोऽसुरा अनुकुर्वते ।
एतेमं त्रयं वेदं गाथया संसृजामेति ।
ते त्रयं वेदं गाथया संयुक्तं न्यास्यन् ।
तमसुरा अब्रुवन्न वा अयमभूद्यं गाथया समस्राक्षुः ।
एतेमं जहामेति ।

तमजहुः ।
तस्माद्धीनाद्देवा एतं गाथायै रसं प्रावृहन्त ।
स एष प्रगाथोऽभवत् ।
तद्यद्गाथायै रसं प्रावृहन्त । तत्प्रगाथस्य प्रगाथत्वम् ।
स हैष रस एव प्रवृढः ।
रसेन हास्य स्तुतं भवति य एवं विद्वान्प्रगाथेन स्तुते ।
अथ ह वा अग्र ऋक्च गाथा च सदृश्यावेवासतुर् । तान्यान्यामति ।
ते आजिमैताम् ।
सैतं ऋग्गाथायै रसं प्रावृहत ।
स एष प्रगाथोऽभवत् ।
तद्यद्गाथायै रसं प्रावृहत । तद्वेव प्रगाथस्य प्रगाथत्वम् ।
स हैष रस एव प्रवृढः ।
रसेन हास्य स्तुतं भवति य एवं विद्वान्प्रगाथेन स्तुते ४१

तस्मिन्नु ह देवा विराजमन्नाद्यं ददृशुर्मिथुनं प्रजननम् ।
तद्यच्चतुष्पदा प्रथमा भवति त्रिपदे उत्तरे द्वे । तानि दश पदानि संपद्यन्ते ।
दशाक्षरा विराड् । अन्नं विराट् ।
एतां ह तद्ददृशुः ।
अथ यद्बृहतीति पूर्वामाचक्षते प्रगाथ इत्युत्तरे तदु मिथुनं प्रजननम् ।
तस्मिन्नु हैव वसिष्ठो विराजमन्नाद्यं ददर्शाचतुरं मिथुनं प्रजननम् ।
तद्यच्चतुष्पदा प्रथमा भवति द्विपद उत्तरास्तिस्रस्तानि दश पदानि संपद्यन्ते ।
दशाक्षरा विराड् । अन्नं विराट् ।
एतां ह तद्ददर्श ।
एकेति तदेका । द्वे इति तत्तिस्रस् । तिस्र इति तत्षट् । चतस्र इति तद्दश ।
सो एव विराट् ।
एक इत्येकेति । द्वाविति द्वे इति । त्रय इति तिस्र इति । चत्वार इति चतस्र इत्य् । एतद्वा आचतुरं मिथुनं प्रजननम् ।
प्र मिथुनेन जायते य एवं वेद ४२

तासु पौरुमुद्गम् ।
इळावान्पवमानः पौरुमुद्गेन क्रियते ।
पुरुमुद्ग आङ्गिरसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतामिळामुपैत् ।
पशवो वा इळा ।
ततो वै स पशूनवारुन्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्धे बहुपशुर्भवति य एवं वेद ।
यदु पुरुमुद्ग आङ्गिरसोऽपश्यत्तस्मात्पौरुमुद्गमित्याख्यायते ।
देवाश्च वा असुराश्चाधि समुद्रमस्पर्धन्त ।
ते देवा अकामयन्त पूर्व एवासुरान्समुद्रे मज्जयेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनासुरान्पूर्वेऽमज्जयन् ।
तद्यत्पूर्वेऽमज्जयंस्तद्वेव पौरुमुद्गस्य पौरुमुद्गत्वम् ।
पूर्व एव द्विषन्तं भ्रातृव्यं मज्जयति य एवं वेद ।
तेषामु यो य एवोदमज्जत्तस्यैतेनैव साम्ना प्राघ्नन् ।
तदु भ्रातृव्यहा ।
कस्मादेतत्सामाहू रक्षोहेति ।
रक्षांसीव वा एतत्तानघ्नन् ।
हन्ति द्विषन्तं भ्रातृव्यम् । अव रक्षः पाप्मानं हते य एवं वेद ४३

अथ गौतमम् ।
उभौ वर्णौ समृद्ध्यै बार्हतं प्रस्तावेन राथन्तरमूर्धम् ।
गोतमो वै राहूगणोऽकामयत सातसनि स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।

ततो वै स सातसनिरभवत् ।
सातसनयोऽसामेति सत्रमासते ।
सातसनय एव भवन्ति ।
तद्ये च ह वै गोतमादृषयः पराञ्चो ये चार्वाञ्चस्ते गोतममेवर्षिमुभय उपासते
।
एतं हि स महिमानमपश्यत् ।
ये च हास्मात्पराञ्चः पितरो भवन्ति । ये चार्वाञ्चस्त एनमुभय उपासते य
एवं वेद ।
यदु गोतमो राहूगणोऽपश्यत्तस्माद्गौतममित्याख्यायते ४४

अथान्तरिक्षम् ।
देवान्वा अन्तरिक्षं परेतानसुरा अविध्यन् ।
तेऽकामयन्तान्तरिक्षादेवान्तरिक्षेण विजित्य स्वर्गं लोकमारोहेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तेऽन्तरिक्षादेवान्तरिक्षेण विजित्य स्वर्गं लोकमारोहन् ।
तदेवान्तरिक्षस्यान्तरिक्षत्वम् ।
तदेतद्विजिति स्वर्ग्यं साम ।
विजयते गच्छति स्वर्गं य एवं वेद ।
अन्तरिक्षं वा एतदहः ।
लेलेव वा अन्तरिक्षम् ।
तद्यन्मध्येनिधनं भवति प्रतिष्ठित्या एव ।
तस्योभयतः पदं परिष्टोभत्यन्तरिक्षस्य रूपम् ।
उभयत इव हीदमन्तरिक्षं परिष्टुब्धमाभ्यां लोकाभ्याम् ।
तस्मादु हैतत्सामैतस्मादह्नो नान्तरित्यम् ।
अन्तरिक्षं वा एतदहर् । अन्तरिक्षमेतत्साम ।
अहरेवैतेन रोहति तुष्टुवानः ।
यदु देवा एतेन साम्नान्तरिक्षादेवान्तरिक्षेण विजित्य स्वर्गं
लोकमारोहंस्तस्मादन्तरिक्षमित्याख्यायते ४५

अथ काण्वम् ।
कण्वो वै नार्षदो ज्योगप्रतिष्ठितश्चरन्सोऽकामयत प्रतितिष्ठेयमिति ।
स एतत्सामापश्यत् ।
तस्य निधनं नापश्यत् ।
स वृषदंशस्य ह्वत उपाशृणोत् ।
तदपश्यत् ।
तेनास्तुत ।
ततो वै स प्रत्यतिष्ठत् ।
तदेतत्प्रतिष्ठासाम ।
प्रतितिष्ठति य एवं वेद ।
यदु कण्वो नार्षदोऽपश्यत्तस्मात्काण्वमित्याख्यायते ।
तिस्रो वाच ईरयति प्र वह्निर्
इति त्रिष्टुभोऽन्त्या भवन्ति तृतीयस्याह्नो रूपम् ।
तेनैव त्रीण्यहानि कल्पन्ते ।
ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानास्सोमं यन्ति मतयो वावशानाः
इति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ४६

तासु संक्रोशः ।
संक्रोशेन वै देवास्संक्रोशमाना स्वर्गं लोकमायन् ।
यत्संक्रोशमाना स्वर्गं लोकमायंस्तत्संक्रोशस्य संक्रोशत्वम् ।
तदेतत्स्वर्ग्यं साम ।
संक्रोशमान एवैतेन स्वर्गं लोकमेति य एवं वेद ।
तद्वेवाचक्षतेऽङ्गिरसां संक्रोश इति ।
अङ्गिरसो वा अकामयन्त संविदाना एव संक्रोशमाना स्वर्गं लोकमियामेति
।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते संविदाना एव संक्रोशमाना स्वर्गं लोकमायन् ।

यत्संक्रोशमाना स्वर्गं लोकमायंस्तद्वेव संक्रोशस्य संकोशत्वम् ।
तदेतत्स्वर्ग्यं साम ।
संविदान एवैतेन संक्रोशमान स्वर्गं लोकमेति य एवं वेद ।
तच्छ्रीर्वै स्वर्गो लोकः ।
अश्नुते श्रियं । गच्छति स्वर्गं लोकं । य एवं वेद ।
यद्वङ्गिरसोऽपश्यंस्तस्मादङ्गिरसां संक्रोश इत्याख्यायते ।
हूतिश्च ह खलु वा एते सामनी प्रतिश्रुतिश्च हे ये हो वा हा हो
इत्येवानेनाङ्गिरसोऽह्वयन् ।
हा वा ओ वा इत्येतेन प्रत्यशृण्वन् ।
ते ह वा एते सामनी हूतिश्चैव प्रतिश्रुतिश्च । स्वर्ग्ये । स्वर्गस्य लोकस्य
समष्ट्यै ४७

यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्सहस्रं सूर्या अनु
इति यद्वै शतवत्सहस्रवत्तज्जगत्यै रूपम् ।
जागतमेतदहः ।
न जातमष्ट रोदसी
इतीमे ह वाव रोदसी ।
एते एवैतदभिवदति ।
आ पप्राथ महिना वृष्णया वृषन्विश्वा शविष्ठ शवसे
ति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
अस्मं अव मघवन्गोमति व्रजे वज्रिञ्चित्राभिरूतिभिर्
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
तासु वैरूपम् ।
संवत्सरो वै विरूपो । विरूपा ऋतवो । विरूपा अर्धमासाः ।
तद्यत्पञ्चनिधनं पञ्च ह्यृतवो । यद्द्वादशनिधनं द्वादश हि मासा ।
यद्दिग्वदाक्रमणावत्तेन । यद्विश्ववद्वैश्वदेवं ह्येतदहः ।
प्रजननं वा एतद्वैरूपम् ।

तद्यत्तृतीयेऽहन्क्रियते चतुर्थस्याह्नः प्रजात्यै ।
यद्देवा अभवंस्तदसुरा अभवन् ।
ते देवा अश्वा अभवंस् । तदसुरा नान्ववायन् ।
ततो वै देवा अभवन् । परासुराः ।
भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ४८

तद्यदश्ववद्भवति भ्रातृव्यस्यैवापनुत्त्यै ।
अध्यर्धेळा तृतीयस्याह्नोऽध्यर्धेळा पञ्चमस्य ।
स यथा मण्डूक इट्कुर्यादेवमत्रेट्कुर्यात् ।
तेनैव पञ्चममहरयातयाम क्रियते ।
सर्वा वै वाक्तृतीयेऽहन्नाप्यते ।
तद्यदेते वृकणावा भवन्त्युभय्या एव वाचुपाप्त्यै । या च ग्राम्या या चारण्या ४९

तासु वैष्टम्भम् ।
वैष्टम्भेन वै देवा असुरानेभ्यो लोकेभ्यो निष्टभ्य स्व आयतने सत्रमासत ।
वैष्टम्भेनैव द्विषन्तं भ्रातृव्यमेभ्यो लोकेभ्यो निष्टभ्य स्व आयतने सत्रमास्ते य एवं वेद ।
नैष्टम्भं ह वै नामैतत् ।
तद्वैष्टम्भमित्याख्यायते ।
उदरं वा एतदहः ।
अन्नमेतद्यद्वैष्टम्भम् ।
तद्यदत्र वैष्टम्भं क्रियते मध्यत एवैतदात्मनोऽन्नाद्यं दधते ।
तस्मादु हेदं पुरुषोऽन्नेन विष्टब्ध इव ।
तरणिरित्सिषासती
ति प्रज्ञाता स्तोत्रिया भवन्ति ।
तासु रौरवं त्रिरूपं त्रिपरिष्टोभं तृतीयस्याह्नो रूपम् ।
अग्निर्वै रुरू । रुद्रोऽग्निः ।
यस्मात्पशवोऽपक्रामन्त्यग्निरेव तस्मात्पशूनपक्रमयति ।
अथ यं पशव उपनमन्त्यग्निरेव तस्मै पशूनुपनमयति ।

आग्नेयास्सत्रिण स्वैवैभ्यो देवता पशूनवरुन्द्धे ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति ५०

तिस्रो वाच उदीरत
इत्यार्भवस्य पवमानस्य गायत्र्यो भवन्ति तृतीयस्याह्नो रूपम् ।
तेनैव त्रीण्यहानि कल्पन्ते ।
गावो मिमन्ति धेनवः ।
हरिरेति कनिक्रदत्
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
अभि ब्रह्मीरनूषते
त्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
राये समुद्रांश्चतुर
इति चतुर्थस्यैवाह्नः प्रजात्यै ।
अस्मभ्यं सोम विश्वत
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
आ पवस्व सहस्रिण
इति यद्वै शतवत्सहस्रवत्तज्जगत्यै रूपम् ।
जागतमेतदहः ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ पाष्ठौहम् ।
पाष्ठौहीराङ्गिरस स्वर्गकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स स्वर्गं लोकमाश्नुत ।
तदेतत्स्वर्ग्यं साम ।

अश्नुते स्वर्गं लोकं य एवं वेद ।
यदु पाष्ठौहीराङ्गिरसोऽपश्यत्तस्मात्पाष्ठौहमित्याख्यायते ।
हूतिश् । च ह खलु वा एते सामनी प्रतिश्रुतिश्च हो ये हो वा हा हो इत्येवैतेनाङ्गिरसोऽह्वयन् ।
हा ओ वा ओ वा इत्यनेन प्रत्यशृणवन् ।
ते ह वा एते सामनी हूतिश्चैव प्रतिश्रुतिश्च । स्वर्ग्ये । स्वर्गस्य लोकस्य समष्ट्यै ।
आ सोता परि षिञ्चते
ति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ५१

तासु वाचस्साम ।
निष्कर्या देवास्सत्रमासते ।
ते स्वर्गं लोकं न प्रजानन्नेतत्तृतीयमहः ।
तेऽकामयन्त प्र स्वर्गं लोकं जानीयामेदं तृतीयमहरिति ।
तान्वाक्साम गायमानोपाप्लवत ।
तदपश्यन् ।
तेनास्तुवत ।
तेनार्ध्नुवन् ।
तेन स्वर्गं लोकं प्रजानन्नेतत्तृतीयमहः ।
तदेतदृद्धि स्वर्ग्यं साम ।
ऋध्नोति । गच्छति स्वर्गं लोकं य एवं वेद ।
यद्ध वै शिवं शान्तं वाचस्तत्साम ।
सामन्वदतीति वा आहुः ।
साधु वदन्तं तद्यदेतत्साम भवति शिवेनैवैतद्वाचश्शान्तेन त्र्यहं शमयन्ति ।
यदु वाक्साम गायमानोपाप्लवत तस्माद्वाचस्सामेत्याख्यायते ।
सखाय आ नि षीदत पुनानाय प्र गायते
ति प्रवतीः परिवतीर्भवन्ति ।
तद्यत्प्रवतीर्भवन्ति चतुर्थस्यैवाह्नः प्रजात्यै ।
अथ यत्परिवतीरन्तस्य रूपमन्तो ह्येतदहर्योऽन्तस्सोऽन्तोऽसदिति ।

परि परीति वा अन्तं पर्यन्ति ५२

तासु शौक्तम् ।
अङ्गिरसो वै तपस्तेपाना अशोचन् ।
तेऽकामयन्ताप शुचं हनीमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेन शुचमपाघ्नत ।
तद्यच्छुचमपाघ्नत तच्छौक्तस्य शौक्तत्वम् ।
अप शुभं हते य एवं वेद ।
शुक्तिरांगिरस स्वर्गकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स स्वर्गं लोकमाश्नुत ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वगं लोकं य एवं वेद ।
यदु शुक्तिराङ्गिरसोऽपश्यत्तस्माच्छौक्तमित्याख्यायते ।
सुतासो मधुमत्तमास्सोमा इन्द्राय मन्दिन
इति मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधत्यैवैनदेतेन प्याययन्ति ।
पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदा
इत्यभिपूर्वमेवास्मिंस्तद्रसं मदं दधति ।
इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
सहस्रधारः पवते समुद्रो वाचमीङ्खय
इति यद्वै शतवत्सहस्रवत्तज्जगत्यै रूपम् ।

जागतमेतदहः ५३

तासु गौरिवीतमुक्तब्राह्मणम् ।
अथ त्वाष्ट्रीसाम वीरजननं साम ।
अस्य वीरो जायते य एवं वेद अथो चतुर्थस्यैवाह्नः प्रजात्यै ।
प्रजननं ह्येतद्यत्त्वाष्ट्रीसाम ।
तन्मध्येनिधनं भवति प्रतिष्ठायै ।
समुद्रं वा एतेनारम्भणं प्रप्लवन्ते य आर्म । वं पवमानमुपयन्ति ।
यद्यन्मध्येनिधनं भवति प्रतिष्ठित्या एव ।
तदु निषिद्धमिव भवत्यन्तस्य रूपम् ।
अन्तो वै स्वर्गो लोकानाम् ।
स्वर्गायैतल्लोकायाह्रियते यत्तृतीयमहः ।
तद्यदेतन्निषिद्धमिव भवति स्वर्गस्यैव लोकस्यानतिपादाय ।
पवित्रं ते विततं ब्रह्मणस्पत
इति पवित्रवतीर्भवन्ति ।
पवित्रमिव वा इदं विततं यदन्तरिक्षम् ।
अन्तरिक्षभाजनमेतदहः ।
प्रभुर्गात्राणि पर्येषि विश्वत
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्सं तदाशते
ति समष्ट्यै ।
तपोष् । पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधि तिष्ठन्ति तेजसा
इति स्वर्गस्यैव लोकस्य समष्ट्यै ।
अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमाति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः
इति पुनरेवैतत्तृतीयेऽहनि गर्भमादधति चतुर्थस्यैवाह्नः प्रजात्यै ५४

तास्वरिष्टं यज्ञस्यैवारिष्ट्यै ।

यद्ध वै किं च यज्ञस्य दुष्टुतं दुश्शस्तं विधुरं तस्य ह वा एतदरिष्टयै ।
अरिष्टो ह वा एतेन यज्ञः ।
देवा वा एतं द्वादशरात्रमतन्वत ।
तेषां यद्यदरिष्यत्तदरिष्टेनारिष्टमकुर्वत ।
तदरिष्टस्यारिष्टत्वम् ।
अरिष्टेन द्वादशरात्रेण पाप्मानं तरति श्रियमश्नुते य एवं वेद ।
तंस्त्रीळं भवति पशवो वा इळा ।
पशव एतदहरभिपूर्वाणामेव पशूनामवरुद्धयै ।
भेषजं ह खलु वै तिस्र इळाः ।
एतद्ध वै शिवं शान्तं वाचो यत्तिस्र इळाः ।
तद्यत्त्रीळं तृतीयेऽहनि भवति तेनैव त्रीण्यहानि शमयन्ति ।
अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
प्र मंहिष्ठाय गायते
ति प्रमंहिष्ठीयमुक्तब्राह्मणम् ।
तं ते मदं गृणीमसी
ति मद्वतीर्भवन्ति ।
अभिपूर्वमेवैतत्तृतीयसवने रसं मदं दधति ।
तासु हारिवर्णमुक्तब्राह्मणम् ।
तच्चतुरक्षरणिधनं भवति चतुष्पदा वै पशवः ।
पशव उष्णिगभिपूर्वाणामेव पशूनामवरुद्धयै ५५

श्रुधी हवं तिरश्च्या
इति तैरश्चम् ।
ऊर्ध्वान्वा अन्ये लोकान्देवाश्चर्षयश्चाजयन् ।
अथ तिरश्चिराङ्गिरसोऽकामयत तिरश्चोऽहं लोकाञ्जयेयं । येनेमा आप स्यन्दन्ते । येनायं वायुः पवते । येनासावादित्य एति । येन चन्द्रमा येन नक्षत्राणीति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेन तिरश्चो लोकानजयद् । येनेमा आप स्यन्दन्ते । येनायं वायुः पवते

। येनासावादित्य एति । येन चन्द्रमा येन नक्षत्राणि ।
ऊर्धान्ह वा अन्यैः कर्मभिर्लोकाञ्जयन्ति ।
अथैतेन तिरश्च उभयाँल्लोकान्सध्रीचः ।
जयति तिरश्चश् । चोर्ध्वांश्च य एवं वेद ।
तिरश्चिर्हांगिरसश्चकमेऽव वीरांश्च पशूंश्च रुन्धीयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महं असि
इत्येव वीरांश्च पशूंश्चावरुन्द्धे ।
तदु वीराणां च पशूनां चावरुद्धिः ।
अव वीरांश्च पशूंश्च रुन्द्धे य एवं वेद ।
यदु तिरश्चिरांगिरसोऽपश्यत्तस्मात्तैरश्चमित्याख्यायते ।
देवान्वै स्वर्गं लोकं यतो रक्षांस्यन्वसचन्त ।
तेऽकामयन्ताप रक्षांसि हनीमहीति ।
त एतत्सामापश्यन् ।
तद्देवपुरामेव कृत्वा तिर्यक्पर्यौहन् ।
तेन रक्षांस्यपाघ्नत ।
तदु रक्षसामपहतिः ।
अप रक्षः पाप्मानं हते य एवं वेद ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा पशुष्वेवैतत्प्रतितिष्ठन्ति ५६

यदाप्यते यज्ञ । आप्यन्ते छन्दांस्य् । आप्यन्ते देवता । आप्यन्ते इमे लोका अथ केन चतुर्थमहस्तायत इत्याहुः ।
वाचैवेति ब्रूयात् ।
वागेव तत उच्छिष्यतेऽक्षरमेव त्र्यक्षरं परिशिष्यते ।
तदेवोत्तरं त्र्यहमनुविदधाति ।
यदाहाप्यते यज्ञ इति प्रातस्सवनभाजनं प्रथममहर् । माध्यन्दिनभाजनं द्वितीयं । तृतीयसवनभाजनं तृतीयं तेन यज्ञ आप्यते ।

यदाहाप्यन्ते छन्दांसीति गायत्रं प्रातस्सवनं । त्रैष्टुभं माध्यन्दिनं सवनं ।
जागतं तृतीयसवनं तेन छन्दांस्याप्यन्ते ।
यदाहाप्यन्ते देवता इति वसूनां प्रातस्सवनं । रुद्राणां माध्यन्दिनं सवनम्
। आदित्यानां तृतीयसवनं तेन देवता आप्यन्ते ।
यदाहाप्यन्ते इमे लोका इति -- इदं प्रातस्सवनम् । इदं माध्यन्दिनं
सवनम् । अदस्तृतीयसवनं तेनेमे लोका आप्यन्ते ।
अक्षरमेव त्र्यक्षरं परिशिष्यते ।
तदेवोत्तरं त्यहमनुविदधाति ।
यो वै चतुर्थेऽहनीन्द्रं वेदेन्द्रियावान्भवति ।
वाग्वाव चतुर्थेऽहनीन्द्रः ।
इन्द्रियावान्भवति य एवं वेद ५७

एता भवन्ति
प्र त आश्विनीः पवमान धेनव
इति प्रवतीः प्रायणीयेऽहन् ।
प्रणिनीषेण्यं वा एतदहः ।
प्रेति गायत्र्यै रूपम् ।
गायत्र्या एवैतद्रूपेण प्रयन्ति ।
दिव्या असृग्रन्पयसा धरीमणी
ति विराजामेवैतद्रूपमुपगच्छन्ति ।
वैराजं ह्येतदहः ।
प्रान्तरिक्षात्स्थावरीस्ते असृक्षते
त्यन्तरिक्षवतीर्भवन्ति ।
अन्तरिक्षभाजनं वै तृतीयमहः ।
तृतीयादह्न एतत्प्रजातम् ।
ये त्वा मृजन्त्यृषिषाण वेधस
इति मृजन्तीव वै जातम् ।
जायत उ एतेनाह्ना ।
उभयतः पवमानस्य रश्मय
इत्युभाभ्यां ह वा एतत्त्र्यहाभ्यां प्रजनयन्ति ।

प्रैव पूर्वस्माज्जनयन्ति । तन्वत उत्तरस्मात् ।
ध्रुवस्य सतः पर्यन्ति केतव
इति अहर्वै ध्रुवं छन्दांसि केतवः ।
स यथा श्रान्ताननडुह ऊर्ध्वांस्तान्द्विपरिणायं धुरि युञ्ज्युरेवमेवैतद्द्विपरिणायं छन्दांसि युञ्जन्त्याप्तेष्वहस्सु ।
यदि पवित्रे अधि मृज्यते हरिर्
इति मृजन्तीव वै जातम् ।
जायत उ एतेनाह्ना ।
सत्ता नि योनौ कलशेषु सीदती
ति सोममेवैतत्प्रत्यक्षमनुवदन्ति ।
विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः पर्यन्ति केतव
इत्यग्निर्ह वा इमाँल्लोकाननु प्रभुः ।
तमेवैतत्प्रातस्सवनात्प्रजनयन्ति ।
तं प्रजातं माध्यन्दिने सवने मन्थन्ति ।
व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसी
ति स ह्यस्य विश्वस्य भुवनस्य राजति ५८

ता एता भवन्ति जगत्यो गायत्रवर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समृद्धयन्ति सं तत्र ऋध्यते ।
समस्मा ऋध्यते य एवं वेद ।
एतस्य ह वै सन्धेरर्पणं न ददृशे ।
जगदन्तःपूर्वस्त्रियहो भवति ।
जगत्यैतदहः प्रतिपद्यन्ते ।
समादेवैतत्सममुपयन्ति ।
यो वै स्तोम चतुर्युजं वेद वहन्त्येनं चतस्रस्संयुक्ताः ।
जगदन्तःपूर्वस्त्रियहो भवति ।
जगत्यैतदहः प्रतिपद्यन्ते ।
स यथा प्रष्टिं प्रष्टियुगाय नियुज्यादेवमेवैतत्पूर्वस्मिंस्त्रियह उत्तरं त्र्यहमनु-नियुनक्ति ।
वहन्त्येनं चतस्रस्संयुक्ता य एवं वेद ।

यो ह खलु वै व्यूढच्छन्दास्स समूढच्छन्दा । यस्समूढच्छन्दास्स व्यूढच्छन्दाः ।
जगदन्तःपूर्वस्त्रियहो भवति ।
जगत्यैतदहः प्रतिपद्यन्ते ।
समादेवैतत्सममुपयन्ति ।
त्रिष्टुबन्तो द्वितीयस्त्र्यहो भवति ।
त्रिष्टुभा तृतीयं त्रियहं प्रतिपद्यन्ते ।
समादेवैतत्समं संक्रामन्ति यत्रान्तस्तृतीयस्त्रियहो भवति ।
गायत्र्या दशममहः प्रतिपद्यन्ते ।
समादेवैतत्समं संक्रामन्तो यन्ति ।
एष ह वाव समूढच्छन्दाः ।
पवमानो अजीजनद्
इति जनद्वाननुरूपो भवति ।
षोडशिनमेवैतत्प्रातस्सवनात्प्रजनयन्ति ।
तं प्रजातं तृतीयसवन आरभन्ते ।
तदाहुरह्न एव रूपं स्तोत्रियेणारभन्तेऽनुरूपेण साम्न इति स्तोत्रियानुरूपौ भवतः ।
प्राणो वै स्तोत्रियोऽपानोऽनुरूपः ।
प्राणापानाभ्यामेवैतत्समृध्य प्रयन्ति ५९

दिवश्चित्रं न तन्यतुं ज्योतिर्वैश्वानरं बृहद्
इति बृहतो रूपमुपगच्छन्ति ।
बार्हतं ह्येतदहः ।
पवमानस्य ते रसः । पवमान रसस्तवे
ति समानमनुतुदति वैराजरूपम् ।
अनुतुन्नं हि वैराजस्य रूपम् ।
प्र यद्गावो न भूर्णय
इति प्रायणीयरूपमेवैतदुपगच्छन्ति ।
प्रायणीयं ह्येतदहः ।
त्वेषा अयासो अक्रमुर्घ्नन्तः कृष्णामप त्वचम्

इति पाप्मा वै कृष्णा त्वक् ।
तामेवैतेनापघ्नते ।
सुवितस्य वनामहे अति सेतुं दुराय्यम्
इति पूर्वो ह वै त्रियहस्सेतुर्दुराय्यस्तमेवैतेनातितरन्ति ।
शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः ।
चरन्ति विद्युतो दिवि
इति बृहतो रूपमुपगच्छन्ति ।
बार्हतं ह्येतदहः ।
आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् ।
अश्ववत्सोम वीरवत्
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पवस्व विश्वचर्षण आ मही रोदसी पृण ।
उषास्सूर्यो न रश्मिभिः
इति सूर्यवतीर्भवन्ति ।
सौर्यं ह्येतदहरेकविंशं प्रतिष्ठा वैराजम् ।
परि नश्शर्मयन्त्या धारया सोम विश्वतः ।
सरा रसेव विष्टपमिति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
आशुरर्ष बृहन्मते परि प्रियेण धाम्ना ।
यत्र देवा इति ब्रुवन्
परिष्कृण्वन्ननिष्कृतम्
अयं स यो दिवस्परि
इति परिपरीति भवत्यन्तस्य रूपम् ।
अन्तो वा अनुष्टुप्छन्दसाम् ।
आनुष्टुभमेतदहः ६०

षड्चं भवति षड्वा ऋतव -- ऋतूनामेवाप्त्यै ।
तदाहुर्यत्षड्चं षष्ठस्याह्नो रूपम् । अथ कस्माच्चतुर्थेऽहन्क्रियते इति ।
स ब्रूयात्षड्वा ऋतवस्सं वत्सरस् । संवत्सरः प्रजापतिर्यज्ञः ।
संवत्सरमेवैतेन प्रजापतिं यज्ञमाप्त्वा सवनमुखे पुनरारभन्ते ।

आप्यत इव ह्येतद्यज्ञो यदेष पूर्वस्त्र्यह आप्यत इति ।
उत्तरं षड्चं भवति ।
अभिपूर्वमेवैतेन यज्ञमारभन्ते ।
हिन्वन्ति सूरमुस्रय
इति हिन्वन्तीव वै जातम् ।
जायत उ एतेनाह्ना ।
स्वसारो जामयस्पतिमितीमा ह वाव स्वसारः ।
इमा उ एव जामयः ।
महामिन्दुं महीयुव
इतीमा ह वाव महीयुवः ।
ता एवैनमेतद्धिन्वन्ति ।
पवमान रुचारुचे
ति रुक्मत्सौर्यरूपमुपगच्छन्ति ।
सौर्यं ह्येतदहरेकविंशं प्रतिष्ठा वैराजम् ।
आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ।
इषे पवस्व संयतमिति पर्यासो भवति प्रजानां धृत्यै पशूनामुपस्थित्यै ।
एकविंश स्तोमो भवति ।
द्वादश मासाः । पञ्चर्तवस् । त्रय इमे लोका । असावादित्य एकविंशः
।
तास्संस्तुता द्वादश जगत्यो भवन्ति ।
ताश्चतुर्विंशतिर्गायत्र्यः ।
ता अष्टादशानुष्टुभः ।
आनुष्टुभमेतदहः ६१

जनस्य गोपा अजनिष्ट जागृविर्
इत्याग्नेयमाज्यं भवति जनद्वत् ।
एष ह वाव जनस्य गोपाः ।
तमेवैतत्प्रातस्सवनात्प्रजनयन्ति ।
तं प्रजातं माध्यन्दिने सवने मन्थन्ति ।
अग्निर्

इति निरेवैनं तदाह ।
सुदक्षस्सुविताय नव्यस
इति प्राणा वै दक्षः ।
प्राणानेवास्मिंस्तद्दधति ।
घृतप्रतीक
इत्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं तद्धाम्ना समर्धयन्ति ।
बृहता दिविस्पृशे
ति बृहतो रूपमुपगच्छन्ति ।
बार्हतं ह्येतदहः ।
द्युमद्वि भाति भरतेभ्यश्शुचिर्
इतीमा ह वै प्रजा भारतीस्ताभ्य एवैतच्छुचिर्विभाति ।
अथो यदेवैनेन भरता अग्र ईजिरेऽथो यदेवैष देवेभ्यो हव्यं वहति
तस्माद्भारतः ।
त्वामग्ने आंगिरसो गुहा हितम्
इति त्वामिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
अन्वविन्दञ्छिश्रियाणं वनेवन
इति वनेवन ह्येतं शिश्रियाणमन्वविन्दन् ।
स जायसे मथ्यमानस्सहो महद्
इति प्रातस्सवनाद्ध वा एतमग्रे मन्थन्ति ।
तं प्रजातं माध्यंदिने सवने जनयन्ति ।
त्वामाहुस्सहसस्पुत्रमङ्गिर
इति सहसेवं ह्येतं जनयन्ति ।
यज्ञस्य केतुमित्येष ह वाव यज्ञस्य केतुः ।
यत्र ह वै क्व च सूयते तदेष एव पुरस्तात्केतुरुच्छ्रियते ६२

प्रथमः पुरोहितम्
इति पुर एव वा एनमेतद्दधते ।
यदग्निमादधतेऽग्निं नरस्त्रिषधस्थे समिन्धत इतीमा ह वै प्रजा नरः ।
ता एवैनमेतत्समिन्धत ।

इन्द्रेण देवैस्सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुर्
इति सर्वदेवत्यं भवति ।
सर्वदेवत्यं ह्येतदहरानुष्टुभम् ।
सर्वदेवत्यो वा ग्रनुष्टुप् ।
ग्रयं वां मित्रावरुणे
ति मैत्रावरुणं भवति ।
पुनःप्रोक्तिर्ह वा एषा हविषः ।
सं ह वा एतद्यज्ञस्तिष्ठते यदेष पूर्वस्त्र्यह ग्राप्यते ।
यन्नु वो परो यज्ञ
इति ह वा एतद्देवेभ्यः प्राहुः ।
तस्मादु हैतद्द्वितीयं यजमान ग्राज्यं कुर्वीत ।
राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।
सहस्रस्थूण ग्रासाते
इति सहस्ररूपं विराजामुपगच्छन्ति ।
वैराजं ह्येतदहः ।
ता सम्राजा घृतासुती
इति सम्राड्वतीर्भवन्ति ।
साम्राज्यमिव ह्येतर्ह्यगच्छन् ।
इन्द्रो दधीचो ग्रस्थभिर्
इत्यैन्द्रं भवति ६३

दध्यङ्ह वा ग्राथर्वणस्तेजस्वी ब्रह्मवर्चस्यास ।
तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदेव विशीर्षाणश्शेरते ।
स उ ह स्वर्गं लोकमुच्चक्राम ।
स हेन्द्रोऽसुरैरभिबाढ उवाच क्व नु स दध्यङ्ङभवादिति ।
तस्मै होचु स्वर्गं वै भगवस्स लोकमुदक्रामदिति ।
स होवाच नैवास्येह किं चित्परिशिष्टमस्तीति ।
तस्मै होचुरासीदेवेदमश्वशीर्षं यनाश्विभ्यां देववेदं प्राब्रवीत्तत्तु न विद्म
यत्राभवदिति ।
तद्वा ग्रन्विच्छतेति ।

तद्धान्वीषुः ।
इच्छन्नश्वस्य यच्छिरः परतेष्वपश्रितम् ।
तद्विदच्छर्यणावति
इति ।
शर्यणावद्ध नामैतत्कुरुक्षेत्रस्य जघनार्धे सरस्कम् ।
तदेतदनुविद्याजहुः ।
तदस्मै प्रायच्छन् ।
तद्ध स्मासुराणां प्रकाशे धारयति ।
तं ह स्म यावन्तोऽसुराः परापश्यन्ति ते ह स्म तदेव विशीर्षाणश्शेरते ६४

स ह तैरेवास्थिभिर्नव नवतीर्जघानासुराणाम् ।
तदेतद्भ्रातृव्यहा विजितिः ।
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
जघान नवतीर्नव
इति ।
विजयते हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
इत्था चन्द्रमसो गृहे
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
इयं वामस्य मन्मन
इत्यैन्द्राग्नं भवति ।
इन्द्राग्नी पूर्व्यस्तुतिः ।
अभ्राद्वृष्टिरिवाजनि
इति ।
अजनीति वा आहुर्जातम् ।
जायत उ एतेनाह्ना ।
शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः ।
ईशाना पिप्यतं धियः
मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये ।
मा नो रीरधतं निदे

इति पाप्मन एवैषोपहतिः ।
एकविंश स्तोमो भवति ।
द्वादश मासाः । पञ्चर्तवस् । त्रय इमे लोका । असावादित्य एकविंशः ।
एतस्य वा एते सलोकतां गच्छन्त्येतमभ्यारोहन्ति ६५

पवस्व दक्षसाधन
इति माध्यन्दिनस्य पवमानस्य दक्षवतीर्गायत्र्यो भवन्ति ।
अहरेवैताभिर्दक्षयन्ति । छन्दांसि दक्षयन्ति । देवता दक्षयन्ति ।
षोडशिनं दक्षयन्ति ।
देवेभ्यः पीतये हरे मरुद्भ्यो वायवे मद
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
सं देवैश्शोभते वृषे
ति वृषण्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
पवमान धिया हितोऽभि योनिं कनिक्रदद्
इति योनिमतीर्भवन्ति ।
योनेर्वै प्रजाः पशवः प्रजायन्ते ।
जनद्वदेतस्य वैराजस्याह्नो रूपम् ।
धर्मणा वायुमा
रुहेति वायुमतीर्भवन्ति वायुर्वै शान्तिश्शान्त्या एवानिर्दाहाय ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ चतुर्णिधनमाथर्वणं चतुर्थस्याह्नो रूपम् ।
अथर्वाण उपरि श्येनं स्वर्गं लोकमायन् ।
ते तत्र न प्रर्यतिष्ठन् ।
तेऽकामयन्त प्रति स्वर्गे लोके तिष्ठेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।

ततो वै ते स्वर्गे लोके प्रत्यतिष्ठन् ।
तच्चतुर्निधनं भवति प्रतिष्ठायै चतुष्पदीव प्रत्यतिष्ठादिति वा आहुः ।
सुप्रतिष्ठितं तदेतत्स्वर्ग्यं प्रतिष्ठासाम ।
गच्छति स्वर्गं लोकं । प्रति स्वर्गे लोके तिष्ठति य एवं वेद ।
तदु भेषजमेव प्रायश्चित्तिः ।
अथर्भवमिवै भेषजं कुर्वन्ति ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तदनुतुन्नं भवति ।
अनुतुन्नाद्वै प्रजाः पशवः प्रजायन्ते ।
अनुतुन्नमेवैतस्य वैराजस्याह्नो रूपम् ।
तेन वै रूपसमृद्धम् ।
यद्वथर्वाणोऽपश्यंस्तस्माच्चतुर्णिधनमाथर्वणमित्याख्यायते ६६

अथ निधनकामं वैराजम् ।
एवमिव वै विराड्नैव स्वारं नैव निधनवन्नैवैळं वैनर्क्समम् ।
तद्वाङ्गिनधनं भवति ।
वाग्वै विराड् । विराज एवारम्भाय ।
विराजमेवैतेन प्रत्यक्षमारभन्ते ।
तस्य हैतस्य निधन एव कामाः ।
स यं कामं कामयेत तं ध्यायेद् । एतस्य निधनमुपावयन् ।
स हैवास्मै कामस्समृध्यते ।
यद्वस्य निधने कामास्तस्मान्निधनकामं वैराजमित्याख्यायते ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते स्वर्गं लोकमाश्नुवत ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
तस्यैतदेव निधनं यमेतं वैराजस्य स्तोत्रेऽग्निं मन्थन्ति ।
तवाहं सोम रारणे

ति तवेति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधींरति तं इहि
इत्यति ह्यायन् ।
तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनीतीमे ह वावोधनी ।
एते एवैतदभिवदत्य् । एते एवास्मै सर्वान्कामान्दुहाते ।
घृणा तपन्तमति सूर्यं पर
इति सूर्यवतीर्भवन्ति ।
सौर्यं ह्येतदहरेकविंशं प्रतिष्ठा वैराजम् ।
शकुना इव प्रतिमे
त्यति ह्यपतन् ।
तास्वाष्टादंष्ट्रमुक्तप्राह्मणम् ।
तदूर्ध्वेळं भवति बृहतो रूपं बार्हतेऽहन् ।
तेन वै रूपं समृद्धम् ६७

अथाभीशवमभ्यारम्भो यज्ञस्य प्रत्यपसारोऽभ्येव पञ्चममहरारभते प्रति
तृतीयमपधावति ।
द्वादशाहेन वै देवा ऊर्ध्वा स्वर्गं लोकमायन् ।
स एषामसंगृहीतो वीवास्रंसत ।
त एते सामनी अपश्यन् ।
ताभ्यामेनं यथाभीशुभ्यां रथं संगृह्यारोहेदेवमेवाभ्यां संगृह्यस्वर्गं
लोकमारोहन् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा अभीशू वाव न इमे सामनी यज्ञस्याभूतामिति ।
तदेवाभीशवयोराभीशवत्वम् ।
ते एते स्वर्ग्ये सामनी ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
तस्मादु हिते सामनी उभे कार्ये ।
यथा हैकाभीशुना यायादेवं तद्यदन्यतरद् । अथ यथोभयाभीशुना
यायादेवं तद्यदुभे ।

तस्मादुभे एव कार्ये ।
अत्रान्यत्स्यान्नवमेऽहन्नन्यतरत् ।
अभीशुर्वै श्यावाश्विरकामयत देवा मे सोमस्य तृप्येयुरिति ।
स एते सामनी अपश्यत् ।
ताभ्यामस्तुत ।
ततो वै तस्य देवास्सोमस्यातृप्यन् ।
तयोर्वा एतयोरस्त्यपसिद्धमिव यथैव तर्पयेदेवम् ।
ए ए इति वा अपसेधन्तस्संतर्पयन्ति ।
ते एते तृप्तिस्सामनी ।
तृप्यन्त्यस्य देवास्सोमस्य य एवं वेद ।
यद्वभीशुश्श्यावाश्विरपश्यत् । तस्मादाभिशवे इत्याख्यायेते ६८

अथ चतुर्णिधनमांगिरसं चतुर्थस्याह्नो रुपम् ।
अथो तेनैव चत्वार्यहानि कल्पन्ते ।
अंगिरसः पशुकामा स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
त एतां मध्य इळामुपेत्य स्वर्युपरिष्टादुपायन् ।
पशवो वा इळा स्वर्गो लोक स्वः ।
पशुषु वाव ते तदास्थाय स्वर्गं लोकमगच्छन् ।
तदेतत्पशव्यं स्वर्ग्यं साम ।
अव पशून्रुन्द्धे गच्छति स्वर्गं लोकं य एवं वेद ।
यद्वांगिरसोऽपश्यंस्तस्माच्चतुर्णिधनमांगिरसमित्याख्यायते ।
अथैना भवन्ति
पुनानो अक्रमीदभी
त्यभ्यतिक्रान्तिनीः ।
पराञ्चो ह्येतदिमाँल्लोकानभ्यतिक्रामन्ति ।
आदित्यलोकमेवाभीमे वै लोकाः ।
एष पूर्वस्त्र्यहः ।
आदित्यलोक एव चतुर्थमहः ।

तमेवैतदभ्यतिक्रामन्ति ।
आ योनिसरुणो रुहद्
इति योनिमतीर्भवन्ति ।
योनेर्वै प्रजाः पशवः प्रजायन्ते ।
जनद्वदेतस्य वैराजस्याह्नो रूपम् ।
गमदिन्द्रो वृषा सुत
इति वृषण्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
नू नो रयिं महामिन्द्रोऽस्यभ्यं सोम विश्वत
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
आ पवस्व सहस्रिणम्
इति सहस्ररूपं विराजमुपगच्छन्ति ।
वैराजं ह्येतदहः ।
तदाहुर्यन्ति वा एते त्रिष्टुभः पवमानन्ताद्ये गायत्रीष्वन्त्यं कुर्वन्तीति ।
वृषण्वतीर्भवन्ति ।
वृषण्वद्वै त्रिष्टुभो रूपम् ।
तेन त्रिष्टुभः पवमानान्तान्न यन्ति ।
तासु सत्रासाहीयमुक्तब्राह्मणम् ।
तदुक्थसाम भवति पशवो वा उक्थानि पशूनामेवावरुद्ध्यै ।
तदाहुरुक्थसाम सत्पवमाने क्रियते कस्मात्तदिति ।
प्रातस्सवनभाजनं प्रथममहर् । माध्यन्दिनभाजनं द्वितीयं ।
तृतीयसवनभाजनं तृतीयम् ।
अथैतदुक्थभाजनम् ।
तद्यदत्र सत्रासाहीयं क्रियते तेनैनदुक्थेभ्यो त च्यावयन्ति ।
तदेनत्स्वेनायतनेन समृद्धयन्ति ।
तेनैभ्यस्समृद्धेन स्वायां जनतायामर्धुकं भवति ।
अथो पशवो वा उक्थान्य् । आत्मा मध्यन्दिनः ।
तद्यत्सत्रासाहीयं मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्नेवैतत्पशून्प्रतिष्ठापयन्ति ६९

प्रजननं वा एतद्यद्वैराजम् ।
तद्यन्मिथुनाभ्यां स्तोभाभ्यामारभते मिथुनस्यैव प्रजात्यै ।
त्रयः पूर्वे स्तोभादेव सत्यात्प्रजाः प्रजायान्ता इति । त्रय उत्तरे प्राणोऽपानो व्यानः ।
त एव तेनोपधीयन्ते ।
त्रिः पदमाह ।
मिघुनं द्वे संभवतः ।
यन्मिथुनात्प्रजायते तत्तृतीयम् ।
त्रिरनुनुदति ।
अनुनुन्नाद्वै प्रजाः पशवः प्रजायन्ते ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
दशकृत्वो विष्टभ्नोत्य् । अस्थान्येव तत्प्रतिवपति ।
नवोत्तरे स्तोभा निधनं दशमं दशाक्षरा विराड् । अन्नं विराड् विराज एवान्नाद्यस्यावरुद्ध्यै ।
अग्निं मन्थन्ति ।
अग्निर्वै विराट् ।
विराजमेव तदन्नाद्यं प्रजनयन्ति ।
हिंकृत्या प्रस्तुत्य मन्थन्ति ।
हिंकृताद्धि रेतो धीयते ।
अथो साम्न एवैतन्मध्यतो विराजमन्नाद्यं प्रजनयन्ति ।
उद्गातुरूरौ मन्थन्ति । प्रस्तोतृप्रतिहर्तारौ धायनतो । विराजोऽनवच्छेदाय ।
दक्षिण ऊरौ मन्थन्ति ।
तस्मादेष पुरुषस्यार्धो वीर्यावत्तरः ।
शकलेऽधि मन्थन्ति शान्त्यै ।
अवकास्वधि मन्थन्त्यनतिदाहाय ।
तं जातमाग्नीध्रं हरन्ति ।
अतो ह्यग्नीन्विहरन्ति ।
तदु वा आहुराहवनीयमेव हार्यो यजमानो वा आहवनीयः प्रजैषा ।
यजमानमेव तत्प्रजया समर्धयन्ति ७०

तदाहुरन्नाद्यं वा एतस्माद्धरन्ति यस्मादग्निं हरन्तीति ।
तमनुमन्त्रयेत
पुनरूर्जा नि वर्तत्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि
इति पुनरेवान्नाद्यमात्मन्धत्ते ।
येन प्रस्तौति तेन निधनमुपयन्ति ।
तस्मादसावादित्य आ च परा च संचरति ।
यत एवाद्योदगात्तत श्च उदेता ।
अथ वामदेव्यम् ।
पशवो वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
विश्वाः पृतना अभिभूतरं नरस्सजूस्ततक्षुरिन्द्रं जजनुश्च राजस
इति जनद्वतीर्भवन्ति ।
जनद्वदेतस्य वैराजस्याह्नो रूपम् ७१

तासु त्रैशोकम् ।
व्यवप्लीनातीव वै वैराजं यज्ञम् ।
तं त्रैशोकेनोत्तभ्नुवन्ति वर्षीयसेव छन्दसा ।
इमे वै लोकास्सह सन्तस्त्रेधाप्यायन् ।
तेऽशोचन्यथैकस्त्रेधा विच्छिन्नश्शोचेदेवम् ।
ते देवा अब्रुवन्नेतेषां त्रयाणां लोकानां तिस्रश्शुचोऽपहनामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनैषां त्रयाणां लोकानां तिस्रश्शुचोऽपाघ्नन् ।
तद्यदेषां त्रयाणां लोकानां तिस्रश्शोचोऽपाघ्नंस्तत्त्रैशोकस्य त्रैशोकत्वम् ।
अप शुचं हते य एवं वेद ।
ताः कीबे कितवे पुंश्चल्यां न्यवेशयन् ।

तस्मादेते शुचा विद्धाश्शोचन्ति ।
न हास्यैत आजायन्ते य एवं वेद ।
तस्मादु हैतेषां नोऽप ब्रूवीत नेच्छुचोऽपभजा इति ।
कण्वो वै नार्षदोऽखगस्यासुरस्य दुहितरमविन्दत ।
तस्यां हास्य त्रिशोकनभाकौ पुत्रौ जज्ञाते ।
सा ह क्रुद्धा ज्ञातीनाययौ ।
तां हान्वाजगाम ।
तं हासुरा अवलेपेनावलिम्पन्त ऊचुरत्र व्युष्टां विजानीहि यदि
ब्राह्मणोऽसीति ।
तदु हाश्विनावनुबुबुधाते ।
आश्विना उ ह वै देवानां बद्धमुचौ ।
तौ हैनमदृश्यमानावेत्योचतुर्यदैव त्रावं वीणां समाघ्नन्ता
उपर्युपर्यतिपतावोऽथ व्युष्टां विजानीतादिति ।
ते ह स्मेमे रात्रिमुत्पतन्त्युत्तिष्ठत । व्यापद्द्युर् । युङ्ध्वं सीराणीति ।
न वाव नु व्युच्छतीति ह स्माह ।
अथ हेमौ वीणां समाघ्नन्ता उपर्युपर्यतिपेततुः ।
स होवाचापहरतेदमेतर्हि व्यापद्द्युर् । युङ्ध्वं सीराणीति ७२

ते होचुर्ब्राह्मणो वा अयमृषिरासीत् ।
दुरपहरा वा अस्य जाया ।
हन्तास्मा इमां ददामेति ।
तां हास्मै ददुः सा होवाच पुनर्वाव त्वा परोक्षेणेव जिघांसन्ति ।
तस्यां मोपवेशीरिति ।
ते ह प्रययुः ।
तस्मै ह हिरण्मयीमासन्दीं प्रच्छाये निदधुः ।
तस्यां ह प्रमत्त उपविवेश ।
सा हैनं तदेव शिला भूत्वाभिसंविवेष्टे ।
तदु ह त्रिशोकनभाकौ पुत्रावनुबुबुधातेऽसुरा ह वै नौ पितरं
शिलयाभिसमविवेष्टन्निति ।
तावागच्छताम् ।

सोऽकामयत नभाकः प्रैनान्दम्भयेयमिति ।
स एतन्नाभाकं सूक्तमपश्यत् ।
तेनैनामभ्यष्टौत् ।
तस्यां पर्यदृश्यत ७३

यथा मणौ मणिसूत्रं परिदृश्येतैवम् ।
अथाकामयत त्रिशोको व्येनामस्येयमिति ।
स एतत्सामापश्यत् ।
तेनैनां द्वेधा व्यास्यत् ।
तस्यै तान्तो निवर्तत ।
तमकामयत जीवेदिति ।
तमो यि जीवेत्येवाभ्यमृशत् ।
सोऽजीवत् ।
तस्मै तम इवासीत् ।
सोऽकामयत दिवेवास्मै स्यादिति ।
तमो यि दिवेत्येवाभ्यमृशत् ।
तस्मै दिवेवासात् ।
तमकामयत स्वर्गमेवैनं लोकं गमयेयमिति ।
तमो यि दिवमित्येव स्वर्गं लोकमगमयत् ।
ययस्तान्त इव स्यात्तस्य ओ यि जीवेति निधनमुपेयात् ।
अथ यस्मै तम इव स्यात्तस्य ओ यि दिवेति निधनमुपेयात् ।
अथ य सर्गकाम स्यात्तस्य ओ यि दिवमित्येव निधनमुपेयात् ।
एतानि वा एतस्य साम्नो निधनानि । एते कामाः ।
एतानेव कामानवरुन्द्धे ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते । यदु
त्रिशोकोऽपश्यत्तस्मात्त्रैशोकमित्याख्यायते ७४

यो राजा चर्षणीनाम्
इति राज्यमिव ह्येतर्ह्यगच्छन् ।
याता रथेभिरध्रिगुः ।

विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे
इति ज्यैष्ट्यमिव ह्येतर्ह्यगच्छन् ।
इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।
हस्तेन वज्रः प्रति धायि दर्शतो महान्देवो न सूर्यः
इति सूर्यवतीर्भवन्ति ।
सौर्यं ह्येतदहरेकविंशम् ।
प्रतिष्ठा वैराजम् ।
तासु पृश्नि ।
वाग्वै पृश्नि ।
वाचमेतेनाह्ना समिच्छन्ति ।
तामेवैतत्संविदन्ति ।
तद्वेवाचक्षते भरद्वाजस्य पृश्नीति ।
भरद्वाजो वा अकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्रजायत ।
सोऽब्रवीत्पृश्निर्वै बहुः प्रजया पशुभिः प्राजनिषीति ।
तत्पृश्निनः पृश्नित्वम् ।
तदेतत्प्रजननं साम ।
बहुः प्रजया पशुभिः प्रजायते य एवं वेद ।
अथो ह स्मैतेनैव साम्ना भरद्वाजः पृशन्यन्नाद्यमवरुन्द्धे ।
तद्वन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
यदु भरद्वाजोऽपश्यत्तस्माद्भरद्वाजस्य पृश्नीत्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति ७५

परि प्रिया दिवः कविर्
इत्यार्भवस्य पवमानस्य परिवतीर्गायत्र्यो भवन्त्यन्तस्य रूपम् ।

अन्तो वा अनुष्टुप्छन्दसाम् ।
आनुष्टुभमेतदहः ।
प्रप्र क्षयाय पन्यस
इति प्रायणीयरूपमेवैतदुपगच्छन्ति ।
प्रायणीयं ह्येतदहः ।
स सूनुर्मातरा शुचिर्जातो जाते अरोचयद्
इति जनद्वतीर्भवन्ति ।
षोडशिनमेवैतत्तृतीयसवनात्प्रजनयन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथौर्णायवम् ।
ऊर्णायुर्वै गन्धर्वोऽप्सरसोऽकामयत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेन यां यामकामयत तामीयामिति यां यामेवाभ्यमृशत्तामुपैत्तामवारुन्द्ध ।
तदेतत्कामसनि साम ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते । समस्मै स काम ऋध्यते ।
यदूर्णायुर्गन्धर्वोऽपश्यत्तस्मादौर्णायवमित्याख्यायते ७६

अङ्गिरस स्वर्गकामास्सत्रमासत ।
ते स्वर्गं लोकं न प्राजानन् ।
स श्वित्र आंगिरसस्समिद्धारः परैत् ।
तमूर्णायुर्गन्धर्व एतेन साम्नोपरिष्टादभ्यवपत्याब्रवीत्साम वा इदं स्वर्ग्यं ।
तेन स्तुध्वं । तेन स्तुत्वैव स्वर्गं लोकं प्रज्ञास्यथ ।
मम त्वेव साम ब्रूतात् ।
यस्त्वा पृच्छेत्कस्त इदमवोचदित्य् । ऊर्णायुर्मेऽवोचदित्येव ब्रूतात् ।
मैव मदन्यस्य वोच इति ।
स पुनरेत्याब्रवीत्साम वा इदं स्वर्ग्यम् ।
तेन स्तवामहै ।

तेन स्तुत्वैव स्वर्गं लोकं प्रज्ञास्याम इति ।
तमब्रुवन्कस्त इदमवोचदिति ।
अहमेवादर्शमित्यब्रवीत् ।
तेनास्तुवत ।
तेन स्तुत्वैव स्वर्गं लोकं प्राजानन् ।
तेषां स्वर्गं लोकं यतां सोऽहीयत ।
अनृतं ह्यब्रवीत् । स एष श्वित्रोऽभवत् ।
एते ह वा अहयो यच्छ्वित्राः ।
यदहीयत तदहीनामहित्वम् ।
अथ हान्ये सर्पा एव ।
तस्मादु ह यस्मादेवानुब्रुवीत । तं ब्रूयादमुष्मादन्ववोच इति ।
अथो ह सत्यमेव विवदिषेत् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
त्वं ह्यंग दैव्ये
ति त्वमिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
पवमान जनिमानि द्युमत्तम
इति जनद्वतीर्भवन्ति ।
षोडशिनमेवैतत्तृतीयसवनात्प्रजनयन्ति ७७

तासु बृहत्कं बृहतामेकम् ।
एतेन ह वा एतदहर्बार्हतं क्रियते ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनान्बृहदेव भूत्वा स्वर्गं लोकमवहत् ।
तेनाब्रुवन्स्वर्गं लोकं गत्वा बृहद्वाव न इदं कमभूद्येन स्वर्गं लोकं व्यापामेति
।
तदेव बृहत्कस्य बृहत्कत्वम् ।

तदेतत्स्वर्ग्यं साम ।
बृहदस्मै कं भवत्य् । अश्नुते स्वर्गं लोकं य एवं वेद ।
सोमः पुनान ऊर्मिणा अव्यं वारं वि धावति ।
अग्रे वाचः पवमानः कनिक्रदत्
इत्यग्रमिव भवति ।
अग्रं ह्येतदहर्यद्वार्हतम् ।
धीभिर्मृजन्ति वाजिनमिति मृजन्तीव वै जातम् ।
जायत उ एतेनाह्ना ।
असर्जि कलशं अभि मीढ्वान्सप्तिर्न वाजयुः ।
पुनानो वाचं जनयन्नसिष्यदत्
इति जनद्वतीर्भवन्ति ।
षोडशिनमेवैतत्तृतीयसवनात्प्रजनयन्ति ।
सवनात्सवनाद्ध वै षोडशिनं प्रजनयन्ति ७८

तास्वातीषादीयम् ।
प्रजापतिः प्रजा असृजत ।
ता अस्य सृष्टा अताम्यन् ।
सोऽकामयत न म इमाः प्रजास्ताम्येयुरिति ।
स एतत्सामापश्यत् ।
तेनैना अभ्यमृशत् ।
तास्समानन् ।
प्रेव मीयन्ते चतुर्थेनाह्नानुष्टुभं हि गच्छन्ति ।
अनुष्टुब्वै परा ।
परावत्समेवैतेनानन्ति ।
तस्मादु हैतस्य साम्न आतमितोर्निधनमुपेयात्सर्वस्यायुषोऽवरुद्ध्यै ।
तदाहुरताम्यन्नेवोपेयात् ।
यदा वै ताम्यत्यथ म्रियते ।
तस्मादताम्यन्नेवोपेयादिति ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।

तेनास्तुवत ।
तदेनान्साद एव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्नेति वै साद इति ।
यदब्रुवन्नेति वै साद इति । तदेतीषादीयस्येतीषादीयत्वम् ।
त उ स्वर्गं लोकं गत्वाब्रुवन्नात इव बत स्वर्गे लोके सदामेति ।
तद्वेवातीषादीयस्यातीषादीयत्वम् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
अथैता भवन्ति
पुरोजिती वो अन्धस
इति विराजोऽनुष्टुभो वैराजेऽहन् । विराज एवान्नाद्यस्यावरुद्ध्यै ।
अथो यथान्यौ नवतरौ चक्रावुपास्येद् । एवमेवैतामनुष्टुभं त्र्यहमुखेषु पर्याहरन्ति स्वर्गस्य लोकस्य समष्ट्यै ७९

तासु नानदम् ।
नानदेन वा इन्द्रो वृत्रं नानद्यमानमहन् ।
यन्नानद्यमानमहंस्तन्नानदस्य नानदत्वम् ।
नानद्यमानमेवैतेन द्विषन्तं भ्रातृव्यं हन्ति य एवं वेद ।
तस्य षोडशभिरक्षरैः प्रस्तौति ।
षोडशिनमेवैतेन प्रत्यक्षमारभन्ते ।
औपोदितिर्ह स्माह गौपालयो विशालं लिबुजयाभ्यधात् ।
अनुष्टुभि नानदमकृद्गौरिवीतेन षोडशिनमतुष्टुवन् । न श्रियावपद्य इति ।
न ह वै श्रियावपद्यते य एवं वेद ।
तदु श्वस्तनवदपि प्रजया उपकॢप्तम् ।
अथान्धीगवं वैराजं साम वैराजेऽहन्क्रियते । वैराज एवान्नाद्यस्यावरुद्ध्यै ।
तस्यैतां दशाक्षरां विराजं मध्यत उपयन्ति दशाक्षरा विराड् । अन्नं विराड् विराज एवान्नाद्यस्यावरुद्ध्यै ।
सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः

इति जनिता जनितेति भवति ।
षोडशिनमेवैतत्तृतीयसवनात्प्रजनयन्ति ।
यथा बाधस्व बाधस्व जायस्व जायस्वेत्येवमेवैतदभिपूर्वं
तृतीयसवनात्षोडशिनं प्रजनयन्ति ८०

तासु वात्सप्रम् ।
वत्सप्रियं वै भालन्दनं प्रतिसत्रिणोऽबाधन्त स्तेनस्ते पितेति ।
सोऽकामयत श्रद्धां विन्देयोप मां ह्वयेरन्निति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स श्रद्धामुपहवमविन्दत ।
श्रद्धां विन्दामहा इति सत्रमासते ।
श्रद्धामेव विन्दन्ते ।
वैराजस्य ह खलु वा एतदनुरूपं साम ।
यथा ह वै वैराजस्य स्तोभाः पदवृत्तय एवं ह वै वात्सप्रस्य स्तोभाः
पदवृत्तयः ।
प्रजा ह वा एषा वैराजस्य ।
आ हास्यानुरूपः प्रजायां जायते य एवं वेद ।
एतद्ध वा एनं तदुपजुहुविरेऽनुरूपं वैराजस्यासृष्टेति ।
तदनुतुन्नं भवति ।
अनुतुन्नाद्वै प्रजाः पशवः प्रजायन्ते ।
अनुतुन्नमेतस्य वैराजस्याह्नो रूपम् ।
तेन वै रूपसमृद्धम् ।
यदु वत्सप्रीर्भालन्दनोऽपश्यत्तस्माद्वात्सप्रमित्याख्यायते ।
अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
अग्निं वो वृधन्तम्
इति वृद्धं ह्येतदहर्यद्वार्हतम् ८१

तासु सैन्धुक्षितम् ।
सिन्धुक्षिद्वा अन्तं वाचोऽपश्यत् ।

वाचमेतेनाह्ना समिच्छन्ति तामेवैतत्संविन्दन्ति ।
सिन्धुक्षिद्धै भारतो राजा ज्योगपरुद्धश्चरन्सोऽकामयताव स्व ओकसि गच्छेयमिति ।
सिन्धुं हैव चचार ।
सास्य सिन्धुक्षित्ता ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽव स्व ओकस्यगच्छत् ।
तदेतद्कामसनि साम ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समर्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते ।
तदु श्रीरेव राज्यम् ।
राज्यं वै स तदगच्छत् ।
अश्नुते श्रियं गच्छति राज्यं य एवं वेद ।
यदु सिन्धुक्षिद्भारतो राजापश्यत्तस्मात्सैन्धुक्षितमित्याख्यायते ।
वयमु त्वामपूर्व्यें
त्यपूर्वामिव ह्येतर्हि तन्वमगच्छन् ।
तासु सौभरं बृहतस्तेजः ।
व्यवप्लीनातीव वै वैराजं यज्ञम् ।
तत्सौभरेणोत्तभ्नुवन्ति बृहतस्तेजसा ।
तदूकारणिधनं भवति ।
एतद्वै प्रत्यक्षं बृहतो रूपं यदूकारो यदीकारः ।
तेन वै रूपसमृद्धम् ।
इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्
इति ज्यैष्ठ्यमिव ह्येतर्ह्यगच्छन् ।
अथो तृतीयसवन एवैतद्रसं मदं दधति ८२

तासु वासिष्ठम् ।
वसिष्ठो वा अकामयत विराजं पश्येयं । तामवरुन्धीयेति ।

स प्रस्तुवन्नेवैतां दशाक्षरां विराजमपश्यत् ।
तामुपैत् । तामवारुन्द्ध ।
तदेतद्विराजोऽन्नाद्यस्यावरुद्धिस्साम ।
अव विराजमन्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
यदु वसिष्ठोऽपश्यत्तस्माद्वासिष्ठमित्याख्यायते ।
तद्वेवाचक्षते वसिष्ठस्यप्रियमिति ।
वसिष्ठो वै जीतो हतपुत्रोऽकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
सोऽब्रवीत्प्रियं वावेदं ममाभूद्येन प्रियां प्रजामवारुत्सीति ।
तदेव प्रियस्य प्रियत्वम् ।
तदेतत्प्रजननं साम ।
बहुः प्रजया पशुभिः प्रजायते य एवं वेद ।
यदु वसिष्ठोऽपश्यत्तस्माद्वसिष्ठस्यप्रियमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति ।
अथ षोडशी ।
प्रातस्सवनभाजनं प्रथममहर् । माध्यन्दिनभाजनं द्वितीयं ।
तृतीयसवनभाजनं तृतीयम् ।
अथैतदुक्थभाजनम् ।
उक्थानां वा एष एको यत्षोडशी ।
तद्यदत्र षोडशी क्रियते स्वेनैवैनं तदायतनेन समृद्धयन्ति ।
तेनैभ्यस्समृद्धेन स्वायां जनतायामृद्धुकं भवति ८३

गोवित्पवस्व वसुविद्धिरण्यविद्
इति सिमानां रूपम् ।
करिष्यद्धरिवत्त्रैष्टुभं रूपम् ।
तस्मादेतास्त्रैष्टुभेऽहन्क्रियन्ते ।

रेतोधा इन्दो भुवनेष्वर्पित
इत्यृषभमेवैतद्रेतोधां प्रातस्सवने महानाम्नीष्वपिसृजन्ति प्रजननाय ।
त्वं सुवीरो असि सोम विश्वविद्
इति सिमानां रूपम् ।
तं त्वा विप्रा उप गिरेम आसत इति ब्राह्मणा ह वै विप्रास् । त एवैनं तद्गिरोपासते ।
त्वं नृचक्षा असि सोम विश्वत
इति विश्वत इति सिमानां रूपम् ।
पवमान वृषभ ता वि धावसी
त्यृषभमेवैतत्प्रातस्सवने महानाम्नीष्वपिसृजन्ति प्रजननाय ।
स नः पवस्व वसुमद्धिरण्यवदिति पशवो वै वसु सुवर्णम् ।
असुवर्णमिति वा आहुरपशुम् ।
पशवश्चक्वर्यः ।
वयं स्याम भुवनेषु जीवस
इत्याशिषमेवैतेनाशास्ते ।
ईशान इमा भुवनानि वीयस
इति वीति सिमानां रूपम् ।
युजान इन्दो हरितस्सुपर्ण्य इति शक्वर्यो वै हरितस्सुपर्ण्यः ।
ता एवैतत्प्रातस्सवने युज्यन्ते ।
ता युक्ता माध्यन्दिने सवनेऽभ्यारोहन्ति ।
तास्ते क्षरन्तु मधुमद्घृतं पर इति पशवो वै मधु क्षीरं दधि सर्पिरेतत्क्षरन्ति पशवश्शक्वर्यः ।
तव व्रते सोम तिष्ठन्तु कृष्टय
इति सोमस्य ह वा इदं व्रतं सर्वमनूपतिष्ठते ८४

ता एता भवन्ति जगत्यस्त्रिष्टुब्वर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समृद्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद ।
पवमानस्य विश्वविद्
इत्यनुरूपो भवति ।

विश्वविदिति सिमानां रूपम् ।
तदाहुस्साम्न एव रूपं स्तोत्रियेणारभन्तेऽनुरूपेणाह्न इति ।
स्तोत्रियानुरूपौ भवतः ।
प्राणो वै स्तोत्रियोऽपानोऽनुरूपः ।
प्राणापानाभ्यामेवैतत्समृध्य प्रयन्ति ।
प्र ते सर्गा असृक्षत सूर्यस्येव न रश्मय
इति सर्गश इव वै पशवस्सृज्यन्ते ।
पशवश्शक्वर्यः ।
केतुं कृण्वन्दिवस्परि विश्वा सूपाभ्यर्षसी
त्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
समुद्रस्सोम पिन्वस इति समुद्रवतीर्भवन्त्यापो ह्येतदहः ।
जज्ञानो वाचमिष्यसी
ति जायते वै पूर्वेणाह्ना ।
जज्ञान एवैतेन तस्माज्
जज्ञानो वाचमिष्यसी
ति भवति ।
पवमान विधर्मणि ।
क्रन्दं देवो न सूर्यः
इति सौर्यं रूपं महानाम्नीनामुपगच्छन्ति ।
सौर्या हि महानाम्नयः ८५

प्र सोमासो अधन्विषुः पवमानास इन्दवः ।
श्रीणाना अप्सु वृञ्जते
अभि गावो अधन्विषुरापो न प्रवता यतीः ।
पुनाना इन्द्रमाशत
इत्याप आप इति भवत्यापो ह्येतदहः ।
प्र पवमान धन्वसि सोमेन्द्राय मादनः ।
नृभिर्यतो वि नीयसे
इति सप्तर्चं भवति ।

सप्त वै प्राणाः ।
प्राणैरेवैतत्समृध्यमाना यन्ति । प्राणेषु प्रतितिष्ठन्तः ।
तदाहुर्यत्सप्तर्चं सप्तमस्याह्नो रूपमथ कस्मात्पञ्चमेऽहन्क्रियत इति ।
स ब्रूयात्सप्तपदा वै शक्वर्यस् । सप्त ग्राम्याः पशवस् । सप्त चतुरुत्तराणि छन्दांसि । सप्त मुख्याः प्राणास् । सप्तविंशतिर्दिव्यानि नक्षत्राणि । सप्तविंशमेतदहर् । एतस्यैव सर्वस्यावरुद्ध्या एतस्योपाप्त्या इति ।
उत्तरं सप्तर्चं भवति ।
अभिपूर्वमेवैतत्प्राणैस्समृध्यमाना यन्ति ।
चौत्रृचं भवति चतुष्पदा वै पशवः ।
पशव एतदहः पशूनामेवावरुद्ध्यै ।
पर्यासो भवति प्रजानां धृत्यै पशूनामुपस्थित्यै ।
त्रिणव स्तोमो भवति ।
त्रिणवा इमे लोकाः ।
एष्वेवैतल्लोकेषु प्रतितिष्ठन्तो यन्ति ८६

भूरिति व्याहृतिः ।
तदयं लोकोऽग्निर्देवता गायत्री छन्दस्त्रिवृत्स्तोमो रथन्तरं साम वसवो देवता वनस्पतयश्चौषधयश्च ।
भुव इति व्याहृतिः ।
तदिदमन्तरिक्षं वायुर्देवता जगती छन्दस्सप्तदश स्तोमो वामदेव्यं साम रुद्रा देवतापश्च प्राणभृच्च ।
स्वरिति व्याहृतिः ।
तदसौ लोक आदित्यो देवता त्रिष्टुप्छन्दः पञ्चदश स्तोमो बृहत्सामादित्या देवता चन्द्रमाश्च नक्षत्राणि च ।
एतदिमे लोकास्त्रिणवा भवन्ति ।
तदाहुर्मिथुनानि चत्वार्यहान्य् । अमिथुनं पञ्चममहः ।
आचतुरं वाव मिथुनं प्रजननम् ।
तद्यत्
तव श्रियो वर्षस्येव विद्युत

इत्याग्नेयमाज्यं भवति ।
तेनैव मिथुनं पञ्चममहः क्रियते ।
तवेति पुंसो रूपं । श्रिय इति स्त्रियै ।
वर्षस्येवेति पुंसो । विद्युत इति स्त्रियै ।
अग्न इति पुंस । उषसामिवेति स्त्र्यै ।
यदोषधीरिति स्त्रिया । अभिसृष्ट इति पुंसः ।
अभिपूर्वमेवैतन्मिथुनं प्रजननं दधति यजमानस्य प्रजात्यै ८७

वातोपजूत इषितो वशं अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
आ ते यतन्ते रथ्यो यथा पृथक्शर्धांस्यग्ने अजरस्य धक्षतः
इति ।
यदा वा अग्निं वात उपवाजयत्यथ स महद्दीप्यते ।
तदेतद्दीप्तिरेव ब्रह्मवर्चसस्य रूपम् ।
मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।
त्वामर्भस्य हविषस्समानमित्त्वां महो वृणते नान्यं त्वत्
इति यच्च ह वा अर्भकं हविर्यच्च महस्तस्य सर्वस्याग्निमेव होतृत्वाय वृणुते
।
पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण ।
मित्र वंसि वां सुमतिमिति मैत्रावरुणं भवति दुरिष्टस्यैवावेष्ट्यै ।
यद्ध वै किं च यज्ञस्य दुष्टुतं दुश्शस्तं विधुरं तस्य ह वा एतदवेष्ट्यै ।
ता वां सम्यगद्रुह्वाणेषमश्याम धाम च ।
वयं वां मित्रा स्याम
पातं नो मित्रा पायुभिरुत त्रायेथां सुत्रात्रा ।
साह्याम दस्यूंस्तनूभिः
इत्याशिषमेवैतेनाशास्ते ८८

उत्तिष्ठन्नोजसा सहे
त्यैन्द्रं भवति ।
त्रिणवो वै स्तोम ओजो वीर्यम् ।
तमेवैतत्प्रत्यक्षमनुवदन्ति ।

अनु त्वा रोदसी उभे
इतीमे ह वाव रोदसी ।
एते एवैतदभिवदति ।
स्पर्धमानमददाताम्
इत्येते वा एनं तत्स्पर्धमानमन्वददाताम् ।
इन्द्र यद्दस्युहाभव
इति घ्नद्वत् ।
एतद्वै यजमानस्य स्वं स्तोत्रं यद्ब्रह्मणः ।
स्व एव तदायतने यजमानस्य सर्वं पाप्मानं घ्नन्ति ।
वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् ।
इन्द्रात्परि तन्वं ममे
इति गायत्री वै वागष्टापदी ।
तस्यै त्रिवृदेव स्तोम स्रक्तयः ।
एतद्वै दैव्यं परमं मिथुनं प्रजननं यत्त्रिवृच्च स्तोमो गायत्री च छन्दः ।
दैव्यमेव तत्परमं मिथुनं प्रजननं दधति यजमानस्य प्रजात्यै ८९

तामाहुरारम्भणतस्तृचस्य कार्या ।
मुखतो वै रेतस्सिक्तं । तदितः प्रजायते ।
तद्वै रेतो यदितस्सिच्यते ।
अन्नाद्धि रेतस्सिच्यत इति ।
तदाहुरुपरिष्टादेव कार्या -- इदं वै प्रजननम् । इतः प्रजाः प्रजायन्ते यतः प्रजाः प्रजायन्ते ततः प्रजायामहा इति ।
तस्मादुपरिष्टादेव कार्या ।
इन्द्राग्नी युवामिम
इत्यैन्द्राग्निं भवति ।
अभि स्तोमा अनूषते
ति बहून्स्तोमानभिवदति ।
एकस्तोमान्यन्यान्यहानि भवन्ति ।
अथैतत्त्रिष्टोमम् ।
तस्माद्

अभि स्तोमा अनूषते
ति बहून्स्तोमानभिवदति ।
पिबतं शंभुवा सुतं
या वा सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
इन्द्राग्नी ताभिरा गतं
ताभिरा गच्छतं नरोपेदं सवनं सुतम् ।
इन्द्राग्नी सोमपीतये
इत्येकदेवत्यान्यन्यानि स्तोत्राणि भवन्त्य् । अथैतद्द्विदेवत्यम् ।
यथोभयापदी प्रतितिष्ठेत्तादृक्तत् ।
त्रिणव स्तोमो भवति ।
त्रिणवा इमे लोकाः ।
एष्वेवैतल्लोकेषु प्रतितिष्ठन्तो यन्ति ९०

अर्षा सोम द्युमत्तम
इति माध्यन्दिनस्य पवमानस्यार्षण्वतीर्गायत्र्यो भवन्ति ।
अर्षेति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
अभि द्रोणानि रोरुवद्
इत्यभीति भवति रथन्तरस्यो एव रूपम् ।
अप्सा इन्द्राय वायव
इत्यप्सुमतीर्भवन्ति ।
आपो ह्येतदहः ।
वरुणाय मरुद्भ्य इति मरुत्वातीर्भवन्ति ।
मरुत्वद्धै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैवैतद्रूपान्न यन्ति ।
इषं तोकाय नो दधदस्मभ्यं सोम विश्वत
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
आ पवस्व सहस्रिणम्
इति सहस्ररूपं महानाम्नीनामुपगच्छन्ति ।

पशवो हि महानाम्नयः ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ यणवसन्तनि ।
पञ्चमाद्वै देवा अह्नषष्ठमहर्निरमिमत ।
छिद्रमिव वै पञ्चममहः ।
यद्यणवसन्तनिना माध्यन्दिनस्य पवमानमुखे स्तुवन्ति अह्न एव सन्तत्या अह्नोऽछिद्रतायै ।
प्रतितिष्ठति य एवं वेद ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अप क्रामन् ।
सोऽकामयतात्मन्पशून्यच्छेयमिति ।
स एतत्सामापश्यत् ।
तेनात्मन्पशूनयच्छत् ।
यदात्मन्पशूनयच्छत्तद्यणवस्य यणवत्वम् ।
प्रजापतिरेष यदुद्गाता ।
स यणवेनैवात्मन्पशून्यच्छते ।
एतद्विषुवत्को वै द्वादशाहो यत्पञ्चममहः ।
य । न्वसन्तनि पुरस्ताद्भवति । सन्तन्युपरिष्टात् ।
यणवसन्तनिनैव पूर्वं त्र्यहं सन्तन्वन्ति । सन्तनिनोत्तरम् ९१

इन्द्रो वै सिमा नासघ्नोत् ।
सोऽकामयत सिमास्सघ्नुयामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स सिमा असघ्नोत् ।
तद्यदेतत्साम भवति । सिमानामेव सग्ध्यै ।
तस्य त्रिः प्रस्तौति । सकृत्प्रतिहरति । त्रिर्निधनमुपयन्ति ।
तत्सप्त संपयन्ते ।
सप्तपदा वै शक्वर्यः ।
शाक्वराः पशवः ।

पच्छो वावैनांस्तद्दाधार ।
पशवश्शक्वर्यः ।
यणवसन्तनि पुरस्ताद्भवति । सन्तन्युपरिष्टात् । पशूनामेव परिगृहीत्यै ।
स यथा वागरया वा रज्ज्वा वा व्रजं
परितनुयादेवमेवैतत्पशून्परिगृह्णीतेऽपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
आपो वै शक्वर्यः ।
यणवसन्तनि पुरस्ताद्भवति । सन्तन्युपरिष्टाद् । अपामेव परिगृहीत्यै ।
तस्मादापः परिगृहीता स्यन्दन्ते ।
कूले ह खलु वा एतेऽपाम् ।
यद्ध वा एते न स्यातामोध इदं सर्वं निर्मृज्य यथापां वार्त्रं
दिह्यात्तादृगेवैतदनिर्मार्गाय ।
तस्यैतस्य यणवसन्तनिनो मध्य इळामुपेत्याध्यर्धामिळामुपरिष्टादुपयन्ति ।
प्रत्यक्षं शक्वरीणां रूपं शाक्वरेऽहन् ।
तेन वै रूपसमृद्धम् ९२

अथ शाकलं ।
शकलो वै पञ्चममहरपश्यद्राथन्तरं रूपेण ।
तस्माद्राथन्तरेऽहन्क्रियते ।
शकलो वा अन्नाद्यकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽन्नाद्यमवारुन्द्ध ।
तस्य वा एतस्यास्ति यथैव प्रयच्छेदेवम् ।
तद्धिंकारवद्भवति ।
अन्नं वै हिंकारः ।
हुमिति वा अन्नाद्यं प्रदीयते ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
अथो यदेवैतस्मिन्नहन्प्राचीनं शक्वरीभ्यः क्रूरमिव क्रियते । तदेवैतेन

हिंकारेण शमयन्ति ।
यदु शकलोऽपश्यत्तस्माच्तस्माच्छाकलमित्याख्यायते ९३

अथ वार्शम् ।
वृशो वै जानस्त्रियरुणस्य त्रैवृष्णस्यैक्ष्वाकस्य राज्ञः पुरोहित आस ।
अथ ह स्म ततः पुरा राजभ्यः पुरोहिता एव रथान्संगृह्णन्त्यौपद्रष्ट्र्याय नेदयं पापं करवदिति ।
तौ हाधावयन्तौ ब्राह्मणकुमारं पथि क्रीडन्तं रथचक्रेण विचिच्छिदतुः ।
इतरो हाधावयन्नभिप्रयुयावापेतर आययाम ।
स हाधिगत्य न शशाकापायन्तुम् ।
तं ह तदेव विचिच्छिदतुः ।
तस्मिन्होदाते त्वं हन्तासि त्वं हन्तासीति ।
स ह वृशोऽभीशून्प्रकीत्यावतिष्ठन्नुवाच त्वं हन्तासीति ।
नेति होवाच ।
यो वै रथं संगृह्णाति स रथस्येशे ।
त्वं हन्तासीति ।
नेति हेतर उवाचाप वा अहमायांसं । स त्वमभिप्रायौषीस् । त्वमेव हन्तासीति ९४

तौ वै पृच्छावहा इति ।
तौ हेक्ष्वाकूनेव प्रश्नमेयतुः ।
ते हेक्ष्वाकव ऊचुर्यो वाव रथं संगृह्णाति स रथस्येशे ।
त्वमेव हन्तासीति वृशमेव पराब्रुवन् ।
सोऽकामयतोदित इयां । गातुं नाथं विन्देय ।
समयं कुमारो जीवेदिति ।
स एतत्सामापश्यत् ।
तेनैनं समैरयद्
आ ते दक्षं मयोभुवम्
इति ।
प्राणा वै दक्षाः ।

प्राणानेवास्मिंस्तददधात् ।
वह्निमद्या वृणीमहे ।
पान्तमा पुरुस्पृहमा मन्द्रमा वरेण्यमा विप्रमा मनीषिणम् ।
पान्तमा पुरुस्पृहमा रयिमा सुचेतनमा सुक्रतो तनुष्वा ।
पान्तमा पुरुस्पृहमिति ।
पान्तो वै पुरुषः ।
तदेनं तत्समैरयत् ।
तदेतद्भेषजं प्रायश्चित्तिस्साम ।
भेषजं वै तत्प्रायश्चित्तिमकुरुत ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तदु कामसनि ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते । समस्मै स काम ऋध्यते ९५

स क्रुद्धो जनमगच्छत् ।
अनृतं मा व्यवोचन्निति ।
तेषां हेक्ष्वाकूणामग्नेर्हरोऽपाक्रामत् ।
यं सायमोदनमध्यदधुः । प्रातस्सोऽपच्यत ।
यं प्रातस्सायं सः ।
ते होचुर्ब्राह्मणं वा अनार्यमपाराम ।
तेषां नोऽग्नेर्हरोऽपाक्रमीत् ।
एतैनं अनुमन्त्रयामहा इति ।
तमन्वमन्त्रयन्त ।
स आगच्छद्यथा राज्ञा ब्राह्मणोऽनुमन्त्र्यमाण आगच्छेदेवम् ।
स आगत्याकामयत पश्येयमिदमग्नेर्हर इति ।
स एतत्सामापश्यत् ।
तदाभ्यगायत ।
तदपश्यत्पिशाची वा इयं त्रियरुणस्य जाया ।
सैनत्कशिपुना छादयित्वाध्यास्त इति ।

तदभिव्याहरत् ।
कुमारं माता युवतिस्समुब्धं गुहा बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ
कमेतं त्वं युवते कुमारं पेषी बिमर्षि महिषी जजान ।
पूर्वीर्हि गर्भश्शरदो ववर्धापश्यं जातं यदसूत माता
वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायास्सहते दुरेवाश्शिशीते शृंगे रक्षसे विनिक्षे
उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ।
मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः
इत्येवैनामिदमग्नेर्हर ऊर्ध्वमुद्द्रवत्सर्वां प्रादहत् ।
ततो वै ते यथायथमग्नेर्हरो व्यहरन्त ।
यथायथमेभ्योऽग्निरपचत् ।
तदेतद्दीप्तिर्ब्रह्मवर्चसं साम ।
एतेन वा अग्नेर्हरोऽपक्रान्तमन्वविन्दन् ।
तेजस्वी ब्रह्मवर्चसी दीप्तिमान्भवति य एवं वेद ।
तदध्यर्धेळं भवति प्रत्यक्षं शक्वरीणां रूपं शाक्वरेऽहन् ।
तेन वै रूपसमृद्धम् ।
यदु वृशोऽपश्यत्तस्माद्वार्शमित्याख्यायते ६६

सोम उ ष्वाणस्सोतृभिर्
इति सिमानां रूपम् ।
अधि ष्णुभिरवीनाम्
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशत
इति समुद्रवतीर्भवन्ति ।
आपो ह्येतदहः ।
ता न्यूनाक्षरा भवन्ति ।
सप्ताक्षराण्येकानि पदानि भवन्ति । नवाक्षराण्येकान्य् ।
एकादशाक्षराण्येकानि । द्वादशाक्षराण्येकानि ।

तदेतदभिपूर्वमेव शक्वरीणां रूपमुपगच्छन्ति ।
तास्वानूपमनुतोदवत्सिमानां रूपम् ।
अनुतुन्नाद्वै प्रजाः पशवः प्रजायन्ते ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
अनूपो वै धीतोनिरकामयतोभयं ब्रह्म च क्षत्रं चावरुन्धीय । राजा सन्नृषि स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स उभयं ब्रह्म च क्षत्रं चावारुन्द्ध । राजा सन्नृषिरभवत् ।
उभयमेव ब्रह्म च क्षत्रं चावरुन्द्धे । राजा सन्नृषिर्भवति य एवं वेद ।
यद्वनूपो धीतोनिरपश्यत्तस्मादानूपमित्याख्यायते ९७

अथ मानवं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
मनुर्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय । मानवीः प्रजास्सृजेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्राजायत ।
ता इमा मानवीः प्रजाः ।
बहुरेव प्रजया पशुभिः प्रजायते य एवं वेद ।
अथो आहुस्ता एवास्य प्रजास्सृष्टा रक्षांस्यजिघांसन्निति ।
सोऽकामयताप रक्षांसि हनीयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः
त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये ।
रक्षस्विनस्सदमिद्यातुमावतो विश्वं समत्रिणं दह
एवासां रक्षांस्यपाहन्निति ।

तदु रक्षसामपहतिः ।
अप रक्षः पाप्मानं हते य एवं वेद ९८

ओघो वा इमाँल्लोकान्निरमार्ट् ।
सोऽमन्यत मनुरिदं वावेदमभूदिति ।
सोऽकामयतोदित इयां गातुं प्रतिष्ठां विन्देयेति ।
स एते सामनी अपश्यत् ।
ताभ्यामस्तुत ।
ते एनं हिरण्मय्यौ नावौ भूत्वोपाप्लवेताम् ।
तयोः प्रत्यतिष्ठत् ।
ते एनमुदपारयेताम् ।
ततो वै स गातुं प्रतिष्ठां अविन्दत ।
विन्दते गातुं प्रतिष्ठां य एवं वेद ।
यदु मनुरपश्यत्तस्मान्मानवे इत्याख्यायेते ।
अथ वाम्रमभ्यारम्भो यज्ञस्य प्रत्यपसारः ।
अभ्येव षष्ठमहरारभते प्रति चतुर्थमपधावति ।
अभ्यारम्भैर्वै देवा असुरान्यज्ञादन्तरायन् ।
वम्रो वैखानसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतां मध्य इळामुपेत्याध्यर्धामिळामुपरिष्टादुपैत् ।
पशवो वा इळा ।
भूमो वा अध्यर्धेळा ।
ततो वै स भूमानमभिपूर्वं पशूनामवारुन्द्ध ।
तदेतत्पशव्यं साम ।
भूमानमेवाभिपूर्वं पशूनामवरुन्द्धे य एवं वेद ।
यदु वम्रो वैखानसोऽपश्यत्तस्माद्वाम्रमित्याख्यायते ९९

अथाग्नेयं त्रिणिधनं सवनानां कॢप्त्यै ।
पवमानेन वै देवेभ्योऽन्नाद्यं प्रदीयते ।

तन्मध्येनिधनं भवति अन्नाद्यस्य विशेषाय ।
अग्निर्वा अकामयत अन्नाद एव श्रेष्ठ स्वानामभवत् ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
यद्वग्निरपश्यत्तस्मादाग्नेयं त्रिणिधनमित्याख्यायते १००

तद्वेवाचक्षते साकमश्वमिति ।
कक्षीवान्प्रियमेधमपृच्छत् ।
इद्ध इन् । न दिदीपा३ इत्प्रियमेधेति ।
तदस्य नामनुत ।
सोऽब्रवीत्प्रजायान्मे त्वा प्रतिब्रवदिति ।
अथ ह कक्षीवतो नाकुलिभस्त्रास प्रियंगुतण्डुलानां वा सिकतानां वा पूर्णा
।
तासां ह स्म संवत्सरे संवत्सर एकैकां प्रास्यति ।
तावद्धास्मा आयुर्दत्तमास ।
स उ ह नवमस्साकमश्व आजज्ञे प्रियमेधात् ।
सोऽकामयतोदित इयां । गातुं प्रतिवचनं विन्देयेति ।
स एतत्सामापश्यत् ।
तदभ्यगायत ।
ततः प्रतिवचनमपश्यत् ।
स कक्षीवन्तमभ्याद्रवत् ।
तमब्रवीदाद्रवन्तं दृष्ट्वा -- इमां मे भस्त्रामुदके प्रास्यत । इममहं तं
पश्यामि यो मां प्रत्युच्यातिप्रद्व्यतीति ।
अथ हैनमभ्येव जगाम ।
स होवाच य ऋचं करोति न साम । स इद्धो न दिदीपे ।
अथ य ऋचं च साम च करोति । स इद्धस्स दिदीपे ।
एतत्त्वाहं प्रतिब्रवीम्येतन्मे पितैतत्पितामह एतत्प्रपितामह इत्या ह
प्रियमेधाद्गमयांचकार ।
तदेतत्तेजो ब्रह्मवर्चसं साम ।
एतेन वै स पूर्वेषां पितामहानां पाप्मानमपाहन् ।

तेजस्वी ब्रह्मवर्चसी भवत्य् । अप पूर्वेषां पितामहानां पाप्मानं हते य एवं वेद ।
यदु साकमश्वोऽपश्यत्तस्मात्साकमश्वमित्याख्यायते ।
यत्सोम चित्रमुक्थ्यम्
इति चित्रवतीर्भवन्ति चित्ररूपा वै पशवः ।
पशव एतदहः पशूनामेवावरुद्ध्यै ।
तदाहुर्यन्ति वा एते त्रिष्टुभः पवमानान्ताद्ये गायत्रीष्वन्त्यं कुर्वन्तीति ।
वृषण्वतीर्भवन्ति ।
वृषण्वद्वै त्रिष्टुभो रूपम् ।
तेन त्रिष्टुभः पवमानान्तान्न यन्ति १०१

तासु शैशवम् ।
शान्तिर्वै शैशवम् ।
यच्छैशवेन स्तुवन्ति शान्त्या एव ।
अथो आहुश्शैशवेन वा इन्द्रो वृत्रं पर्याकारं शक्वरीभिरहन्निति ।
तद्वेव शैशवस्य शैशवत्वम् ।
तदु भातृव्यहा ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
प्रजापतेरक्ष्यश्वयत् ।
तत्परापतत् ।
सोऽकामयत पुनर्मा चक्षुराविशेदिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै तं चक्षुः पुनराविशत् ।
अश्व एव शुचिर्भूत्वैनं पुनराविशत् ।
तज्ज्योतिर्वै चक्षुः ।
ज्योतिर्वावैनं तदाविशत् ।
तदेतच्चक्षुष्यं साम ।
अजरसं हास्य चक्षुर्न व्येति य एवं वेद १०२

अथ महानाम्नयः ।
महानाम्नीर्वा अनु प्रजाः प्रजायन्ते ।
नित्यवत्साः पशवः ।
ता एता महानाम्नयस्सं भार्याः ।
तस्मान्मनुष्या गर्भिणः कनीयश्शोभन्ते ।
संभार्यो हि स तेषां गर्भो नित्यः ।
नित्यवत्साः पशवोऽनुप्रजायन्ते ।
तस्मात्पशवो गर्भिणो भूयश्शोभन्ते ।
मात्यो हि स तेषां गर्भो नित्यः ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
अथ बार्हद्गिररायोवाजीये पांक्ते पांक्तेऽहनि क्रियेते पांक्ता वै पशवः ।
पशव एतदहः पशूनामेवावरुद्धयि ।
ते उ अथकारवच्चाध्यर्धेळं च भवतः प्रत्यक्षां शक्वरीणां रूपं शाक्वरेऽहन् ।
तेन वै रूपसमृद्धे ।
तदाहुस्स वाद्य भोगिः प्रस्नायाद्य आभ्यः पारे प्रतिष्ठां च तीर्थं च विन्देदिति
।
गावो वै शक्वर्यः ।
तासामेषा पारे प्रतिष्ठा च तीर्थं च यदथकारश्चाध्यर्धा चेळा ।
निष्ठाभिश्शक्वरीभिः पाप्मानं तरति । श्रियमश्नुते य एवं वेद ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति १०३

देवासुरा अस्पर्धन्त ।
ते देवाः प्रजापतिमुपाधावंस्तन्नश्छन्दः प्रयच्छायातयाम
येनासुरानभिभवामेति ।
स तपोऽतप्यत ।
स तपस्तप्त्वात्मन्सिंसिमायदवापश्यत् ।

यदात्मन्सिंसिमायदवापश्यत्तत्सिमानां सिमात्वम् ।
ता अब्रवीत्सृज्यध्वमिति ।
केनेति ।
येन कामयध्व इति ।
तास्सिमानमेवोर्ध्वा उदीर्यासृज्यन्त ।
तद्वेवासां सिमात्वम् ।
ता अमिमीत ।
तासु त्रयं वेदमध्यादधात् ।
ता एवायच्छत् ।
तास्विमांस्त्रीँल्लोकानभ्यादधात् ।
ता एवायच्छत् ।
सोऽब्रवीन्महद्वतासामिदं मानमभूदिति ।
यदब्रवीन्महद्वतासामिदं मानमभूदिति । तन्महामानीनां महांश्रानित्वम् ।
महामानयो ह वै नामैताः ।
ता महानाम्नय इति परोक्षमाख्यायन्ते ।
ता देवेभ्यः प्रायच्छत् ।
ताभिरद्य देवा अस्तुवत ।
श्वोऽशक्नुवन् ।
तद्यदद्य स्तुत्वा श्वोऽशक्नुवंस्तच्छक्वरीणां शक्वरीत्वम् ।
शक्नोति यच्छिक्षते य एवं वेद ।
ता देवा नोदयच्छन् ।
ताः प्रजापतय एव पुनः प्रायच्छन् ।
ताः प्रजापतौ संवत्सरमुषित्वापाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति १०४

ता अब्रुवन्नैन्द्रान्ह नो घोषान्वेत्थ ।
तान्नः प्रयच्छ । यैर्वयं घोषिणीरसाम ।
घोषी स ब्राह्मणोऽसद्योऽस्मान्वेदेति ।
ताभ्य एतानैन्द्रान्घोषान्प्रायच्छत् ।
योऽग्नेर्घोषो यो रथस्य । तमस्यै प्रायच्छत् ।

यो वायोर्घोषो यो वयसां । तमेतस्यै प्रायच्छत् ।
यः पर्जन्यस्य घोषो यो दुन्दुभेस्तममुष्यै प्रायच्छत् ।
एते ह वा स्रासामैन्द्रा घोषाः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति ।
ता स्रब्रुवन्नैन्द्रान्ह नो निक्रिळान्वेत्थ ।
तान्नः प्रयच्छ । यैर्वयं क्रीळाम ।
क्रीळात्स ब्राह्मणः प्रजया पशुभिर्योऽस्मा वेदेति ।
ताभ्य एतानैन्द्रान्निक्रीळान्प्रायच्छदिन्द्रा इन्द्रा इन्द्रा इति ।
एते ह वा स्रासामैन्द्रा निक्रीळाः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति १०५

ता स्रब्रुवन्रूपाणि ह नो वेत्थ ।
तानि नः प्रयच्छ । यैर्वयं रूपिणीरसाम ।
रूपी स ब्राह्मणोऽसद्योऽस्मा वेदेति ।
ताभ्यो रूपाणि प्रायच्छत् ।
यत्प्रावृषि निहतरजस्कायै प्रथमं संजायमानाया स्रस्यै रूपं भवति ।
तदस्यै प्रायच्छत् ।
यद्वेव प्रावृषि निहतरजस्कस्यान्तरिक्षस्य रूपं भवति । तदमुष्यै प्रायच्छत्
।
एतानि ह वा स्रासां रूपाणि ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति ।
ता स्रब्रुवन्नामानि ह नो वेत्थ ।
तानि नः प्रयच्छ । यैर्वयं नामिनीरसाम ।
नामी स ब्राह्मणोऽसद्योऽस्मा वेदेति ।
ताभ्यो नामानि प्रायच्छत् ।
भूस्त्वमसीतीमामब्रवीद् । भुवस्त्वमित्येतां । स्वस्त्वमित्यमूम् ।
एतानि ह वा स्रासां नामानि ।

तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति १०६

ता अब्रुवन्वत्सान्ह नो वेत्थ ।
तान्नः प्रयच्छ । यैर्वयं वत्सिनीरसाम ।
वत्सी स ब्राह्मणोऽसद्योऽस्मा वेदेति ।
ताभ्यो वत्सान्प्रायच्छत् ।
अग्निमेवास्यै प्रायच्छद् । वायुमन्तरिक्षायादित्यममुष्यै ।
एते ह वा आसां वत्साः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति ।
ता अब्रुवन्नृषभान्ह नो वेत्थ ।
तान्नः प्रयच्छ । यैर्वयमृषभिणीरसाम ।
ऋषभी स ब्राह्मणोऽसद्योऽस्मान्वेदेति ।
ताभ्य ऋषभान्प्रायच्छदेतानथकारान् ।
एते ह वा आसामृषभाः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति १०७

ता अब्रुवन्नेकं ह नो रूपं वेत्थ ।
तन्नः प्रयच्छ । येन वयं रूपिणीरसाम ।
रूपी स ब्राह्मणोऽसद्योऽस्मा वेदेति ।
ताभ्य एतदेकं रूपं प्रायच्छदाप इति ।
एतद्ध वा आसामेकं रूपं यदापः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति ।
ता अब्रुवन्नेकं ह नो नाम वेत्थ ।
तन्नः प्रयच्छ । येन वयं नामिनीरसाम ।
नामी स ब्राह्मणोऽसद्योऽस्मा वेदेति ।
ताभ्य एतदेकं नाम प्रायच्छदिन्द्रा इति ।

एतद्ध वा आसामेकं नाम यदिन्द्राः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति १०८

ता अब्रुवंस्तृप्तीर्ह नो वेत्थ ।
ता नः प्रयच्छ । याभिर्वयं तृप्याम ।
तृप्यात्स ब्राह्मणः प्रजया पशुभिर्योऽस्मा वेदेति ।
ताभ्य एतास्तृप्तीः प्रायच्छदेतानेकारान् ।
एते ह वा आसां तृप्तयः ।
तास्संवत्सरमुषित्वापैवाक्रामन् ।
सोऽब्रवीत्कथापाक्रमिष्टेति ।
ता अब्रुवनावपनान्ह नो वेत्थ । पल्यान्ह नो वेत्थ । गोष्ठान्ह नो वेत्थ ।
तान्नः प्रयच्छ । यैर्वयमावपनवतीः पल्यवतीर्गोष्ठिनीरसाम ।
आवपनवान्पल्यवान्गोष्ठी स ब्राह्मणोऽसद्योऽस्मा वेदेति ।
ताभ्यो वाचं प्रायच्छत् ।
वाचं वावेदं सर्वं नातिरिच्यते ।
एवा ह्येवा इत्येषां वाग् । एवा ह्यग्ना इति गव्याः पशव । एवा हीन्द्रा इत्यश्व्याः पशवः ।
एवा हि पूषन्नित्यजाविकमेवैतत् ।
एवा हि देवा इति परिग्राह एवैषः १०९

अथ महानाम्नयः ।
प्राणा वा अग्रे सप्त ।
तेभ्य एतां सप्तपदां शक्वरीं निरमिमीत ।
प्राणानेव सर्वमायुरेति य एवं वेद ।
सप्तपदायै षट्पदां षृतून्संवत्सरम् ।
ऋतुभ्य आत्मानं परिदत्ते य एवं वेद ।
षट्पदायै पञ्चपदां पशून्पंक्तिम् ।
पशुमान्भवति य एवं वेद ।
पञ्चपदायै चतुष्पदां वाचमनुष्टुभं प्रतिष्ठितिम् ।

वाचा वदति य एवं वेद ।
चतुष्पदायै त्रिपदां तेजो ब्राह्मवर्चसं गायत्रीम् ।
तेजस्वी ब्रह्मवर्चसी भवति य एवं वेद ।
त्रिपदायै द्विपदां पुरुषम् ।
नैनं पौरुषो वधो हन्ति य एवं वेद ।
द्विपदाया एकपदां पुरुषमेव ।
अन्वञ्चाविव वै पुरुषौ ।
तस्मात्पुरुषः पुरुषं परिवेदेष्टि । पुरुषः पुरुषस्यानुचरो भवति ।
विन्दतेऽनुचरितॄन् ।
बहवोऽस्यानुचरा भवन्ति । नैनं पौरुष्येवावृत्तिर्विन्दति य एवं वेद ११०

तानि सर्वाणि छन्दांसि संभृत्य तैरिन्द्रो वृत्रमहन् ।
यन्महान्तमहंस्तस्मान्महानाम्नयः ।
यदशक्नोत्तस्माच्छक्वर्यः ।
यन्मट्वियमकरोत्तस्मान्मट्वीः ।
यत्सीमानमभिनत्तस्मात्सिमाः ।
अथो हैनास्सीमत एव समृजे ।
सिम इति वै श्रेष्ठमाचक्षते ।
सिम श्रेष्ठ स्वानां भवति य एवं वेद ।
ता ह वा एता इन्द्रा एव नाम ।
इन्द्रो वै यत्र महानाम्नीषु मिथुनत्वमैच्छत । ता एनमब्रुवन्स वै नः प्रयच्छेति ।
किमिति ।
यत्त एतन्नामेति ।
ताभ्यस्तत्प्रायच्छत् ।
तस्मादेता इन्द्रा नाम ।
एतद्ध वा आसां प्रियं गुह्यं नाम यदिन्द्राः ।
स यो हासामेतद्विद्वान्परिहरत । आगामुकमेनं प्रियं भवति पश्यते प्रियम् ।
तस्मादेता महानाम्नय इति परोक्षमाख्यायन्ते १११

असा उ आव महान् ।
तस्यैताः प्रतिनाम्नयः ।
तस्यो एवैतन्नाम परिहनति ।
सा यैषा पुरस्ताद्द्विपदोपधीयते पुरुष एव सः ।
अथ यान्युत्तराणि त्रीणि पदानि पशवस्ते ।
भसत्प्रथमा सक्थ्यौ द्व ।
पराञ्चः पशवस्संभवन्ति ।
तस्माद्भसत्प्रथमाख्यायते ।
अथ यान्युत्तराणि त्रीणि पदानि वत्सः प्रथमोऽथोधोऽथ पुरुषः ।
अथ यान्युत्तराणि त्रीणि पदानीमौ द्वौ शिरोग्रीवम् । एकमथ यदुत्तमं पदमुपश एव सः ।
पश्चेव द्वितीय आगच्छत्तस्मादुत्तमा द्व्युपशैवं प्रियस्य कुर्यात् ।
एतद्ध वा आसां प्रत्तमधीतमुपजीवनीयम् ।
यद्वत्सः प्रथमो भवत्यथोधोऽथ पुरुषः । प्रत्तं हैवास्याधीतमुपजीवनीयं भवति ।
अथ यं कामयेत धीतमस्याप्रत्तमनुपजीवनीयं स्यादिति ११२

ऊधः प्रथमं कुर्यादथ वत्समथ पुरुषम् ।
धीतं हैवास्याप्रत्तमनुपजीवनीयं भवति ।
अथ यं कामयेतापशु स्यादिति वत्समस्यान्तरियात् ।
पशवो वै वत्सः ।
पशूनेवास्यान्तरेति ।
अथ यं कामयेत रुद्रोऽस्य पशूञ्छमयेदित्यन्तरा वत्सं चोधश्च पुरुषमवदध्यात् ।
रुद्रो वै पुरुषः ।
रुद्रमेवास्य तद्गोष्ठेऽवदधाति ।
सैषा मीमांसा ।
अथ यथैवासामिदं प्रज्ञातं स्तोत्रं तयैव स्तोतव्यम् ।
इयं वै प्रथमा महानाम्नी । तस्या अग्निरुपशः ।

इयं द्वितीया । तस्यै वायुरुपशः ।
असौ तृतीया । तस्यै सूर्याचन्द्रमसावुपशौ ।
तासां यो हृदावकिनो वेद त्रिर्विला हास्य गृहा भवन्ति तृप्ता इवारूढा अन्तरतः ।
एकारा ह वा आसां हृदावकिनः ।
तस्माद्धृद एकारमुपावसेधं पशूंस्तर्पयन्ति ।
अथ य आसामलंकारान्वेदालंकुर्वन्तोऽस्यासते गृहेष्वंशुं रुक्मं निष्कं हस्तिनमश्वतरीरथमश्वरथम् ।
स्तोमा ह वा आसामलंकाराः ।
ता अलंकुर्वन्निव शोभयन्निव गायेत् ।
उप हैनमेतानि रूपाण्यक्रीतानि तिष्ठन्ते य एवं वेद ११३

आपो वै महानाम्नयः ।
तासामादित्य एव वत्सः ।
तद्या ह वै प्राचीरापो धावन्त्येतमेव ता उद्यन्तमभीप्सन्तीर्धावन्ति ।
अथ याः प्रतीचीर्धावन्त्येतमेव ता अस्तं यन्तमभीप्सन्तीर्धावन्ति ।
तद्यत्पृच्छेयुर्या इमा आपोऽहरहर्धावन्ति कमेता अभीप्सन्तीर्धावन्तीति ।
एतमित्येव तत्र प्रतिवचनम् ।
अथो आहुर्वायुर्वै महानाम्नीनां वत्सः ।
एष हीमाँल्लोकानिमा दिशः प्रतापयत इति ।
इम उ लोका महानाम्नयः ।
तस्मात्पुरोवाते वाति । वृष्ट्यामाशासन्ते ।
यथा ह प्रत्ता न दुहीत तादृक्तद्यत्पुरोवाते वात्यथ न वर्षति ।
पशवो वै महानाम्नयः ।
गोष्ठ एव पुरीषम् ।
तदाहुः पुरीषेणाग्रे स्तोतव्यमथ महानाम्नीभिः ।
आयतनं वा अग्रेऽथ पशवः ।
आयतनं हि पशवोऽभिसमायन्तीति ।
तदु वा आहुः पशूनां वै पुरीषं भवति ।
यद्वै पशवो न स्युर्न पुरीषं स्यात् ।

यदो वै पुरुषः पशून्विन्दतेऽथ स गोष्ठं पर्यस्यते गुप्त्यै ।
तस्मान्महानाम्नीभिरेव पूर्वाभि स्तोतव्यमिति ११४

तदाहुस्सकृदेव संस्तुतासूपरिष्टात्पुरीषेण स्तोतव्यमुत वै बहुतयाः पशवो नानात्यास्समानमेव गोष्ठमभिसमायन्तीति ।
यद्द्वयीरु ह तथा प्रजा भवन्ति ।
अनुपर्यायमेव पुरीषेण स्तोतव्यम् ।
तथा ह सर्वा व्रजवतीर्भवन्ति ।
षळानि पुरीषाणि भवन्ति ।
अनुपर्यायमेव पुरीषेण स्तोतव्यम् ।
तथा ह सर्वा व्रजवतीर्भवन्ति ।
षळानि पुरीषाणि भवन्ति ।
पशवो वा इळा । आयतनं पुरीषम् ।
आयतन एव तदेतान्पशून्प्रतिष्ठापयन्ति ।
अप उपनिधाय स्तुवन्ति साम्नस्सर्वत्वाय ।
एतद्वै महानाम्नीनां सर्वं रूपं यदापः ।
ता उदिंगयेयू रूपसमृद्धतायै ।
तदाहुः क्वेमा निनयेदिति ।
तासामेषा मीमांसा वसतीवरीष्ववनीय सोममभिषुत्य भक्षयेयुरिति ।
मथितमिव ह त्वेषां भवति यातयाम ।
यातयाम्नीरयातयाम्नीष्ववनयन्ति ।
अथो आहुस्तृतीयसवनीयानेवाभिः पुरोडाशानुपसृजेयुरिति ।
यजमानो वै पुरोडाशोऽन्नमापः ।
अन्नेनैव तद्यजमानं समनक्ति ।
ईश्वरो ह तु यजमानमुत्तरवयसे श्वः पामा वेत्थोः ।
कण्डूयिता इव हि भवन्ति ।
अथो आहुश्चात्वाल एव निनयेदिति ।
योनिर्वै यज्ञस्य चात्वालं । रेत आपो । योन्यामेवैतद्रेतः प्रतिष्ठापयति ।
अनुष्ठयास्य रेतस्सिक्तं प्रजायते य एवं वेद ११५

तदाहुर्विहृता अग्नयो भवन्ति । वास्तु परिशिष्यते । गर्भा अनुशोषुका स्युर् । यच्चात्वाले निनयेत् ।
आस्तावे निनयेदिति ।
एष ह वा उद्गातुश्च यजमानस्य च धिष्ण्यो यदास्तावः ।
आयतनमास्तावः ।
आयतन एव तदेतान्कामान्प्रतिष्ठापयन्ति ।
तासामत्र यावत्कामं निनीय । अथान्तःपरिधि निनयेत् ।
तथा हैषां ता हुताश्चाहुताश्च भवन्ति ।
यथा ह वा इदं विदावन्प्राणावनिरुक्तावेवमेतौ धिष्ण्यौ सन्तावनवगतौ ।
प्राणौ वा इमौ सन्तावनपतृणौ धिष्ण्यावेतौ सन्तौ न विह्रियेते ११६

असुराणां ह वा अग्र इमे लोका आसुः ।
उपजीविन इव हि देवा आसुस्तप एव श्रद्धामन्वायत्ताः ।
तेऽर्चन्तस्ताम्यन्तस्तेजो बलमिन्द्रियं वीर्यमात्मस्वदधत ।
तदेषामसुरा आदित्सन्त ।
तदादित्स्यमानमप्सु प्रावेशयन् । नेदिदमसुरा विनान्ता इति ।
तस्मादिदमप्येतर्ह्यमित्रेष्वायत्सु वित्तमुपगूहन्ति । नेदिदममित्रा विन्दान्ता इति ।
तदपैव देवेभ्योऽक्रामन् । नासुरान्प्राप्नोत् ।
ते देवा एतं संवत्सरश्रममपश्यन् ।
तेनैनदभ्याश्राम्यन् ।
तदूर्ध्वमुपश्रयत ।
तद्दिवि स्पृष्टमतिष्ठत् ।
यद्दिवि स्पृष्टमतिष्ठत् । तत्स्पृष्टानां स्पृष्टत्वम् ।
स्पृष्टानि ह वै नामैतानि ।
तानि पृष्ठानीति परोक्षमाख्यायन्ते ।
सर्वान्कामान्स्पृशति य एवं वेद ।
स यत्काम स्यात्संवत्सरं श्राम्येद् । अव हैवैनद्रुन्द्धे ।
संवत्सरपरिमितो ह्येवैष यच्छ्रमः ११७

आपो वै देवानां पत्नय आसन् ।
ता मिथुनमैच्छन्त ।
तासां वायुः पृष्ठे व्यवर्तत ।
ता गर्भमदधत ।
ता देवा अब्रुवन्सृजध्वमिति ।
ता रथनरं प्रथमेऽहन्नसृजन्त ।
तद्रथघोषोऽन्वसृज्यत ।
तस्माद्रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्ति ।
ता अब्रुवन्सृजध्वमेवेति ।
ता बृहद्द्वितीयेऽहन्नसृजन्त ।
तत्पर्जन्यस्य घोषोऽन्वसृज्यत ।
तस्माद्बृहत स्तोत्रे दुन्दुभीनुद्वादयन्ति ।
वर्षुकः पर्जन्यो भवति ।
ता अब्रुवन्सृजध्वमेवेति ।
ता वैरूपं तृतीयेऽहन्नसृजन्त ।
तद्ग्रामघोषोऽन्वसृज्यत ।
तस्माद्वैरूपस्य स्तोत्रे ग्रामघोषं कुर्वन्ति ।
ता अब्रुवन्सृजध्वमेवेति ।
ता वैराजं चतुर्थेऽहन्नसृजन्त ।
तदग्नेर्घोषोऽन्वसृज्यत ।
तस्माद्वैराजस्य स्तोत्रेऽग्निं मन्थन्ति ।
ता अब्रुवन्सृजध्वमेवेति ।
ताश्शाक्वरं पञ्चमेऽहन्नसृजन्त ।
तदपां घोषोऽन्यसृज्यत ।
तस्माच्छाक्वरस्य स्तोत्रेऽप उपनिधाय स्तुवन्ति ।
ता अब्रुवन्सृजध्वमेवेति ।
ता रैवतं षष्ठेऽहन्नसृजन्त ।
तत्पशुघोषोऽन्वसृज्यत ।
तस्माद्रैवतस्य स्तोत्रे पशुघोषं कुर्वन्ति । वत्सान्मातृभिस्संवाशयन्ति ।
ता अब्रुवन्सृजध्वमेवेति ।

एतावद्वावेत्यब्रुवन् ।
तदेते ह वा आसामैन्द्रा घोषा वदन्ति ।
अस्मिन्नैन्द्रा घोषास्सर्वा अस्मिन्पुरया वाचो वदन्ति य एवं वेद ।
ते देवा वामदेव्यमेव योनिं परिगृह्योर्ध्वा उदागाहन्त ।
तदेतस्य पृष्ठ्यस्य षडहस्य मध्ये ह मायं न्यदधुः ।
तद्यानि ह वै स्तुतानि सामानि पश्चात्वं तेषां वामदेव्यम् । अथ
यान्यस्तुतानि पुरस्त्वं तेषाम् ।
यो वै ग्रामस्य श्रेष्ठी बलिष्ठो भवति तेन पश्चात्वेन तेन पुरस्त्वेन यन्ति ।
अरिष्टेन यज्ञेन यजते य एवं वेद ।
एतस्माद्ध वा इदं युग्यौ न समवहनौ वहतोऽन्यतर एव वहीयान्भवति ।
तस्माद्वामदेव्यं पृष्ठम् ।
पृष्ठं हि प्रतिवहतीति ।
क्ळिप्तिर्वा एषा शान्तिर्वा एषा प्रतिष्ठा वा एषैष वाव यज्ञो यद्वामदेव्यम् ।
तस्माद्येन येनाह्ना स्तुवन्ति तत्तदनुसर्पति कल्पयच्छमयत् ११८

असाव्यंशुर्मदाये
 त्यसावीति सिमानां रूपम् ।
अप्सु दक्षो गिरिष्ठाः ।
श्येनो न योनिमासदत्
शुभ्रमन्धो देववातमप्सु धौतं नृभिस्सुतम् ।
इत्यप्सुमतीर्भवन्ति ।
आपो ह्येतदहः ।
स्वदन्ति गावः पयोभिः
आदीमश्वं न हेतारमशूशुभन्नमृताय ।
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
मधो रसं सधमाद
इति मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।

तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधति ।
षवैनदेतेन प्याययन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ सन्तनि ।
वाग्वा एषा प्रतता यद्द्वादशाहः ।
तां सन्तनिनैव संतन्वन्ति ।
प्राणा ह खलु वै सन्तनयः ।
प्राणैर्वाक्सन्तता ।
तद्यत्सन्तनि भवति प्राणानामेव सन्तत्यै । वाचं प्राणैस्सन्तनवामेति ।
इमे वै लोकास्सन्तनय । इम उ लोका महानाम्नयः ।
तद्यत्सन्तनि भवत्येषामेव लोकानां सन्तत्यै ।
समस्मा इमे लोकास्तायन्ते य एवं वेद ।
अभि द्युम्नं बृहद्यश
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
जिन्वन्गविष्टये धिय
इद्गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ११९

तासु च्यावनम् ।
च्यवनो वै भार्गवो वास्तुपस्य ब्राह्मणमवेत् ।
स पुत्रानब्रवीद्वास्तुपस्य वै ब्राह्मणं वेद ।
तं मा वास्तौ निधाय त्रिः पुनःप्रयाणं प्रयातेति ।
तेऽब्रुवन्न शक्ष्याम । आक्रोशनवन्तो भविष्यामः ।
पितरमहासिषुरिति नो वक्ष्यन्तीति ।
नेति होवाच । तेन वै यूयं वसीयांसो भविष्यथ । तेनो एव मम
पुनर्युवताया आशा ।
हित्वैव मा प्रयातेति तानज्ञापयत् ।
तं सरस्वत्यै शैशवे निधाय त्रिः पुनःप्रयाणं प्रायन् ।
सोऽकामयत वास्तौ हीनः पुनर्युवा स्यां । कुमारीं जायां विन्देय ।

सहस्रेण यजेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत १२०

तं तुष्टुवानं शर्यातो मानवो ग्रामेणाध्यवास्यत् ।
तं कुमारा गोपाला अविपाला मृदा शकृत्पिण्डैरासपांसुभिरदिहन् ।
सोऽसंज्ञां शार्यात्येभ्योऽकरोत् ।
तन्न माता पुत्रमजानान् । न पुत्रो मातरम् ।
सोऽब्रवीच्छर्यातो मानवः किमिहाभितः किं चिददद्राष्ट । यत
इदमित्थमभूदिति ।
तस्मै होचुर्न नु ततोऽन्यत्स्थविर एवायं निष्ठावश्शेते ।
तमद्य कुमारा गोपाला अविपाला मृदा शकृत्पिण्डैरासपांसुभिरधिन्वन् ।
तत इदमित्थमभूदिति १२१

स होवाच च्यवनो वै स भार्गवोऽभूत् ।
स वास्तुपस्य ब्राह्मणं वेद ।
तं नूनं पुत्रा वास्तौ हित्वा प्रायासिषुरिति ।
तमाद्रुत्याब्रवीदृषे । नमस्तेऽस्तु ।
शार्यात्यभ्यो भगो मृळेति ।
अथ ह सुकन्या शार्यात्या कल्याण्यास ।
स होवाच स वै मे सुकन्यां देहीति ।
नेति होवाच ।
अन्यद्धनं ब्रूष्वेति ।
नेति होवाच ।
वास्तुपस्य वै ब्राह्मणं वेद ।
तां म इहोपनिधायासायमेवाद्य ग्रामेण यातादिति ।
ते वै त्वा मन्त्रयित्वा प्रतिब्रवामेति ।
ते होचुर्मन्त्रयित्वा -- एकं वै द्वे त्रीणि परममनया धनानि लभेमह्य ।
अथैनयेह सर्वमेव लप्स्यामहे ।
हन्तास्मा इमा ददामेति ।

तां हास्मै ददुः ।
तां होचुः कुमारि । स्थविरो वा अयं निष्ठावो नालमनुसरणाय ।
यदैव वयं युनजामहा । अथान्वाधावतादिति ।
सा हेयं युक्तं ग्राममनुसरिष्यन्त्यनूत्तस्थौ ।
सा होवाचाहे परिधाव सखायं जीवहायिनमिति ।
सा यदीतीयाय यदीति १२२

कृष्णसर्प उ हैवैनां प्रत्युत्तस्थौ ।
सा ह तदेव निर्विद्योपविवेश ।
अथ हाश्विनौ दर्विहोमिणौ भिषज्यन्ताविदं चेरतुरनपिसोमौ ।
तौ हैनामेत्योचतुः कुमारि । स्थविरो वा अयमसर्वो नालं
पतित्वनायावयोर्जायैधीति ।
नेति होवाच ।
यस्मा एव मा पितादात् । तस्य जाया भविष्यामीति ।
तद्धायमाजुघोष ।
अथ हेमौ प्रेयतुः ।
स होवाच कुमारि । को न्वेष घोषोऽभूदिति ।
पुरुषौ मेमावुपागातां यत्कल्याणतमं रूपाणां तेन रूपेणेति ।
तौ त्वा किमवोचतामिति ।
कुमारि । स्थविरो वा अयमसर्वो नालं पतित्वनायावयोर्जायैधीति ।
सा त्वं किमवोच इति ।
नेत्यहमवोचं । यस्मा एव मा पितादात्तस्य जाया भविष्यामीति १२३

तद्धास्य प्रियमास ।
स सहोचाश्विनौ वै तौ दर्विहोमिणौ भिषज्यन्ताविदं चरतोऽनपिसोमौ ।
तौ त्वैतदेवागत्य श्वो वक्तारौ ।
तौ त्वं ब्रूताद्युवं वा असर्वौ स्थो । यौ देवौ सन्तावसोमपौ स्थः ।
सर्वो वै मम पतिर्यस्सोमप इति ।
तौ वै त्वा वक्तारौ कस्तस्येशे यदावमपिसोमौ स्यावेति ।
अयं मम पतिरिति ब्रूतात् ।

तेनो एव मे पुनर्युवताया आशति ।
तौ हैनां श्वो भूत एत्यैतदेवोचतुः ।
सा होवाच युवं वा असर्वौ स्थो । यौ देवौ सन्तावसोमपौ स्थः ।
सर्वो वै मम पतिर्यस्सोमप इति ।
तौ होचतुः कस्तस्येशे यदावमपिसोमौ स्यावेति ।
अयं मम पतिरिति होवाच १२४

तं होचतुरृषेऽपिसोमौ नौ भगवः कुर्विति ।
तथेति होवाच ।
तौ वै नु मा युवं पुनर्युवानं कुरुतमिति ।
तं ह सरस्वत्यै शैशवमभ्यवचकृषतुः ।
स होवाच कुमारि । सर्वे वै सदृशा उदेष्यामोऽनेन मा लक्ष्मकेण जानीतादिति ।
ते ह सर्व एव सदृशा उदेयुर्यत्कल्याणतमं रूपाणां तेन रूपेण ।
तं हेयं ज्ञात्वावबिभेदे -- अयं मम पतिरिति ।
तं होचतुर् । ऋषेऽकुर्वावं तव तं कामं यस्तव कामोऽभूत् ।
पुनर्युवाभूः ।
आवं त्वं तथानुशाधि । यदावमपिसोमौ स्यावेति १२५

स होवाच देवा वा एते कुरुक्षेत्रेऽपशीऋृष्णा यज्ञेन यजमाना आसते ।
ते तं कामं नाप्नुवन्ति यो यज्ञे कामः ।
तद्यज्ञस्य शिरोऽछिद्यत ।
तद्यद्ध्यङाथर्वणोऽन्वपश्यत्तं तद्गच्छतम् ।
स वां तदनुवक्ष्यति ।
ततोऽपिसोमौ भविष्यथ इति ।
तद्यत्तद्यज्ञस्य शिरोऽछिद्यतेति । सोऽसावादित्यः ।
स उ एव प्रवर्ग्यः ।
तौ ह दध्यञ्चमाथर्वणमाजग्मतुः ।
तं होचतुर् । ऋषे उप त्वायावेति ।
कस्मै कामायेति ।

एतद्यज्ञस्य शिरोऽनुवक्ष्यावहा इति ।
नेति होवाच ।
इन्द्रो वै तदप्यपश्यत् ।
स माब्रवीद्यदि वा इदमन्यस्मै ब्रूयाश्शिरस्ते छिन्द्यामिति ।
तस्माद्बिभेमीति ।
स वै नावनेनाश्वस्य शीर्ष्णानुब्रूहीति ।
तथेति होवाच ।
स वै नु वां संवदमानौ पश्यानीति ।
तौ हेमौ स्वं शिरो निधायेदमश्वस्य शिरः प्रतिसंधाय तेन ह स्म
संवदमानावासाते साम गायमानावृचं यजुरभिव्याहरन्तौ ।
ताभ्यां ह श्रद्धाय तेनाश्वस्य शीर्ष्णानुवाच १२६

तदिन्द्रोऽन्वबुध्यत प्र हाभ्यामवोचदिति ।
तस्याद्रुत्य शिरः प्राच्छिनदिदमश्वशीर्षम् ।
अथ यदस्य स्वं शिर आसीत्तदिमौ मनीषिणौ प्रतिसमधत्ताम् ।
तौ ह देवानाजग्मतुरपशीर्ष्णा यज्ञेन यजमानान् ।
तान्होचतुरपशीर्ष्णा वै यज्ञेन यजमाना आध्वे ।
ते तं कामं नाप्नुथ यो यज्ञे काम इति ।
कस्तद्यज्ञस्य शिरो वेदेति ।
आवमिति ।
तद्वै प्रतिसंधत्तमिति ।
ताभ्यां वै नौ ग्रहं गृह्णीतेति ।
ताभ्यामेतमाश्विनं ग्रहमगृह्णन् ।
तावब्रुवन्युवमेवाध्वर्यू स्थस् । तौ तत्प्रजानन्तावेतद्यज्ञस्य शिरः
प्रतिसन्धास्यथ इति ।
तथेति ।
तावध्वर्यू आस्ताम् ।
तत्तावपिसोमावभवताम् १२७

अथ ह च्यवनो भार्गवः पुनर्युवा भूत्वागच्छच्छर्यातं मानवम् ।

तं प्राच्यां स्थल्यामयाजयत् ।
तदस्मै सहस्रमददात् ।
तेनायजत ।
एतद्वै तच्चयवनो भार्गव एतेन साम्ना स्तुत्वा पुनर्युवाभवत् । कुमारीं जायामविन्दत । सहस्रेणायजत ।
एते वा एतस्मिन्सामन्कामा । एतानेव कामानवरुन्द्धे ।
यत्काम एवैतेन साम्ना स्तुते । समस्मै स काम ऋृध्यते ।
अथो ह स्मैतेनैव साम्ना च्यवनो भार्गवो यद्यदशनं चकमे तत्तद्ध स्म सरस्वत्यै शैशवादुदचति ।
तद्वन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
यदु च्यवनो भार्गवोऽपश्यत्तस्माच्चयावनमित्याख्यायते ।
प्राणा शिशुर्महीनाम्
इति पशुरूपमेवैतदुपागच्छन्ति ।
पशूनां वै शिशुर्भवति ।
तासु क्रोशं । भ्रातृव्यहा सेन्द्रं साम ।
हन्ति द्विषन्तं भ्रातृव्यमास्येन्द्रो हवं गच्छति य एवं वेद ।
तदैळं भवति पशवो वा इळा ।
पशव एतदहः पशुनामेवावरुद्धयि १२८

पवस्व वाजसातय
इति वाजवतीरनुष्टुभो भवन्त्यन्नं वै वाजोऽन्नाद्यस्यैवावरुद्धयै ।
पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तमः
इति वैष्णव्यो भवन्ति यज्ञो वै विष्णुर्यज्ञस्यैवारम्भाय ।
तासु गौरिवीतमुक्तब्राह्मणम् ।
अथाष्टेळः पदस्तोभ इळानामयातयामावरुध्यते ।
तेनो हास्मा एकशफाः पशवस्तिष्ठन्ते ।
प्रजापतिं प्रजास्समृजानं शीर्षतः पाप्मागृह्णात् ।
सोऽकामयताप पाप्मानं हनीयेति ।

स एतान्पदस्तोभानपश्यत् ।
तैरस्तुत ।
तैः पाप्मानमपाहत ।
तानपवेष्टयन्निव गायेत् ।
अपवेष्टयन्निव वै स तच्छीर्षतोऽग्रे पाप्मानमपजघ्ने ।
अपवेष्टयन्निवैव शीर्षतोऽग्रे पाप्मानमपहते य एवं वेद १२९

ऋषीणां वा अग्रे मन्त्रश्चैव प्रजा चासीन्न पशवः ।
तेऽकामयन्ताव पशून्रुन्धीमहीति ।
ते संवत्सरे पशून्पर्यपश्यन् ।
तानेतेनाष्टेळेन पदस्तोभेनोदसृजन्त ।
तेऽब्रुवन्नस्ति न्वा इति ।
तान्षडिळेनोदसृजन्त ।
तेऽब्रुवन्नस्ति न्वा इति ।
तांश्चतुरिळेनोदसृजन्त ।
तेऽब्रुवन्नस्ति न्वावेति ।
तान्द्वीलेनोदसृजन्त ।
ते वा एते पशव एव यत्पदस्तोभाः ।
पशव एतदहः ।
पशुमान्भवति य एवं वेद ।
त उ सर्वे जागता भवन्ति ।
पशवो वै जगती ।
तेनो हैवास्मिंस्तदप्येकशफाः पशवस्तिष्ठन्ते यत्सर्वे जागता भवन्ति ।
सर्वे हि जागताः पशवः १३०

अथ पार्थं द्वियभ्यासं द्वितीयस्याह्नो रूपम् ।
द्वितीयं ह्येतदहरायतनेन ।
अथ ऋषभश्शाक्वरः ।
पशवो वै सिमाः । पशवो रेवतयः । पशव ऋषभः ।
ऋषभमेवैतत्पशुष्वपिसृजन्ति मिथुनत्वाय प्रजननाय ।

प्र मिथुनेन जायते य एवं वेद ।
स उ द्वाभ्यां द्वाभ्यां देवताभ्यां प्रतितिष्ठति ।
तस्मादृषभ स्कन्दन्द्विपाद्भवति ।
ता एताश्चतुरक्षरा देवता भवन्ति ।
तस्माद्द्विपात्स्कन्दति ।
चतुष्पदः प्रजनयति ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
स उ पांक्तः ।
पांक्तेऽहनि क्रियते रूपसमृद्धतायै ।
इन्दुर्वाजी पवते गोन्योघा
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
तासु दाशस्पत्यमुक्तब्राह्मणम् ।
अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
आ ते अग्न एधीमही
 त्यावतीर्भवन्ति ।
अपच्छिद्येव वा एतद्यज्ञकाण्डं यदुक्थानि ।
तद्यदावतीर्भवन्ति यज्ञस्यैव सलोमतायै १३१

तासु संजयम् ।
देवासुरा वा एषु लोकेष्वस्पर्धन्त ।
अस्मिन्भुवने ते देवा अकामयन्त समिमाँल्लोकाञ्जयेम जयेमासुरान्स्पर्धा
भ्रातृव्यानिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनेमाँल्लोकान्समजयन्न् । अजयन्स्पर्धा भ्रातृव्यानसुरान् ।
तद्यदिमाँल्लोकान्समजयंस्तत्संजयस्य संजयत्वम् ।
समिमाँल्लोकाञ्जयति । जयति स्पर्धा द्विषन्तं भ्रातृव्यं । य एवं वेद ।
तदु पांक्तं । पांक्तेऽहन्क्रियते पांक्ता वै पशवः ।
पशव एतदहः पशूनामेवावरुद्ध्यै ।

तद्वेवाचन्नते द्विहिंकारं वामदेव्यमिति ।
पशवो वै सिमाः । पशवो रेवतयः । पशवो द्विहिंकारं वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
अथो यदेवैतस्मिन्नहन्नूर्ध्वं शक्वरीभ्यः क्रूरमिव क्रियते तदेवैताभ्यां
हिंकाराभ्यां शमयन्ति ।
अथ सौमित्रं भ्रातृव्यहा सेन्द्रं साम ।
हन्ति द्विषन्तं भ्रातृव्यमास्येन्द्रो हवं गच्छति य एवं वेद १३२

त्रयो ब्रह्मापश्यन् । नोधास्तृतीयं । सुमित्रस्तृतीयं । बृहदुक्थस्तृतीयम्
।
तद्यत्प्रथमे त्रियहे नौधसं क्रियते । तेन प्रथमस्त्रियहो ब्रह्मणवान्क्रियते ।
अथ यत्तृतीये त्रियहे बार्हदुक्थं क्रियते तेनैव तृतीयस्त्रियहो ब्रह्मणवान्क्रियते
।
एतैर्ह वै सामभिरेते त्रियहा ब्रह्मणवन्तः क्रियन्ते ।
तत्पञ्चान्नरणिधनं भवति पञ्चमस्याह्नो रूपं पञ्चरात्रस्य सन्तत्या अव्यवच्छेदाय
।
असावि सोम इन्द्र त
इत्यसावीति सिमानां रूपम् १३३

तासु महावैश्वामित्रम् ।
एतेन वै विश्वामित्रो महिमानं भूमानमभिपूर्वं पशूनामवारुन्द्ध ।
तदेतत्पशव्यं साम ।
महिमानमेव भूमानमभिपूर्वं पशूनामवरुन्द्धे य एवं वेद ।
इन्द्रो वै वृत्रमजिघांसत् ।
स विश्वामित्रमुपाधावदृष उप त्वा धावाम । इह नोऽधिब्रूहीति ।
स एतद्विश्वामित्रस्सामापश्यत् ।
तेनास्तुत ।
ततो वा इन्द्रो वृत्रमहन् ।
सोऽब्रवीन्महद्वा इदं विश्वामित्रस्याभूदिति ।
तदेव महावैश्वामित्रस्य महावैश्वामित्रत्वम् ।

तदु भ्रातृव्यहा ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
तत्रीळं भवति पशवो वा इळा ।
पशव एतदहरभिपूर्वाणामेव पशूनामवरुद्ध्यै ।
भेषजं ह खलु वै तिस्र इळाः ।
एतद्ध वै शिवं शान्तं वाचो यत्तिस्र इळाः ।
तद्यत्त्रीळं पञ्चमेऽहनि भवति तेनैव त्रिणवं च स्तोमं शमयन्ति ।
सिमाश्चादित्यादृतव उदक्रामन् ।
सोऽकामयत न मदृतव उत्क्रामेयुरभि मा वर्तेरन्निति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
हेहया ओ हा ओ हा इति हया ह वा अस्यैते यथाश्वा स्युरेवम् ।
ततो वै तस्मादृतवो नोदक्रामन् ।
तत एनमुपावर्तन्त ।
तं प्राविशन् ।
तानभ्यारोहत् ।
स एष ऋतुषु च संवत्सरे चैतस्यां श्रियामध्यूढस्तपति ।
यदु विश्वामित्रोऽपश्यत्तस्मान्महावैश्वामित्रमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति १३४

ज्योतिर्यज्ञस्य पवते मधु प्रियम्
इति सिमानां रूपम् ।
समानं वै सिमानां च रेवतीनां च रूपम् ।
सिमाभ्यो वा अधि रेवतयो निर्मिताः ।
ज्योतिरित्याह ।
ज्योतिरेवैतत्प्रजासु दधाति ।
ज्योतिरिति च ह खलु वै पवत इति च गायत्र्यै रूपम् ।
गायत्र्यो एतदहस्तायते ।

पिता देवानां जनिता विभूवसुर्
इति प्रजापतिर्वै पिता देवानां । स जनिता । स विभूवसुः ।
प्राजापत्यमेतदहः ।
दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रस
इति ।
रसो ह्येतदहः ।
यो वै पञ्चमादह्नो रसोऽत्यनेदत्तदेतदहरभवत् ।
स एष रस एव ।
अभिक्रन्दन्कलशं वाज्यर्षती
 त्यृषभं एवैतत्प्रातस्सवने रेवतीष्वपिसृजन्ति प्रजननाय ।
पतिर्दिवश्शतधारो विचक्षण
इति यद्वै शतवत्सहस्रवत्तज्जगत्यै रूपम् ।
जागतमेतदहः ।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिस्सिन्धुभिर्वृषे
 ति वृषण्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
अग्रे सिन्धूनां पवमानो अर्षस्यग्रे वाचो अग्रियो गोषु गच्छसि ।
अग्रे वाजस्य भजसे महद्धनं स्वायुधस्सोतृभिस्सोम सूयसे
इत्यग्रमग्रमिति भवति ।
अग्रं ह्येतदहर्यद्बार्हतम् ।
अग्रं त्रयस्त्रिंश स्तोमानाम् ।
तमेवैतद्रेवतयोऽनु १३५

ता एता भवन्ति जगत्यो जगद्वर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समृद्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद ।
असृक्षत प्र वाजिन
 इत्यनुरूपो भवति भूतानुवादिनीः ।
षडहमेवैतदेतास्सृष्टमनुवदन्ति ।
तदाहुरह्न एव रूपं स्तोत्रियेणारभन्तेऽनुरूपेण साम्न इति ।

स्तोत्रियानुरूपौ भवतः ।
प्राणो वै स्तोत्रियोऽपानोऽनुरूपः ।
प्राणापानाभ्यामेवैतत्समृध्य प्रयन्ति ।
गव्या सोमासो अश्वया ।
शुक्रासो वीरयाशवः
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः ।
पवन्ते वारे अव्यये
इति रूति रेवतीनां रूपम् ।
ते विश्वा दाशुषे वस्विति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
सोमा दिव्यानि पार्थिवा ।
पवन्तामान्तरिक्ष्या
इतीमाँल्लोकान्समारभते ।
इमे वै लोकाः प्रजापतिः ।
प्राजापत्यमेतदहः ।
षष्ठायतनो वै प्रजापतिर्देवतानाम् १३६

पवस्व देववीरती
ति दशर्चस्य प्रभृतिर्भवत्यति प्रादेति वा आहुरुपस्थितम् ।
उपस्थितमिवैतदहः ।
पवित्रं सोम रंह्या ।
इन्द्रमिन्दो वृषा विश
इति वृषणवतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
आ वच्यस्व महि प्सर
इति आवतीर्भवन्त्यनतिपादायैव ।
अन्तमिव ह्येतर्हि गच्छन्ति ।
षडहान्नेत्पराञ्चोऽतिपद्यामहा इति ।

अधुक्षत प्रियं मध्विति यद्वै महानाम्नीनां दुग्धं पयस्ता रेवतयोऽभवन् ।
महानाम्नीनां वा एतद्दुग्धं पयो यद्रेवतयः ।
महान्तं त्वा महीरन्विति त्रयस्त्रिंशो वै स्तोमो महान् ।
तमेवैतद्रेवतयः ।
आपो अर्षन्ति सिन्धवः ।
यद्गोभिर्वासयिष्यसे
समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः ।
सोमः पवित्रे अस्मयुः
इत्यप्सुमतीर्भवन्ति ।
आपो ह्येतदहः ।
अचिक्रदद्वृषा हरिर्
इति वृषण्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतं ह्येतदहः ।
महान्मित्रो न दर्शत
इति महद्ध्येतदहर्यत्त्रयस्त्रिंशम् ।
गिरस्त इन्द्र ओजसा मर्मृज्यन्ते अपस्युवः ।
याभिर्मदाय शुम्भसे
तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे ।
तव प्रशस्तये महे
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत ।
आत्मा यज्ञस्य पूर्व्यः
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।
पर्जन्यो वृष्टिमं इव
इति दशर्चं भवति दशाक्षरा विराड् । अन्नं विराड् विराज
एवान्नाद्यस्यावरुद्ध्यै १३७

सना च सोम जेषि चे
त्युत्तरं दशर्चं भवति ।

अभिपूर्वमेवैतेन विराजमन्नाद्यमवरुन्धते ।
ऋषयो वा एतदृद्धिकामा उपोत्थानं प्रियं वाचोऽपश्यन्न्
अथा नो वस्यसस्कृढच् । अथा नो वस्यसस्कृधी
ति ।
तेनास्तुवत ।
ततो वै ते सर्व एवार्ध्नुवन् ।
सर्वे हैवर्ध्नुवन्ति य एवं विद्वांस एतेन दशर्चेन स्तुवते ।
उपरिष्टादुदर्कं दधति ।
रसो वै षष्ठमहः ।
तस्यानतिनेदाय ।
स यथापां वार्त्रं दिह्यात्तादृगेवैतदुपरिष्टादुदर्कं दधति रसस्यानतिनेदाय ।
चतुर्ऋचो भवति चतुष्पदां पशूनामेवावरुद्ध्यै ।
परोक्षं द्विपदा भवन्ति । द्विपदां पशूनामवरुद्ध्यै ।
वि नाराशंसमिव भवत्युभयोः कामयोरुपाप्त्यै ।
यच्च दिव्यो यच्च मानुष उपरिष्टादुदर्कं दधति ।
रसो वै षष्ठमहः ।
तस्यानतिनेदाय १३८

अथ ह वै तरन्तपुरुमीढौ वैतदश्वी ध्वस्रयोः पुरुषन्त्योर्बहु प्रतिगृह्य
गरगिराविव मेनाते ।
तौ ह स्मांगुल्या सातं प्रतिममृशाते ।
तावकामयेतामसातं नाविदं सातं स्यादात्तमिवैव न प्रतिगृहीतमिति ।
तावेतच्चतुर्ऋचमपश्यतां । तेन प्रत्यैताम् ।
ततो वै तयोरसातं सातमभवदात्तमिवैव न प्रतिगृहीतम् ।
स यः प्रतिगृह्य कामयेतासातम्म इदं सातं स्यादात्तमिवैव न प्रतिगृहीतमिति
स हैतेन चतुर्ऋचेन प्रतीयात् ।
असातं हैवास्य सातं भवत्यात्तमेवैव न प्रतिगृहीतम् ।
एते सोमा असृक्षते
त्येता अन्त्या भवन्ति भूतानुवादिनीरु एव ।
षडहमेवैतदेतास्सृष्टमनुवदन्ति ।

अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि ।
सनद्वाजः परि स्रव
इति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः ।
गृणानो जमदग्निना
इति पर्यासो भवति प्रजानां धृत्यै पशूनामुपस्थित्यै ।
त्रयस्त्रिंश स्तोमो भवति ।
त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वास्वेवैतद्देवतासु प्रतितिष्ठन्तो यन्ति १३९

तदाहुर्मिथुनानि पञ्चाहान्य् । अमिथुनं षष्ठमहः ।
तद्यद्
इमं स्तोममर्हते जातवेदस
इत्याग्नेयमाज्यं भवति । तेनैव मिथुनं षष्ठमहः क्रियते ।
रथमिव सं महेमा मनीषये
त्येतेन मिथुनं क्रियते ।
होता वै पूर्वेष्वहस्सु यजमानायाशिषमाशास्त उद्गातैतस्मिन् ।
यो वै साम्नाशिषमाशास्ते मीयत इव वै तस्य ।
तद्यद्
अग्ने सख्ये मा रिषामा वयः तव । अग्ने सख्ये मा रिषामा वयं तवे
ति भवति । भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तथा हास्य न मीयते ।
उपरिष्टादुदर्कं दधति ।
रसो वै षष्ठमहस्तस्यानतिनेदाय ।
स यथापां वार्त्रं दिह्यात्तादृगेवैतदुपरिष्टादुदर्कं दधति रसस्यानतिनेदाय १४०

प्रति वां सूर उदित
इति मैत्रावरुणं भवति ।
प्रति ह्येतर्हि स्तोमाश्छन्दो ह्यृतवो ग्रहा आवर्तन्ते ।

अथो यत्
प्रति वाम्
इति भवति तस्मादु हेदं यथर्त्वन्नाद्यं प्रतिधीयत उपरिष्टादुदर्काण्यन्यानि स्तोत्राणि भवन्ति ।
अथैतदनुपरिष्टादुदर्कम् ।
प्राणापानौ वै मैत्रावरुणौ ।
यदुपरिष्टादुदर्कं दध्युः प्राणापानावपिहन्युः ।
तद्यदनुपरिष्टादुदर्कं दधति प्राणापानाभ्यामेवोत्सृष्टयै ।
भिन्धि विश्वा अप द्विष
इत्यैन्द्रं भवति ।
परि बाधो जही मृध
इति घ्नद्वत् ।
एतद्वै यजमानस्य स्वं स्तोत्रं यद्ब्रह्मणः ।
स्व एव तदायतने यजमानस्य सर्वं पाप्मानं घ्नन्ति ।
वसु स्पार्हं तदा भर यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति ।
वसु स्पार्हं तदा भर
यद्वीळाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।
वसु स्पार्हं तदा भर
इति ।
पशवो वै वसु स्पार्हम् ।
अन्नमु वै पशवः ।
एतांस्तदुद्गाता यजमानायाशिषमाशास्त । उपरिष्टादुदर्कं दधति ।
रसो वै षष्ठमहस्तस्यानतिनेदाय १४१

यज्ञस्य हि स्थ ऋत्विजा
इत्यैन्द्राग्नं भवति ।
अत्रेन्द्राग्नी आर्त्विज्याय वृणीतेऽत्रेन्द्राग्निभ्यां यज्ञं संप्रदाय निर्मुच्यते ।
तस्य न मीयते यथा पुरमेव भवतीन्द्राग्नी एवातः प्रअाचीनमार्त्विज्यं कुरुतः ।
इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः ।

इन्द्राग्नी तस्य बोधतमिति शक्वरीणां च रेवतीनां च रूपम् ।
तोशासा रथयावाना वृत्रहणापराजिता ।
इन्द्राग्नी तस्य बोधतमिति वार्त्रघ्नम्भवत्यन्ततो विजित्यै ।
एतेन वै षडहेन देवा अग्रे व्यजयन्त ।
तद्यदेतद्वार्त्रघ्नमन्तत आज्यं क्रियते । विजित्या एव भ्रातृव्यस्यैव वधाय ।
विजयते हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
उपरिष्टादुदर्कं दधति ।
रसो वै षष्ठमहस् । तस्यानतिनेदाय ।
स यथापां वार्त्रं दिह्यात्तादृगेवैतदुपरिष्टादुदर्कं दधति रसस्या नतिनेदाय ।
त्रयस्त्रिंश स्तोमो भवति ।
त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वास्वेवैतद्देवतासु प्रतितिष्ठन्तो यन्ति १४२

इन्द्रायेन्दो मरुत्वत
इति माध्यन्दिनस्य पवमानस्य गायत्र्यो भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम्
इति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
रसं ते मित्रो अर्यमे
ति रसो ह्येतदहः ।
यो वै पञ्चमादह्नो रसोऽत्यनेदत्तदेतदहरभवत् ।
स एष रस एव ।
पिबन्तु वरुणः कवे ।
पवमानस्य मरुतः
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ रेवतयः ।

पशवो वै सिमाः ।
पशवो रेवतयः ।
पशव एतदहः ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
शक्वर्यो वा इदं तेजसा प्रातपन् ।
तेजसा नाभिमृश्या आसन् ।
तासां देवाः प्रदाहादबिभयुः ।
तेऽब्रुवन्सर्वं वा इदमिमाः प्रधक्ष्यन्ति ।
एतेदमासां शमयामेति ।
तासां द्वे एकस्यै पदे निरमिमतैकमेकस्यै ।
यस्यै द्वे निरमिमत तदेतां द्विपदां प्रत्युपादधुर् । यस्या एकं तदेकपदाम् ।
सैवैषा त्रिपदा गायत्र्यभवत् ।
समानं वा एतच्छन्दः ।
तद्द्वेधा व्यौहन्भूम्ने च शान्त्यै च ।
बहुः प्रजया पशुभिर्जायते य एवं वेद १४३

पञ्चमाद्वै देवा अह्नष्षष्ठमहर्निरमिमत ।
तस्मा आयतनमैच्छन् ।
तस्मै रेवतीरेवायतनमविन्दन् ।
आयतनवान्भवति य एवं वेद ।
पशवो वै रेवतयः ।
आत्मा मध्यन्दिनः ।
तद्यद्रेवतीर्मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्नेवैतत्पशून्प्रतिष्ठापयन्ति ।
पशवो वै रेवतयः ।
आत्मा मध्यन्दिनः ।
तद्यद्रेवतीर्मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्नेवैतत्पयः प्रतिष्ठापयन्ति ।
रेतो वै रेवतयः ।
आत्मा मध्यन्दिनः ।
तद्यद्रेवतीर्मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्न् एवैतद्रेतः प्रतिष्ठापयन्ति ।
रेतो वै रेवतयः ।

रेत उ रैवतं साम ।
वज्रा ह खलु वा एते यद्रैवतस्य साम्नो निधनानि ।
तद्यद्रेवतीषु रैवतं पृष्ठं कुर्युर्वज्रेण रेतो वीयुस्ता यत्पुरस्तात्पवमाने कुर्वन्ति ।
वज्रेण नेद्रेतो व्ययामेति १४४

पयो वै रेवतयः ।
पशवः पञ्चममहः ।
ता यदन्तरिहिता अन्येन साम्ना स्युरन्तर्हितं पयः पशुभ्य स्यात् ।
ता यदनन्तर्हिता भवन्ति तेन पयः पशुभ्योऽनन्तर्हितं भवति ।
तदाहुर्जामीव वा एतत्क्रियते यदेता इळाभिरिळा उपयन्ति ।
इषोवृधीयेनैवारभ्यमजामिताया इति ।
अन्तर्हितं ह तु तथा पयः पशुभ्य स्यात् ।
वज्रेण रेतो वीयू रेवतीभिरेवारभ्यं । वज्रेण नेद्रेतो व्ययामेति ।
अथो ह न तथा पयः पशुभ्योऽन्तर्हितं भवति ।
ऋग्वा अयं लोकस्सामासौ ।
देवक्षेत्रं वा असौ लोकः पवमानः ।
ता यद्द्वेधा व्यूहन्ति तेनैवाभ्यामुभाभ्यां लोकाभ्यां न यन्ति ।
आपो वै रेवतयः ।
आप उ रैवतं साम ।
तद्यद्रेवतीषु रैवतं पृष्ठं कुर्युरगाधे मज्जेयुर्न प्रतितिष्ठेयुः ।
तद्यद्वारवन्तीयं पृष्ठं भवति प्रतिष्ठित्या एव ।
जीर्यन्तीव वा एतत्पृष्ठानि यदा षष्ठमहरागच्छन्ति ।
न वै जीर्णे रेतः परिशिष्यते ।
तद्यद्वारवन्तीयं पृष्ठं भवत्युत्तरेषामेव यज्ञक्रतूनां प्रजात्यै १४५

वत्सैः पशून्संवाशयन्ति ।
यदा वै पशवो वत्सैस्संवाशन्तेऽथ कामान्दुह्रे ।
कामदुघा अस्मै रेवतयो भवन्ति ।
पवमाने संवाशयेद्यः कामयेतामुष्मिन्मे लोके कामादुघा स्युरिति ।
अमुष्मिन्हैवास्य लोके कामदुघा भवन्ति ।

अभ्यावर्तिषु संवाशयेद्यः कामयेतास्मिन्मे लोके कामदुघा स्युरिति ।
अस्मिन्हैवास्य लोके कामदुघा भवन्ति ।
उभयत्र संवाशयेद्यः कामयेतोभयोर्मे लोकयोः कामदुघा स्युरिति ।
उभयोर्हैवास्य लोकयोः कामदुघा भवन्ति ।
तदाहुरितो वत्सा स्युर् । इतो मातरः ।
उदीचीर्वा आप स्यन्दन्ते ।
आपो वा एते यत्पशव इति ।
तदु वा आहुरित एव वत्सा स्युर् । इतो मातरः ।
यदा वै पिता पुत्रं निरवसाययत्य् । उत्तरतो वाव स तं निरवसाययति ।
तस्मादुत्तरतो वत्सा स्युर् । दक्षिणतो मातरः ।
देवासुराः पशुष्वस्पर्धन्त ।
ते देवा वत्सैरुत्तरतोऽतिष्ठन्न् । अथासुरा मातृभिर्दक्षिणतः ।
ता मातरो निर्दीर्य वत्सानभिपलायन्त ।
अधारयन्देवा वत्सान् ।
तास्समाक्रम्यासुराणामवृञ्जत ।
ताभिरुदञ्चः प्राद्रवन् ।
वृंक्ते द्विषतो भ्रातृव्यस्य पशून्य एवं वेद ।
तस्मादुत्तरत एव वत्सा स्युर् । दक्षिणतो मातर इति १४६

अथ वाजदावर्यः ।
अन्नं वै वाजोऽन्नं दावर्यः ।
एता अन्नाद्यस्यैवावरुद्ध्यै ।
प्रजापतिः प्रजा असृजत ।
ता अनशना असृजत ।
ताः प्रजापतिमेवोपाधावंस्ताभ्य एतेनैव साम्नान्नाद्यं प्रायच्छत् ।
ता अब्रुवन्वाजं वै नोऽन्नाद्यं प्रादादिति ।
तदेव वाजदावरीणां वाजदावरीत्वम् ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
अथ सौपर्णं यज्ञस्यैवारम्भः ।

यज्ञो वै देवेभ्य उदक्रामत् ।
स सुपर्णो भूतः पर्यप्लवत ।
ते देवा अकामयन्ता यज्ञं रभेमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेन यज्ञमारभन्त ।
उत्क्रान्त इवैतर्हि यज्ञो भवति षष्ठेऽहन् ।
तद्यदत्र सौपर्णं भवति यज्ञस्यैवारम्भाय ।
यद्वेवैनमेतेन सुपर्णं भूतं परिप्लवमानमारभन्ते ।
तस्मात्सौपर्णमित्याख्यायते ।
तद्वेवाचक्षते क्रौञ्चमिति ।
क्रुंङाङ्गरिरस ईष्यमिवाहरविन्दत् ।
ईष्यमिवैतदहर्यत्षष्ठम् ।
तस्मात्षष्ठेऽहन्क्रियते ।
तदैळं भवति पशवो वा इळा ।
पशव एतदहः पशूनामेवावरुद्ध्यै १४७

अथेषोवृधीयं बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
इषो वै षष्ठमहर् । वृधे सप्तमम् ।
षष्ठाद्वा अह्नस्सप्तममहः प्रजातम् ।
तद्यदिष इति षष्ठादेवैतदह्नस्सप्तममहः प्रजनयन्ति ।
यद्वृध इत्यवर्धन्त इव ह्येतर्हि ।
प्रजापतिः प्रजा असृजत ।
ता अनशना-अनशना असृजत ।
ता अशनायन्तीरन्यान्यामादन् ।
स प्रजापतिरैक्षत कथं नु म इमाः प्रजा नाशनायेयुरिति ।
स एतत्सामापश्यत् ।
तेनैना इषोवृधीय इत्येवाभ्यमृशत् ।
ता अस्येषा समक्ता अवर्धन्त ।

तदेवेषोवृधीयस्येषोवृधीयत्वम् ।
इषा हैवास्य समक्ता भार्या वर्धन्ते य एवं वेद ।
तच्चतुरक्षरणिधनं भवति चतुष्पदा वै पशवः ।
पशव एतदहः पशूनामेवावरुद्धयि १४८

मृज्यमानस्सुहस्त्या समुद्रे वाचमिन्वसि रयिम्
इति रु इति रेवतीनां रूपम् ।
पिशङ्गं बहुलं पुरुरपृहं पवमानाभ्यर्षसि
पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
इति वृषण्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
देवानां सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसी
त्य्गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
तासु सौषावमभ्यासवत् सिमानां रूपम् ।
अभ्यासो वै सिमानां रेवतयः ।
तद्वेवाचक्षते वसिष्ठस्य पिप्पलीति ।
वसिष्ठो वै जीतो हतपुत्राऽकामयत बहुः प्रजया पशुभिः प्रजायेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्रायायत ।
सोऽब्रवीत्पिप्पलि वा इदमास येन प्राजनिषीति ।
तत्पिप्पलीनां पिप्पलित्वम् ।
पिप्पलिनं ह वै नामैतत्पिप्पलीत्याख्यायते तत् ।
प्रजा अवि पिप्पलं । पशवः पप्पलं । स्वर्गो लोकः पप्पलम् ।
तद्यत्पिप्पलि भवत्येतस्यैव सर्वस्यावरुद्ध्या एतस्य् । ओपाप्त्यै ।
यदूर्ध्वेळं भवति बृहतो रूपं । बार्हतेऽहन् ।
तेन वै रूपसमृद्धम् ।
यदु वसिष्ठोऽपश्यत्तस्माद् वसिष्ठस्य पिप्पलीत्याख्यायते १४९

अथौद्दणोरन्ध्रम् ।
उद्दणो वै रन्ध्रः काव्योऽकामयताद्भिः प्रतीपं स्वर्गं लोकमारोहेयमप्सु मे वर्त्मानि पश्येयं नियानमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽद्भिः प्रतीपं स्वर्गं लोकमारोहद् । अप्सु स्ववर्त्मान्यपश्यन्नियानम् ।
स ह वाव रौमरावतः ।
स एवोशना काव्यः ।
स ह स यमुनयैव प्रतीपं स्वर्गं लोकमारोहत् ।
तदेतत्स्वर्ग्यं साम ।
अद्भिः प्रतीपं स्वर्गं लोकमारोहति य एवं वेद ।
यदुद्दणो रन्ध्रः काव्योऽपश्यत्तस्मादौद्दणोरन्ध्रमित्याख्यायते ।
अथो आपोनियानमिति । यदस्याप्सु नियानमपश्यत् १५०

अथ वाजजित् ।
अन्नं वै वाजः ।
यदा वै गौरश्वः पुरुषोऽन्नस्य सुहितो भवति । अथ स वाजी भवति ।
देवासुरा अन्नाद्ये अस्पर्धन्त ।
ते देवा अकामयन्त वृञ्जीमह्यन्नाद्यमसुराणामिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ते वाजिजिगीवेत्येवान्नाद्यमसुराणामवृञ्जत ।
तदेव वाजजितो वाजजित्त्वम् ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धे । वृंक्ते द्विषतो भ्रातृव्यस्यान्नाद्यं य एवं वेद ।
तत्पञ्चाद्धरणिधनं भवति ।
पांक्तो वै यज्ञः ।
अतीव वा एते यज्ञस्य मात्रां क्रामन्ति य एतदहरागच्छन्ति ।
तद्यत्पञ्चाद्धरणिधनं भवति पांक्तो यज्ञो यावती यज्ञस्य मात्र तां

नेदतिक्रामामेति १५१

अथ वरुणसाम ।
वरुणो वै राजा सधमादमिवान्याभिर्देवताभिरासीत् ।
सोऽकामयत सर्वेषां देवानां राज्याय सूयेयेति ।
स प्रजापतौ शतं वर्षाणि ब्रह्मचर्यमवसत् ।
तस्मा एतत्सामाब्रवीदेतद्वै मे राज्यं रूपम् ।
गच्छ ।
राजानं त्वा देवाः करिष्यन्त इति ।
स देवानभ्यैत् ।
तमायन्तं दृष्ट्वा देवाः प्रत्यवारोहन् ।
तानब्रवीन्मा मा प्रत्यवरुन्धत ।
भ्रातरो वै मम यूयं स्थ ।
यादृशा वै यूयं स्थ । तादृंङहमस्मीति ।
नेत्यब्रुवन् ।
यद्वै नः पितुः प्रजापते रूपं तदिदं त्वयि पश्याम इति ।
तं प्रत्येवावारोहन् ।
तस्मा एतां राजासन्दीं न्यदधुः ।
तस्यामेनमभ्यषिञ्चन्त वसवो राज्याय रुद्रा वैराज्यायादित्या स्वाराज्याय विश्वेदेवास्साम्राज्याय मरुतस्सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय ।
तदेतच्छ्रीसवस्साम ।
अश्नुते श्रियं गच्छति राज्यं य एवं वेद ।
यदु वरुणो राजापश्यत् । तस्माद्वरुणसामेत्याख्यायते १५२

अथ गोष्ठः ।
शक्वरीणां च वा एष रेवतीनां च गोष्ठः ।
पशूनां धृत्यै गोष्ठः ।
ध्रियन्तेऽस्मिन्पशवः ।
पशूमान्भवति य एवं वेद ।
प्रजापतिः पशूनसृजत ।

तेऽस्मात्सृष्टा अपाक्रामन् ।
तान्प्रथमेनाह्नाविवारयिषत ।
तान्नावारयत ।
तान्द्वितीयेन नावारयत ।
तांस्तृतीयेन नावारयत ।
तांश्चतुर्थेन नावारयत ।
तान्पञ्चमेन नैवावारयत ।
तान्षष्ठेऽहन्नेतेनैव साम्नावारयत ।
सोऽब्रवीद्गोष्ठो वाव म इदं पशूनां सामाभूदिति ।
तदेव गोष्ठस्य गोष्ठत्वम् ।
तदेतत्पशव्यं साम गोष्ठः ।
ध्रियन्तेऽस्मिन्पशवः ।
पशुमान्भवति य एवं वेद ।
तदु निषिद्धमिव भवतीहा इळा इहा इळा इति ।
एतद्ध वा एनांस्तदेतेन पुरस्ताद्वारयांचक्रे ।
एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम्
इति यद्वै सिन्धुमत्समुद्रवत्तदेतस्याह्नो रूपम् ।
आपोभाजनमेतदहः ।
तदाहुर्यन्ति एते त्रिष्टुभः पवमानान्ताद्ये गायत्रीष्वन्त्यं कुर्वन्तीति ।
तास्सूर्यवतीर्भवन्ति ।
अथो षन्द्रीः ।
तेन त्रिष्टुभः पवमानान्तान्न यन्ति ।
तास्विहवद्वामदेव्यम् ।
पशवो वै सिमाः ।
पशवो रैवतम् ।
पशव इहवद्वामदेव्यम् ।
पशुमन्त इव भवन्त्येनेन तुष्टुवानाः ।
तदु निषिद्धमिवैव भवत्येतमु त्यं दश क्षिप इहा मृजन्ति सिन्धुमातरमिहे
ति एतद्ध वा एनांस्तदप्येतेनैव पुरस्ताद्वारयांचक्रे १५३

रेवतीर्नस्सधमाद
इति रेवतयो भवन्ति ।
समादेवैतत्सममुपयन्ति ।
गायत्र्यो मध्यन्दिनस्यान्त्या भवन्ति ।
गायत्र्य एताः ।
स यथा समात्समं संक्रामेत्तादृक्तत् ।
यातयामानि वा एतर्ह्यन्यानि छन्दांसि । गायत्र्येवायातयाम्नी ।
यातयामभि स्तोत्रैर्यातयामभिश्शस्त्रैर्वषट्कारो यातयाम ।
ऋृतुमन्ति पञ्चाहान्यनृतु षष्ठम् ।
तद्यद्धोत्रा ऋृतुयाजान्नाना वषट्कुर्वन्ति तेनैव षष्ठमहर्ऋृतुमत्क्रियते ।
तासु वारवन्तीयम् ।
एतद्ध वै रेवद्रैवत्यं यद्रेवतीषु वारवन्तीयम् ।
रेवान्भवत्यास्य रेवान्रैवत्यो जायते य एवं विद्वान्रेवतीषु वारवन्तीयेन स्तुते
।
एतद्वै बृहद्रैवत्यं यद्रेवतीषु वारयन्तीयम् ।
बार्हतं षष्ठमहः ।
तेनैव षष्ठमहर्बार्हतं क्रियते ।
अग्निर्वा एष वैश्वानरो यत्पृष्ठ्यष्षडहः ।
ऋृतवो वै पृष्ठानि ।
संवत्सर ऋृतवः ।
संवत्सरोऽग्निर्वैश्वानरः ।
सोऽशान्त ईश्वरः प्रदग्धोः ।
तद्यद्वारवन्तीयं पृष्ठं भवत्यग्नेरेव वैश्वानरस्य शान्त्या अप्रदाहाय १५४

प्रजापतिर्वा एतं यज्ञमसृजत यत्पृष्ठ्यं षडहम् ।
स सृष्टः प्राद्रवत् ।
तं रथन्तरेणाविवारयिषत ।
तं नावारयत ।
तं बृहता नावारयत ।
तं वैरूपेण नावारयत ।

तं वैराजेन नावारयत ।
तं महानाम्नीभिर्नावारयत ।
तं रेवतीभिर्नैववारयत ।
तं वारवन्तीयेनैवावारयत ।
यदवारयत तद्वारवन्तीयस्य वारवन्तीयत्वम् ।
तद्यद्वारवन्तीयं पृष्ठं भवति यज्ञस्यैव वारणायै ।
प्रजापतिर्वा एतं यज्ञमसृजत यत्पृष्ठ्यं षडहम् ।
तस्मै प्रतिष्ठामैच्छत् ।
तस्मा अप एवाविन्दत् ।
तासु रथन्तरेण प्रतिष्ठामैच्छत् ।
स नाविन्दत् ।
तासु बृहता नाविन्दत् ।
तासु वैरूपेण नाविन्दत् ।
तासु वैराजेन नाविन्दत् ।
तासु महानाम्नीभिर्नाविन्दत् ।
तासु रेवतीभिर्नैवाविन्दत् ।
तासु वारवन्तीयेनैवाविन्दत् ।
यदविन्दत्तद्वेव वारवन्तीयस्य वारवन्तीयत्वम् ।
अस्यामेवैतद्यज्ञं प्रतिष्ठापयन्ति ।
अग्निर्वा एष वैश्वानरो यद्वारवन्तीयम् ।
आप उ रेवतयः ।
तद्यद्रेवतीषु वारवन्तीयं भवति । तस्मादापोऽग्नियोनयः ।
जीर्यन्तीव वा एतत्पृष्ठानि यदा षष्ठमहरागच्छन्ति ।
न वै जीर्णे रेतः परिशिष्यते ।
तद्यद्वारवन्तीयं पृष्ठं भवत्युत्तरेषामेव यज्ञक्रतूनां प्रजात्यै १५५

तदु होवाचाभिप्रतारणो जीर्णश्शयानः ।
पुत्रा हास्य दायं विभेजिरे ।
स ह घोष आस ।
को घोष इति ।

तस्मै होचुः पुत्रास्ते भगवो दायं विभजन्त इति ।
स होवाच सुश्रवा वा अहं तत्पृष्ठानां ब्राह्मणे जीवतोऽस्य पुत्रा दायमुपयन्तीति ।
सुश्रवा वा अहं तदिति ।
तदेतद्यथा जीवतो दायमुपेयादेवं तद्यद्रैवतेऽहनि सति वारवन्तीयं पृष्ठं भवति ।
अथेतरत्पवमाने कुर्वन्ति ।
अथ ह गैरेय आषाढिरषाढं भाल्लबेयं पप्रच्छ यदिमानि यद्बहूनि सामानि कथं षष्ठायाह्ने न प्राभवन्निति ।
स होवाच त्वत्वादृशाष्षड्राजानः पञ्चालेषु वेद्या इति ।
स होवाचैवं न्यूनं त्वं वेत्थान्यथा वयमतो विद्मेति ।
स यदेवैतदपृष्ठं पृष्ठं वारवन्तीयं क्रियते तेनैवैतदहरप्रभूतम् ।
अथ ह नैतन्नव आरुणिं पप्रच्छारुण आरुणे कस्मादरेतोधास्सत्यो महानाम्नयः प्रजनयन्ति ।
कस्मादु रेतोधास्सत्यो रेवतयो न प्रजनयन्तीति ।
यद्र इति रेत एव प्रथमेनाभिव्याहरतीति ।
तद्ध न प्रत्युवाच ।
तेन हैनं जिगाय ।
स यत्प्रत्यवद्दयद्रेतो वै रेवतयो रेत उ रैवतं साम । न वै रेतसो रेतोऽस्ति ।
पुत्र एवैतर्हि रेतोऽन्तमेतत्पृष्ठानि गच्छन्ति ।
यदा षष्ठमहरागच्छन्ति नातः पराञ्च प्रजायन्ते ।
तस्मादरेतोधास्सत्यो महानाम्नयः प्रजनयन्ति ।
तस्मादु रेतोधास्सत्यो रेवतयो न प्रजनयन्तीति ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
सुंरूपकृत्नुमूतय
इत्यभ्यारम्भेण षट्पदाष्षष्ठेऽहन्भवन्ति ।
तेनैव षडहानि कल्पन्ते १५६

तास्वृषभो रैवतः ।
पशवो वै सिमाः । पशवो रेवतयः । पशव ऋषभः ।
ऋषभमेवैतत्पशुष्वपिसृजन्ति मिथुनत्वाय प्रजननाय ।
प्र मिथुनेन जायते य एवं वेद ।
तस्य पूर्वार्धं च भूयिष्ठं भाजयन्ति ।
तस्मात्पशवः पूर्वार्धेन च जघनार्धेन च भूयिष्ठं भुञ्जन्ति वहन्ति ।
पूर्वार्धेन दुह्रे च जघनार्धेन प्र च जनयन्ति ।
उभयं धेनुपयसं चानडुत्पयसं चावरुन्द्धे य एवं वेद ।
उभे यदिन्द्र रोदसी
इति षट्पदाष्षष्ठेऽहन्भवन्ति ।
तेनैव षडहानि कल्पन्ते ।
देवासुराः पशुष्वस्पर्धन्त ।
तेऽसुराः पशुभिस्सह समुद्रमभ्यवायन् ।
ते देवा अकामयन्त वृञ्जीमह्यसुराणां पशूनिति ।
त एतानंकानपश्यन्नेता ऋचो
देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनद्
इति ।
एतदङ्कं रूपम् ।
तैरुदारुम्पंस्तान्पशून् ।
ता एताः पशव्या ऋचः ।
अव पशून्रुन्द्धे बहुपशुर्भवत्येताभिर्ऋग्भिस्तुष्टुवानः १५७

तासु श्येनस्संपारणोऽनपहानाय क्रियते ।
श्येनो ह वा एतदहस्संपारयितुमर्हति ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनाञ्छ्येन एव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा श्येनो वाव नो भूत्वेदं साम स्वर्गं

लोकमवाक्षीदिति ।
तदेव श्येनस्य श्येनत्वम् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
इन्द्रो वा एतेन साम्ना श्येनो भूत्वा असुरानपावपत् ।
तद्वेव श्येनस्य श्येनत्वम् ।
तदु भ्रातृव्यहा ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति १५८

परि स्वानो गिरिष्ठा
इत्यार्भवस्य पवमानस्य परिवतीर्गायत्र्यो भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
पवित्रे सोमो अक्षरत् ।
मदेषु सर्वधा असि
इति मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधत्यैवैनदेतेन प्याययन्ति ।
त्वं विप्रस्त्वं कविर्
इति त्वमिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
मधु प्र जातमन्धसा ।
मदेषु सर्वधा असि
त्वे विश्वे सजोषसः
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
देवासः पीतिमाशत ।

मदेषु सर्वधा असि
इत्युपरिष्टादुदर्कं दधति ।
रसो वै षष्ठमहस् । तस्यानतिनेदाय ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ त्रीणि वैदन्वतानि ।
शर्यातो वै मानवः प्राच्यां स्थल्यामयजत ।
तं हर्षयो याजयांचक्रुः ।
तदुभये देवमनुष्यास्सोमं समपिबन् ।
तदुभयैर्देवमनुष्यैरुत्तमं सोमस्संपीतः ।
तस्मिंश्चयवनो भार्गवोऽश्विभ्यां ग्रहमगृह्णात् ।
तमिन्द्रश्चमसमवागृह्णात्कोऽयमज्ञातश्चमसः प्रचरतीति ।
तस्य विदन्वान्भार्गवः प्रत्यहन् । कस्तं चमसं मीमांसितुमर्हति यं वयं प्रयच्छेमेति १५६

ते देवा अक्रुध्यन्न् । अक्रुध्यन्नृषयः ।
ते नवनवतयो मरुत ऋृष्टिहस्ता अतिष्ठन्निदानीमिदं पर्याकरिष्यामोऽथेदं सर्वं मर्दिष्यत इति ।
अथ ह ऋषयो मदमासुरमुदाह्वयन् ।
स उत्तृन्दन्नेवान्तरिक्षं शीर्ष्णाभ्यधात् । सा महती समदासीत् ।
सोऽग्निरिन्द्रमब्रवीद्व्येतु ते क्रोध श्रेयांसो वा एतेऽस्मत् ।
यदि वा एतान्क्रोधयिष्यति नेह किं चन परिशेक्ष्यते ।
एतेभ्यो वै वयं जातास्म इति ।
तस्याग्निरेव क्रोधं व्यनयत् ।
स इन्द्रो वीतक्रोधस्सह देवैः प्राद्रवत् ।
तेषामपेन्द्रोऽपदेवो यज्ञोऽभवत् ।
तेऽकामयन्त सेन्द्रो नस्सदेवो यज्ञ स्यादिति ।
स एतानि विदन्वान्भार्गवस्सामान्यपश्यत् ।
तैरस्तुत ।
तैरिन्द्रमाह्वयत् ।
तैरस्य क्रोधं व्यनयत् ।

ततो वै तेषामिन्द्रो यज्ञमुपावर्तत ।
तत एभ्योऽनपक्रम्याभवत् ।
तत एषां सेन्द्रस्सदेवो यज्ञोऽभवत् ।
तानि वा एतानि सेन्द्राणि सदेवानि सामानि ।
सेन्द्रो हास्य सदेवो यज्ञो भवत्य् । अभ्यस्येन्द्रो यज्ञमावर्तते । नास्येन्द्रो यज्ञादपक्रामति य एवं वेद ।
पशवो ह खलु वै विदन्वन्त । एता ऋचो विदन्वतीः ।
तास्वेतमृषभं वैदन्वतमपिसृजन्ति मिथुनत्वाय प्रजननाय ।
प्र मिथुनेन जायते य एवं वेद ।
यदु विदन्वान्भार्गवोऽपश्यत्तस्माद्वैदन्वतानीत्याख्यायन्ते १६०

अथ ह मद आसुरो बिभयांचकार ।
स होवाच मा मां मोघायोदाह्वयत वि मां निधत्तेति ।
तेऽब्रुवन्पास्याम इति मन्यमानास्सुरामाहराम वरुणस्यान्धसोऽधि ।
तस्यां नैवासीत्कतमश्चनार्तस्सामर्त्यानीति ।
तत्र मद परेहीति ।
स एष मद आसुरस्सुरायां विनिहितः ।
स सुन्वे यो वसूनां यो रायाम्
इति रूति रेवतीनां रूपम् १६१

तासु दीर्घं बृहतामेकम् ।
एतेन ह वा एतदहर्बार्हतं क्रियते ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनान्दीर्घमेव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा दीर्घं वाव नो भूत्वेदं साम स्वर्गं लोकमवाक्षीदिति ।
तदेव दीर्घस्य दीर्घत्वम् ।
तदेतत्स्वर्ग्यं साम ।

अश्नुते स्वर्गं लोकं य एवं वेद ।
तं वः सखायो मदाये
ति मद्वतीर्भवन्ति ।
अभिपूर्वमेवैतत्तृतीयसवने रसं मदं दधति ।
पुनानमभि गायत ।
शिशुं न हव्यै स्वदयन्त गूर्तिभिः
इति पशुरूपमेवैतदुपगच्छन्ति ।
पशूनां वै शिशुर्भवति ।
सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यत
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो ह्येतदहः ।
देवावीर्मदो मतिभिः परिष्कृत
इति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः १६२

तामु कार्णश्रवसम् ।
इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मन्यमानस्स व्यस्मयत ।
तस्य कर्णौ समैषताम् ।
ताभ्यां नाशृणोत् ।
सोऽकामयताबधिर स्यां । शृणुयां कर्णाभ्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽबधिरोऽभवद् । अशृणोत्कर्णाभ्याम् ।
सोऽब्रवीदश्रौषं वै कर्णाभ्यामिति ।
तदेव कार्णश्रवसस्य कार्णश्रवसत्वम् ।
अबधिरो भवति । शृणोति कर्णाभ्यां य एवं वेद ।
तद्वेवाचक्षते गौलोममिति ।
गोलोमा आङ्गिरसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।

स एतामिळामुपैत् ।
पशवो वा इळा ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे । बहुपशुर्भवति य एवं वेद ।
यदु गोलोमा आंगिरसोऽपश्यत्तस्माद्गौलोममित्याख्यायते ।
सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्रा स्वाना अरेपस
इति रूति रेवतीनां रूपम् ।
तासु गौरिवीतमुक्तब्राह्मणम् १६३

अथ मधुश्चयुन्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते -- अथोऽन्तो वै रसानां मध्वन्त स्वर्गो लोकानाम् ।
अन्त एतदहरन्त्येन साम्नान्त्यं स्वर्गं लोकमश्नवामहा इति ।
अथ क्रौञ्चे ।
क्रुंङांगिरस ईष्यमिवाहरविन्दत् ।
ईष्यमिवैतदहर्यत्षष्ठम् ।
तस्मात्षष्ठेऽहनि क्रियेते ।
ते उ एवाचक्षत उद्वच्च शाम्मदं चेति ।
उद्वता वै देवा ऊर्ध्वा स्वर्गं लोकमुदक्रामन् ।
यदूर्ध्वा स्वर्गं लोकमुदक्रामंस्तदुद्वत उद्वत्त्वम् ।
तदेतद्स्वर्ग्यं साम ।
ऊर्ध्व एवैतेन स्वर्गं लोकमुत्क्रामति य एवं वेद ।
अथ शाम्मदम् ।
देवेभ्यो वै विजिग्यानेभ्य इमे लोका बिभ्यतो व्युदक्रामन् ।
तेऽकामयन्ताभि न इमे लोका आवर्तेरन् ।
नास्मदपक्रामेयुरिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तानिमे लोका अभ्यावर्तन्त ।
तत एभ्योऽनपक्रामिणोऽभवन् ।

तेऽब्रुवञ्छं वै न इमे लोका अमादिषुरिति ।
तदेव शाम्मदस्य शाम्मदत्वम् ।
शमस्मा इमे लोका मदन्त्यभ्येनमिमे लोका आवर्तन्ते ।
नास्मादिमे लोका अपक्रामन्ति य एवं वेद ।
तदूर्ध्वेळं भवति बृहतो रूपं बार्हतेऽहन् ।
तेन वै रूपसमृद्धम् ।
अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरसि प्र धन्व ।
ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधश्चित्तकवे नरं धात्
इति रूति रेवतीनां रूपम् १६४

तासु श्नौष्टम् ।
एतेन वा अग्निर्वैश्वानरो दीदाय ।
दीदयामेति सत्रमासते ।
दीदयन्त्येवैनमेतेन ।
अथ ह वा अग्निर्वैश्वानर इत्थमेवास यथेमेऽङ्गाराः ।
सोऽकामयत श्नुष्टयो मे जायेरन्नचर्य इति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै तस्य श्नुष्टयोऽर्चयोऽजायन्त ।
एते ह वा अस्य श्नुष्टयो यदर्चयः ।
तेजो वा अस्य तद्ब्रह्मवर्चसमजायत ।
तेजस्वी ब्रह्मवर्चसी श्नुष्टिमान्भवति य एवं वेद ।
तदु निषिद्धमिव भवत्यन्तस्य रूपम् ।
अन्तो ह्येतदहः ।
तद्यथा वा अदोऽनयनं यन्तमेहीह मात्रैरित्यनुह्वयेदेवमेवैतेन स्तोमा आप्ता
अन्ततोऽनुह्वयन्ति १६५

अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
अथैता द्विपदो भवन्ति । छन्दसामयातयामताया अवरुद्ध्यै ।
यातयामानि वा एतर्ह्यहानि छन्दांसि । द्विपद एवायातयाम्नीः ।

ता यदत्र क्रियन्ते तेनैवैतदहरयातयाम क्रियते ।
तद्ध स्म केशी दार्भ्य उपगायति
सर्वदैव गिरौ भद्रमपि पर्णेन जीवति ।
यदावसं न विन्दति तदाशा उपधावति
इति ।
यादृगिव स्युरेव ब्राह्मणास्तादृगिदं यूयं कुरुथाप्तेषु छन्दस्सु द्विपद इति ।
पशवो वै पृष्ठ्यष्षडहः । पुरुष छन्दसां द्विपदः ।
ता यदत्र क्रियन्ते पुरुषमेव तत्पशुष्वध्यूहन्ति ।
तस्मात्पुरुष उपरिष्टात्पशूनधीव तिष्ठति ।
अथो स्वर्ग एष लोको यत्पृष्ठ्यष्षडहो । यजमान एष निदानेन यद्द्विपदः
।
ता यदुपरिष्टात्पृष्ठ्यस्य षडहस्य पर्यूहन्ति यजमानमेव तत्स्वर्गे लोके
समुदूहन्ति १६६

छन्दांसि यदमुमादित्यमुदयच्छंस्तानि नाशक्नुवन्नुद्यन्तुम् ।
तानि द्विपदाञ्छन्दांस्यब्रुवंस्त्वयि प्रतिष्ठायैतमुद्यच्छामेति ।
तानि वै मेऽन्नं भवतेति ।
अन्नं ते भवाम इत्यब्रुवन् ।
तद्ब्राह्मणो ह वै छन्दो द्विपदस् । तान्यस्यैतान्यन्नमिह चामुत्र च ।
तान्येतानि छन्दांसि द्विपदायां प्रतिष्ठायैतमादित्यमुद्यच्छन्त्येतांश्च यज्ञक्रतून् ।
तद्यत्पृच्छेयुः कस्माद्द्विपदष्षष्ठेऽहन्क्रियन्त इति । प्रतिष्ठित्या इत्येव ब्रूयात्
।
तस्मादेता अत्र नान्तरित्याः ।
ता एता भवन्त्यग्ने
त्वं नो अन्तम
इति १६७

असमातिं राथप्रौष्ठं गौपायना अभ्यदासन् ।
ते खाण्डवे सत्रमासत ।
अथ हासमातौ राथप्रौष्ठे किराताकुली ऊषतुरसुरमायौ ।

तौ ह स्मानग्नावधिधायौदनं पचतोऽनग्नौ मांसम् ।
वपन्तौ ह स्म पुरस्तादितो लोनन्तो ह स्म पश्चादनुयन्ति तावन्मायाविनौ हासतुः ।
तद्वै तच्छश्वदिन्द्वाकवोऽसुराशनं जग्ध्वा पराभूताः ।
तमसमातिं राथप्रौष्ठं गौपायनानामाहुतयोऽभ्यतपन् ।
सोऽब्रवीदिमौ किराताकुली इमा वै मा गौपायनानामाहुतयोऽभितपन्तीति ।
तावब्रूतां तस्य वा आवमेव भिषजौ स्व । आवं प्रायश्चित्तिर् । आवं तथा करिष्यावो यथा त्वैता नाभितप्स्यन्तीति ।
तौ परेत्य सुबन्धोर्गौपायनस्य स्वपतः प्रमत्तस्यासुमाहृत्यान्तःपरिधि न्यधत्ताम् ।
परिधिमन्तो ह तर्ह्यग्नय आसुः ।
तत्सुबन्धावप्रबुद्धेऽन्वबुध्यन्ताहार्ष्टां वा अस्यासुमसुरमायाविति ।
तेऽब्रुवन्नेत सुबन्धोरसुमन्वयामेति ।
ते खाण्डवात्प्रायन्
मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।
मान्त स्थुर्नो अरातयः
यच्चेदमिमो यच्च सत्रमास्महे तस्मादुभयस्मान्मा प्रगामेति ते सुबन्धुनावतन्तुमता सुबन्धुतीर्थेनैव हृणिनीं प्राञ्चस्तीर्त्वागच्छन्नसमातिं राथप्रौष्ठम् १६८

तस्य ह पराख्यायैवाग्निमजानन्वरूथ्यो वै नामास्याग्निरिति ।
अथ ह ततः पुराग्निर्वरूथ्यो नाम प्रोचे वरूथ्यो वै नामास्मि ।
स यस्त्वैतदभिराधयाद्यदेव त्वा किं च स ब्रवत्तत्कुरुतादिति ।
तमुपायन्न्
अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्य
इति ।
तानब्रवीत्किंकामा आगातेति ।
सुबन्धोरेवासुं पुनर्वनुम इत्यब्रुवन् ।
एषोऽन्तःपरिधीत्यब्रवीत् ।
तमादद्ध्वमिति ।

तं निराह्वयन्न्
अयं मातायं पितायं जीवातुरागमत् ।
इदं तव प्रसर्पणं सुबन्धवेहि निरिहि
इति ।
तं सुबन्धुमसुः पुनः प्राविशत् ।
स यथापुरमभवत् ।
तदाभ्यां किराताकुलीभ्यामाचक्षतेमे वा ऋषयोऽसुं निराह्वयन्निति ।
तावधारयमाणौ निराद्रवताम् ।
तयोरिमानेव पराख्याय सर्वा माया अपाक्रामन् ।
तयोर्ह यत्पापिष्ठतमं रूपाणां तद्रूपमास १६९

अथ ह ततः पुरा मायया दर्शनीयावासतुः ।
तयोरन्यतरोऽग्निं प्रप्लवमाणोऽब्रवीदित्थं वै स करोति यस्सत्यमनृतेन जिघांसतीति ।
अथेत्थं गा न्यकृन्तन् ।
तदन्यतर उपपरेत्य ग्रीवा अपिकृन्तमाणोऽब्रवीदित्थमु वाव स करोति यस्सत्यमनृतेन जिघांसतीति ।
तौ तदेवाम्रियेताम् ।
ता एता भ्रातृव्यघ्न्यो रक्षोघ्न्य ऋचः ।
हन्ति द्विषन्तं भ्रातृव्यमप रक्षः पाप्मानं हत एताभिर्ऋग्भिस्तुष्टुवानः ।
तदाहुर्यद्वालखिल्या विहरन्ति कथमेतासु विहृतासु स्तुवत इति ।
स ब्रूयाद्यदेवैतानि व्यूनाक्षराणि व्यतिषक्तानि पदानि भवन्ति । तेनेति
१७०

तासु गूर्दः ।
देवासुरा अन्नाद्येऽस्पर्धन्त ।
ते देवा अन्नाद्यमसुराणामवृञ्जत ।
तेषु हासुरेषु गूर्द एव नाम महदन्नाद्यं परिशिशिषे ।
ते देवा अकामयन्त वृञ्जीमहीमं गूर्दमन्नाद्यमसुराणामिति ।
त एतत्सामापश्यन् ।

तेनास्तुवत ।
तेन गूर्दमन्नाद्यमसुराणामवृञ्जत ।
तस्मिन्नगूर्दन् ।
यदगूर्दंस्तद्गूर्दस्य गूर्दत्वम् ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धे वृंक्ते द्विषतो भ्रातृव्यस्यान्नाद्यं य एवं वेद ।
प्रजापतिरन्नाद्यमसृजत ।
तस्य सर्वे देवा ममत्विन आसन्मम ममेति ।
सोऽग्निरकामयताहमिदमन्नाद्यमुज्ञयेयमिति ।
स एतत्सामापश्यत् ।
तेनैनं पर्यगृह्णात् ।
तदुदजयत् ।
तदेतदग्नावेव सर्वमन्नाद्यम् ।
तस्माद्यस्यै यस्यै देवतायै जुह्वत्य् । अग्नावेव जुह्वति ।
तस्मिन्नगूर्दत् ।
यदगूर्दत् । तद्वेव गूर्दस्य गूर्दत्वम् ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवा
इति वैश्वदेव्यो भवन्ति ।
वैश्वदेवो वै वृषकपिः ।
वैश्वदेवमेतदहः ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रस्सह सीषधात्विति सिद्ध्या एव ।
आदित्यैरिन्द्रस्सगणो मरुद्भिरस्मभ्यं भेषजा करद्
इति भेषजमेवैतेन प्रायश्चित्तिं कुर्वते १७१

तासु गोतमस्य भद्रम् ।
गोतमो वै श्रीकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।

ततो वै स श्रियमाश्नुत ।
तच्छ्रीर्वै भद्रम् ।
प्रजा वै भद्रम् ।
प्रजायै या प्रजा सा श्रेयः ।
अपि ह प्रजायै प्रजां पश्यते य एवं वेद ।
यदु गोतमोऽपश्यत्तस्माद्गोतमस्य भद्रमित्याख्यायते ।
प्र व इन्द्राय वृत्रहन्तमाये
ति वार्त्रघ्न्यो भवन्त्य् । अन्ततो विजित्यै ।
देवा वै षडहेन विजित्याब्रुवन्किं नु नोऽस्यान्तत स्याद्यथा न इदं जितम-
सुरानपजयेयुरिति ।
ते पृष्ठानामेव रसान्संप्रावृहन् ।
तानभ्यस्वरन् ।
तदूर्ध्वमुदश्रयद्यथा वंश एवम् ।
तदुद्वंशीयमभवत् ।
तदुद्वंशीयस्योद्वशीयत्वम् ।
तद्यज्ञमत्यरिच्यत ।
तस्मादेतमुद्वंशपुत्रं प्रावृहन्त ।
रसादेव रसं तं पृष्ठ्यस्य षडहस्यान्ततोऽकुर्वंश्छन्दोमानामुद्वंशीयम् ।
तावेतौ वज्रावुद्यतावन्ततस्तिष्ठतः । पशूनां गुप्त्यै पशूनामपरावापाय ।
नास्य वित्तं परोप्यते य एवं वेद ।
सर्वेषां वा एतत्पृष्ठानां रूपं रसस्तेजस्संभृतम् ।
सर्वस्मिन्नेवैतत्पृष्ठरूपे रसे तेजस्यपराजिते छन्दसि यज्ञस्यान्ततः प्रतितिष्ठन्ति
।
तस्य पुरस्तान्निधनस्य प्रतिहारमुपयन्ति ।
प्रस्तावप्रतिहाराभ्यां वै यजमानो धृतः ।
अतीता इवैतर्हि भवन्ति तद्यत्पुरस्तान्निधनस्य प्रतिहारमुपयन्त्यनतिपादायैव
।
तत्स्वारं भवति ।
अभि सप्तममह स्वरति ।
स्वारमेव तद्भवति ।

स्वरेण श्वो भूते प्रतिपद्यन्ते ।
स यथा समात्समं संक्रामेद् । यथा प्राणेन प्राणं संदध्यात् । तादृक्तत्
१७२

प्रजापतिर्वा एतं यज्ञमसृजत यद्द्वादशाहम् ।
तं पृष्ठ्येनैव षडहेन सर्वमाप्नोत् ।
स षन्नत कथं न्विमानि चत्वार्यहानि प्रतिसंदध्यामिति ।
स गायत्र्या एव चतुर्विंशमहर्निरमिमीत । त्रिष्टुभश्चतुश्चत्वारिंशं । जगत्या अष्टाचत्वारिंशम् । अनुष्टुभ एव दशममहर्निरमिमीत ।
सर्वेभ्यो वा अहोभ्यस्तद्यच्छन्दोभ्यो निरमिमत तच्छन्दोमानां छन्दोमत्वम् ।
तदाहुराप्यन्ते वा एतत्स्तोमा । आप्यन्ते छन्दांस्य् । आप्यन्ते देवता ।
आप्यन्त ऋतवो ग्रहा । यदेष पृष्ठ्यष्षडह आप्यत इति ।
तद्यत्सप्तमस्याह्नश्चतुर्विंशं बहिष्पवमानं भवति चतुर्विंशत्यर्धमासस्संवत्सरः ।
संवत्सरो यज्ञो यज्ञमेवैतद्यज्ञमुख आरभन्ते ।
अथो चतुर्विंशत्यक्षरा वै गायत्री ।
गायत्र्यो वा आप्तं यज्ञक्रतुं पुनस्तन्वते ।
नो ह्यन्या गायत्र्या आप्तं यज्ञक्रतुमुद्यन्तुमर्हति १७३

एता भवन्ति
प्र काव्यमुशनेव ब्रुवाण
इति प्रवतीः प्रायणेऽहन् ।
प्रणिनीषेण्यं वा एतदहः ।
प्रेति गायत्र्यै रूपम् ।
गायत्र्या एवैतद्रूपेण प्रयन्ति ।
देवो देवानां जनिमा विवक्ती
ति सोमो वै देवो देवानां जनिमा ।
सोममेव तत्प्रजनयन्ति ।
महिव्रतश्शुचिबन्धुः पावक
इत्यन्नं वै देवाश्शुचिब्रतमित्याचक्षते ।

अन्नमु देवानां सोमः ।
तमेवैतत्प्रजनयन्ति ।
पदा वराहो अभ्येति रेभन्न्
इति वराहो वै भूत्वा प्रजापतिष्षष्ठाद् अह्नस्सप्तममहरभ्यत्यक्रामत् ।
अतिक्रान्तिरेवैषा ।
प्र हंसासस्तृपला वग्नुमच्छे
ति ब्राह्मणा ह वै हंसासस्तृपलाः ।
अमादस्तं वृषगणा अयासुर्
इति षडहो वा अमाच्छन्दोमा अस्तम् ।
छन्दांसि वृषगणाः ।
छन्दांस्येवैतच्छन्दोमानभ्यतिनयन्त्युत्तरस्य त्र्यहस्य संपारणाय ।
अङ्गोषिणं पवमानं सखायो दुर्मर्षं वाणं प्र वदन्ति साकम्
इति बृहद्रथन्तरे एवैतत्प्रातस्सवने युज्येते ।
ते युक्ते माध्यन्दिने सवनेऽभ्यारोहन्ति ।
स योजत उरुगायस्य जूतिं वृथा क्रीळन्तं मिमते न गाव
इति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।
परीणसं कृणुते तिग्मशृंग
इति ।
परीणसमित्याह -- अन्नं वै परीणसमन्नाद्यस्यैवावरुद्ध्यै ।
दिवा हरिर्ददृशे नक्तमृज्र
इत्यतिरात्रो रूपेण क्रियते १७४

ता एता भवन्ति त्रिष्टुभो गायत्रवर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समृद्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद ।
तदाहुर्यद्गायत्रं सप्तममहस् । त्रैष्टुभमष्टमं । जागतं नवमम् । अथ कस्मादेतद्गायत्रं सत्त्रिष्टुब्भिः प्रतिपद्यन्त इति ।
स ब्रूयात्सर्वे ह्येवैतच्छन्दोमास्त्रिष्टुप्प्रतिपदो भवन्तीति ।
प्र स्वानासो रथा इवे

ति प्रवतीर्भवन्ति ।
प्रायणीयरूपमेवैतदुपगच्छन्ति ।
प्रायणीयं ह्येतदहः ।
सूक्तमनुरूपो भवति पशवो वै सूक्तम् ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
अथो भूमा वै पशवः ।
भूमा सूक्तम् ।
पशूनामेवैतत्पशूननुरूपान्कुर्वन्ति ।
नात्र प्रत्यक्षानुरूपान्कुर्वन्ति ।
तस्मात्पशवो नानारूपाञ्जनयन्त्युत श्वेता कृष्णं जनयन्त्य् । उत कृष्णा श्वेतम् । उत रोहिणी कल्माषम् । उत कल्माषी रोहितम् ।
अर्वन्तो न श्रवस्यवः ।
सोमासो राये अक्रमुः
इति प्रायणीयरूपमेवैतदुपगच्छन्ति ।
प्रायणीयं ह्येतदहः ।
हिन्वानासो रथा इवे
ति यद्वै रथवत्प्रायणीयरूपमु एव तत् ।
दधन्विरे गभस्त्योः ।
भरासः कारिणामिव
राजानो न प्रशस्तिभिस्सोमासो गोभिरञ्जते ।
इति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।
यज्ञो न सप्त धातृभिर्
इति सप्तमस्याह्नो रूपमुपगच्छन्ति १७५

नवर्चं भवति ।
नव वै पुरुषे प्राणाः ।
प्राणैरेवैतत्समृध्यमाना यन्ति । प्राणेषु प्रतितिष्ठन्तः ।
अथो तेनैव त्रिवृत स्तोमान्न यन्ति ।
यद्धि किं च प्रायणं त्रिवृत् ।

प्रायणमु एवोत्तरं नवर्चं भवति ।
अभिपूर्वमेवैतत्प्राणैः समृध्यमाना यन्ति ।
आ ते दक्षं मयोभुवम्
इति पर्यासो भवति । प्रजानां धृत्यै पशूनामुपस्थित्यै ।
तदाहुर्यत्समं कस्तृणस्याग्रं सर्पति । क्व स तपो भवतीति ।
उत्पक्षिणः पतन्तीत्याहुः ।
कथमपक्षा भिन्दत इति ।
पक्षिणीरिव वा एता यास्समानप्रायणास्समानोदयनाः ।
एताभिर्वा एतदहः पक्षि क्रियत । एताभिरुत्पतत्य् । एताभिस्त्रयस्त्रिंशं स्तोमं प्रत्युद्यच्छति ।
पक्षी पाप्मानं तरति । पक्षी श्रियमश्नुते य एवं वेद प्रेति पनमानस्य प्रथमेत्युत्तमैवमिव ह्येतदहः ।
तस्माद्वयस्सम्यक्पक्षाभ्यामेवैते ।
चतुर्विंश स्तोमो भवति ।
चतुर्विंशत्यर्धमासो वै संवत्सरः ।
अर्धमासश एवैतत्संवत्सरे प्रतितिष्ठन्तो यन्ति ।
अथो चतुर्विंशत्यक्षरा वै गायत्री ।
तेजो ब्राह्मवर्चसं गायत्री तेजस्येवैतद्ब्रह्मवर्चसे प्रतितिष्ठन्तो यन्ति १७६

त्रयो वैश्वानरा अतिरात्रा अतिरात्रा द्वादशाहे कार्या इत्याहुः ।
प्राणः प्रथमो वैश्वानरोऽपानो द्वितीयो । व्यानस्तृतीयः ।
वाग्वा एषा प्रतता यद्द्वादशाहः ।
तां त्वयि विच्छिन्द्युः ।
तां हार्यलः काहोळिरुपेयाय त्र्यनीका विजित्येति ।
तमु ह ब्राह्मण उवाचानुष्ठ्या प्राणानुपागात् ।
वि वाचमच्छैत्सीदिति ।
तस्य ह तत्कुलं व्येव चिच्छिन्द्युः ।
तां हार्यलः काहोळिरुपेयाय त्र्यनीका विजित्येति ।
तमु ह ब्राह्मण उवाचानुष्ठ्या प्राणानुपागात् ।
वि वाचमच्छैत्सीदिति ।

तस्य ह तत्कुलं व्येव चिच्छिदे ।
ज्योक्तु हैव जिजीव ।
तदु ह पश्चेवानुसंताययांचक्रे ।
मूर्धानं दिवो अरतिः पृथिव्या
इत्येवंरूपेण वैश्वानरः कार्यः ।
तन्न वाचं विछिनत्ति । नाग्निं वैश्वानरमन्तरेतीति ।
प्र वश्शुक्राय भानवे भरध्वम्
इति प्रवती कार्याः ।
प्रणिनीषेण्यं वा एतदहः ।
प्रेति गायत्र्यै रूपम् ।
गायत्र्या एवैतद्रूपेण प्रयन्ति ।
भूयांसि रूपाण्यपराध्यन्त ।
इतराण्येव भूयांसि रूपाणि ।
यन्
मूर्धानं दिवो अरतिं पृथिव्या
इत्याह द्यावापृथिवीयो वातिरात्रोऽतिरात्र एवैतेन रूपेण क्रियते ।
वैश्वानरमृत आ जातमग्निम्
इत्यग्निरेव वैश्वानरः प्रत्यक्षं भवति ।
कविं सम्राजमतिथिं जनानाम्
इति माध्यन्दिनं सवनम् ।
आसन्ना पात्रं जनयन्त देवा
इति षष्ठस्याह्नस्तृतीयसवनम्प्रत्युपगच्छन्ति १७७

तद्धि जघन्यं यज्ञे देवा अपश्यन् ।
अतीता इवैतर्हि भवन्ति ।
तदेवैतत्प्रत्युपगच्छन्ति सन्तत्यै ।
ते देवा अब्रुवन्यदिमावसत्रमतिरात्रावथ केनेमावग्नेर्वैश्वानरस्य तन्वं व्येष्याम इति ।
तेऽब्रुवन्या एव न इमा अन्त्या अयातयाम्नृचः परमा
गुह्यास्तन्वस्ताभिर्व्ययामेति ।

मूर्धानं दिवो अरतिं पृथिव्या
इति द्यावापृथिव्योरन्त्यायातयाम्नी परमा गुह्या तनूः ।
वैश्वानरमृत आ जातमग्निम्
इत्यग्नेर्वैश्वानरस्यान्त्यायातयाम्नी परमा गुह्या तनूः ।
वैश्वानरमृत आ जातमग्निम्
इत्यग्नेर्वैश्वानरस्यान्त्यायातयाम्नी परमा गुह्या तनूः ।
कविं सम्राजमतिथिं जनानाम्
इतीन्द्रस्य सम्राड्वतीष्वन्त्यायातयाम्नी परमा गुह्या तनूः ।
आसन्ना पात्रं जनयन्त देवा
इति विश्वेषां देवानामन्त्यायातयाम्नी परमा गुह्या तनूः १७८

स यथा प्रीहितावीजं परिचते वासस्ता वासो निधनानिमं परिधत्त एवमेव तद्देवा अन्त्याभिरयातयाम्नीभिस्तनूभिरग्नेर्वैश्वानरस्य तन्वं व्यायन् ।
तथो एवैतर्हि वियन्ति ।
सर्वाणि वा अग्निष्टोमे संस्थिते ।
षडुक्थान्युत्क्रामन्ति ।
तान्येतस्मिन्षडहे संस्थित उत्क्रामन्ति ।
तान्येतस्मिन्नेवाग्नेय आज्ये पुनर्युज्यन्ते ।
मूर्धानं दिवो अरतिं पृथिव्या
इति द्यावापृथिवीयमेवैतेन युज्यते ।
वैश्वानरम्
इति वैश्वानरीयमेवैतेन युज्यते ।
ऋृत आ जातमग्निम्
इति जातवेदसीयमेवैतेन युज्यते ।
कविं सम्राजमतिथिं जनानाम्
इति मरुत्वतीय-निष्केवल्ये एवैतेन युज्येते ।
आसन्ना पात्रं जनयन्त देवा
इत्याज्यप्र-उगे एवैतेन युज्येते ।
एवमेतान्युक्थानि पुनर्युज्यन्ते ।
अर्वाङ्ह्येष त्रियहस्तायते ।

तस्मान्मूर्धानं दिवो ग्ररतिं पृथिव्या इति भवति ।
ग्रसौ वै दिवो मूर्धेयमरतिः पृथिव्यै १७९

प्र वो मित्राय गायते
ति मैत्रावरुणं भवति ।
प्रायणीयरूपमेवैतदुपगच्छन्ति ।
प्रायणीयं ह्येतदहः ।
सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्चे
त्युभयोरेवैतद्बृहद्रथन्तरयो रूपमुपगच्छन्ति ।
उभेऽप्यत्र बृहद्रथन्तरे क्रियेते ।
इन्द्रा
याहि चित्रभानो । इन्द्रा याहि धियेषित । इन्द्रा याहि तूतुजान
इत्या याह्या याहीति भवति ।
ग्रा याह्या याह्या याहीति युक्तानां पुरस्तात्प्रयन्ति ।
यथा युक्तानां पुरस्तादा याह्या याहीति प्रेयात्तादृक्तद्यत्तृतीयस्याह्न षन्द्राग्नम् ।
तदैन्द्राग्नं समैन्याज्यानि भवन्ति ।
नानाग्रामाविव ह वा एतौ यत्पृष्ठ्यश्च षडहश्छन्दोमाश्च ।
स यथा नानाग्रामो मित्राणि व्यतिषज्याभय ग्रासीयातां
तादृक्तद्यत्समैन्याज्यानि भवन्ति ।
ग्रसमैनि हैके कुर्वन्ति ।
तस्मात्समैन्येव कार्याणि ।
चतुर्विंश स्तोमो भवति चतुर्विंशत्यर्धमासो वै संवत्सरोऽर्धमासश
एवैतत्संवत्सरे प्रतितिष्ठन्तो यन्ति ।
ग्रथो चतुर्विंशत्यक्षरा वै गायत्री ।
तेजो ब्रह्मवर्चसं गायत्री ।
तेजस्येवैतद्ब्रह्मवर्चसे प्रतितिष्ठन्तो यन्ति १८०

ये ह खलु वा ग्रयुज स्तोमास्ते युग्मन्तो । ये युग्मन्तस्तेऽयुजः ।
तद्येऽयुज स्तोमास्तान्ग्राम्याःपशवोऽन्वथ ये युग्मन्तस्तानारण्याः ।
तद्यदयुजां स्तोमानां साम युज्मोत्तमं भवति । तस्माद्ग्राम्याः पशवो युक्ता

वहन्ति ।
अथ यद्युग्मतां स्तोमानां सामायुगुत्तमं भवति तस्मादारण्याः पशवो युक्ताश्चरन्ति ।
अथ यस्माद्दशमेऽहनि पञ्चदशत्रयस्त्रिंशौ स्तोमौ भवतस्तस्मादु यौ ज्येष्ठौ पशूनां तौ युक्तौ वहतो हस्ती चोष्ट्रश्च १८१

वृषा पवस्व धारये
ति माध्यन्दिनस्य पवमानस्य वृषण्वतीर्गायत्र्यो भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
मरुत्वते च मत्सर
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
तं त्वा धर्तारमोण्योर्
इति विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तद्यत्तं त्वा धर्तारमित्यग्र एव धृत्यै ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ सन्तनि ।
यथा ह वै व्योकसौ विच्छिद्य व्युत्क्रामत एवं षष्ठं च सप्तमं चाहनी व्युच्छिद्य व्युत्कामतः ।
स यथाश्वं संयोजनेन संयुज्यादेवमत्र सन्तति ।
तस्य सकृत्प्रस्तौति । त्रिः प्रतिहरति । त्रिर्निधनमुपयन्ति ।
तत्सप्त संपद्यन्ते सप्तमस्याह्नो रूपं । सप्तरात्रस्य सन्तत्या अव्यवच्छेदाय ।
अथ सौपर्णमुक्तब्राह्मणम् ।
अतिक्रान्तो वा एतर्हि यज्ञो भवति सप्तमेऽहन् ।
तद्यदत्र सौपर्णम्भवति यज्ञस्यैवारम्भाय ।
तदैळं भवति पशवो वा इळा ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै १८२

अथ रोहितकूलीयम् ।

विश्वामित्रो वै भरतानामनस्वत्या महावृषानयात् ।
तद्ध गंगायै वा यमुनायै वा बृहत्प्रतिकूलमास ।
ते होचुर्महावृषाः कौ स्वित्तावेतर्ह्यनड्वाहौ । यावेदमियद्बृहत्प्रतिकूल-
मुद्वहेतामिति ।
स होवाच विश्वामित्रस्तौ न्वै मम रोहिताविति ।
रोहितौ हास्यानड्वाहावासतुः ।
ते होचुर्महावृषास्ते वा अंशमवहरावहै यदि तन्नवितदनड्वाहावुद्वहातो ।
वस्नय एव त्वमनांसि पूरयासै ।
यद्यु नोद्वहातो । वस्नया उ वयं त्वां जयेमेति ।
तथेति ।
ते हांशमवजह्रिरे ।
तौ ह यवाचितस्य वा व्रीह्याचितस्य वा धुरि युयुजुः ।
सोऽकामयत विश्वामित्र -- उदिममाजिं जयेयमिति ।
स एते सामनी अपश्यत् ।
ताभ्यामेनावनुपरिक्राममभ्यसेधत् ।
तावुदपारयेताम् ।
ताउदजयेताम् ।
ततो वै स तमाजिमुदजयत् ।
प्रतिकूलमिवैते यन्ति ये षष्ठादह्नश्छन्दोमानभ्युत्क्रामन्ति ।
तद्यदत्र रोहितकूलीयं भवत्युज्जित्या एव ।
उज्जयति य एवं वेद ।
तदु कामसनि ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते । समस्मै स काम ऋध्यते ।
यदु कूले रोहिताभ्यामुदजयत् । तस्माद्रोहितकूलीये इत्याख्यायेते ।
पुनानस्सोम धारये
त्युभयरूपा बृहती भवति ।
एषा ह वा उभे सामनी उद्ययाम । तस्मादेतां कुर्वन्त्येव बृहत्साम्नः
कुर्वन्ति रथन्तरसाम्नः १८३

तासु रौरवम् ।
देवा वा एता अयातयाम्नीस्तनूरसुरयुद्धाय प्रावृहन्त ।
अग्निरेव रौरवं प्रावृहत ।
तेनासुरानभ्यतपत् ।
तेऽभितप्यमाना अरवन्त ।
यदभितप्यमाना अरवन्त तद्रौरवस्य रौरवत्वम् ।
अभितपति भ्रातृव्यं श्रेयान्भूत्वा य एवं वेद ।
तदाग्नेयं सामाग्नेयेऽहन्क्रियते ।
आग्नेयमेतदहर्यद्गायत्रम् ।
अग्निर्हि गायत्री ।
तद्यदत्र रौरवं क्रियतेऽहरेव तद्रूपेण समर्धयन्ति ।
तेनैभ्यस्समृद्धेन स्वायां जनतायामृद्धुकं भवति ।
तदैळं भवति पशवो वा इळा ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
अथ रथन्तरम् ।
जामि द्वादशाहस्यास्तीत्याहुः ।
बार्हतं षष्ठमहर्बार्हतं सप्तमम् ।
पवमाने रथन्तरं प्रोहन्त्यजामितायै ।
नान्यतोऽपसक्तो विवधो ह्रियत इत्याहुः ।
तद्यदुभे बृहद्रथन्तरे भवतस्स विवधताया एव ।
यो वै मूलादग्रं संचिक्रमिषति न स शक्नोत्य् । अथ योऽग्रादग्रं संक्रामति स शक्नोति ।
अग्राद्वा एतेऽग्रं संक्रामन्ति ये बृहतो बृहदुपयन्ति ।
तस्माद्बार्हतं षष्ठमहर्भवति । बार्हतं सप्तमम् १८४

अथ गौङ्गवं यत्साम देवता प्रशंसति ।
सामैतद्देवता प्रशंसति तेन यजमानास्सत्याशिषो भवन्ति ।
देवासुराः पशुष्वस्पर्धन्त ।
तेऽसुराः पशुभिस्सह समुद्रमभ्यवायन् ।

ते देवा अकामयन्त वृञ्जीमह्यसुराणां पशूनिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनासुराणां पशूनवृञ्जत ।
तेऽब्रुवन्गां गां वावासुराणामवृन्‍द्महीति ।
तदेव गौङ्गवस्य गौङ्गवत्वम् ।
तदेतत्पशव्यं साम ।
गां-गामेव द्विषतो भ्रातृव्यस्य वृंक्तेऽव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
गौङ्गवेन वै देवा असुरान्हत्वा घोषं गंगणिमकुर्वत ।
तद्वेव गौङ्गवस्य गौङ्गवत्वम् ।
तदु भ्रातृव्यहा ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
तदूर्ध्वमिव च तिर्यगिव च गीयते ।
यदूर्ध्वमिव गीयते तद्बृहतो रूपं । यत्तिर्यगिव तद्रथन्तरस्य ।
एतद्वै समृद्धं छन्दोमानां यदुभयं रूपम् १८५

अथ समन्तम् ।
इन्द्राग्नी वा अकामयेतां समन्तौ स्याव । समानीमृद्धिमृध्नुयावेति ।
तावेतत्सामापश्यताम् ।
अर्धमन्योऽपश्यद अर्धमन्यः ।
तस्यान्तौ समाहृत्य समधत्ताम् ।
यत्समधत्तां तत्समन्तस्य समन्तत्वम् ।
तेनास्तुवाताम् ।
ततो वै तौ समन्तावभवतां । समानीमृद्धिमार्ध्नुताम् ।
तद्ब्रह्म वा अग्निः । क्षत्रमिन्द्रः ।
उभयं ब्रह्म च क्षत्रं चावरुन्द्धे य एवं वेद ।
तस्मादु हैतत्सामैतस्मादह्नो नान्तरित्यम् ।
इदं वै रथन्तरमदो बृहत् ।
इदमेवान्तरिक्षं समन्तमनयोरेव लोकयोस्समन्तत्वाय ।

एतेन वा एते समन्ते ।
समन्तेन पशुकाम स्तुवीत ।
पशवो वा अन्तरिक्षं । पशवस्समन्तम् ।
पशुमानेव भवति समन्तेन तुष्टुवानः ।
ब्राह्मणः पुरोधाकामस्समन्तेन स्तुवीत ।
आग्नेयो ब्राह्मण । षन्द्रो राजन्य । आग्नेयी पृथिव्य् । षन्द्री द्यौः ।
ते एतेऽन्तरिक्षमभि समन्ते ।
समन्तावेनौ करोति ब्राह्मणं च राजन्यं च समन्तेन तुष्टुवानो । गच्छति पुरोधां । पुर एवं दधते ।
प्रजापतिर्वा अकामयत समन्तः प्रजया पशुभि स्याम इति ।
स एतत्सामापश्यत् ।
तेनास्तुत ततो वै स समन्तः प्रजया पशुभिरभवत् ।
तद्वेव समन्तस्य समन्तत्वम् ।
समन्त एव प्रजया पशुभिर्भवति य एवं वेद १८६

अथायास्यं बार्हतराथन्तरम् ।
उभौ वर्णौ समृद्ध्यै ।
मध्येनिधनं प्रतिष्ठायै ।
आदित्याश्च वा अंगिरसश्च स्वर्गे लोकेऽस्पर्धन्त ।
त षक्षन्त यतरे नो यतरान्याजयिष्यन्ति ते हास्यन्त इति ।
तेऽग्गिरसः पूर्वे यज्ञं समभरन् । श्वस्सुत्यान्तेऽग्निमाङ्गिरसं दूतं प्राहिरावन्निमान्न श्वस्सुत्यामादित्येभ्यः प्रब्रूहीति ।
स एत्याब्रवीदादित्या । अङ्गिरसो व श्वस्सुत्यां प्राहुरिति ।
तं होचुरपेहि मन्त्रयित्वा त्वा प्रतिवक्ष्याम इति ।
तस्मादिदमप्येतर्हि दूतमाहुरपेहि मन्त्रयित्वा त्वा प्रतिवक्ष्याम इति ।
ते होचुरुप तज्जानीत यथा अस्मानेवांगिरसो याजयेयुर्न वयमङ्गिरसः ।
यदि याजयिष्यामो हास्यामहे । यद्यु न याजयिष्यामो यज्ञाद्यशसोऽपक्रमिष्याम इति ।
तस्मादु ह वृतेन नापक्राम्यं । यज्ञाद्यशसो नेदपक्रामाणीति १८७

पदेन हापेयात् ।
स्वं वा यज्ञमभ्युपेयाद् । इदं च त्वया कृतमिति वा ।
त एतमादित्यास्सद्यःक्रीयं यज्ञं समभरन् ।
तेऽब्रुवन्नग्ने चिरं तद्यच्छ्व । इमामेव वयं तुभ्यमद्य सुत्यां प्रब्रूमः ।
तेषां नस्त्वं होतासि । गौरांगिरसोऽध्वर्युर् । बृहस्पतिरुद्गाता अयास्यो ब्रह्मेति सर्वानवृणत ।
सोऽब्रवीद्दूतो वा अहं चरामीति ।
तमग्निं दूतं वृणीमह इत्येव दूतं चरन्तमवृणत ।
स एषां वृतो नापाक्रामत् ।
स पुनरेत्याब्रवीद् । अङ्गिरस । आदित्या वोऽद्यसुत्यां प्राहुरिति ।
तेन हातुरेव नोऽवृथा इति ।
नेति होवाच ।
दूतो युष्माकमभूवं । वृत एवामीषामस्म्य् । आदह नूनममी
युषंन्मेधावितरा वा धीरतरा वाभूवन्य एतद्पूर्वे दृशन्निति ।
ते वृता नापाक्रामन् ।
त एत्यायाजयन् ।
तेभ्य एतमादित्या आदित्यमेवाश्वं श्वेतं भूतमश्वाभिधान्यभिहितमयास्याय ब्रह्माश्वं नीत्वा स्वर्गं लोकमगच्छन् ।
अहीयन्ताङ्गिरसः ।
सोऽयास्यस्सदृशावात्मन श्रेयांसं वा प्रतिगृह्य व्यभ्रंशत ।
सोऽकामयत समात्मानं श्रीणीयेति ।
स एतत्सामापश्यत् ।
तेनात्मानं समश्रीणीत ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तद्यदत्रायास्यं भवति समेवैनदेतेन श्रीणन्ति । भिषज्यन्त्येवैनमेतेन ।
यद्ध्यास्योऽपश्यत्तस्मादायास्यमित्याख्यायते ।
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतम्
इति प्रवदृचा च साम्ना चैतदहः प्रणयन्ति ।
उभौ वर्णौ समृद्ध्यै ।
प्रेति भृगवः प्र्त्यङ्गिरसः प्रेत्यादित्या स्वर्गं लोकमारोहन् ।

प्रेत्येवैतेन स्वर्गं लोकमारोहन्ति १८८

अथ बृहत् ।
वर्ष्म वै बृहत् ।
वर्ष्मण्येवैतत्प्रतितिष्ठन्तो यन्ति ।
तद्गायत्रेऽहन्भवति ।
पुंसो वा एतद्रूपं यद्बृहत् । स्त्रियै गायत्री ।
तद्यदत्र बृहत्पृष्ठं भवति तेनैवैतदहर्मिथुनं क्रियते ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
वयं घ त्वा सुतावन्त
इति सतोबृहतीराक्रमन्तेऽनपभ्रंशाय ।
तास्वभिनिधनं काण्वम् ।
तदाहुर्विरुद्धं वा एतद्ब्रह्मसाम्नो यदन्यतरद्रूपमभिवदतीति ।
तद्यदभीति भवति तेन रथन्तरस्य रूपान्न यन्ति ।
इन्द्रो वै वृत्रमजिघांसत् ।
स कण्वमुपाधावदृष उप त्वा धावाम । इह नोऽधिब्रूहीति ।
स एतत्कण्वस्सामापश्यत् ।
तेनास्तुत ।
ततो वा इन्द्रो वृत्रमहन् ।
हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
यद्वेवास्मा एतेन साम्ना कण्वोऽभीति वज्रमभ्यनदत् । तस्मादभिनिधनं काण्वमित्याख्यायते ।
अथैता भवन्ति
नकिष्टं कर्मणा नशद्
इति ।
अति वा एतर्हि बृहती बृहतीं क्रामत्य् । अति ककुप्ककुमम् ।
अत्यनुष्टुबनुष्टुभम् ।
सैषा बृहती सती जगती संपद्यते ।

तेनातिक्रामति ।
सा अत्यष्टममहर्जिहीते । नवममहरभ्यारभते । प्रति षष्ठमपधावति १८६

तासु वैखानसम् ।
वैखानसा वा एतानि सामान्यपश्यन्नभ्यारम्भं यज्ञस्य प्रत्यपसारम् ।
अभ्यारम्भैर्वै देवा असुरान्यज्ञादन्तरायन् ।
अथ ह वै वैखानसा इत्यृषिका इन्द्रस्य प्रिया आसुः ।
तान्ह रहस्युर्मारिम्लवो मारयांचकार ।
तान्हेच्छन्रहस्युमुपेयाय ।
तं होवाच रहस्यो नेह तान्वैखानसानित्यृषिकानद्राक्षीरिति ।
स होवाच स्यो वै भगवस्तानमारयदिति ।
तं होवाचां रहस्यो । यत्रा दुष्प्रतिज्ञाना भ्रूणहत्या ।
अथ कथं प्रत्यज्ञास्था इति ।
स होवाचानृटं च भ्रूणहत्यां चोदयांसम् ।
तदनृतमेवायासीत् ।
स सत्यमेवाभ्युपागादिति ।
तं होवाच वरं वृणीष्व यः प्रत्यज्ञास्था इति ।
स होवाच ब्राह्मण एव मे प्रजायामाजायतामिति ।
ते हैते तक्षवो राहस्यवा ।
अथो आहुरिन्द्रमेव तद्देवता अभ्यशंसन्निन्द्रं पर्यचक्षत त्वयि सतस्तवो मारिम्लवोऽमीमरदिति ।
सोऽकामयत समैनानीरयेयमिति ।
स एतत्सामापश्यत् ।
तेनैनान्समैरयत् ।
तदेतद्भेषजं प्रायश्चित्तिस्साम ।
भेषजं वै सत्प्रायश्चित्तिमकुरुत ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तदेवैतेन भिषज्यन्ति ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तदु कामसनि ।

एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते ।
तदिन्द्रो ह वै विखानाः ।
स यदिन्द्र एतत्सामापश्यत् । तस्माद्वैखानसमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति १९०

यस्ते मदो वरेण्य
इत्यार्भवस्य पवमानस्य मद्वतीर्गायत्र्यो भवन्ति ।
रसो अवि मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधत्य् । षवैनदेतेन प्याययन्ति ।
तेना पवस्वान्धसे
त्यन्धस्वतीर्भवन्त्यन्नं वा अन्धोऽन्नाद्यस्यैवावरुद्ध्यै ।
जघ्निर्वृत्रममित्रियम्
इति बार्हतं रूपम् ।
यदूर्ध्वं मध्यंदिनात्तदेतस्याह्नो बार्हतम् ।
संमिश्लो अरुषो भुवस्सूपस्थाभिर्न धेनुभिर्
इति ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तद्यत्सूपस्थाभिरित्यह्न एवोपस्थित्यै ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथाग्नेरर्क आग्नेयं सामाग्नेयेऽहन्क्रियते ।
आग्नेयमेतदहर्यद्गायत्रम् ।
अग्निर्हि गायत्री ।
तद्यदत्राग्नेरर्कः क्रियतेऽहरेव तद्रूपेण समृद्धयन्ति ।
तेनैभ्यस्समृद्धेन स्वायां जनतायामर्धुकं भवति ।
अथो अन्नं वा अर्कोऽन्नाद्यस्यैवावरुद्ध्यै ।

अथ सोमसाम ।
प्रजननं वै सोमः ।
प्रजननमेतदहः ।
प्रजनन एवैतत्प्रजननं क्रियते ।
अथो क्षत्रं वै सोमः ।
क्षत्रिय उ वा अन्नाद्यस्य प्रदाता ।
स योऽन्नाद्यस्य प्रदाता स नोऽन्नाद्यं प्रयच्छादिति ।
तदध्यर्धेळं भवति पशवो वा इळा ।
पशवश्छन्दोमा -- अभिपूर्वाणामेव पशूनामवरुद्ध्यै १९१

अथ दक्षोणिधनम् ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तद्दक्षोणिधनेनैव संदक्षयन्ति ।
प्रजापतिः प्रजा असृजत ।
ता अप्राणा असृजत ।
सोऽकामयत प्राणवतीर्म इमाः प्रजा स्युरिति ।
स एतत्सामापश्यत् ।
तेनैना दक्षाया इत्येवाभ्यमृशत् ।
प्राणा वै दक्षाः ।
प्राणानेवासु तददधात् ।
प्राणानेवात्मंश्च यजमाने च दधाति य एवं वेद ।
तदु होवाच सुदक्षिणः क्षैमिर्मन्थं हास्य कुले विदुर्न विविदुर्दक्षोणिधनं स्वित्ते पवमानमुखे चक्रुरिति ।
कथा हेति ।
मन्थं हि ते कुले न विन्दन्तीति ।
तस्मादग्नेरेवार्कः प्रथमायां कार्यः ।
एष स्य धारया सुत
इति सन्तनिनः प्रगाथस् । ससन्तनिकेन प्रगाथेनैतदहर्भिषज्यामेति ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तत्ससन्तनिकेनैव प्रागाथेन भिषज्यन्ति ।

अव्या वारेभिः पवते मदिन्तमः ।
क्रीळन्नूर्भिरपामिव
इत्यति वा एतर्हि ककुप्ककुभं क्रामत्य् । अत्यनुष्टुबनुष्टुभम् ।
सैषा ककुप्सती त्रिष्टुप्संपद्यते ।
तेनातिक्रामति ।
साष्टममहरारभते ।
य उस्त्रिया अपिया अन्तरश्मनि निर्गा अकृन्तदोजसा ।
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुजा
इति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः १९२

तासु शार्करमिन्द्रं वै सर्वाणि भूतान्यस्तुवन् ।
तं शर्करस्शिंचुमार स्तोतुं नाकामयत ।
तमब्रवीत्स्तुहि मेति ।
सोऽब्रवीन्नाहं त्वां स्तोष्यामि ।
समुद्रे वा अहमप्स्वन्तश्चराम्युपनिमज्जन् । एतावतोऽहं त्वां स्तुयामिति ।
तं पर्जन्यो वृष्ट्योर्ध्वमुदप्लावयद्धन्वाभि ।
अपो हैवास्मै दर्शयांचकार ।
तमुत्तराद्वातेन पर्यशोषयत् ।
सोऽवेत्परिशुष्कश्शयानो यद्वा अहमिदमित्थं न्यगाम् । इन्द्रो वाव मेदमित्थमकृद् । धन्त तमेव स्तवानि ।
स एव मा स्तुतस्समुद्रं पुनरभ्यवप्लावयिष्यतीति ।
स एतं मन्त्रमपश्यत् ।
तेनैनमस्तौद्
यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे ।
सखाय इन्द्रमूतये
इति ।
तमब्रवीत्किंकामो मा स्तौषीति ।
इममेव मा समुद्रं पुनरभ्यवप्लावेत्यब्रवीत् ।
तं पर्जन्यो वृष्ट्या समुद्रं पुनरभ्यवाप्लावयत् ।

तदेतद्भेषजं प्रायश्चित्तिस्साम ।
भेषजं वै स तत्प्रायश्चित्तिमकुरुत ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तदु कामसनि ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते १९३

स तेनैव मन्त्रेण स्वर्गं लोकमुदक्रामत् ।
स एवैष शर्कर उदेति ।
तद्वा अस्य स्वर्ग्यम् ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
समुद्रो वै छन्दोमाः ।
शिंशुमारो वै समुद्रमतिपारयितुमर्हति ।
तद्यदत्र शार्करं भवति समुद्रस्यैवातिपारणाय ।
तत्पुनर्नितुन्नं छन्दो भवति ।
यत्र यत्र वै देवाश्छन्दसां रसमन्वविन्दंस्तत्पुनर्नितुन्नमकुर्वंस् ।
तत्पुनरभ्याघ्नन् ।
धीता इवैते यच्छन्दोमास्तृतीयसवनायतनाः ।
धीतमिव वै तृतीयसवनम् ।
तद्यत्पुनर्नितुन्नं छन्दो भवति रसमेवैतच्छन्दोमेषु दधति ।
रसस्यैवैषानुवित्तिः ।
तदु काकुभं स्वारं भवति ।
प्राणो वै स्वरः पुरुषश्छन्दसं ककुप् ।
ज्यैष्ठ्यं वै प्राणो ज्यैष्ठ्यं पुरुषः ।
ज्यैष्ठ्यैनैव तज्ज्यैष्ठ्यं संदधाति । ज्यैष्ठ्येन प्रतितिष्ठति ।
यदु शर्करस्शिंशुमारोऽपश्यत्तस्माच्छार्करमित्याख्यायते ।
सखाय आ नि षीदत पुनानाय प्र गायते
ति प्रवतीर्भवन्ति ।
प्रायणीयरूपमेवैतदुपगच्छन्ति ।

प्रायणीयं ह्येतदहः ।
शिशुं न यज्ञैः परि भूषत श्रिय
इति पशुरूपमेवैतदुपगच्छन्ति ।
पशूनां वै शिशुर्भवति १९४

तासु प्लवम् ।
यो वै समुद्रमप्लवः प्रस्नाति नैनं स व्यश्नुतेऽथ यः प्लवी प्रस्नाति स व्यश्नुते ।
समुद्रो वै छन्दोमाः ।
तद्यत्प्लवं प्लविन एवैतेन ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनान्प्लवमेव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा प्लवं वाव नो भूत्वेदं साम स्वर्गं लोकमवाक्षीदिति ।
तदेव प्लवस्य प्लवत्वम् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
तद्वेवाचक्षते वसिष्ठस्य प्लवमिति ।
वसिष्ठो वा अकामयत स्वस्तीमाँल्लोकान्सर्वान्संप्लवेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स स्वस्तीमाँल्लोकान्सर्वान्समप्लवत ।
तद्वेव प्लवस्य प्लवत्वम् ।
स्वस्तीमाँल्लोकान्सर्वान्संप्लवते य एवं वेद ।
वसिष्ठमृषयोऽमेधन्वैश्योऽस्यब्राह्मण इति ।
सोऽकामयत तरेयं दुरितं पाप्मानमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।

तेन ए ग्राति विश्वानि दुरिता तरेमे त्येव दुरितं पाप्मानमतरत् ।
तरति दुरितं पाप्मानं य एवं वेद ।
तद्द्वादशाक्षरणिधनं भवति द्वादशाक्षरा वै जगती ।
पशवो जगती ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
यदु वसिष्ठोऽपश्यत्तस्माद्वसिष्ठस्य प्लवमित्याख्यायते ।
अथैता भवन्ति
पुरोजिती वो अन्धस
इति ।
पुरस्ताद्ध वा एताः पाप्मानं जयन्तीः । पुरस्तात्पाप्मानमपघ्नत्यो । यन्ति
।
जितं ह वा एताभिर् । विजितमन्ववस्यन्ति ।
अथो यथान्यौ नवतरौ चक्रावुपास्येदेवमेव एतामनुष्टुभं त्र्यहमुखेषु
पर्याहरन्ति । स्वर्गस्य लोकस्य समष्ट्यै ।
तासु गौरिवीतमुक्तब्राह्मणम् १९५

अथ कार्तवेशम् ।
त्रेधा भरतेषु राष्ट्रमासीद्वैतहव्येषु तृतीयं । मित्रवत्सु तृतीयं । कृतवेशे
तृतीयम् ।
सोऽकामयत कृतवेशो ह त्विमे द्वे राष्ट्रे एकधा राष्ट्रं स्यादिति ।
स एतद्द्विनिधनं सामापश्यत् ।
तेनास्तुत ।
तेनेमे द्वे राष्ट्रे ह त्वैकधा राष्ट्रमभवत् ।
तदेतच्छ्रीर्भ्रातृव्यहा साम ।
अश्नुते श्रियं हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद ।
यदु कृतवेशोऽपश्यत्तस्मात्कार्तवेशमित्याख्यायते ।
अथ श्यावाश्वं स्वर्ग्यं साम । स्वर्गस्य लोकस्य समष्ट्यै ।
अथान्धीगवमिळावत्यनुष्टुबसदिति -- अनिळानुष्टुप्स्याद्यदेतदत्र कुर्युः ।
अथो पशवो वा इळा ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।

अथैता द्विपदो भवन्त्युक्तब्राह्मणाः ।
ता एता भवन्ति
प्र वाज्यक्षार्
इति प्रवतीर्भवन्ति ।
प्रायणीयरूपमेवैतदुपगच्छन्ति ।
प्रायणीयं ह्येतदहः ।
तासु सौहविषम् ।
देवा वा असुरान्हत्वा अपूता इवामेध्या अमन्यन्त ।
तेऽकामयन्त पूता मेध्या स्यामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते पूता मेध्या अभवन् ।
तेऽब्रुवन्सुहविषो वा अभूमेति ।
तदेव सौहविषस्य सौहविषत्वम् ।
पूतो मेध्यो भवति य एवं वेद ।
ये सोमासः परावती
ति परावतमिव ह्येतर्हि यज्ञोऽगच्छत् १९६

तासु जराबोधीयम् ।
शाक्त्यास्तरसपुरोडाशास्सत्रमासत ।
स गौरिवीतिश्शाक्त्यो मृगमहन् ।
तं तार्क्ष्यस्सुपर्ण उपरिष्टादभ्यवापतत् ।
तस्मा उपप्रत्यधत्त ।
तमब्रवीदृषे । मा मेऽस्थः ।
यत्कामोऽसि तं ते कामं समर्धयिष्याम इति ।
किंकामः खल्वहमस्मीत्यब्रवीत् ।
असितस्य धाम्नय्स्य दुहितरं कामयसे ।
तस्यै त्वा निवक्ष्यामीति ।
अथ हासितो धाम्नय ईर्ष्युरास ।
तस्य हान्तरिक्षे प्रासाद आस ।

तद्धास्य दुहितरं जुगुपुः ।
तं ह स्म पत्रनाड्यामुपगुह्यास्यै कुमार्यै निवहति । तं ह स्मैतेनैव साम्ना प्रातर्बोधयति जार बुध्यस्वेति ।
तदेव जराबोधीयस्य जराबोधीयत्वम् ।
सेयं कुमारी गर्भमधत्त ।
स कुमारोऽजायत ।
तमसुरा विच्छिद्य परास्यन्तोऽब्रुवञ्जामीगर्भो वा अयं । रक्षो वा इदमजनीति ।
तमकामयत समेनमीरयेयमिति ।
स एतत्सामापश्यत् ।
तेनैवं समैरयत् ।
स एव संकृतिर्गौरिवीतोऽभवत् ।
तदेतद्भेषजं प्रायश्चित्तिस्साम ।
भेषजं वै स तत्प्रायश्चित्तिमकुरुत ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तदेवैतेन भिषज्यन्ति ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तदु कामसनि ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते । समस्मै स काम ऋध्यते ।
तस्यो प्राचीमिळामुपयन्ति ।
पशवो वा इळा ।
पशवश्छन्दोमाः ।
पशुष्वेवैतद्रेतांसि दधति १९७

अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
आ ते वत्सो मनो यमद्
इत्यावतीर्भवन्ति ।
अपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि ।

तद्यदावतीर्भवन्ति यज्ञस्यैव सलोमतायै ।
तासु वात्सम् ।
वत्सः काण्वः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स ह वाव त्रिशोको यानेवामूंस्त्रीञ्छोकानपाहन्सास्य त्रिशोकता ।
स ह स सद्य एवालोम्नो कर्णकान्पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु वत्सः काण्वोऽपश्यत्तस्माद्वात्समित्याख्यायते ।
त्वं न इन्द्रा भरे
ति त्वमिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
ओजो नृम्णं शतक्रतो विचर्षणे ।
आ वीरं पृतनासहमिति यद्वै शतवत्सहस्रवत्तच्छन्दोमानां रूपम् ।
पशवो वै छन्दोमाः १९८

तासु सौश्रवसम् ।
कुत्सो ह वा औरव इन्द्रस्योरोरधि निर्मित आस ।
यादृश एवेन्द्रस्तादृश । यथात्मनो निर्मित स्यादेवम् ।
तं ह संग्रहीतारं चक्रे ।
तं ह जाययाभिजग्राह शच्या पौलोम्या ।
तां होवाव कथेत्यमकरिति ।
सा होवाच न वां व्यज्ञासमिति ।
स होवाच खलतिं वा एनं करिष्यामि । तथा विजानीतादिति ।
तं ह खलतिं चकार ।
स होष्णीषं परिहृत्योपनिपेदे ।
स एवैष संग्रहीतुरुष्णीषः ।
तं हाभ्येव जग्राह ।
तां होवाच कथेत्थमकरिति ।

सा होवाच न वां व्यज्ञासम् । उष्णीषेण वै मा परिहृत्योपन्यपादीति ।
स होवाचान्तरांसयोर्वा अस्य पांसूनधिवप्स्यामि । तथा विजानीतादिति
।
तस्य हान्तरांसयोः पांसूनध्युवाप ।
त एवैते संग्रहीतुरन्तरांसयोः पांसवः ।
तान्ह प्रावृत्योपनिपेदे ।
तं हाभ्येव जग्राह ।
तां होवाच कथेत्थमकरिति ।
सा होवाच न वां व्यज्ञासम् ।
प्रावृत्य वै मोपन्यपादीति १९९

तं ह बबाधे मल्लोऽसीति ।
स होवाच मघवन्मामुया भूम ।
तेभ्यो वै नस्त्वं तद्देहि । येन वयं जीवाम ।
त्वद्वै वयं जाता स्म इति ।
स वा एतानन्तरांसयोः पांसून्प्रध्वंसयस्वेति ।
तान्ह प्रध्वंसयांचक्रे ।
ते हैव रजसश्च रजीयांसश्च नाम महाञ्जनपद उत्तस्थौ ।
तेषां ह राजास ।
तस्य होपगुस्सौश्रवसः पुरोहित आस ।
स होवाच मा कश्चन यष्ट ।
यो म ईशायां यजते । ज्येयस्सः ।
न वै देवा अहुतस्यादन्ति ।
न पर्णाहुतिश्च न होतव्येति ।
स हेन्द्र उपगुं सौश्रवसमेत्योवाच याजयानि त्वेति ।
स होवाच न वा इह यजन्ते ।
यो वा इह यजेत । जिनीयुर्वै तमिति ।
तं ह लोकं लोकं दर्शयांचकारेममिमं वै लोकमिष्ट्वा जयतीति ।
स हेक्षांचक्रेऽपि त्यं जिनन्तु ।
हन्त यजा इति ।

तं होवाच याजय मेति ।
तं ह याजयांचकार ।
स्वयमेव सदोहविर्धाने उत्तस्थतुः ।
उलूखले सोममभिषुषाव ।
स होवाचारादेव कुत्सादिहागहीति ।
स ह कुत्समेवोपेयाय ।
तं होवाच कमयज इति ।
उपगुमिति ।
एतमुपगुं जिनीतेति २००

तं ह जिग्युः ।
तं ह द्वितीयं तं ह तृतीयमेत्योवाच याजयानि त्वेति ।
स होवाच न वा इह यजन्ते ।
यो वा इह यजेत । जिनीयुर्वै तम् ।
द्विर्वै स्योऽयजत ।
तं त्यमजिनन्नेवेति ।
तमु ह लोकं लोकमेव दर्शयांचकारेमममिमु वाव लोकमिष्ट्वा जयतीति ।
स हेक्षांचक्रेऽपि त्यं जिनन्तु । हन्त यजा एवेति ।
तं होवाच याजय मेति ।
तं ह याजयांचकार ।
स्वयमेव सदोहविर्धाने उत्तस्थतुर् । उलूखले सोममभिषुषाव ।
स होवाच कमयज इति ।
उपगुमिति ।
तमु ह स्वयमेवोपोत्थाय संवृश्च्योदके प्रचकार २०१

तदु ह सुश्रवा स्थौरायणः पितानुबुबुधे कुत्सो ह वै म औरवः पुत्रं
संवृश्च्योदके प्राकारीदिति ।
तमाद्रुत्याब्रवीत्क्व मे पुत्रमकरिति ।
एष उदके प्रकीर्णश्शेत इति ।
तं हान्वभ्यवेयाय ।

तस्य हेन्द्रो रोहितो भूत्वा मुखात्सोमं निष्पपौ ।
स हेक्षांचक्रेऽयं वावेन्द्रः ।
इदमेव स्तवानि ।
अयमेव म इमं समैरयिष्यतीति ।
स एतत्सामापश्यत् ।
तेनैनमस्तौद्
अपादु शिप्रियन्धसस्सुदक्षस्य प्रहोषिणः ।
इन्दोरिन्द्रो यवाशिरः
इति ।
तमब्रवीत्किंकामो मा स्तौषीति ।
इममेव मे पुत्रं समैरयेत्यब्रवीत् ।
तमे मथाया इत्युदमथ्नात् ।
तं समैरयत् ।
तदेतद्भेषजं प्रायश्चित्तिस्साम ।
भेषजं वै स तत्प्रायश्चित्तिमकुरुत ।
विभ्रष्टमिवैतदहर्यत्सप्तमम् ।
तदेवैतेन भिषज्यन्ति ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
तदु कामसनि ।
एतं वै स काममकामयत ।
सोऽस्मै कामस्समार्ध्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते ।
यदु सुश्रवा स्थौतायणोऽपश्यत्तस्मात्सौश्रवसमित्याख्यायते २०२

ऋषयो वै सत्रादुत्थायायन्त आयुञ्जानाः ।
ते होचुरेत किं चिदेव यक्षं पश्यामेति ।
ते होचुरकूपारो वा अयं कश्यपस्समुद्रेऽन्तर्महद्यक्षम् ।
एत तं पश्यामेति ।
तं हान्वभ्यवेयुः ।
तेभ्यो ह नाविरास ।

ते होचुरेतेन्द्रमेव स्तवाम स वावास्येशे ।
स एव न इमं दर्शयिष्यतीति ।
तेऽत्रिमब्रुवन्नृषे । त्वं स्तुतादिति ।
स एतमत्रिस्तृचमपश्यत् ।
तेनैनमुपायन्
यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर
इति ।
स हेक्षांचक्रे महद्वत म ऋषयो याचन्ति ।
उभयाहस्त्या भरे
ति वा आहुरिति ।
यत्ते दिक्षु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।
तेन दृढा चिदद्रिव आ वाजं दर्षि सातये
इति ।
स हेक्षांचक्रे दृढं बत म ऋषयो याचन्ति ।
न हाजज्ञावकूपारं दिदृक्षन्त इति ।
यन्मिन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।
विद्याम तस्य ते वयमकूपारस्य दावने
इति ।
स हाजज्ञावकूपारं वै दिदृक्षन्त इति ।
तं ह पदोदस्यन्नुवाचेदमेव मेदमृषयो महदिवोभयाहस्त्या भरे
त्यवोचन्निति ।
तमपश्यन् ।
ता एताः कामसनय ऋचः ।
एतं वै ते काममकामयन्त ।
स एभ्यः कामस्समार्ध्यत ।
यत्काम एवैताभिर्ऋग्भि स्तुते । समस्मै स काम ऋध्यते २०३

तासु वसिष्ठस्य वीङ्कमतिक्रान्तिः ।
अति वा एतर्ह्यनुष्टुबनुष्टुभं क्रामति ।

सैषानुष्टुप्सती त्रयस्त्रिंशदक्षरा संपद्यते ।
तेनातिक्रामति ।
वसिष्ठो वै जीतो हतपुत्रोऽकामयत वीमाँल्लोकानश्नुवीय । वि प्रजया पशुभिरश्नुवीयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेन वीवीत्येवेमाँल्लोकानाश्नुत । वि प्रजया पशुभिराश्नुते ।
तदेतत्स्वर्ग्यं प्रजननं साम ।
वीमाँल्लोकानश्नुते । वि प्रजया पशुभिरश्नुते । य एवं वेद ।
तदु स्तोभानुतुन्नं भवति ।
अनुतुन्नाद्वै प्रजाः पशवः प्रजायन्ते ।
पशवश्छन्दोमाः ।
तेन वै रूपसमृद्धम् ।
यदु वसिष्ठोऽपश्यत्तस्माद्वसिष्ठस्य वींकमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति २०४

शिशुं जज्ञानं हर्यतं मृजन्ती
ति हरिवतीर्भवन्ति ।
हरिवती वै परमा वाचस्तनूः ।
वाचं छन्दोमैस्समिच्छन्ति ।
आप्तेव वा एतर्हि वाग्भवति छन्दोमेषु ।
तामेवैतत्संविन्दन्ति ।
शुम्भन्ति विप्रं मरुतो गणेने
ति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै त्रिष्टुभो रूपम् ।
त्रैष्टुभमेतदहः ।
अथो क्षत्रं वै त्रिष्टुब्विशो मरुतः ।
तद्यत्त्रिष्टुभो मरुत्वतीर्भवन्ति । क्षत्रायैव तद्विशमनुवर्त्मानं कुर्वन्ति ।

तस्मात्क्षत्रस्य विडनुवर्त्मा
कविर्गीर्भिः काव्येन कविस्सन्सोमः पवित्रमत्येति रेभन्न्
इत्यतिहायन् ।
ऋषिमना य ऋषिकृत्स्वर्षास्सहस्रनीथः पदवीः कवीनाम्
इति सहस्ररूपं छन्दोमानामुपगच्छन्ति ।
पशवो वै छन्दोमाः ।
तृतीयं धाम महिषस्सिषासन्न्
इति तृतीयो ह्येष त्रियहः क्रियते यच्छन्दोमाः ।
सोमो विराजमनु राजति ष्टुब्
इति त्रैष्टुभं रूपमुपगच्छन्ति ।
तरिष्टुभं ह्येतदहः ।
अथो पूर्वो वैष सहो राज्यम् ।
तमेवैतच्छन्दोमा अनु राजन्ति ।
चमूषच्छ्येनश्शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रद्
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।
अपामूर्मिं सचमानस्समुद्रम्
इति समुद्रवतीर्भवन्ति । छन्दोमानां रूपम् ।
समुद्रो वै छन्दोमाः ।
तुरीयं धाम महिषो विवक्ती
ति तुरीयं ह्येतदहरह्नां क्रियते यच्छन्दोमाः २०५

ता एता भवन्ति त्रिष्टुभस्त्रिष्टुब्वर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समर्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद ।
एते सोमा अभि प्रियम्
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
इन्द्रस्य काममक्षरन्न्
इति यदैन्द्रं तत्त्रिष्टुभो रूपम् ।

क्षत्रं हि त्रिष्टुप् ।
वर्धन्तो अस्य वीर्यम्
इति वृद्धं ह्येतदहर्यच्चतुश्चत्वारिंशं सूक्तमनुरूपो भवति पशवो वै सूक्तं
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
अथो भूमा वै पशवो । भूमा सूक्तम् ।
पशूनामेवैतत्पअृऊननुरूपान्कुर्वन्ति ।
नात्र प्रत्यक्षानुरूपं कुर्वन्ति ।
तस्मात्पशवो नानारूपाञ्जनयन्त्युत श्वेता कृष्णं जनयत्य् । उत कृष्णा श्वेतम्
। उत रोहिणी कल्माषम् । उत कल्माषी रोहितम् ।
नवर्चं भवति ।
नव वै पुरुषे प्राणाः ।
प्राणैरेवैतत्समृध्यमाना यन्ति । प्राणेषु प्रतितिष्ठन्तः ।
द्वितीयं नवर्चं भवति । तृतीयं नवर्चं भवति ।
अभिपूर्वमेवैतत्प्राणैस्समृध्यमाना यन्ति ।
पञ्चर्चं भवति पञ्चपदा वै पंक्तिः ।
पांक्ताः पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
तदाहु ऋतुमान्पृष्ठ्यष्षडहोऽनृतवश्छन्दोमाः ।
अनृताविव एते प्रतिष्ठिता यच्छन्दोमा इति ।
तद्यदेतानि पञ्चर्च ष्षड्चानि भवन्ति तेनैवर्तुमन्तश्छन्दोमाः क्रियन्ते ।
पर्यासो भवति प्रजानां धृत्यै पशूनामुपस्थित्यै ।
चतुश्चत्वारिंश स्तोमो भवति ।
चतुश्चत्वारिंशदक्षरा वै त्रिष्टुप् ।
इन्द्रियं वीर्यं त्रिष्टुप् ।
इन्द्रिय एवैतद्वीर्ये प्रतितिष्ठन्तो यन्ति २०६

अग्निं वो देवमग्निभिस्सजोषा
इत्याग्नेयमाज्यं भवति राथन्तरम् ।
राथन्तरं ह्येतदहः ।
यजिष्ठं दूतमध्वरे कृणुध्वम् ।

यो मर्त्येषु निध्रुविर्ऋतावा तपुमूर्वा घृतान्नः पावकः
इति ।
एतद्वा अग्नेः प्रियं धाम यद्घृतम् ।
प्रियेणैवैनं तं धाम्ना समृद्धयन्ति ।
प्रोथदश्वो न यवसेऽविष्यन्न्
इत्यश्ववद्भवति भ्रातृव्यस्यैवावनुत्त्यै ।
यदा महस्संवरणाद्व्यस्थाद्
इति महद्ध्येतदहर्यच्चतुश्चत्वारिंचम् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ती
ति ।
यदा वा अग्निं वात उपवाजयत्यथ स महद्दीप्यते ।
तदेतद्दीप्तिरेव ब्रह्मवर्चसस्य रूपम् ।
उद्यस्य ते नवजातस्य वृष्ण
इति त्रैष्टुभं रूपमुपगच्छन्ति ।
त्रैष्टुभ ह्येतदहः ।
अग्ने चरन्त्यजरा इधानाः ।
अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान्
इति स्वर्गस्य लोकस्य समष्ट्यै २०७

यदद्य सूर उदित
इति मैत्रावरुणं भवति ।
यदिति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
अनागा मित्रो अर्यमा ।
सुवाति सविता भगः
सुप्रावीरस्तु स क्षयः प्र नु यामन्सुदानवः ।
यो नो अंहोऽतिपिप्रति
इत्यतिहायन् ।
उत स्वराजो अदितिरदब्धस्य ब्रतस्य ये ।
महो राजान ईशते

इति महद्ध्येतदहर्यच्चतुश्चत्वारिंशम् ।
तमिन्द्रं वाजयामसी
त्यैन्द्रं भवति ।
महे वृत्राय हन्तव
इति घ्नद्वत् ।
एतद्वै यजमानस्य स्वं स्तोत्रं यद्ब्रह्मणः ।
स्व एव तदायतने यजमानस्य सर्वं पाप्मानं घ्नन्ति ।
स वृषा वृषभो भुवद्
इति वृषण्वद्भवति ।
वृषण्वद्वै त्रिष्टुभो रूपम् ।
त्रैष्टुभमेतदहः ।
इन्द्रस्स दामने कृत ओजिष्टस्स बले हित
इति ।
एतेन वै तृतीयेन त्र्यहेण देवा ऊर्ध्वा स्वर्गं लोकमायन् ।
स एषामसंगृहीतो वीवाह्वलत् ।
तस्मिन्निन्द्रस्स दामने कृत ओजिष्ठस्स बले हित इत्येव बलमदधुः ।
गिरा वज्रो न संभृत
इत्येवैनं समभरन् ।
सबलो अनपच्युत
इत्येवैनं सबलमकुर्वन् ।
तं संस्कृत्य तेन स्वर्गं लोकमायन् ।
तद्यदेतदाज्यं भवति स्वर्गस्यैव लोकस्य समष्ट्यै ।
यत्प्रथमस्याह्न षन्द्राग्नं तदैन्द्राग्नं राथन्तरम् ।
राथन्तरं ह्येतदहः ।
समैन्याज्यानि भवन्ति ।
नानाग्रामाविव ह वा एतौ यत्पृष्ठ्यस्य षडहश्छन्दोमाश्च ।
स यथा नानाग्रामो मित्राणि व्यतिषज्याभय आसीयातां
तादृक्तद्यत्समैन्याज्यानि भवन्ति ।
असमैनि हैक कुर्वन्ति ।
तस्मात्समैन्येव कार्याणि ।

चतुश्चत्वारिंश स्तोमो भवति ।
चतुश्चत्वारिंशदक्षरा वै त्रिष्टुप् ।
इन्द्रियं वीर्यं त्रिष्टुप् ।
इन्द्रिय एवैतद्वीर्ये प्रतितिष्ठन्तो यन्ति २०८

अध्वर्यो अद्रिभिस्सुतम्
इति त्रिष्टुभो रूपेण प्रयन्ति ।
त्रैष्टुभमेतदहः ।
सोम पवित्र आ नय ।
पुनाहीन्द्राय पातवे
तव त्य इन्दो अन्धसा
इत्यन्धस्वतीर्भवन्त्यन्नं वा अन्धोऽन्नाद्यस्यैवावरुद्ध्यै ।
देवा मधोर्व्याशत ।
पवमानस्य मरुतः
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
दिवः पीयूषमुत्तमम्
इत्युत्तमो ह्येष त्र्यहः क्रियते यच्छन्दोमाः ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथाञ्जः पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
देवा वा अकामयन्ताञ्जसा स्वर्गं लोकमारोहेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तेऽञ्जसा स्वर्गं लोकमारोहन् ।
तदेवाञ्जसोऽञ्जस्त्वम् ।
तदेतत्स्वर्ग्यं साम ।
अञ्जसैवैतेन स्वर्गं लोकमारोहति य एवं वेद ।
तद्वेवाचक्षते वैरूपमिति ।

पशवो वै विरूपाः ।
पशवो वैरूपम् ।
पशुष्वेवैतत्पशूननुसंदधाति ।
विरूप अांगिरसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु विरूप आङ्गिरसोऽपश्यत्तस्माद्वैरूपमित्याख्यायते २०९

अथ धुरां साम द्रवदिळं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
छन्दांसि वै धुरः ।
यातयामान इवैते यच्छन्दोमाः ।
तद्यदत्र धुरां साम क्रियते तेनैव छन्दोमा धूर्वन्तश्छन्दस्वन्तोऽयातयामानः क्रियन्ते ।
अथो प्राणा वै धुरः ।
पशवो धुरः ।
प्राणेष्वेव तत्पशुषु प्रतितिष्ठति ।
अथेळतं त्रिणिधनं सवनानां क्ळृप्त्यै ।
एतद्ध वै समृद्धं यद्गायत्रं त्रिणिधनम् ।
इळन्काव्य स्वर्गकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स इममेव लोकं प्रथमेन निधनेनाभ्यारोहद् । अन्तरिक्षं द्वितीयेन । अमुं तृतीयेन ।
तानिमांस्त्रीँल्लोकानभ्यारोहत् ।
ततो वै स स्वर्गे लोके प्रत्यतिष्ठत् ।
तदेतत्स्वर्ग्यं प्रतिष्ठा साम ।

गच्छति स्वर्गं लोकं । प्रति स्वर्गे लोके तिष्ठति य एवं वेद ।
यद्विळन्काव्योऽपश्यत्तस्मादैळतमित्याख्यायते ।
अथ सौमित्रं । भ्रातृव्यहा सेन्द्रं साम ।
हन्ति द्विषन्तं भ्रातृव्यमास्येन्द्रो हवं गच्छति य एवं वेद ।
अथ सौपर्णमुक्तब्राह्मणम् ।
तच्चतुरक्षरणिधनं भवति चतुष्पदा वै पशवः । पशवश्छन्दोमाः
पशूनामेवावरुद्ध्यै २१०

अथाशु ।
देवा वा अकामयन्ताशु स्वर्गं लोकमियामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै त आशु स्वर्गं लोकमायन् ।
तदेवाशीराशुत्वम् ।
तदेतद्स्वर्ग्यं साम ।
आश्वेवैतेन स्वर्गं लोकमेति य एवं वेद ।
तद्वेवाचक्षत आशु भार्गवमिति ।
देवासुरा अस्पर्धन्त ।
ते देवा भृगुमुपाधावञ्जयामासुरानिति ।
स एतद्भृगुस्सामापश्यत् ।
तेनास्तुत ।
ततो वै देवा असुरानजयन् ।
तेऽब्रुवन्नाशु वावेदं भृगोरभूदिति ।
तद्वेवाशोराशुत्वम् ।
तदु भ्रातृव्यहा कामसनि ।
हन्ति द्विषन्तं भ्रातृव्यम् ।
यत्काम एतेन स्तुत । समस्मै स काम ऋध्यते २११

अथ मार्गीयवं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।

मृगयुर्वै देवोऽकामयतोभयेषां पशूनामैश्वर्यमाधिपत्यं गच्छेयं ये च ग्राम्या ये चारण्या इति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स उभयेषां पशूनामैश्वर्यमाधिपत्यमगच्छद्ये च ग्राम्या ये चारण्याः ।
ततो ह स्म वै तस्मै मृगो मृगमानयति ।
तदेतत्पशव्यं साम ।
उभयेषां पशूनामैश्वर्यमाधिपत्यं गच्छति ये च ग्राम्या ये चारण्या य एवं वेद ।
एष ह वाव स देवो मृगयुः ।
न हास्यैष पशूनभिमन्यते य एवं वेद ।
यदु मृगयुर्देवोऽपश्यत्तस्मान्मार्गीयवमित्याख्यायते २१२

अभि सोमास आयव
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः
इति समुद्रवतीर्भवन्ति । छन्दोमानां रूपम् ।
समुद्रो वै छन्दोमाः ।
तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् ।
अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत्
नृभिर्येमाणो हरियतो विचक्षणो राजा देवस्समुद्रियः
इति चतुर्ऋचं भवति चतुष्पदा वै पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
तासु द्विहिंकारं वामदेव्यम् ।
पशवो वै सिमाः ।
पशवो रेवतयः ।
पशवो द्विहिंकारं वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।

प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा असंजानाना अपाक्रामन् ।
सोऽकामयताभि मा पशवस्संजानीरन् ।
न मदपक्रामेयुरिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै तं पशवोऽभिसमजानत ।
ततोऽस्मादनपक्रामिणोऽभवन् ।
तद्द्विहिंकारं भवति ।
हुमिति वै पशवस्संजानते । हुमिति माता पुत्रमभ्येति । हुमिति पुत्रो मातरम् ।
तदेतत्संज्ञानं पशूनां साम ।
अभ्येनं पशवस्संजानते । नास्मात्पशवोऽपक्रामन्ति य एवं वेद ।
तदैळं भवति पशवो वा इळा । पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै २१३

अथगायत्रपार्श्वम् ।
इमे वै लोका गायत्रपार्श्वम् ।
एष्वेव तल्लोकेषु प्रतितिष्ठन्ति ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनान्गायत्रमेव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा गायत्रं वाव नोऽस्य साम्नः पक्षावभूतामिति ।
तदेव गायत्रपक्षस्य गायत्रपक्षत्वम् ।
गायत्रपक्षं ह वै नामैतत् ।
तद्गायत्रपार्श्वमित्याख्यायते ।
तद्धिंकारवद्भवत्यन्नाद्यस्य प्रत्त्यै ।
हिंकारवद्धिर्वै प्रजापतिः प्रजाभ्योऽन्नाद्यं प्रायच्छत् ।
प्रास्मा अन्नाद्यं दीयते य एवं वेद २१४

अथ पौरुहन्मनमभ्यारम्भो यज्ञस्य प्रत्यपसारः ।
अभ्येव नवममहरारभते प्रति सप्तममपधावति ।
अभ्यारम्भैर्वै देवा असुरान्यज्ञादन्तरायन् ।
पुरुहन्मा वैखानसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतामिळामुपैत् ।
पशवो वा इळा ।
ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु पुरुहन्मा वैखानसोऽपश्यत्तस्मात्पौरुहन्मनमित्याख्यायते ।
देवासुरा अस्पर्धन्त ।
ते देवा अकामयन्त पूर्व एवासुरान्हन्यामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनासुरान्पूर्वेऽघ्नन् ।
तद् यत्पूर्वेऽघ्नंस्तद्वेव पौरुहन्मनस्य पौरुहन्मनत्वम् ।
पूर्व एव द्विषन्तं भ्रातृव्यं हन्ति य एवं वेद २१५

अथ द्वैगतं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
देवा वै सर्वं यज्ञं संगृह्योर्ध्वा स्वर्गं लोकमुदक्रामन् ।
ते मनुष्या यज्ञं न प्रजानन् ।
तद्व्यच्छिद्यत ।
ते देवमनुष्या अशनायन्न् । इतःप्रदानाद्धि देवा जीवन्त्य् ।
अमुतःप्रदानान्मनुष्याः ।
तेन ऊर्ध्वा आहुतयोऽगच्छन् । नामुतोऽर्वाची वृष्टिः प्रादीयत ।
ते देवा अयास्यमब्रुवन्मनुष्या वै यज्ञं न प्रजानन्ति ।
तद्व्यच्छेदि ।

तेभ्यः परेहियज्ञं विधेहीति ।
सोऽयास्य एत्यैतेनैव साम्ना मनुष्येभ्यो यज्ञं व्यदधात् ।
सोऽयं मनुष्येषु यज्ञो विहितः ।
स मनुष्येषूषित्वा स्वर्गं लोक पुनर्न प्राजानात् ।
सोऽकामयत प्र स्वर्गं लोकं जानीयामिति ।
स एतेनैव साम्ना स्तुत्वा स्वर्गं लोकं पुनः प्राजानात् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोक य एवं वेद ।
अथो हास्यैतेनेव साम्ना यज्ञो विहितो भवति ।
स यदयास्योऽमुष्माल्लोकादिमं लोकमागच्छद् । अस्माल्लोकादमुं लोकमगच्छत् । स इमौ लोकौ द्विरनुसमचरत् । तद्द्वैगतस्य द्वैगतत्वम् ।
अयास्यो ह वाव द्विगत् २१६

अथ हारायणम् ।
देवासुरा अस्पर्धन्त ।
ते देवा अकामयन्त हरोऽसुराणां हरेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तेनासुराणां हरोऽहरन् ।
तद्यद्धरोऽहरंस्तद्धारायणस्य हारायणत्वम् ।
हरति हरो द्विषतो भ्रातृव्यस्य य एवं वेद ।
हारायण आङ्गिरसः पशुकामस तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
शग्ध्यू षु शवीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि
पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्यः ।
इत्येव गव्यांश्चाश्वयांश्च पशूनवारुन्द्ध ।
तैरु पशुभिरिष्ट्वा स्वर्गमेव लोकमगच्छत् ।

तदेतत्पशव्यं स्वर्ग्यं साम ।
अव पशूनुन्द्धे गच्छति स्वर्गं लोकं य एवं वेद ।
यदु हारायण आङ्गिरसोऽपश्यत्तस्माद्धारायणमित्याख्यायते २१७

अथाछिद्रं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
प्रजापतिर्वा अकामयताछिद्रः प्रजया पशुभिरभवत् ।
तदेवाछिद्रस्थाछिद्रत्वम् ।
अछिद्र एव प्रजया पशुभिर्भवति य एवं वेद ।
देवा वा आप्तां वाचमछिद्रेणैवैभ्यो लोकेभ्यस्समदलुम्पन् ।
आप्तेव वा एतर्हि वाग्भवति छन्दोमेषु ।
तामछिद्रेणैव संलुम्पन्ति ।
यो वै छिद्रण संचिनोति न तदुत्पूर्यते ।
अथ योऽछिद्रेण संचिनोति तदुत्पूर्यते ।
ज्यायोऽभ्यारम्भं भवत्य् । अति नवममहर्जिहीते । दशममहरभ्यारभते ।
प्रति सप्तममपधावति ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
सोऽकामयत न मत्पशवोऽपक्रामेयुर् । अभि मा वर्तेरन्निति ।
स एतत्सामापश्यत् ।
तेनैनान्पर्यास्यत् ।
ताञ्श्रैष्ठ्येनोपागृह्णात् ।
तेऽस्मिन्नरमन्त ।
रमन्तेऽस्मिन्पशवः पशुमान्भवति य एवं वेद २१८

अथ बार्हदुक्थम् ।
बृहदुक्थ आङ्गिरसः पशुकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतामिळामुपैत् ।

पशवो वा इळा ।
ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु बृहदुक्थ आङ्गिरसीऽपश्यत्तस्माद्बार्हदुक्थमित्याख्यायते ।
धर्ता दिवः पवते कृत्वियो रस
इत्यह्नो धृत्यै ।
दक्षो देवानामनुमाद्या नृभिर्
इति छन्दांस्येवैतद्दक्षयन्त्यह्नो वीर्यवत्त्वाय ।
तासूद्वत्त्रिप्ररोहम् ।
तृतीयो ह्येष प्ररोहः क्रियते । यदेष तृतीयस्त्रियह । स्वर्गस्य लोकस्य समष्ट्यै ।
तद्वेवाचक्षते विशालमिति ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
तदेनान्विशालमेव भूत्वा स्वर्गं लोकमवहत् ।
तेऽब्रुवन्स्वर्गं लोकं गत्वा विशालं वाव नो भूत्वेदं साम स्वर्गं लोकमवाक्षीदिति ।
तदेव विशालस्य विशालत्वम् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
तद्यथा ह वै ब्रध्नस्य विष्टपान्येवमेतानि विशालस्य विष्टपानि स्वर्गस्यैव लोकस्य समष्ट्यै ।
प्र स्वर्गं लोकमाप्नोति य एवं वेद ।
अथ रथन्तरम् ।
ब्रह्म वै रथन्तरम् ।
ब्रह्मण्येवैतत्प्रतितिष्ठन्तो यन्ति ।
तत्त्रैष्टुभेऽहन्भवति ।
पुंसो वा एतद्रूपं यत्त्रिष्टुप् । स्त्रियै रथन्तरम् ।

तद्यदत्र रथन्तरं पृष्ठं भवति । तेनैवैतदहर्मिथुनं क्रियते ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येतेन तुष्टुवानाः ।
यदिन्द्र प्रागपागुदग्
इतीन्द्रमेवैतत्सर्वाभ्यो दिग्भ्यो ह्वयन्ति ।
आप्तेष्वहस्सु यद्यस्यां दिश्यसि यद्यस्यां यद्यस्यामिति २१९

तासु वाशं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
ते देवा अकामयन्त वशमसुराणां वृञ्जीमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ते वाश इत्येव वशमसुराणामवृञ्जत ।
तदेव वाशस्य वाशत्वम् ।
वृंक्ते द्विषतो भ्रातृव्यस्य वश य एवं वेद ।
क ईं वेद सुते सचे
ति सतोबृहतीराक्रमन्तेऽनपभ्रंशाय ।
तासु नैपातिथम् ।
काणवायनानां सत्रमासीनानां पशव उपादस्यन् ।
तेऽकामयन्ताव पशून्रुन्धीमहीति ।
स एतन्नेपातिथिः काणवस्सामापश्यत् ।
तेनास्तुत ।
ततो वै ते पशूनवारुन्धत ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु नेपातिथिः काणवोऽपश्यत्तस्मान्नैपातिथमित्याख्यायते ।
उभयं शृणवच्च न
इत्युभे एवैतेन रूपे समारभते यच्च पृष्ठ्यस्य षडहस्य यदु च छन्दोमानाम् ।
तस्मादु हैतस्यां द्वयोस्संयजमानयोर्ब्रह्मसाम कुर्यात् २२०

तासु वैयश्वम् ।
व्यश्वं वै साकमश्वं गर्भे सन्तं गयः पितृव्यः पर्यपश्यदृषिर्जनिष्यत इति ।
तं जातं परास्तावब्रवीज्ञातन्नेणोऽजनीति ।
तं छाया नाजहात् ।
स्वावस्मा अङ्गुष्ठो प्रास्नुताम् ।
तदस्मा आचन्नत यं वै कुमारं परास्तावब्रवीरयं वै स जीवतीति ।
तं मुसलमादायाभ्यैद्धनिष्यन् ।
सोऽकामयतोदित इयां । गातुं नाथं विन्देयेति ।
स एतत्सामापश्यत् ।
तदभ्यगायत ।
तदस्य मुसलं प्रत्यक्पतित्वा शिरोऽछिनत् ।
तदेतद्भ्रातृव्यहा गातुविन्नाथवित्साम ।
हन्ति द्विषन्तं भ्रातृव्यं । विन्दते गातुं नाथं य एवं वेद ।
यदु व्यश्वोऽपश्यत् । तस्माद्वैयश्वमित्याख्ययते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति २२१

पवस्व देव आयुषग्
इति त्रिष्टुभो रूपेण प्रयन्ति ।
त्रैष्टुभमेतदहः ।
इन्द्रं गच्छतु ते मदः ।
वायुमा रोह धर्मणा
इति मद्वतीर्भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधत्य् । एवैनदेतेन प्याययन्ति ।
पवमान नि तोशसे रयिं सोम श्रवाय्यम् ।
इन्दो समुद्रमा विश

इति समुदवतीर्भवन्ति छन्दोमानां रूपम् ।
समुद्रो वै छन्दोमाः ।
अपघ्नन्पवसे मृध
इति मृध एवैतेन पाप्मानमपघ्नते ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ मादिलं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
देवा वा अकामयन्त मद्वान्नस्सोम स्यात्सोममदस्य माद्येमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तेषां मद्वान्सोमोऽभवत्सोममदस्यामाद्यन् ।
तदेव मादिलस्य मादिलत्वम् ।
तद्रसो वै मदः ।
रसेन ह वाव ते तन्मेदुः ।
मद्वानस्य सोमो रसवान्भवति य एवं वेद ।
अथो हैषामवारुद्धा इव छन्दोमा स्युर्यदेतदत्र कुर्युः ।
धीता इवैते यच्छन्दोमास्तृतीयसवनायतनाः ।
धीतमिव वै तृतीयसवनम् ।
तद्यदत्र मादिलं भवति रसमेवैतच्छन्दोमेषु दधत्यैवैनाएतेन प्याययन्ति २२२

अथ सुरूपं रूपस्यैव समृद्ध्यै ।
आङ्गिरसो वै तपस्तेपानास्ते रूपेण वर्चसा व्याध्र्यन्त ।
तेऽकामयन्त सं रूपेण वर्चसध्र्येमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते सं रूपेण वर्चसाध्र्यन्त ।
तेऽब्रुवन्सुरूपा वा अभूमेति ।
तदेव सुरूपस्य सुरूपत्वम् ।
सं रूपेण वर्चसध्र्यते य एवं वेद ।
सुरूप आङ्गिरसः पशुकामस्तपोऽतप्यत ।

स एतत्सामापश्यत् ।
तेनास्तुत ।
स एतामिळामुपैत् ।
पशवो वा इळा ।
ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु सुरूप आङ्गिरसोऽपश्यत्तस्मात्सुरूपमित्याख्यायते ।
प्रजापतिः पशूनसृजत ।
तेषां सृष्टानां रूपाणि न प्राज्ञायन्त ।
स एतानि सुरूपाणि सामान्यपश्यत् ।
तैरेषां रूपाणयदधात् ।
तत्सुरूपाणां सुरूपत्वम् ।
रूपणवतः पशूनवरुन्द्धे य एवं वेद ।
अर्कसामानो वै छन्दोमास्सुरूपरूपाः ।
सामन्वद्धी रूपणवद्भिश्छन्दोमै स्तुते य एवं वेद ।
तत्पुनर्नितुन्नं छन्दो भअति ।
यत्र यत्र वै देवा छन्दसां रसमन्वविन्दंस्तत्पुनर्नितुन्नमकुर्वंस् ।
तत्पुनरभ्याघ्नन् ।
धीता इवैते यच्छन्दोमास्तृतीयसवनायतनाः ।
धीतमिव वै तृतीयसवनम् ।
तद्यत्पुनर्नितुन्नं छन्दो भवति रसमेवैतच्छन्दोभेषु दधति ।
रसस्यैवैषानुवित्तिः २२३

अथ काक्षीवतम् ।
कक्षीवान्वा अकामयत बहुः प्रजया पशुभिः प्रजायेय । श्रियं राज्यं गच्छेयमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स बहुः प्रजया पशुभिः प्रजायत श्रियं राज्यमगच्छत् ।

ते ह वै सहस्रं काक्षीवता स्रासुः ।
तैर्ह वै स पुत्रै श्रियं राज्यं जगाम ।
स्रश्नुते श्रियं गच्छति राज्यं य एवं वेद ।
तदु स्तोभानुतुन्नं भवति ।
स्रनुतुन्नाद्धि प्रजाः पशवः प्रजायन्ते ।
पशवश्छन्दोमाः ।
तेन वै रूपसमृद्धम् ।
यदु कक्षीवानपश्यत्तस्मात्काक्षीवतमित्याख्यायते २२४

स्रथ प्रमंहिष्ठीयम् ।
स्रृषीणां वै सत्रमासीनानां पशव उपादस्यन् ।
तेऽकामयन्ताव पशून्रुन्धीमहीति ।
ते होचुरेताग्निमेव पशून्याचाम ।
स वाव पशूनामीशे ।
स एव नः पशून्प्रदास्यतीति ।
त एतत्सामापश्यन् ।
तेनैनमस्तुवन्
प्र मंहिष्ठाय गायत स्रृताव्ने बृहते शुक्रशोचिषे ।
उपस्तुतासो स्रग्नये
इति ।
तानब्रवीत्किंकामा स्थेति ।
पशुकामा इत्यब्रुवन् ।
तेभ्य एतेनैव साम्ना पशून्प्रायच्छत् ।
तेऽब्रुवन्प्रमंहिष्ठो वै नोऽभूदिति ।
तदेव प्रमंहिष्ठीयस्य प्रमंहिष्ठीयत्वम् ।
तदेतत्पशव्यं साम ।
प्रमंहिष्ठो हास्मा एष भवत्य् । स्रव पशून्रुन्द्धे । बहुपशुर्भवति य एवं वेद
।
तत्पुनर्नितुन्नं छन्दो भवति ।
यत्र यत्र वै देवा छन्दसां रसमन्वविन्दंस्तत्पुनर्नितुन्नमकुर्वंस्तत्पुनरभ्याघ्नन् ।

धीता इवैते य चे छन्दोमास्तृतीयसवनायतनाः ।
धीतमिव वै तृतीयसवनम् ।
तद्यत्पुनर्नितुन्नं छन्दो भवति रसमेवैतच्छन्दोमेषु दधति ।
रसस्यैवैषामनुवित्तिः २२५

अथ स्वाशिरामर्कोऽन्नं वा अर्कोऽन्नाद्यस्यैवावरुद्ध्यै ।
स्वाशिरो वै नामाप्सरस इमा एवौषधयः ।
ता अकामयन्त बह्वी स्याम । प्रजायेमहि । वीमं लोकमाप्नुयामेति ।
ता एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ता बह्वीय आसन् । प्राजायन्त । वीमं लोकमाप्नुवन् ।
सोऽयं सर्वो लोक ओषधीभिस्संछन्नोऽपि गिरयः ।
तदेतत्प्रजननं साम ।
बहुः प्रजया पशुभिः प्रजायते । वीमं लोकमाप्नोति य एवं वेद ।
यदु स्वाशिरोऽप्सरसोऽपश्यंस्तस्मात्स्वाशिरामर्क इत्याख्यायते ।
अभि द्युम्नं बृहद्यश
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
जिन्वन्गविष्टये धिय
इति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः २२६

तास्वैषिरं वायोरार्षेयम् ।
वायुर्वा इषिरः ।
यद्वै सत्रिणां सत्रे विनश्यते तदेभ्यो वायुरपिरोहयति ।
प्राणो वै वायुः ।
प्राण एवैभ्यस्तद्भिषज्यति ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वत ।
प्राणा शिशुर्महीनाम्
इति पशुरूपमेवैतदुपगच्छन्ति ।

पशूनां वै शिशुर्भवति ।
तासु त्रैतमुक्तब्राह्मणम् ।
अभी नो वाजसातमम्
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
रयिमर्ष शतस्पृहम् ।
इन्दो महस्रभर्णसं तुविद्युम्नं विभासहमिति ।
यद्वै शतवत्सहस्रवत्तच्छन्दोमानां रूपम् ।
पशवो वै छन्दोमाः ।
परि स्य स्वानो अक्षरदिन्दुरव्ये मदच्युत
इति मद्वतीर्भवन्ति ।
अभिपूर्वमेवैतत्तृतीयसवने रसं मदं दधति ।
वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ।
नि नेदिष्ठतमा इष स्याम सुम्ने ते अध्रिगो
इति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।
तासु गौरिवीतमुक्तब्राह्मणम् २२७

अथ शुद्धाशुद्धीयम् ।
इन्द्रो वा असुरान्हत्वापूत इवामेध्योऽमन्यत ।
सोऽकामयत शुद्धमेव मासन्तं शुद्धेन साम्ना स्तुयुरिति ।
स ऋषीनब्रवीत्स्तुत मेति ।
त एतदृषयस्सामापश्यन् ।
तेनैनमस्तुवन् ।
एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु
इति ।
ततो वा इन्द्रश्शुद्धः पूतो मेध्योऽभवत् ।
तदेतत्पवित्रं साम ।
शुद्धः पूतो मेध्यो भवति य एवं वेद ।

अथौदलम् ।
उदलो वै दैवरातोऽकामयताग्रो मुख्यो ब्रह्मवर्चसी स्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽग्रयो मुख्यो ब्रह्मवर्चस्यभवत् ।
अग्रिया मुख्या ब्रह्मवर्चसिनोऽसामेति सत्रमासते ।
अग्रिया एव मुख्या ब्रह्मवर्चसिनो भवन्ति ।
तत्स्वारमनुष्टुभि क्रियते । रूपसमृद्धतायै ।
गायत्रयोनि सदनुष्टुभि क्रियते ।
द्वन्द्वं वै भूत्वा पशवो वीर्याण्युद्यच्छन्ति ।
पशवश्छन्दोमाः ।
तस्माच्छन्दोमेषु क्रियते ।
यदुदलो दैवरातोऽपश्यत्तस्मादौदलमित्याख्यायते २२८

अथ पाञ्चवाजम् ।
एतेन वै पञ्चवाजाः कौत्स उभे अन्धसी व्यपपीत यच्च दैव्यं यच्च मानुषम् ।
ते एवैतेन विपिपीते ।
पञ्चवाजा वै कौत्सोऽकामयतोभे अन्धसी विपिपीय यच्च दैव्यं यच्च
मानुषमिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै ते स उभे अन्धसी व्यपिपीत यच्च दैव्यं यच्च मानुषम् ।
ततो ह स्म वै स सुरादृतिमुपाधाय सोमार्थं धारयति ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
उभे अन्धसी विपिपीते यच्च दैव्यं यच्च मानुषं य एवं वेद ।
यदु पञ्चवाजाः कौत्सोऽपश्यत्तस्मात्पाञ्चवाजमित्याख्यायते ।
अथ क्रौञ्चम् ।
क्रुंङाङ्गिरस ईष्यमिवाहरविन्दत् ।
ईष्या इवैते यच्छन्दोमाः ।
तस्माच्छन्दोमेषु क्रियते ।

तन्मध्येस्वारं भवति ।
प्राणो वै स्वरः ।
अभिषज्या इवैते यच्छन्दोमाः ।
द्वे द्वे अहनी समस्ताः ।
तद्यन्मध्ये स्वारं भवति प्राणमेवैतच्छन्दोमेषु दधति भिषज्यन्त्येवैनानेतेन
२२९

अथ रयिष्ठं मध्येनिधनं भवति प्रतिष्ठायै ।
समुद्रं वा एतेनारम्भणं प्रप्लवन्ते य आर्भवं पवमानमुपयन्ति ।
तद्यन्मध्येनिधनं भवति प्रतिष्ठित्या एव ।
प्रजापतिः पशूनसृजत ।
तेऽस्मात्सृष्टा अपाक्रामन् ।
सोऽकामयत न मत्पशवोऽपक्रामयुर् । अभि मा वर्तेरन्निति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै तं पशवोऽभ्यावर्तन्त ।
ततोऽस्मादनपक्रमिणोऽभवन् ।
सोऽब्रवीदस्थाद्वा इयं मयि रयिरिति ।
तदेव रयिष्ठस्य रयिष्ठत्वम् ।
तदेतत्पशव्य साम ।
तिष्ठत्यस्मिन्नयिर् । अभ्येनं पशव आवर्तन्ते । नास्मात्पशवोऽपक्रामन्ति
य एवं वेद ।
तदध्यर्धेळं भवति पशवो वा इळा ।
पशवश्छन्दोमा -- अभिपूर्वाणामेव पशूनामवरुद्ध्यै ।
अथैता द्विपदा भवन्त्युक्तब्राह्मणाः ।
ता एता भवन्ति
पवस्व सोम महान्समुद्र
इति ।
महद्ध्येतदहर्यच्चतुश्चत्वारिंशम् ।
पिता देवानां विश्वाभि धामे

त्यभाति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः २३०

तासु धर्म ।
धर्मणा वै देवा धर्ममादायासुराणां विधर्मणैनान्विधर्मणः कृत्वा पराभावयन् ।
धर्मणैव धर्ममादाय द्विषतो भ्रातृव्यस्य विधर्मणैनं कृत्वा पराभावयति य एवं वेद ।
तच्छ्रीर्वै धर्मो । राज्यं वै धर्मो । धर्मेण वै राजा धर्मो । धर्म स्वानां भवत्य् । षनं स्वा यन्ति । धर्मणो धारयति ।
तदाहुर्नवमेऽहनि कार्यम् ।
अदो वै क्षत्रं यद्बार्हतम् ।
अथेदं विड्राथन्तरमिति ।
तदु वा आहुर्विधर्माणो वै राजानो न वै तेऽन्यैर्मनुष्यै स्वधर्माणः ।
इदमु वाव क्षत्रं यच्चतुश्चत्वारिंशं त्रैष्टुभम् ।
तस्मान्नवम एवाहन्विधर्म स्यादिहैतदिति ।
हिन्वन्ति सूरमुस्त्रय स्वसारो जामयस्पतिम् ।
महामिन्दुं महीयुवः
इति महद्धयेतदहर्यच्चतुश्चत्वारिंशम् ।
तासु विशोविशीयमुक्तब्राह्मणम् ।
तदैळं भवति पशवो वा इळा ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै २३१

अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।
अथौशनम् ।
उशना वै काव्यो देवेष्वमर्त्यं गन्धर्वलोकमैच्छत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स देवेष्वमर्त्यं गन्धर्वलोकमाश्नुतैतं रोमण्वन्तम् ।
ते हैते काव्याः ।

रोमरावत्यश्नुते देवेष्वमर्त्यं गन्धर्वलोकमेतेन तुष्टुवानः ।
अग्निर्वै देवेष्ववसत् ।
तं देवा नाप्रीणन् ।
सोऽप्रीयमाण उशनसं काव्यमागच्छत् ।
तमब्रवीदृषे प्रीणीहि माऽप्रीतो वा अस्मीति ।
तमकामयत प्रीणीयामेनमिति ।
स एतत्सामापश्यत् ।
तेनैनमप्रीणात् ।
प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् ।
अग्ने रथं न वेद्यमित्येवैनं प्रियतममतिथिमकुरुत ।
अप्रीत इव ह वा एष एतर्हि भवति यज्ञमूहिवान् ।
तमेतदत्र प्रीणन्ति ।
स प्रीतो यदत्र यज्ञस्य परिशिष्टम्भवति तद्वहति ।
यदूशना काव्योऽपश्यत्तस्मादौशनमित्याख्यायते ।
एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
गिरिर्न विश्वतः पृथुः पतिर्दिवः
अभि हि सत्य सोमपा
इत्यभीति भवति रथन्तरस्य रूपम् ।
राथन्तरमेतदहः ।
उभे बभूथ रोदसी
इतीमे ह वाव रोदसी ।
एते एवैतदभिवदति ।
इन्द्रासि सुन्वतो वृधस्पतिर्दिव
इति वृद्धं ह्येतदहर्यच्चतुश्चत्वारिंशम् २३२

तासु सांवर्तं पदनिधनं राथन्तरम् ।
तस्माद्राथन्तरेऽहन्क्रियते ।
संवर्त आङ्गिरस स्वर्गकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।

स पतिर्दिवः पतिर्दिव इत्येव स्वर्गं लोकमारोहत् ।
यथाह पतेदेवमेतद्यत्पतिर्दिव इति ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
यदु संवर्त आङ्गिरसोऽपश्यत्तस्मात्सांवर्तमित्याख्यायते ।
देवासुरा अस्पर्धन्त ।
तेऽसुरा महदभिव्यासत ।
स इन्द्रोऽकामयत सार्धमेवासुरान्संवृत्य हन्यामिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
त्वं हि शश्वतीनामिन्द्र धर्ता पुरामसि ।
हन्ता दस्योर्मनोर्वृधः पतिर्दिवः
इत्येवैनान्सार्धं संवृत्याहन् ।
तद्वेव सांवर्तस्य सांवर्तत्वम् ।
सार्धमेव संवृत्य द्विषन्तं भ्रातृव्यं हन्ति य एवं वेद २३३

अथ मैधातिथम् ।
मेधातिथिगृहपतयो वै विभिन्दुकीयास्सत्रमासत ।
तेषां दृढच्युदागस्तिरुद्गातासीद्गौरीवितिः प्रस्तोताच्युतच्युत्प्रतिहर्ता वसुन्नयो
होता सनक-नवकौ काव्यावध्वर्यू ।
पशुकामो मेधातिथिर्जनिकामौ सनक-नवकौ । यत्कामा इतरे तत्कामाः
।
नानाकामा ह स्म वै पुरा सत्रमासते ।
ते ह स्म नानैव कामानृद्धवाप्त्वोतिष्ठन्ति ।
तेषां ह स्मेन्द्रो मेधातिथेर्मेषस्य रूपं कृत्वा सोमं व्रतयति ।
तं ह स्म बाधन्ते मेधातिथेर्नो मेषस्सोमं व्रतयतीति ।
स उ ह स्मैषां स्वमेव रूपं कृत्वा सोमं व्रतयति ।
ततो ह वा इदमर्वाचीनं मेधातिथेर्मेष इत्याह्वयन्ति ।
स एतन्मेधातिथिः पशुकामस्सामापश्यत् ।
तेनास्तुत ।

पुरां भिन्दुर्युवा कविर्
इत्येव वलमभिनत् ।
त्वं वलस्य गोमतोऽपावरद्रिवो बिलम्
इत्येतया बिलमपावृणोत् २३४

ततः पशवोऽसृज्यन्त ।
ये प्रथमेऽसृज्यन्त । त इम एतर्हितनाः पशवः ।
तदु हैव हिरण्यशृङ्गीद्व्यूध्नीरनूदेयुः ।
तदु हैव हिरण्यचण्डातकौ वसानेऽप्सरसावनूदेयतुः ।
ते गृहपतिरभिदध्यौ ।
स होवाच मम वा इमे । येऽहं मम गार्हपत्येऽवारुत्सि ।
गृहपतेर्वाव सर्वर्द्धिरिति ।
नेति होचतुस्सनक-नवकौ । पशुकामस्त्वमासिष्ठाः ।
ते तवैते पशवः ।
जनिकामावावम् ।
तयोरावयोरिमे जाये इति ।
तद्धैव संवदमानेष्वन्यतरामभिपेदे ।
सा ह प्रतिजघ्ने ।
सैषा यस्या एतत्कबलिकमिव ।
अथ हान्यतरा विसिष्मिये ।
सैषा हरिणिका ।
तस्मादेते पशून्सेवते पश्चाजानेहि ।
अथ हेमा हिरण्यशृङ्गीद्व्यूध्नीर्यत एवोदेयुस्तत्पुनरभ्यवदुद्रुवुरनृतं गृहपतिरकृत् ।
न वै वयं तस्य स्मो योऽनृतं करोतीति ।
ता हैता अप्यद्य क्रूरर्षभा विभिन्दुके शारीर्भूता वेदयन्ते ।
काण्वायनौ ब्रह्मण्यस्पर्धेतां मेधातिथिश्च त्रिशोकश्च ।
तावब्रूतामेह्यग्निं समिद्धमत्ययावेति ।
तावग्निं समिद्धमत्यैताम् ।
उपर्युपर्येव त्रिशोकोऽत्यैद् । अथैतरस्य पद्माण्युदौषत् ।

तमब्रवीदजैषं त्वेति ।
नेत्यब्रवीद् । असुरीपुत्र एव त्वमसि देवता एव त्वया संस्पृष्टं
नाचीकमन्तेति ।
तौ वा -- एह्यपोऽत्ययावेति ।
तौ ह रथस्यां विष्यरणामत्यैताम् ।
उपत्युपत्येव त्रिशोकोऽत्यैद् । अथेतरस्य पवी अत्रायेताम् ।
तदेवार्द्रपवि रथस्यायै ।
तमब्रवीदजैषं त्वेति ।
नेत्यब्रवीद् । असुरीपुत्र एव त्वमसि ।
देवता एव त्वया संस्पृष्टं नाचीकमन्तति ।
तौ वा -- एहि पशूनुत्सृजावहा इति २३५

स त्रिशोकस्सद्य एवालोम्नो कर्णकान्पशूनुदसृजत ।
तेऽत्राभ्यातप्ता न्यमृच्य न्यमहन् ।
सैषो प्राभवत् ।
तस्मादाहुर्गावो प्रेति ।
तस्माद्गमांसाशी प्रायु नाश्नीयात् ।
अथ हैकेऽभितप्यमानानाः प्रत्यञ्चः प्राद्रवन् ।
ते सिन्धुं प्राविशन् ।
तल लवणमभवत् ।
तस्मादाहुर्गावो लवणमिति ।
तस्मादु यो लवणेन पणञ्चरति । गाव एव भवन्ति ।
अथ मेधातिथिस्संवत्सरमुपप्रास्तृणीत पशुकामः ।
स एतस्मादेव वलादश्माभिधानात्पशूनुदसृजत
त्वं वलस्य गोमत
इति ।
तदेतत्पशूनामुत्सृष्टिस्साम ।
अव पशून्रुन्द्धे । बहुपशुर्भवति य एवं वेद ।
यदु मेधातिथिरपश्यत् । तस्मान्मैधातिथिमित्याख्यायते २३६

तद्वेवाचक्षतेऽङ्गिरस्यानां सामेति ।
अङ्गिरस्या ह वै नामर्षीणां पुत्रा आसुः ।
तेऽकामयन्त स्वर्गं लोकमश्नुवीमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते स्वर्गं लोकमाश्नुवत ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
यद्वङ्गिरस्या अपश्यंस्तस्मादङ्गिरस्यानां सामेत्याख्यायते ।
तद्वेवाचक्षते मारुतमिति ।
मरुतो वा अकामयन्तौजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानां स्याम ।
जयेम स्वर्गं लोकमिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै त ओजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानामासन् ।
अजयन्स्वर्गं लोकम् ।
ओजिष्ठो बलिष्ठो भूयिष्ठो वीर्यवत्तम स्वानां भवति जयति स्वर्गं लोकं य एवं वेद ।
यदु मरुतोऽपश्यंस्तस्मान्मारुतमित्याख्यायते २३७

तद्वेवाचक्षते वैश्वामित्रमिति ।
भरता ह वै सिन्धोरपरतार आसुरिक्ष्वाकुभिरुद्वाढाः ।
तेषु ह विश्वामित्रजमदग्नी ऊषतुः ।
स हेन्द्रो भयदमासमात्यं हरी ययाच ।
तौ हास्मै न ददौ ।
तयोर्हादत्तयोर्जुहावेन्द्रक्रोश इति ।
अम्मकस्तस्मिंस्तिष्ठन्विश्वामित्रजमदग्नी । इमा इक्ष्वाकूणां गा विन्दध्वमिति ।
तद्धेमावपरतारे सन्ती शुश्रुवतुः ।
तौ होचतुर्भरतानिन्द्रो वै नावयं ह्वयतीमा इक्ष्वाकूणां गा विन्दध्वमिति ।

एत । गा विन्दामहा इति ।
तौ वै न इमं गाधं कुरुतमिति ।
ते वै युङ्ध्वमिति ।
ते ह युयुजिरे ।
ते हाभ्यवेयुः ।
तौ होचतुर्या वः पल्पूलन्यस्ता अपास्यतेति ।
ता हापासुः ।
अथ ह राजन्यबन्धुर्यस्मै पल्पूलन्यास । तां हाधोऽक्षं बबन्ध ।
तावकामयेतां गाधो नावयं स्यादिति ।
स एतद्विश्वामित्रस्सामापश्यत् ।
तेनास्तुत ।
पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः
त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः
तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।
इत्येता आवदन्तौ प्रत्यैताम् ।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारव
इति हैवाप उपतस्थिरे ।
ताभ्यां ह गाध आस ।
ते ह गाधेनातिययुः ।
तद्यस्मिन्नियं पल्पूलन्यास । तद्धैवापोऽवचिछिन्दुः ।
अनशद्वा इयमिति त एव नंशवः ।
योगो नोद्यत इति त एवायोगव इति ।
इदमेवाद्य वसामेति त एव वसातयः २३८

तदु हैव कुमारिकाः क्रीळन्तीर्जहुः ।
स एव यौषितो गिरिरभवत् ।
अथ हवा इमानि वनानीमाश्च नद्योऽपरतार आस पुरा सिन्धोरासुः ।
तौ ह पश्चात्परीत्य प्राचीः प्ररुरुधतुः ।

ततो यान्युद्धशर्धतान्यासंस् । तानीमानि लवणानि ।
अथ ये तस्थुस् । त एते चुद्रा वनस्पतयोऽभवन् ।
अथ ह वा इमानि पीरुस्तच्छमैतद् । अथ या नदीस्तारयांचक्रुस् । ता
इमा नद्यो विवसतिहोत्तमास्तारयांचक्रुः ।
तासु ह तार्यमाणासु सिन्धोरप्रियमास ।
स होवाच
ननु ब्रह्मेति शुश्रुम गाथिनं पितरं तव ।
कुतस्त्वा सहस्रमागमद्विश्वामित्र बलं तव
इति ।
स होवाच
उत पुत्रो ममतायै गर्भे दीर्घतमा वदन् ।
विपश्चित्तदभ्यजायत यज्ञस्यांगानि कल्पयन्
कथोदन्वः पणायसि
इति ।
ततो वै ते तान्पशूनविन्दन्त ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु विश्वामित्रोऽपश्यत्तस्माद्वैश्वामित्रमित्याख्यायते ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति २३९

अक्रान्समुद्रः परमे विधर्मन्न्
इति परमो वा अश्वः पशूनां । परमस्समुद्रः । परमं नवममहस् ।
तस्मादेता नवमेऽहन्क्रियन्ते ।
जनयन्प्रजा भुवनस्य गोपा
इति जनद्वतीर्भवन्ति ।
जनद्वद्वै जगत्यै रूपम् ।
जागतमेतदहः ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिर्

इति वृषण्वतीर्बृहद्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
महत्तत्सोमो महिषश्चकारे
ति महद्ध्येतदहर्यदष्टाचत्वारिंशम् ।
अपां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः
इति जनद्वतीर्भवन्ति ।
प्रातस्सवनादेवैतन्नवममहः प्रजनयन्ति ।
मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः ।
मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम
इति सर्वदेवत्यं भवति ।
वैश्वदेवं ह्येतदहर्जागतम् २४०

ता एता भवन्ति त्रिष्टुभो जगद्वर्णा अह्नो रूपेण समृद्धाः ।
यत्र वा अहारूपेण समर्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद ।
एष देवो अमत्य
इति सूक्तमनुरूपो भवति पशवो वै सूक्तम् ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
अथो भूमा वै पशवः ।
भूमा सूक्तम् ।
पशूनामेवैतत्पशूननुरूपान्कुर्वन्ति ।
नात्र प्रत्यक्षानुरूपान्कुर्वन्ति ।
तस्मात्पशवो नानारूपाञ्जनयन्त्युत श्वेता कृष्णं जनयत्य् । उत कृष्णा श्वेतम्
। उत रोहिणी कन्माषम् । उत कन्माषी रोहितम् ।
तासु समानप्रभृतयो भवन्ति नानोदर्काः -- एष देवो अमर्त्य । एष देवो
विपा कृत । एष देवो विपन्युभुरिति ।
इदं वै प्रथमं पदम् । इदं द्वितीयं अदस्तृतीयम् ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्चयवन्ते ये द्वादशाहयाजिनः ।
अन्तमिव हि गच्छन्ति तद्यदेतास्समानप्रभृतयो भव्न्ति नानोदर्काः ।

अस्मिन्नेवैतल्लोके प्रतितिष्ठन्ति ।
नानाप्रभृतयस्समानोदर्काष्षष्ठेऽहन्भवन्ति ।
अमुष्मिन्नु ताभिर्लोके प्रतितिष्ठन्ति २४१

दशर्चं भवति दशाक्षरा विराट् ।
अन्नं विराड् विराज एवान्नाद्यस्यावरुद्ध्यै ।
अष्टर्चं भवति ।
अष्टाचत्वारिंशमेवैवैतेन स्तोममभिवदति ।
अथो अष्टाक्षरा वै गायत्र्यष्टाशफाः पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
इन्द्रो वै वृत्रमहन् ।
तं वृत्रं जघ्निवांसमेभ्यो लोकेभ्यस्सर्वाणि भूतान्यन्ववदन्नेष वीर । एष वृत्रहति ।
वीर्यमेवास्मिंस्तदभिपूर्वमदधुः ।
वीर्यमिव वा एष चक्रिवान्भवति वृत्रमिव जघ्निवान्य एतदहरागच्छति ।
तद्यदेष इति भव त वीर्यमेवास्मिंस्तदभिपूर्वं दधति ।
तदाहुर्ऋृतुमान्पृष्ठ्यष्षडहोऽनृतवश्छन्दोमाः ।
अनृताविव वा एते प्रतिष्ठिता यच्छन्दोमा इति ।
तद्यदेतानि पञ्चर्च षड्ऋचानि भवन्ति तेनैवर्तुमन्तश्छन्दोमाः क्रियन्ते ।
स वानुत्तमष्षड्ऋचो भवति ।
यदा वै प्रत्यक्षं भवत्यथैष इत्याचक्षते । यदा परोक्षमथ स इति ।
परोक्षमिवैते यन्ति य एतदहरागच्छन्ति ।
तस्मात्स वानुत्तमष्षड्ऋचो भवति येन प्रयन्ति ।
तेनोद्यन्ति ।
अष्टाचत्वारिंश स्तोमो भवति ।
अष्टाचत्वारिंशदक्षरा वै जगती ।
पशवो जगती ।
पशवश्छन्दोमाः ।
पशुष्वेवैतज्जगत्यां प्रतितिष्ठन्तो यन्ति २४२

अगन्म महा नमसा यविष्ठम्
इति गद्वन्त्याज्यानि भवन्ति ।
गच्छन्तीव वा एते य एतदहरागच्छन्ति ।
यो दीदाय समिद्ध स्वे दुरोण
इति दीद्यन्त्येवैनमेतेन ।
चित्रभानुं रोदसी अन्तरूर्वी
इतीमे ह वाव रोदसी इदमेवान्तरिक्षं मरुतः ।
स्वाहुतं विश्वतः प्रत्यञ्चम्
इति प्रत्यङ्ह्येष त्रियहस्तायते ।
स मह्ना विश्वा दुरितानि साह्वान्
इति विश्ववतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
अग्नि ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः
इत्याशिषमेवैतेनाशास्ते ।
त्वं वरुण उत मित्रो अग्न
इत्याग्नावारुणी भवति । दुरिष्टस्यैवावेष्टचै ।
यद्ध वै किं च यज्ञस्य दुष्टुतं दुश्शस्तं विधुरं तस्य ह वा एषा वेष्टचै ।
त्वां वर्धन्ति मतिभिर्वसिष्ठा
इति वृद्धं ह्येतदहः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिस्सदा न
इत्याशिषमेवैतेनाशास्ते २४३

प्र मित्रयोर्वरुणयोर्
इति मैत्रावरुणं भवति ।
स्तोमो न एतु शूष्यः ।
नमस्वांस्तुविजातयोः
इति जनद्वत् ।
नवममेवैतेनाहः प्रजनयन्ति ।
या धारयन्त देवा

इति धृत्यै ।
अन्तमिव ह्येतर्हि गच्छन्ति । छान्दोमेभ्यो नेत्पराञ्चोऽतिपद्यामहा इति ।
सुदक्षा दक्षपितरा ।
असुर्याय प्रमहसा
ता नः स्तिपा तनूपा वरुणा जरितृणाम् ।
मित्र साधयतं धियः
इति सिद्ध्या एव ।
महं इन्द्रो य ओजसे
 त्यैन्द्रं भवति ।
महद्ध्येतदहर्यदष्टाचत्वारिंशम् ।
पर्जन्यो वृष्टिमं इव ।
स्तोमैर्वत्सस्य वावृधे
इति वृद्धं ह्येतदहः ।
कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम्
इति सिद्ध्या एव ।
प्रजामृतस्य पिप्रत इति जनद्वत् ।
नवमादेवैतदह्नो दशममहः प्रजनयन्ति ।
नवमाद्वा एतदह्नः प्रजातं यद्दशममहः ।
यद्द्वितीयस्याह्न षन्द्राग्नं तदैन्द्राग्नं बार्हतम् ।
बार्हतं ह्येतदहः ।
समयीन्याज्यानि भवन्ति ।
नानाग्रामाविव ह वा एतौ यत्पृष्ठ्यश्च षडहश्छन्दोमाश्च ।
स यथा नानाग्रामौ मित्राणि व्यतिषज्याभय आसीयातां
तादृक्तद्यत्समयीन्याज्यानि भवन्ति ।
असमयीनि हैके कुर्वन्ति ।
तस्मात्समयीन्येव कार्याणि अष्टाचत्वारिंश स्तोमो भवति ।
अष्टाचत्वारिंशदक्षरा वै जगती ।
पशवो जगती ।
पशवश्छन्दोमाः ।
पशुष्वेवैतज्जगत्यां प्रतितिष्ठन्तो यन्ति २४४

पवमानस्य जिघ्नत
इति बृहतो रूपं । हरेश्चन्द्रा इति जगत्यै ।
पवमानो रथीतमश्शुभ्रेमिश्शुभ्रशस्तमः ।
हरिश्चन्द्रो मरुद्गणः
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
पवमान व्यश्नुही
ति वैश्वदेवं रूपमुपगच्छन्ति ।
वैश्वदेवं ह्येतदहः ।
ता घ्नद्वतीर्भवन्ति ।
अन्तो नवममहः ।
अन्तमेवैतदागत्यैताभिस्सर्वं पाप्मानमपघ्नते ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ गातुविन्निधनम् ।
गातुं विन्दामहा इति सत्रमासते ।
गातुमेव विन्दन्ते ।
तदुपरिष्टोभवद्भवति बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
तद्वेवाचक्षते भरद्वाजस्यादारसृदिति ।
क्षत्रं वै प्रातर्दनं दाशराज्ञे दश राजानः पर्यतन्त मानुषे ।
तस्य ह भरद्वाजः पुरोहित आस ।
तमुपाधावदृष । उप त्वा धावाम ।
इह नः प्रजानीहीति ।
सोऽकामयत भरद्वाजो जयेम संग्राममिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
सोऽब्रवीत्स्तुत्वा -- आ वै न इन्द्रो हवं गमिष्यति ।
जेष्यामो वा इमं संग्राममिति २४५

अथ होपमा सावेदसी कल्याणयास क्षत्रस्य प्रातर्दनस्य जाया ।
तस्यै ह भ्रातरं जघ्नुः ।
तद्ध धुवनमास ।
तां ह परिधावन्तीमिन्द्रोऽभिदध्यौ ।
स ह शुष्काजिनं परिधायाभ्यवेयाय ।
तस्य ह विवधे अपूपमूत इतरार्धेऽपासक्त आसामिक्षा सर्पिषा संयतेतरार्धे ।
स हास्या अन्तिकं नर्तितुं दध्रे ।
तां ह स्म नयत्सर्पिषा प्रलिम्पति ।
तं ह स्म यदपसेधत्य् । अथ ह स्मास्या अन्तिकमेव नृत्यति ।
सायमास । व्यपेयुः ।
तां ह पतिः पप्रच्छ किमत्र किञ्चिद्विवादोऽद्राक्षीरिति ।
सा होवाच न नु ततोऽन्यत् । स्थविर एव मेऽद्यान्तिकमनर्तीत् ।
तस्य विवधेऽपूपमूत इतरार्धेऽपासक्तोऽभूदामिक्षा सर्पिषा संयतेतरार्धे ।
तं यदपासीत्स मथमेद्यान्तिकमेवानर्तीदिति ।
स होवाचा वै न इन्द्रो हवमगमत् ।
जेष्यामो वा इमं संग्रामम् २४६

इन्द्रो वै सोऽभूत् । तं मोद्धिंसिष्ठास् । तं सखीकृत्य ब्रूताज्जयाम संग्राममिति ।
श्वो ह भूते परिसस्रुः ।
स हायं तादृशेनैव विवधेन परस्तरामिव नर्तितुं दध्रे ।
तं ह स्म यत्प्रेप्स्यत्य् । अथ ह स्मेतरः परस्तरामेव ।
सा हेक्षाञ्चक्रे हन्तैनमभिवदानीति ।
तं हाभ्युवाद
किं ते मजाक मूत
इति ।
य कल्पितोपनराहि
इतीन्द्रः ।
वि ते मजाक शीयतां महतो जोषवाजिन

इत्युपमा सावेदसी ।
वि चेत्पुत्रक शीयातै समित्तञ्चिनवत्पिता
इतीन्द्रः ।
विषं मजाक ते भूयात्प्रावभ्रावेव सर्पत
इत्युपमा सावेदसी ।
विषं चित्पुत्रका सती मृगं तेन हनत्पिता
इतीन्द्रः ।
परो मजाक धावानुकूलं पथैव यन्
इत्युपमा सावेदसी ।
परश्चित्पुत्रका सत्युपकूलं पितायति
इतीन्द्रः ।
प्रियो मे महिरो दृशे हस्तेनाभिमृशात्तत
इत्युपमा सावेदसी ।
हिमिति स्म कुरुथा पेवस्म हस्तमस्यथ
किमोभूत्कथोभूत्
कथार्मे महिरः प्रियो हस्तेनाभिमृशात्तत
इटीन्द्रः ।
एवोऽभूत्ततोऽभूत्
यथा ते महिरः प्रियो हस्तेनाभिमृशात्तत
इतीन्द्रः ।
एवोऽभूत्ततोऽभूत्
यथा ते महिरः प्रियो हस्तेनाभिमृशात्तत
इत्युपमा सावेदसी २४७

तं हानुसंद्रुत्योवाच जयाम संग्राममिति ।
स हाजिनमुपाध्मान उवाच
यथेमाममूर्व्युपापतति भास्विति ।
एवं क्षत्रस्य मानुषाद्व्युपापतत शत्रवः
इति हैवैणेयलोमानि शातयाञ्चक्रे ।
ते हैवाश्वरथा उत्तस्थुः ।

तैर्वै स तं संग्राममजयत् ।
सोऽब्रवीद्भरद्वाजो न वै दारेऽसृन्मेति ।
यदब्रवीद्भरद्वाजो न वै दारेऽसृन्मेति । तदेवादारसृतोऽदारसृत्त्वम् ।
तदेतद्विजितिर्भ्रातृव्यहा साम ।
विजनते हन्ति द्विषन्तं भ्रातृव्यं । दारे द्विषन्तं भ्रातृव्यं सारयति । नात्मना दारे धावयति ।
अथो सेन्द्रमेव ।
इन्द्रो वा एषामेतेन हवमगच्छद् । आस्येन्द्रो हवं गच्छति य एवं वेद ।
तदष्टाक्षरणिधनं भवत्यष्टाक्षरा वै गायत्री ।
अष्टाशफाः पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
यदु भरद्वाजोऽपश्यत्तस्माद्भरद्वाजस्यादारसृदित्याख्यायते २४८

अथ सैन्धुक्षितम् ।
सिन्धुक्षिद्वा अन्तं वाचोऽपश्यत् ।
वाचं छन्दोमैस्समिच्छन्ति ।
आप्तेव वा एतर्हि वाग्भवति छन्दोमेषु ।
तामेवैतत्संविन्दन्ति ।
अथो अन्त्येन साम्नान्त्यं स्वर्गं लोकमश्नवामहा इति ।
तदैळं भवति ।
पशवो वा इळा ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
अथ हरिश्रीनिधनम् ।
प्रजापतौ ह वा अग्रे श्रीरास ।
स इन्द्रोऽकामयत येयं प्रजापतौ श्रीर्मय्येषा स्यादिति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेन हरिश्रीरिति प्रजापते श्रियमहरत् ।
तद्धरिश्रीनिधनस्य हरिश्रीनिधनत्वम् ।
तदेतच्छ्रीस्सवस्साम ।

अश्नुते श्रियं य एवं वेद ।
देवासुरा अस्पर्धन्त ।
तेषु होभयेष्वेव श्रीरास ।
स इन्द्रोऽकामयत वृञ्जीयासुराणां श्रियमिति ।
स एतत्सामापश्यत् ।
तेन हरिश्रीरित्येवासुराणां श्रियमवृंक्त ।
तद्वेव हरिश्रीनिधनस्य हरिश्रीनिधनत्वम् ।
तदेतच्छ्रीरेव साम ।
अश्नुते श्रियं । वृंक्त द्विषतो भ्रातृव्यस्य श्रियं य एवं वेद ।
तत्त्र्यक्षरणिधनं भवति त्रयो वा इमे लोका -- एषां लोकानां विधृत्यै २४९

अथाङ्गिरसां निवेष्टः ।
अङ्गिरसो वा अकामयन्ताव पशून्रुनधीमहीति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तान्सर्वाभ्यो दिग्भ्यः पशवोऽभिन्यवेष्टत्वम् ।
तेऽब्रुवन्सं वै न इमा इळा अक्षारिषुरिति ।
पशवो वा इळा ।
तस्माद्विळानां संक्षारः ।
अथ बाभ्रवं ग्वामिर्निधनं बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
बभ्रुर्वै कुम्भ्योऽकामयत पशुभिस्सूयेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स ग्वाभिरित्येव निधनमुपैत् ।
ततो वै स पशुभिरसूयत ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे । बहुपशुर्भवति य एवं वेद ।
यदु बभ्रुः कुम्भ्योऽपश्यत्तस्माद्बाभ्रवमित्याख्यायते ।
अथ ऋषभः पवमानः ।

पशवो वै सिमाः । पशवो रेवतयः । पशव ऋषभः ।
ऋषभमेवैतत्पशुष्वपिसृजन्ति मिथुनत्वाय प्रजननाय ।
प्र मिथुनेन जायते य एवं वेद ।
अथो हैषामेतेनैव सर्वे छन्दोमा ऋषभवन्तः क्रियन्ते २५०

अथ गौषूक्तं बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
गौषूक्तिश्च वा आश्वसूक्तिश्चैषौ ।
तौ ह बहु प्रतिगृह्य गरगिराविव मेनाते ।
तावकामयेतामपेमं गरं गीर्णं हनीवहीति ।
तावेते सामनी अपश्यताम् ।
ताभ्यामस्तुवाताम् ।
तयोरन्यतरोऽग्निराहुत इत्येवेमं लोकमभिनिराजुहोत् ।
अग्निं ह वा अस्मिँल्लोके न किञ्चनातिरिच्यते ।
शुक्र आहुत इत्येवान्यतरोऽमुं लोकमभिनिराजुहोत् ।
आदित्यमु ह वा अमुष्मिँल्लोके न किञ्चनातिरिच्यते ।
ततो वै तौ तं गरं गीर्णमपाह्नाताम् ।
तत एनयोर्यथा द्विदतः कुमारस्य सातं स्याद् । एवं सातमास ।
यो गरगीर्मन्येताप्रतिगृह्यस्य प्रतिगृह्यानाश्यान्नस्यान्नमशित्वा । स एताभ्यां स्तुवीत ।
अप हैव तं गरं गीर्णं हते ।
यदेनेन किं च पापं कृतं भवति । तदपहते ।
ते उ पञ्चाक्षरणिधने भवतः पञ्चपदा वै पंक्तिः ।
पांक्ताः पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
यदु गौषूक्तिश्चाश्वसूक्तिश्चैषावपश्यतां तस्माद्गौषूक्ताश्वसूक्ते इत्याख्यायते २५१

परीतो षिंचता सुतम्
इति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्त्यो ह्येतदहः ।

सोमो य उत्तमं हविर्
इत्युत्तमं ह्येतद्धविः क्रियते यच्छन्दोमाः ।
दधन्वां यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः
नूनं पुनानोऽविभिः परि स्रवादब्धस्सुरभिन्तरः ।
सुते चित्त्वाप्सु मदामो अन्धसा
इत्यन्धस्वतीर्भवन्त्यन्नं वा अन्धोऽन्नाद्यस्यैवावरुद्ध्यै ।
श्रीणन्तो गोभिरुत्तरम्
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।
परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षण
इति चतुर्ऋचं भवति चतुष्पदा वै पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
तासु पृष्ठम् ।
पृष्ठेन वै देवाः पृष्ठमभवन् ।
पृष्ठमसामेति सत्रमासते ।
पृष्ठमेव भवन्ति ।
देवा वा अकामयन्त पृष्ठं स्यामेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते पृष्ठमभवन् ।
तत्पृष्ठं वा अयमग्निरस्य लोकस्य । पृष्ठमयं वायुरन्तरिक्षस्य ।
पृष्ठमसावादित्यो दिवः ।
तत्पृष्ठमिति वै प्रशंसन्त्यत्र प्रतिष्ठापयन्ति ।
तच्छ्रीर्वै पृष्ठं । वर्ष्म वै पृष्ठम् ।
अश्नुते श्रियं । वर्ष्म भवति य एवं वेद ।
तदूर्ध्वेळं भवति बृहतो रूपं बार्हतेऽहन् ।
तेन वै रूपसमृद्धम् २५२

अथ संकृति ।
त्रिरात्रेण वै देवा ऊर्ध्वा स्वर्गं लोकमायन् ।

स एषामसंगृहीतो वीवावृह्यत ।
तं गायत्रपार्श्वेणैवोदत्तभ्नुवन् । सन्तनिना समतन्वन् । संकृतिना समकुर्वंस् । त्रिषन्धिना समदधुः । श्रायन्तीयेन समश्रीणन् ।
अरिष्टेनारिष्टतामगमयन् ।
त्रिरात्रेण यद्देवा स्वर्गं लोकमायन्नेतेन वै तदायन् ।
स एषां संव्यवृह्यत ।
तस्मिन्नेतानि भूयिष्ठानि सामानि क्रियन्ते ।
एतमेवैतत्त्रिरात्रं भिषज्यन्ति ।
भेषजमेवैतेन प्रायश्चित्तिं कुर्वते ।
संकृतिना वै देवाः प्रजाः पशूञ्छ्रियमन्नाद्यं समकुर्वत ।
तत्संकृतिनस्संकृतित्वम् ।
प्रजाः पशूञ्छ्रियमन्नाद्यं संस्कुरुते य एवं वेद ।
तस्यो एते वृकणावा भवन्त्य् । उभय्या एव वाच उपाप्त्यै या च ग्राम्या या चारण्या ।
तच्चतुर्निधनं भवति चतुष्पदा वै पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै २५३

अथ कौन्मलबर्हिषम् ।
एतेन वै कुन्मलबर्हिरुभयान्पशूनस्पृणोद्गव्यांश्चाश्वयांश्च ।
तानेवैतेन स्पृणोति ।
कुन्मलबर्हिर्वा अकामयतोभयान्पशूनवरुन्धीय गव्यांश्चाश्वयांश्चेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
त्वं ह्येहि चेरवे विदा भगं वसुत्तये ।
उद्वावृषस्व मघवन्गविष्टय उदिन्द्रो अश्वमिष्टये
इत्येव गव्यांश्चाश्वयांश्च पशूनवारुन्द्ध ।
तैरु पशुभिरिष्ट्वा स्वर्गमेव लोकमगच्छत् ।
तदेतत्पशव्यं स्वर्ग्यं साम ।
अव पशून्रुन्द्धे गच्छति स्वर्गं लोकं य एवं वेद ।
यदु कुन्मलबर्हिरपश्यत्तस्मात्कौन्मलबर्हिषमित्याख्यायते २५४

अथ देवस्थानम् ।
एतेन वै तृतीयेन त्र्यहेण देवा ऊर्ध्वा स्वर्गं लोकमायन् ।
स एषामसंगृहीतो वीवास्रंसत ।
त एतत्सामापश्यन् ।
तेनैनमेऽस्थादिदं एऽस्थादिदमित्येवास्थापयन् ।
तमेतेनैवादृंहन् ।
तद्यदेतेनास्थापयंस्तद्देवस्थानस्य देवस्थानत्वम् ।
तद्यदत्र देवस्थानं भवत्येतमेवैतत्त्रिरात्रं प्रतिष्ठापयन्त्य् । एतं दृंहन्ति ।
तं संस्कृत्य तेन स्वर्गं लोकमायन् ।
तस्मिन्यत्स्वर्गे लोके समतिष्ठन्त तद्वेव देवस्थानस्य देवस्थानत्वम् ।
ते यत्र स्वर्गं लोकमायंस्तद्धीदं सर्वं संगोपाञ्चक्रे यथास्यैतन्निधनम् ।
तेन हैतेन साम्ना महदेवानपजय्यं जयति ।
तस्यैष श्लोको
वैरूपं देवा अभिसंवसानास्तदातस्थुस्तदु हैषां व्यारते ।
हिंकृत्य पुनरारुह्य सर्वं एवाधून्वत जरसं तनूनामिति ।
त एतमेव छन्दोम्यं त्र्यहं संस्कृत्य देवस्थानमेव साम समारुह्य स्वर्गं
लोकमगच्छन् ।
तस्यो एवैष श्लोको
यद्वैरूप उपहते व्यद्ध्वे हिंकृण्वन्तस्समतिष्ठन्त यामम् ।
तद्देवस्थानमसृजन्त साम तेन देवासो अमृतत्वमायन्
इत्येवामृतत्वमगच्छन् २५५

प्रजापतिरन्नाद्यमसृजत ।
तत्त्वयाद्भिभ्यद्दिशो व्युदक्रामत् ।
सोऽकामयतावान्नाद्यं रुन्धीयेति ।
स एतत्सामापश्यत् ।
तेनैनदेऽस्थादिदमेऽस्थादिदमित्येव सर्वाभ्यो दिग्भ्योऽन्नाद्यमवारुन्द्ध ।
स योऽन्नाद्यकाम स्याच्चतुर्ब्रूयात् ।
चतस्रो दिशः ।

दिग्भ्य एवान्नाद्यमवरुन्द्धे ।
अथ य स्वर्गकाम स्यात्त्रिर्ब्रूयात्त्रयो वा इमे लोका -- एषां लोकानां समष्टचै ।
अथार्कपुष्पमन्नं वा अर्कः ।
तस्यैतत्पुष्पं यदारण्यम् ।
तद्ध्यरण्ये जायत -- आरण्यस्यैवान्नाद्यस्यावरुद्धचै ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एते सामनी अपश्यन् ।
ताभ्यामस्तुवत ।
ततो वै ते स्वर्गं लोकमाश्नुवत ।
ते एते स्वर्ग्ये सामनी ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
तद्यथा वा अदो वृष्टे नियानेऽनुददृशाते एवमेवैताभ्यां स्वर्गो लोकोऽनुददृशे ।
ते उ स्वर्ग्ये ।
अश्नुते स्वर्गं लोकं य एवं वेद २५६

अथदैर्घश्रवसमन्नं वै दैर्घश्रवसमन्नाद्यस्यैवावरुद्धचै ।
दीर्घतमा वै मामतेयस्सनिं प्रयन्नब्रवीद्दीर्घश्रवसं कनीयांसं भ्रातरमेतेषां नो भार्याणामध्यक्ष स्या इति ।
सोऽकामयत दीर्घश्रवा -- अवान्नाद्यं रुन्धीय । नेमे भार्या अशनायेयुरिति ।
स एतत्सामापश्यत् ।
तेनाग्निमस्तौद्
यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये
इति ।
सोऽस्मा अग्नि स्तुतस्सर्वमेवेदं मधुमयमन्नाद्यमकरोत् ।
ते हास्य भार्या आसुर्यथा मध्वश्नन्त एवम् ।
स हैष महानेव रसो । महदेवैतदन्नाद्यम् ।

तेन हैतेन साम्ना महदेवान्नाद्यमवरुन्द्धे ।
यदु दीर्घश्रवा अपश्यत्तस्माद्दैर्घश्रवसमित्याख्यायते २५७

अथ यशः ।
यशसा वै देवा यशोऽभवन् ।
यशोऽसामेति सत्रमासते ।
यश एव भवन्ति ।
तच्छ्रीर्वै यशः ।
अश्नुते श्रियं य एवं वेद ।
तदु सप्तत्रिंशदक्षराणिधनं भवति ।
षट्त्रिंशदक्षरा वै बृहती ।
बृहती स्वर्गो लोकः ।
असावादित्यस्सप्तत्रिंशः ।
एतस्मिन्नेव तत्स्वर्गे लोकेऽन्ततः प्रतितिष्ठन्ति ।
तस्यो एतां कल्याणीमाशिषमन्तत आशासत
आयुर्विश्वायुर्विश्वं विश्वमायुरशीमही
ति ।
तयैवैतत्समृध्योदृचमश्नुवते ।
अथ शुल्कः ।
शुल्केन वै देवाश्शुल्कोऽभवन् ।
शुल्कोऽसामेति सत्रमासते ।
शुल्क एव भवन्ति ।
तच्छ्रीर्वै शुल्कः ।
अश्नुते श्रियं य एवं वेद ।
तद्वेवाचक्षत आश्वमिति ।
देवा वै स्वर्गकामास्तपोऽतप्यन्त ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते स्वर्गं लोकमाश्नुवत ।
तदेतत्स्वर्ग्यं साम ।

अश्नुते स्वर्गं लोकं य एवं वेद ।
अथ भर्गः ।
भर्गेण वै देवा भर्गोऽभवन् ।
भर्गोऽसामेति सत्रमासते ।
भर्ग एव भवन्ति ।
तच्छ्रीर्वै भर्गः ।
अश्नुते श्रियं य एवं वेद ।
अथाभिशवमुभयाभीशुतायै ।
यथा हैकाभीशुना यायादेवं तद्यदन्यतरद् । अथ यथोभयाभीशुना
यायादेवं तद्यदुभे ।
एताभ्यां वै द्वादशरात्रोऽरिष्टस्संगृहीत एति ।
अरिष्टेन संगृहीतेन द्वादशरात्रेण पाप्मानं तरति श्रियमश्नुते य एवं वेद २५८

अथ दीर्घतमसोऽर्कोऽन्नं वा अर्कोऽन्नाद्यस्यैवावरुद्ध्यै ।
दीर्घतमा वै मामतेयोऽन्नाद्यकामस्तपोऽतप्यत ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै सोऽन्नाद्यमवारुन्द्ध ।
तदेतदन्नाद्यस्यैवावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धेऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ।
यदु दीर्घतमा मामतेयोऽपश्यत्तस्माद्दीर्घतमसोऽर्क इत्याख्यायते ।
असावि सोमो अरुषो वृषा हरिर्
इति वृषण्वतीर्भवन्ति बृहतो रूपम् ।
बार्हतमेतदहः ।
राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारमत्येष्यव्ययं श्येनो नयोनिं घृतवन्तमासदत्
पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षय दधे ।
स्वसार आपो अभि गा उदासरन्सं ग्रावभिर्वसते वीते अध्वरे
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।

कविर्वेधस्या पर्येषि माहिनमत्यो न नित्को अभि वाजमर्षसि ।
अपसेधं दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजमिति
परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः २५९

तासु सामराजम् ।
श्रीर्वै राज्यम् ।
अश्नुते श्रियं गच्छति राज्यं य एवं वेद ।
तद्वेवाचक्षते संवदिति ।
प्रवता वै देवा स्वर्गं लोकमायन्नुद्वतोदपतन् ।
संवता समाश्नुवत ।
तद्यदेतानि सामानि भवन्ति प्रवतैव स्वर्गं लोकं प्रयन्त्य् । उद्वतोत्पतन्ति ।
संवता समश्नुवते ।
तान्यु वाङ्गिनधनानि भवन्ति ।
वाचश्छन्दोमैस्समिच्छन्ति ।
आप्तेव वा एतर्हि वाग्भवति ।
छन्दोमेषु तद्यदेतानि वाङ्गिनधनानि भवन्ति । तामेवैतद्वाचं प्रत्यक्षमुपयन्ति
२६०

अथ बृहत् ।
वर्ष्म वै बृहत् ।
वर्ष्मण्येवैतत्प्रतितिष्ठन्तो यन्ति ।
तन्नागतेऽहन्भवति ।
पुंसो वा एतद्रूपं यद्बृहत्स्त्रियै जगती ।
तद्यदत्र बृहत्पृष्ठं भवति । तेनैवैतदहर्मिथुनं क्रियते ।
अथ वामदेव्यम् ।
पशवो वै वामदेव्यम् ।
पशुमन्त एव भवन्त्येनेन तुष्टुवानाः ।
श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षते
ति विश्ववतीर्भवन्ति ।

वैश्वदेवं ह्येतदहः ।
वसूनि जाते जनिमान्योजसे
ति जनद्वतीर्भवन्ति ।
जनद्वद्वै जगत्यै रूपम् ।
जागतमेतदहः ।
प्रति भागंन दीधिमः
अलर्षिरातिं वसुदामुप स्तुहि भद्रो इ द्रस्य रातयः ।
यो अस्य कामं विधता न रोषति मनो दानाय चोदयन्
इत्याशिषमेवैतेनाशषास्ते २६१

तासु श्रायन्तीयम् ।
देवा वै सत्रमुपयन्तोऽब्रुवन्यन्नः क्रुरमात्मनस्तन्निर्भिमामहै ।
मा सक्रूरा उपगामेति ।
तद्यदेषां क्रूरमात्मन आसीत् । तन्निर्माय शरावयोस्संमार्ज न्यदधुः ।
अथ सत्रमुपायन् ।
तत एषोऽखलो देवोऽजायत ।
तद्यच्छरावाभ्यामजायत । तदस्यैतन्नाम ।
एष ह वाव सोऽग्निर्जज्ञे ।
न हैनमेष हिनस्ति य एवं वेद ।
स देवानब्रवीत्कस्मै मामजीजनतेति ।
औपद्रष्ट्र्यायेत्यब्रुवन्योऽतिपादयात्तं हनासा इति ।
प्रजापतिर्होषसं स्वां दुहितरमभ्यध्यायत् ।
सास्मै रोहिद्भूत्वातिष्ठत् ।
तां पृषतो भूत्वास्कन्दत् ।
स षन्नतास्मै वै मां देवा अजीजनन्नौपद्रष्ट्र्याय ।
अति वा अयं पादयति । हन्तैनं विध्यानीति ।
तमविध्यत् ।
स विद्ध एतद्रूपं प्रत्यस्योर्ध्व उदक्रामत् २६२

स एष इषुस्त्रिकाराडः ।

तस्मात्पृषतोऽस्वादुतमः ।
तस्मादु शोचतीव ।
तस्य विद्धस्य रेतः परापतत् ।
तद्धिमवति प्रत्यतिष्ठत् ।
तन्मानुषमभवत् ।
तद्देवाश्चर्षयश्चोपसमेत्याब्रुवन्मेदं दुषद इति ।
यदब्रुवन्मेदं दुषदिति । तन्मादुषस्य मादुषत्वम् ।
मादुषं ह वै नामैतत् ।
तन्मानुषमित्याख्यायते ।
तदग्निना पर्यैन्धत ।
मरुतोऽधमन् ।
श्रायन्तीयेनैनदश्रीणन् ।
तच्छ्रायन्तीयस्य श्रायन्तीयत्वम् ।
ततः पशवोऽसृज्यन्त ।
ये प्रथमेऽसृज्यन्त ते रोहिताः ।
येऽभितप्यमानादसृज्यन्त तेऽरुणाः ।
येऽभितप्तादसृज्यन्त ते बभ्रवः ।
ये दह्यमानादसृज्यन्त ते श्वेताश्च कृष्णाश्च ।
तस्माद्द्वयमेवाग्निर्दहति श्वेतं चैव कृष्णं च ।
विष्फुलिंगाभ्य एवाजाश्चैणेयाश्चासृज्यन्त । अङ्गारेभ्योऽङ्गिरसः २६३

अङ्गारमिश्राद्भस्मनस्तिस्रो वशा असृज्यन्त मैत्रावरुणी बार्हस्पत्या वैश्वदेवी ।
भस्मन एव गर्दभोऽसृज्यत ।
तस्मात्स भस्मनः प्रतिरूपः ।
तस्मात्स बभ्रियमाणो जीवति ।
तदेतद्वीरजननं पशव्यं साम ।
वीरा वै तदजायन्त यदङ्गिरसः ।
एत उ पशवोऽसृज्यन्त ।
अस्य वीरो जायतेऽव पशून्रुन्द्धे । बहुपशुर्भवति य एवं वेद ।

स यो यज्ञविभ्रष्ट स्याच्छ्रायन्तीयमस्य पृष्ठेषु ब्रह्मसाम कुर्युः ।
पृष्ठानि च वा एतं स्तोत्राणि चावधून्वते यो यज्ञस्य विभ्रष्टः ।
पृष्ठेषु चैवैनं तत्स्तोत्रेषुच प्रतिष्ठापयन्ति ।
यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्शग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि
इति मृध एवैतेन पाप्मानमपघ्नते ।
तासु समन्तमुक्तब्राह्मणम् ।
तदैळमच्छावाकसाम भवति ।
पशवो वा इळा ।
पशुष्वेवैतत्प्रतितिष्ठन्ति २६४

त्वं सोमासि धारयुर्
इति धृत्यै ।
अन्तमिव ह्येतर्हि गच्छन्ति छन्दोमेभ्यो नेत्पराञ्चोऽतिपद्यामहा इति ।
त्वं सुतो मदिन्तम
इति मद्वतीर्भवन्ति रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति रसमेवास्मिन्नेतद्दधति ।
षवैनदेतेन प्याययन्ति ।
त्वं सुष्वाणो अद्रिभिर्
इति त्वमिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
अभ्यर्ष कनिक्रदत् ।
द्युमन्तं शुष्ममुत्तममित्युत्तमो ह्येष त्र्यहः क्रियते यश्छन्दोमाः ।
तास्समानप्रभृतओ भवन्ति नानोदर्काः ।
इदं वै प्रथमं पदमिदं द्वितीयमदस्तृतीयम् ।
तदाहुः प्रेव वा एतेऽस्माल्लोकाच्च्यवन्ते ये द्वादशाहयाजिनोऽन्तमिव हि गच्छन्ति ।
तद्यदेतास्समानप्रभृतयो भवन्ति नानोदर्काअस्मिन्नेवैतल्लोके प्रतितिष्ठन्ति ।
नानाप्रभृतयस्समानोदर्काष्षष्ठेऽहन्भवन्ति ।

अमुष्मिन्नुताभिर्लोके प्रतितिष्ठन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथैदावसुनिधनं बहिर्निधनं बार्हतम् ।
तस्माद्बार्हतेऽहन्क्रियते ।
असुर्ह वै नामर्षिरपशुरास ।
सोऽकामयताव पशून्रुन्धीयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
स इदं वस्वित्येव निधनमुपैत् ।
तदेवैदावसुनिधनस्यैदावसुनिधनत्वम् ।
तत्पशवो वै वसु ।
ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
तच्चतुरक्षरणिधनं भवति चतुष्पदा वै पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै २६५

अथ काशीतम् ।
कशीतिं वै सौभरं सत्रे यक्ष्माविन्दत् ।
सोऽकामयन्ताप यक्ष्म हनीयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
वात आ वातु भेषजं शंभु मयोभु नो हृदे ।
प्र न आयूंषि तारिषत्
यददो वात ते गृहेऽमृतस्य निधिर्हितः ।
ततो नो देहि जीवसे
उत वात पितासि न उत भ्रातोत नस्सखा ।
स नो जीवातवे कृधि
इति वात एवास्मै भेषजमकरोत् ।
तदेतद्भेषजं प्रायश्चित्तिं कुर्वते ।

तदु कामसनि एतं वै स काममकामयत ।
सोऽस्मै कामस्समाध्र्यत ।
यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते ।
तस्यो प्रतीचीमिळामुपयन्ति । छन्दोभेभ्यो नेत्पराञ्चोऽतिपद्यामहा इति
पशवो वा इळा ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
यदु कशीतिस्सौभरोऽपश्यत्तस्मात्काशीतमित्याख्यायते ।
अथाश्वसूक्तमुक्तब्राह्मणम् ।
तत्पञ्चाक्षरणिधनं भवति पञ्चपदा वै पंक्तिः ।
पांक्ताः पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
अथ शाम्मदमुक्तब्राह्मणम् ।
अथ हाविष्कृतमुक्तब्राह्मणं निरुक्तिर्हविषः ।
तच्चतुरक्षरणिधनं भवति चतुष्पदा वै पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
त्वं ह्यंग दैव्ये
ति त्वमिति भवति बृहतो रूपम् ।
बार्हतमेतदहः ।
पवमान जनिमानि द्युमत्तम
इति जनद्वतीर्भवन्ति ।
जनद्वद्वै जगत्यै रूपम् ।
जागतमेतदहः ।
तासु सौपर्णमुक्तब्राह्मणम् ।
पवस्व देववीतय
इति सर्वदेवत्यं भवति ।
वैश्वदेवं ह्येतदहर्जागतम् ।
तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुर्
इति वृद्धं ह्येतदहः ।
आ नस्सुतास इन्दव
इत्यावतीर्भवन्त्यनतिपादायैव २६६

तासु वैश्वमनसम् ।
विश्वमनसं वै समिद्धारं परेतमरराय ऋृद्धोऽविन्दत् ।
सोऽकामयतापर्द्धं हनीयेति ।
स एतत्सामापश्यत् ।
तदभ्यगायत ।
तमिन्द्रोऽपश्यद्विश्वमनसमृद्धोऽविददिति ।
तमभ्याद्रवत् ।
तस्याद्रवत श्वसथात्प्राव्लीयत ।
तमपृच्छद्विश्वमनः कस्त्वैष्परेणेति ।
सूर्मी मघवन्निति ब्रूहीत्यब्रवीत् ।
सूर्मी मघवन्नित्यब्रवीत् ।
अङ्गैनां दराडेनाभिजहीति सोऽब्रवीत् ।
तृणकमाछिद्रय शनैरध्यस्येति ।
तं तृणकमाछिद्य शनैरध्यास्यत् ।
तदेवेन्द्रो वर्जमसिञ्चत् ।
तस्यो तदेव प्राघ्नन् ।
तदु भ्रातृव्यहा रद्धोहा साम ।
हन्ति द्विषन्तं भ्रातृव्यं । अप रद्धः पाप्मानं हते । य एवं वेद ।
यदु विश्वमना अपश्यत्तस्माद्वैश्वमनसमित्याख्यायते २६७

पति त्यं हर्यतं हरिम्
इति परिवतीर्भवन्त्यन्तसय्रूपम् ।
अन्तो ह्येतदहः ।
बभ्रुं पुनन्ति वारेण ।
यो देवान्विश्वं इत्परि
इति विश्वावतीर्भवन्ति ।
वैश्वदेवं ह्येतदहः ।
मदेन सह गच्छती
ति मद्वतीर्भवन्ति ।

अभिपूर्वमेवैतत्तृतीयसवने रसं मदं दधति ।
द्विर्यं पञ्च स्वयशसं स्वसारो अद्रिसंहतम् ।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः
इत्याशिषमेवैतेनाशास्ते ।
इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यस
इति वर्त्रघ्न्यो भवन्त्यन्ततो विजित्यै ।
तासु गौरिवीतमुक्तब्राह्मणम् ।
अथ निहवः ।
इन्द्रो वै तृतीयसवनाद्बीभत्समान उदक्रामत् ।
धीतमिव ह्यासीत् ।
तमेतेन विश्वे देवास्साम्नान्वह्वयन्तायिही आयिही इति ।
ततो वा इन्द्रस्तृतीयसवनमुपावर्तत ।
ततोऽस्मादनपक्रम्यभवत् ।
तदेतत्सेन्द्रं साम ।
सेन्द्रो हास्य सदेवो यज्ञो भवति ।
अभ्यस्येन्द्रो यज्ञमावर्तते ।
नास्येन्द्रो यज्ञादपक्रामति य एवं वेद ।
तद्वेवाचक्षते वसिष्ठस्य निहव इति ।
वसिष्ठो वै जीतो हतपुत्रोऽकामयत प्रजां पशून्निह्वयेयेति ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
तेनायिही आयिही इत्येव प्रजां पशून्नयह्वयत ।
तद्वेव निहवत्वम् ।
प्रजां पशून्निह्वयते य एवं वेद ।
तदु स्तोभानुतुन्नं भवति ।
अनुतुन्नाद्वै प्रजाः पशवः प्रजायन्ते ।
पशवश्छन्दोमाः ।
तेन वै रूपसमृद्धम् ।
यदु वसिष्ठोऽपश्यत्तस्माद्वासिष्ठस्य निहव इत्याख्यायते २६८

अथ यद्वाहिष्ठीयम् ।
अग्निर्वै देवेभ्यो हव्यं नवमादह्नो दशममहरभ्यतिवोढुं नाकामयत ।
ते देवा अकामयन्ताति न इदमग्निर्हव्यं वहेदिति ।
त एतत्सामापश्यन् ।
तेनैनमस्तुवन्यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते
तव द्युमन्तो अर्चयो ग्रावेवोच्यते बृहत् ।
उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः
एवो अग्निं वसूयवस्सहसानं ववन्दिम ।
स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः
इति ।
यथा नावातिपारयेदेवमेवैभ्य एतदग्निर्हव्यं नवमादह्नो
दशममहरभ्यत्यपारयत् ।
एष ह वा एतदतिपारयितुमर्हति ।
तद्यदत्र यद्वाहिष्ठीयं भवति यज्ञस्यैव संतत्यै ।
समस्मै यज्ञस्तायते तस्याग्निर्हव्यं पारयति य एवं वेद ।
तदूर्ध्वेळं भवति बृहतो रूपं बार्हतेऽहन् ।
तेन वै रूपसमृद्धम् २६९

अथासितम् ।
ऋषयो वा अब्रुवन्नेतेममुपरिश्येनं स्वर्गं लोकं जिगीसाम ।
यदस्मिन्नेतेऽथर्वाण इति ।
प्रेणी सौभाहितो मधुच्छन्दा वैश्वामित्रोऽसितो दैवलो य उ चान्ये तस्य
हान्तिकं दिदीक्षते । तेषां ह ज्योगेव यजमानानां नोपशुश्रुवुर्बहू येव
वर्षाणि ।
तेषामु होपशुश्रुवुराश्रावयति वै । वषट्करोति वा इति ।
स होद्वन्तो नामाथर्वणामेकश्चमसहस्त उपावरुरोह ।
तान्होवाच किंकामा आध्व इति ।
इममुपरिश्येनं स्वर्गं लोकं जिगीषाम । यस्मिन्नेतेऽथर्वाण इति ।
तान्होवाचेथ ग्रामं जघनेना३ इति ।

इमो हीति ।
कस्मै कामायेति ।
पथ इति ।
ओमिति होवाच । न नु वस्तत्स्वर्ग्यमिति ।
अथ ह चमसमवेक्षांचक्रे ।
स होवाचाश्नीथ मांसा३मिति ।
अश्नीमो हीति ।
कस्मै कामायेति ।
चक्षुषश्च प्राणानां चेति ।
ओमिति होवाच । नो वाव वस्तत्स्वर्ग्यमिति ।
अथ ह चमसमेवावेक्षांचक्रे ।
स होवाचोऽपेथ स्त्रिया३ इति ।
उपेमो हीति ।
कस्मै कामायेति ।
प्रजायै संतत्या अव्यवच्छेदायेति ।
ओमिति होवाच । नो वाव वस्तत्स्वर्ग्यमिति ।
अथ ह चमसमेवाचक्षांचक्रे ।
स होवाच वदथानृता३मिति ।
वदामो हीति ।
कस्मै कामायेति ।
स्त्रीकाम्या वा नर्मकाम्या वा सखीकाम्या वेति ।
ओमिति होवाच २७०

उत्तिष्ठत । कामान्ब्रूध्वं । नो वाव वस्तस्याशास्ति यदमुं लोकं जयेतेति ।
अथ ह प्रेणी सौमाहितः पापक आस ।
स होवाच सप्तानामेव स्यो बस्तानां दुर्वृषतां वृणीते ।
यां यां वच्छाब्रूवीय । सा सा त्यं कामयतादिति ।
अथ ह मधुच्छन्दा वैश्वामित्र उवाच ब्राह्मणमुखमेवाहं वृणा इति ।
अथ हासितो दैवल उवाचैतमेवाहं चमसमवेक्षा इति ।

स होवाचैष एवैषामेको व्रतयति ।
तं दैवावेद्व्यैतत्साम ददर्श ।
तेनास्तुत ।
राये अग्ने महे त्वा दानाय समिधीमहि ।
ईळिष्वा हि महे वृषं द्यावा होत्राय पृथिवी
इति ।
द्यावापृथिवी सर्व इमे लोकाः ।
ततो वै स सर्वानिमाँल्लोकाननुसमचरत् ।
स ह पूर्वाह्ण एव देवानां समित्यामास । मध्यन्दिने मनुष्याणां द्रुपदस्य वार्द्धविष्णस्य । अपराह्णे पितृणाम् ।
तदेतत्स्वर्ग्यं साम ।
सर्वानिमाँल्लोकाननुसंचरत्य् । अश्नुते स्वर्गं लोकं य एवं वेद ।
यद्वसितो दैवलोऽपश्यत् । तस्मादासितमित्याख्यायते २७१

अथ साध्रं सिद्ध्या एव ।
तन्मध्येनिधनं भवति प्रतिष्ठायै ।
समुद्रं वा एतेनारम्भणं प्रप्लवन्ते य आर्भवं पवमानमुपयन्ति ।
तद्यन्मध्येनिधनं भवति प्रतिष्ठित्या एव ।
देवा वा अकामयन्त कृतंकृतं नस्सिध्येदिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तेषां कृतंकृतमसिध्यत् ।
कृतंकृतं नस्सिध्येदिति सत्रमासते ।
कृतंकृतं हैवैभ्यस्सिध्यति ।
यद्वैवैषामेतेन साम्ना कृतंकृतमसिध्यत्तस्मात्साध्रमित्याख्यआयते ।
सध्रिर्वैरूपः पशुकामस्तपोऽतप्यत ।
स एतत्साम्पआश्यत् ।
तेनास्तुत ।
स एतामिळामुपैत् ।
पशवो वा इळा ।

ततो वै स पशूनवारुन्द्ध ।
तदेतत्पशव्यं साम ।
अव पशून्रुन्द्धे बहुपशुर्भवति य एवं वेद ।
यदु सध्रिर्वैरूपोऽपश्यत्तस्मात्साध्रमित्याख्यायते २७२

अथाकूपारम् ।
अकूपारो वै कश्यपः कलिभिस्सह समुद्रमभ्यवैषत् ।
तस्मिन्प्रतिष्ठामैच्छत् ।
स एतत्सामापश्यत् ।
तेनास्तुत ।
ततो वै स समुद्रे प्रतिष्ठामविन्दतेमामेव पृथिवीम् ।
ततो ह स्म वै तस्य कलयः पृष्ठ आसते ।
तदेतत्प्रतिष्ठासाम ।
प्रतितिष्ठति य एवं वेद ।
समुद्रो वै छन्दोमाः ।
कश्यपो वै समुद्रमतिपारयितुमर्हति ।
तद्यदत्राकूपारं भवति समुद्रस्यैवातिपारणाय ।
यद्वकूपारः कश्यपोऽपश्यत् । तस्मादाकूपारमित्याख्यायते ।
अथैता द्विपदो भवन्त्युक्तब्राह्मणाः ।
ता एता भवन्ति
पवस्व सोम महे दत्ताये
ति ।
महद्ध्येतदहर्यदष्टाचत्वारिंशम् ।
तासु विधर्मोक्तब्राह्मणम् ।
तच्चतुरत्तरणिधनं भवति चतुष्पदा वै पशवः ।
पशवश्छन्दोमाः पशूनामेवावरुद्ध्यै ।
उपो षु जातमप्तुरम्
इति जनद्वतीर्भवन्ति ।
जनद्वद्वै जगत्यै रूपम् ।
जागतमेतदहः ।

गोभिर्भगं परिष्कृतम् ।
इन्दुं देवा अयासिषुः
अर्षा नस्सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
वर्धा समुद्रमुक्थ्यमिति गोमतीः पशुमतीर्भवन्ति । पशूनामेवावरुद्ध्यै ।
पशवो हि छन्दोमाः ।
तमिद्वर्धन्तु नो गिर
इति वृद्धं ह्येतदहर्यदष्टाचत्वारिंशम् २७३

तासु श्रुधीयम् ।
प्रजापतिर्यज्ञमसृजत ।
तं देवेभ्यः प्रायच्छत् ।
स क्षयाद्बिभ्यत्प्राद्रवत् ।
ते देवा अकामयन्त शृणुयान्न इति ।
त एतत्सामापश्यन् ।
तेनैनं श्रोधियेत्यन्वह्वयन् ।
सोऽशृणोत् ।
तमब्रुवन्नभि न आवर्तस्वेति ।
क्षयाद्वै बिभमीति ।
नेत्यब्रुवन् ।
तस्मै वै मे श्रद्धां कुरुतेति ।
तस्मै श्रोधियेत्येव श्रद्धामकुर्वन् ।
तमेह्या इत्येव न्यह्वयन्त ।
ततो वै तेभ्यो यज्ञो नोदक्रामत् ।
तत एवानुपावर्तत ।
उक्रान्त इवैतर्हि यज्ञो भवति नवमेऽहन् ।
तद्यदत्र श्रुधीयं भवति । समेवैनमेतेन यज्ञं निह्वयन्ते ।
तस्माच्छ्रोधियेत्येव प्रथमायां कुर्याच्छ्रोधेमेत्युत्तरयोः ।
अथो यस्मै जीवातुं कामयेत । तमेतनैव निह्वयेत २७४

अथ यज्ञायज्ञीयमुक्तब्राह्मणम् ।

अथ दैवानीकम् ।
देवासुरा अस्पर्धन्त ।
ते देवा अकामयन्ताग्निनैवातीकेनासुराञ्जयेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
भद्रो नो अग्निराहुत
इत्यग्निमेवानीकमकुरुत ।
भद्रा रातिस्सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः
भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः ।
इति समत्स्वेवैनानसहन्त ।
अव स्थिरा तनुहि भूरि शर्धताम्
इति यदेवैषां वीर्यं यद्बलमासीत्तदेतेनावाघ्नन् ।
वनेमा ते अभिष्टय
इत्येवैनानभ्यतिष्ठन् ।
ततो वै तेऽग्निनैवानीकेनासुरानजयन् ।
तदेव दैवानीकस्य दैवानीकत्वम् ।
तदेतद्विजिति भ्रातृव्यहा साम ।
विजियते हन्ति द्विषन्तं भ्रातृव्यं य एवं वेद २७५

अथेध्मवाहम् ।
ऋषयो वै स्वर्गं लोकं यन्त इध्मवाहं समिद्धारं परेतमरण्य एकमजहुः ।
सोऽकामयतानूत्पतेयं स्वर्गं लोकं प्रतिसत्रिभिस्संगच्छेयेति ।
स षद्धत हन्त प्रति सत्रिण एव स्तवानि ।
त एव मा स्तुतास्तथा करिष्यन्ति यथैषामुपश्रोष्यामीति ।
स एतं तृचमपश्यत् ।
तेनैनानस्तौदा घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा सखा
बृहन्निदिध्म एषां भूरि शस्तं पृथु स्वरुः ।
येषामिन्द्रो युवा सखा

अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः ।
येषामि द्रो युवा सखा
इति ।
तेऽस्मै स्तुतास्तथाकुर्वन्यथैषामुपाश्रोषत् ।
तेषां ह कशानां वदन्तीनामुपशुश्राव ।
स एतत्सामापश्यत् ।
तेनास्तुत २७६

इहैवा शृरव एषां कशा हस्तेषु याद्वादान् ।
नि यामैश्चित्रामृञ्जताइ
नि यामैश्चित्रं चित्रमार्ञ्जातायि एहि या औहो तमेहि यौ हो एहि यौ हो वा
एही त्येव स्वर्गे लोके उपाह्वयन्त ।
ततो वै स प्रतिसत्रिभिस्समगच्छत ।
स एतेनैव साम्ना स्तुत्वा स्वर्गं लोकमारोहत् ।
आ घा ये अग्निमिन्धातायि स्तृणन्ति बर्हिरानुषक् ।
येषामिन्द्रो युवा इहा मवावुवो वा साखो हा
इत्येव स्वर्गं लोकमन्वारोहत् ।
तदेतत्स्वर्ग्यं साम ।
अश्नुते स्वर्गं लोकं य एवं वेद ।
यद्विध्मवाहोऽपश्यत्तस्मादैध्मवाहमित्याख्यायते ।
अथ त्रैककुभमुक्तब्राह्मणं त्रीन्द्रियं साम ।
षन्द्री ऋच षन्द्रं सामेन्द्र इति निधनं भवति ।
त्रीणि पुरुष इन्द्रियाण्यात्मा प्रजा पशवः ।
तान्येवैतेनात्मन्परिगृह्णीते ।
गायन्ति त्वा गायत्रिणो अर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे
इति यद्वै शतवत्सहस्रवत्तच्छन्दोमानां रूपम् ।
पशवो वै छन्दोमाः २७७

तासूद्वंशीयमुक्तब्राह्मणम् ।

तस्य पुरस्तान्निधनस्य प्रतिहारमुपयन्ति ।
प्रस्तावप्रतिहाराभ्यां वै यजमानो धृतः ।
अतीता इवैतर्हि भवन्ति ।
तद्यत्पुरस्तान् निधनस्य प्रतिहारमुपयन्त्यनतिपादायैव ।
तत्स्वारं भवति ।
अभि दशममह स्वरति ।
स्वारमेतद्भवति ।
स्वरेण श्वो भूते प्रतिपद्यन्ते ।
स यथा समात्समं संक्रामेद् । यथा प्राणेन प्राणं संदध्यात् । तादृक्तत्
२७८

पूर्वैरहोभिर्वाचं विप्रयुञ्जते ।
तां यदसंपाद्योत्तिष्ठेयुर्व्यृद्धेनोत्तिष्ठेयुः ।
तामेवैतत्संपादयन्ति ।
अन्वहं वा एते वरुणस्य पाशे बध्यन्ते ये यजन्ते ये सत्रमासते ।
यद्यत्प्रत्यपक्रामन्तो यन्ति वरुणस्य पाशानेवैतद्द्विष्यमाणा यन्ति ।
स्तोत्रियैर्वा इतो रेतो दधतो यन्त्य् । अनुरूपैरत्र प्रतिपद्यन्ते । प्र
तज्जनयन्ति ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
प्रायणीयेनैवाह्ना द्वादशाहो युज्यते दशमेनाह्ना विमुच्यते ।
येन वै योक्त्रेणाश्वमश्वतरं युञ्जन्ति तेनैवैनं पुनर्विमुञ्चन्ति ।
तद्या अमूः पुरस्तान्नव स्तोत्रीयास्ता एवैतदुपरिष्टात् ।
शम्या उदस्यन्ति ।
तस्मात्पशुर्यथैव युज्यते तथा विमुच्यते ।
तस्मादु योगक्षेमः कल्पते ।
यान्प्रायणीयस्याह्नस्तृचान्विच्छिन्दन्ति २७९

क्व ते संतायन्त इत्याहुः ।
दशमेऽहन्निति ब्रूयात् ।
तृचैरेकर्चानुभयतस्संतन्वन्ति । प्राणानामेव संतत्या अव्यवच्छेदाय ।

अभि वा एता अन्यान्यस्यै लोकं ध्यायन्ति ब्रह्म क्षत्रस्याभिध्यायति । क्षत्रं विशो । विड्ब्रह्मणः ।
ता अन्यान्यस्यै लोकमभिध्यायन्तीः कामं गमयन्ति ।
यत्काम एना आहरते समस्मै स काम ऋध्यते प्रसृतछन्दा वै प्रथमस्त्रियहः ।
तेन सोऽयातयामा क्रियते ।
वि द्वितीयस्य छन्दांसि पर्यूहन्ति ।
तेन द्वितीयस्त्रियहोऽयातयामा क्रियते ।
वि तृतीयस्य छन्दांसि पर्यूहन्ति ।
तेनैव तृतीयस्य त्रियहोऽयातयामा क्रियते २८०

गायत्रमुखो वै प्रथमस्त्रियहः ।
तस्मादयमग्निरूर्ध्वो दीदाय ।
गायत्रमध्यो द्वितीयस्त्रियहः ।
तस्मादयं वायुस्तिर्यङ्पवते ।
गायत्रोत्तमस्तृतीयस्त्रियहः ।
तस्मादसाववाङादित्यस्तपति ।
देवासुरा अस्पर्धन्त ।
तेऽब्रुवन्यो नस्त्रिरनवानं गायत्र गायति स न इमांश्च लोकान्संजयति प्राणापानव्यानांश्चेति ।
सोऽयास्य आङ्गिरसस्त्रिरनवानं गायत्रमगायत् ।
तेनेमांश्च लोकान्समजयत्प्राणापानव्यानांश्च ।
सं इमांश्च लोकाञ्जयति प्राणापानव्यानांश्च य एवं विद्वांस्त्रिरनवानं गायत्रं गायति ।
यो वा अग्निष्टोमेन दशाहं कल्पमानं वेद कल्पतेऽस्मै प्रातस्सवनेनैव प्रथमस्त्र्यहः । कल्पते माध्यन्दिनेन द्वितीयस् । तृतीयसवनेन तृतीयोऽग्निष्टोमसाम्नैव दशममहः कल्पते ।
कल्पतेऽस्मै य एवं वेद २८१

अथैतान्याप्रीऋ आज्यानि भवन्ति ।

प्रजापतिः प्रजा असृजत ।
स सृष्ट्वा रिरिचानोऽमन्यत ।
स एतान्याप्रीराज्यान्यपश्यत् ।
तैरात्मानमाप्रीणीतायातयामतायै ।
रिच्यन्ते इव वा एते य एतदहरागच्छन्ति ।
तद्यदेतान्याप्रीऋ आज्यानि भवन्त्यात्मानमेवैतैर्यजमाना
आप्रीणतेऽयातयामतायै ।
अनिरुक्तान्याज्यानि भवन्ति छन्दसामनभिधर्षाय । पापवस्यसस्य विवक्त्यै
।
वि पाप्मना विच्यते य एवं वेद ।
षन्द्राग्नमुत्तमं पदं निराह छन्दसामप्रणाशाय यज्ञस्यानुख्यात्यै ।
अनुख्यातनैव यज्ञेन स्वर्गं लोकं समश्नुवते ।
तदाहुर्यत्सर्वेभ्योऽहोभ्यो दशममहस्संमरन्त्य् । अथ केनैषां छन्दोमा
अनन्तरिता भवन्तीति ।
स्तोमेनेति ब्रूयात् ।
चतुर्विंशं सप्तममहर्भवति । चतुर्विंशं दशममहः ।
अथो यदेवैतत्समय्येकमाज्यं भवति तेनो एवेति २८२

उच्चा ते जातमन्धसे
त्युद्वतीरुत्थानीयेऽहन्भवन्त्यथो स्वर्गस्यैव लोकस्याभ्युत्क्रान्त्यै ।
स्वर्गो ह्येष लोको यद्दशममहः ।
स न इन्द्राय यज्यवे वरुणाय मरुद्ध्य
इति मरुत्वतीर्भवन्ति ।
मरुत्वद्वै मध्यन्दिनस्य रूपम् ।
मध्यन्दिनस्यैव तद्रूपान्न यन्ति ।
एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
सिषासन्तो वनामहे
इति सिषासद्वतीर्भवन्ति ।
सिषासन्तो ह्येवैतेनाह्ना स्वर्गं लोकं गच्छन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।

अथामहीयवम् ।
प्रजापतेर्वा आमहीयवम् ।
प्राजापत्यमेतदहः ।
तद्यदत्रामहीयवं प्राजापत्येऽहन्क्रियतेऽहरेव तद्रूपेण समर्धयन्ति ।
तेनैभ्यस्समृद्धेन स्वायां जनतायामृद्धुकं भवति ।
अथाजीकमुज्जित्यै ।
देवासुरा यज्ञ आजिमायन् ।
ते देवा अकामयन्तोदिममाजिं जयेमेति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै ते तमाजिमुदजयन् ।
आजिमिवैते यन्ति य एतदहरागच्छन्ति ।
तद्यदत्राजीकं भवत्युज्जित्या एव ।
उज्जयति य एवं वेद ।
तद्वा आजीकमिति कवत्प्राजापत्यं सामाह्नो रूपेण समृद्धम् ।
यत्र वा अहारूपेण समर्धयन्ति सं तत्रर्ध्यत ।
समस्मा ऋध्यते य एवं वेद २८३

अथाभीकम् ।
देवा वा अकामयन्ताभीकं नश्शिरमाप उपस्पृशेयुरिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तानभीकं शिवमाप उपास्पृशन् ।
तदाभीकस्याभीकत्वम् ।
अभीकं ह वा एनं शिवमाप उपस्पृशन्ति य एवं वेद ।
ऋषयो वै तपस्तेपाना अशोचन् ।
तेऽकामयन्ताभीकं नश्शिवमाप उपस्पृशेयुरिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ततो वै तानभीकेऽभ्यवर्षत् ।

तद्वेवाभीकस्याभीकत्वम् ।
तदापो वै शान्तिः ।
शुशुचाना इवैते तेपाना इव भवन्ति य एतदहरागच्छन्ति ।
तद्यदत्राभीकं भवति शुच एवापहत्यै ।
तद्वा आभीकमिति कवत्प्राजापत्यं सामाह्नो रूपेण समृद्धम् ।
यत्र वा अहारूपेण समर्धयन्ति सं तत्रर्ध्यते ।
समस्मा ऋध्यते य एवं वेद २८४

अथैताः
प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्
इति सतोबृहतयो भवन्ति ।
अनुष्टुब्वै यज्ञमसृजत ।
वाग्वा अनुष्टुप् ।
प्रजापतिर्वा अनुष्टुप्छन्दः ।
सोऽब्रवीद्यज्ञं सृष्ट्वा छन्दांसि पुत्रका वैन्दध्वमिति ।
तान्येतयाविन्दन्त ।
यत्त्रिपदा तेन गायत्री ।
उष्णिक्ककुभौ तयाविन्दन्त ।
यद्द्वादशाक्षराणिपदानि तेन जगती ।
तेनो एवानुष्टुप् ।
अक्षरैरेव बृहत्यविन्दत ।
यद्दोहवती तेन पंक्तिः ।
आयतनेन त्रिष्टुप् ।
यद्विश्ववती तेन सर्वाणि छन्दांसि ।
तान्येतयैवाविन्दन्त ।
विन्दते य एवं वेद ।
सर्वेषां वा एषा छन्दसां रसस्तेजस्संभृतम् ।
सर्वेषामेवैतच्छन्दसां रसे तेजस्यपराजिते छन्दसि यज्ञस्यान्ततः प्रतितिष्ठन्ति
२८५

ताः प्रत्नवतीर्भवन्ति ।
प्रजापतिर्वै प्रत्नः ।
प्रजापतावेव तत्प्रतितिष्ठन्ति ।
अथो स्वर्गो वै लोकः प्रत्नः ।
स्वर्ग एव तल्लोके प्रतितिष्ठन्ति ।
तासां सर्वासां समावदक्षराणि पदानि भवन्ति ।
तद्यत्समावदक्षराणि पदानि भवन्ति तत्सतोबृहतीनां सतोबृहतीत्वम् ।
सर्वतो ह वै बृहद्भवति य एवं वेद ।
तदु होवाच यामनो श्रातलायनो यदा वा एतदहरागच्छन्त्यथ मुह्यन्ति ।
अतोऽन्या बृहतीः कुर्वते ।
पुनानस्सोम धारये
त्येव बृहती कार्या ।
एषा वै ज्ञाता बृहती ।
यद्ध वै बहवो यन्तो ज्ञातमुखं कृत्वा यन्ति सर्वे वाव ते ज्ञाता भवन्ति ।
तद्यत्
पुनानस्सोम धारये
ति बृहती भवति तेनैवैतदहर्ज्ञातं क्रियते ।
भूयांसि तु रूपाण्यपराध्यन्ते ।
इतराण्येव भूयांसि रूपाणि २८६

तदाहुर्न बुभूषन्भूतबृहतीभि स्तुवीत ।
भूत एवैताभि स्तुवीत न बभूषन्निति ।
भूता इव वा एता यासां द्वादशाक्षराणि पदानि ।
अथेमा भविष्यद्बृहतयः पुनरादायेन बृहत्यो भवन्ति ।
तस्माद्भूत एव भूतबृहतीभि स्तुवीत न बुभूषन्निति ।
तदु वा आहुर्यावद्वै कृत्वो यजते तावद्बुभूषति तावत्कामयते श्रेयान्स्यां श्रेयान्स्यामिति ।
तस्मादुभयीरेव कार्या एतयोरुभयोः कामयोरुपाप्त्या इति २८७

उत्सेधनिषेधावेव सतोबृहतीषु स्यातां । यज्ञायज्ञीयं भविष्यद्बृहत्याम् ।

तथा हाभ्यावर्ता भवन्त्यपराचीः ।
तदाहुर्न चतुर्थाय छन्दसे माध्यन्दिनः पवमानः ।
तत्स्थानश्चतुर्थमिव वा एतच्छन्दः क्रियत इति ।
तद्यद्बृहतीतरा भवति बृहतीतरा तेन समानच्छन्दः ।
तासूत्सेधनिषेधौ ।
उत्सेधेन वा अङ्गिरसः पशूनुत्सिध्य निषेधेन निषिध्योदतिष्ठन् ।
उत्सेधेनैवैतत्पशूनुत्सिध्य निषेधेन निषिध्य उत्तिष्ठन्ति २८८

तावन्तरा यज्ञायज्ञीयं भवति ।
पशवो वै यज्ञायज्ञीयम् ।
एतांस्तान्पशूनुत्सिध्य च निषिध्य चोत्तिष्ठन्ति ।
प्रजापतेर्वा एतौ प्राणापानौ ।
यदुत्सेधनिषेधो भवतः प्राणापानाभ्यामेव तत्समृध्यन्ते ।
पापवस्यसस्य ह खलु वा एते विहारणं सामनी ।
राजसभमेतद्यद्दशमह्नाम् ।
उच्च वै पापीयांसं सभायामतिवदन्तं सेधन्ति नि च सेधन्ति ।
तद्यदुत्सेधनिषेधौ भवतः पापवस्यसस्यैवोत्सिद्ध्यै च निषिद्ध्यै च ।
वाग्वै यज्ञायज्ञीयम् ।
तदन्तरोत्सेधनिषेधौ भवति ।
आत्मा वै वाक् ।
प्राणापानावुत्सेधनिषेधौ ।
तद्यद्यज्ञायज्ञीयमन्तरोत्सेधनिषेधौ भवति । प्राणापाणापानावुत्सेधनिषेधौ ।
तद्यद्यज्ञायज्ञीयमन्तरोत्सेधनिषेधौ भवति । प्राणापानाभ्यामेवैतदुभयत
आत्मानं परिगृह्णते ।
तस्मात्प्राणापानाभ्यां वाक्परिगृहीता २८९

तेजो वै यज्ञायज्ञीयम् । आत्मा मध्यन्दिनः ।
तद्यद्यज्ञायज्ञीयं मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्नेवैतत्तेजः प्रतिष्ठापयन्ति ।
यज्ञायज्ञीयेन वै पूर्वेष्वहस्सु गर्भान्दधतो यन्ति ।
तद्दशमेऽहन्योनेश्च्यावयन्ति ।

तस्माद्दशमास्या गर्भा योनेश्च्यवन्ते प्रजात्यै ।
तं मध्यन्दिनमभि प्रत्याहरन्ति ।
आत्मा वै मध्यन्दिनः प्रजैषा ।
तद्यद्यज्ञायज्ञीयं मध्यन्दिनमभि प्रत्याहरन्त्य् । आत्मन्नेवैतत्प्रजां प्रतिष्ठापयन्ति ।
मध्यन्दिनाद्वै देवा यज्ञायज्ञीयेनोर्ध्वा स्वर्गं लोकमुदक्रामन् ।
तद्यदुष्णिक्ककुभावुत्तर भवतो । बृहती पूर्वा पुरुष छन्दसं ककुप् । स्वर्गो लोको बृहती स्वर्ग एव तल्लोके प्रतिष्ठाय स्वर्गं लोकमारोहन् ।
देवासुरा यज्ञ आजिमायन् ।
दशमस्याह्नः ।
ते यज्ञायज्ञीयमेव काष्ठामकुर्वत ।
ते देवा अकामयन्त वयमिममाजिमुज्जयेमेति ।
ते यज्ञायज्ञीयम्मध्यन्दिनमभि प्रत्याहरन्न् । अतोऽन्तिकादुज्जेष्याम इति ।
एतदु ह वै देवानां देवक्षेत्रं यत्पवमानः ।
ततो वै ते तमाजिमुदजयन् ।
आजिमिवैते यन्ति य एतदहरागच्छन्ति ।
तद्यदत्रयज्ञायज्ञीयं भवत्युज्जित्या एव ।
उज्जयति य एवं वेद २९०

पशवो वै यज्ञायज्ञीयम् ।
आत्मा मध्यन्दिनः ।
पशुमान्ह्येव यज्ञंयज्ञमाहरते ।
तद्यद्यज्ञायज्ञियम्मध्यन्दिनमभि प्रत्याहरन्ति आत्मन्नेवैतत्पशून्प्रतिष्ठापयन्ति ।
अथैता भवन्त्या जागृविर्विप्र ऋतं मतीनामित्यावतीरुत्थानीयेऽहन् ।
यत्प्रवतीः कुर्युः पराञ्चोऽतिपद्येरन् ।
तद्यदावतीर्भवन्त्यनतिपादायैव ।
तदाहुरपेव वा एते भ्रंशन्ते य आवतीरुत्थानीयेऽहन्कुर्वन्तीति ।
तद्यत्
सोमो मीढ्वमभि नो ज्योतिषावीद्
इति भवत्यभिक्रान्त्या एवानपभ्रंशाय ।

तासु गौरिवीतम् ।
प्रजा वै पशवो गौरिवीतम् । आत्मा मध्यन्दिनः ।
तद्यद्गौरिवीतं मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्नेवैतत्प्रजां पशून्प्रतिष्ठापयन्ति ।
श्वस्तनं वै गौरिवीतम् । आत्मा मध्यन्दिनः ।
तद्यद्गौरिवीतं मध्यन्दिनमभि प्रत्याहरन्त्यात्मन्नेवैतच्छ्वस्तनं प्रति ष्ठापयन्ति
।
रसो वै गौरिवीतम् । आत्मा मध्यन्दिनः ।
तद्यद्गौरिवीतं मध्यन्दिनमभिप्रत्याहरन्त्य् । आत्मन्नेवैतद्रसं प्रतिष्ठापयन्ति
२९१

अथ रथन्तरम् ।
ब्रह्म वै रथन्तरम् ।
ब्रह्मण्येवैतत्प्रतितिष्ठन्तो यन्ति ।
तद्गायत्रीषु रथन्तरं भवति । योन्यामेवैतद्रेतः प्रतिष्ठायन्ति ।
अनुष्ठयास्य रेतस्सिक्तं प्रजायते य एवं वेद ।
गायत्रं ह खलु वै रथन्तरं गायत्री छन्दः ।
तद्यद्गायत्रीषु रथन्तरं पृष्ठं भवति । स्वेनैवैनं तदायतनेन समर्धयन्ति ।
तेनैभ्यस्समृद्धेन स्वायां जनतायामृद्धुकं भवति ।
त्रीणि वा एतानि सम्यञ्चि संधीयन्ते गायत्री छन्दश् । चतुर्विंश स्तोमो ।
रथन्तरं साम ।
तद्यदेतानि सम्यञ्चि संधीयन्ते समृद्ध्या एव ।
समस्मा ऋध्यते य एवं वेद २९२

एते ह खलु वा अर्क्योदामनीये एते रथन्तरस्यान्तरे व्यतिषक्ते ।
एताभ्यं एवैतद्द्विषन्तं भ्रातृव्यमुपोभ्योत्तिष्ठन्ति ।
तदाहुर्व्यूढमेतदहा३स्समूढा३मिति ।
उभयमिति ब्रूयाद् । व्यूढं च समूढं चेति ।
सामभिर्व्यूढं छन्दोभिस्समूढमिति ।
एता भवन्ति
मा चिदन्यद्वि शंसते

ति मासानेवैतदर्धमासानभिवदति ।
अथो तेषामेव प्रजापतिमनु प्रजायत ।
इन्द्रमिति स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत
अवक्रक्षिणं वृषभं यथाजुवं गां न चर्षणीसहम् ।
इति गोमतीः पशुमतीर्भवन्ति पशूनामेवावरुद्ध्यै ।
तासु मैधातिथमुक्तब्राह्मणम् ।
उदु त्ये मधुमत्तमा
इत्युद्वतीरुत्थानीयेऽहन्भवन्त्य् । अथो स्वर्गस्यैव लोकस्याभ्युत्क्रान्त्यै ।
स्वर्गो ह्येष लोको यद्दशममहः २९३

तास्वभीवर्तः ।
देवासुरा अस्पर्धन्त ।
ते देवा अकामयन्ताभीमानसुरान्भवेमेति ।
त एतमभीवर्तमपश्यन् ।
तेनासुरानभ्यवर्तन्त ।
यदभ्यवर्तन्त तदभीवर्तस्याभीवर्तत्वम् ।
तद्यदत्राभीवर्तो भवति वज्रो वा अभीवर्तो वज्रेणैव तद्द्विषन्तं
भ्रातृव्यमभिवृत्योत्तिष्ठन्ति ।
तस्यैकाक्षरं निधनं भवति ।
एकाक्षरा वै वाक् ।
प्रतिकूल इव वा इत स्वर्गो लोकः ।
स्वर्गो ह्येष लोको यद्दशममहः ।
तद्यदेकाक्षरं निधनं भवति यथा दृढां मेथीं निहन्यात्तादृगेवैतदनपभ्रंशाय ।
अथ कळेयम् ।
अग्निर्वै रथन्तरम् ।
विश्वेदेवाः कालेयम् ।
अथैष स्वर्ग एष लोको विश्व एव देवाः ।
स्वर्ग एव तल्लोके विश्वेषु देवेषु प्रतितिष्ठन्ति २९४

स्वादिष्टया मदिष्टये

त्यार्भवस्य पवमानस्य मद्वतीर्गायत्र्यो भवन्ति ।
रसो वै मदः ।
धीतमिवैतद्यत्तृतीयसवनम् ।
तद्यदेता मद्वतीर्भवन्ति । रसमेवास्मिन्नेतद्दधत्य् । षवैनदेतेन प्याययन्ति ।
तासु गायत्रमुक्तब्राह्मणम् ।
अथ संहितं द्व्यक्षरणिदह्नं प्रतिष्ठायै ।
द्विपाद्वै यजमानः प्रतिष्ठित्यै ।
तस्यर्चा निधनमुपयन्ति ।
पशवो वा ऋक् । पशवो रथन्तरं । पशूनामेवावरुद्ध्यै ।
अथोष्णिक्ककुभौ ।
उष्णिक्ककुब्भ्यां वा इन्द्रो वृत्राय वज्रं प्राहरत् ।
तमस्तृणुत ।
वज्रो वा उष्णिक्ककुभौ ।
वज्रेणैव तद्द्विषन्तं पाप्मानं भ्रातृव्यं स्तृणुते य एवं वेद ।
ककुभि पराक्रमतोष्णिहा प्राहरत् ।
तस्मात्ककुभो मध्यमान्यक्षराणि भूयिष्ठानि ।
पराक्रममाणो ह्यस्या अक्षराणि समौहत् ।
तस्मादुष्णिह उत्तमान्यक्षराणि भूयिष्ठानि ।
परो गुरुरिव हि वज्र । आरम्भणतोऽणीयान् ।
सा ककुबब्रवीद्विलिष्ठा वा अहमस्मीति ।
पराक्रममाणो वै मेऽक्षराणि समौहीत् । पूर्वां मां प्रयुञ्जतामिति ।
अथोष्णिगब्रवीदथ वै मां पूर्वामाचक्षन्ता इति ।
तथेति ।
तस्मिन्समपादयेताम् ।
पूर्वप्रयोगमन्यावृणीत । पूर्वा ख्यानमस्या ।
तस्मादेने एवं प्रयुञ्जते ।
तस्मादुष्णिक्ककुभावित्याख्यायते २९५

ता एता भवन्ति

पवस्व मधुमत्तम । इन्द्रमच्छ सुता इम
इति ।
ऋजीषं वा एतद्दुग्छं धीतं यातयाम यत्तृतीयसवनम् ।
तस्मादिन्द्रो बीभत्समान उदक्रामत् ।
धीतमिव ह्यासीत् ।
तस्मै वै देवाः पवस्वे त्येवापवयन् ।
मधुमत्तम
इति मधुमदकुर्वन् ।
इन्द्राय सोम क्रतुवित्तमो मदः ।
महि द्युम्नतमो मदः
इत्यभिपूर्वमेवास्मै मद्वदकुर्वन् ।
इन्द्रमच्छ सुता इम
इति यथाभिवत्यानयेदेवं वा एतत्पदम् ।
पावमान्यस्सत्य षन्द्रियो भवन्ति वीर्यवतीः ।
तस्मादेता एवोष्णिक्ककुभः कार्याः ।
तासु सभमुक्तब्राह्मणम् ।
अथ पौष्कलमुक्तब्राह्मणम् ।
अथैता भवन्ति
पर्यू षु प्र धन्व वाजसातय
इति पिपीलिकामध्यानुष्टुभः परिवतीरन्तस्य रूपम् ।
अन्तो वा अनुष्टुप्छन्दसाम् ।
आनुष्टुभमेतदहः २९६

इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मन्यमानः परां परावतमगच्छत् ।
तदनुष्टुब्वै परा ।
परावत्स तामेव प्राविशत् ।
तस्यै द्वादशाक्षराणि प्राञ्च्युदौहद्द्वादशोर्ध्वानि ।
अथ याष्टाक्षरा मध्ये गायत्री तां प्राविशत् ।
स तामेव प्राविशत् ।
तत्तस्यै द्वादशाक्षराणि ।

ब्रह्मा गायत्री ।
ब्रह्मैव तन्मध्यतः प्राविशत् ।
स एतमेव संवत्सरमुभयतः पर्यौहत ।
इन्द्रग्रहो वा एता ऋचः ।
इन्द्रग्रहमेवैतत्प्रपद्योत्तिष्ठन्ति ।
तस्मादु हैना अभिचरन्वा भ्रातृव्यवान्वा कुर्वीत ।
इन्द्रग्रहो वा एता ऋचः ।
इन्द्रग्रहमेवैतत्प्रपद्य द्विषन्तं भ्रातृव्यमभिभवति २९७

अभये ह खलु वा एष दीक्षतेऽभये यजतेऽभय उत्तिष्ठति य एवं विद्वानेताभि ऋग्भि स्तुते ।
तामेतां परोक्षमनुष्टुभं कुर्वन्ति ।
यत्प्रत्यक्षमनुष्टुभं कुर्युः परां परावतं यजमाना गच्छेयुर् । न प्रतितिष्ठेयुः ।
तद्यत्परोक्षमनुष्टुभं कुर्वन्ति प्रतिष्ठित्यै ।
तासु श्यावाश्वमुक्तब्राह्मणम् ।
तद्वाङ्गिनधनं भवति ।
तदाहुर्यन्ति वा एते तृतीयसवनाद्ये यज्ञायज्ञीयं मध्यन्दिनमभि प्रत्याहरन्तीति ।
तद्यद्वाङ्गिनधनं भवति । तेनैव यज्ञायज्ञीयस्य रूपान्न यन्ति । तेन तृतीयसवनान्न यन्ति ।
तस्मादु हैतत्सामैतस्मादह्नो नान्तरित्यम् ।
सूर्यस्येव रश्मयो द्रावयित्नव
इति सूर्यवतीर्भवन्ति रक्षसामेवापहत्यै ।
मत्सरासः प्रसुपस्साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन
इति न हीन्द्रादृते पवते धाम किं चन ।
उपो मतिः पृच्यते सिच्यते मध्वित्युप वा अयमद्य लोक उपश्च इममेवैतेन लोकमनु प्रजायन्तेऽस्मिन्नेवैतल्लोके पशून्प्रतिष्ठापयन्ति ।
उक्षा मिमाति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत

इति परिवतीर्भवन्त्यन्तस्य रूपम् ।
अन्तो ह्येतदहः २९८

तासु वाजजित् ।
अन्नं वै वाजः ।
यदा वै गौरश्वः पुरुषोऽन्नस्य सुहितो भवत्यथ स वाजी भवति ।
देवासुरा अन्नाद्येऽस्पर्धन्त ।
ते देवा अकामयन्त वृञ्जीमह्यन्नाद्यमसुराणामिति ।
त एतत्सामापश्यन् ।
तेनास्तुवत ।
ते वाजजिगीवा विश्व धनानी त्येवासुराणां यद्धनं ये पशवो
यदन्नाद्यमासीत्तदवृञ्जत ।
तदेव वाजजितो वाजजित्त्वम् ।
तदेतदन्नाद्यस्यावरुद्धिस्साम ।
अवान्नाद्यं रुन्द्धे वृंक्ते द्विषतो भ्रातृव्यस्य यद्धनं ये पशवो यदन्नाद्यं य एवं वेद
।
तद्दशाक्षरणिधनं भवति ।
एकाक्षरणिधनेन वै प्रथममहः कल्पते । दशाक्षरणिधनेन दशमम् ।
तद्यद्दशाक्षरणिधनं दशमेऽहनि भवति । तेनैव दशाहानि कल्पन्ते ।
अथो एतां दशाक्षरामेव विराजमन्नाद्यमवरुद्ध्यान्तत उत्तिष्ठन्ति २९९

द्वादशाहेन वै देवा ऊर्ध्वा स्वर्गं लोकमायन् ।
तानसुरा रक्षांस्यन्वसचन्त ते छन्दांसि पश्चात्तान्यकुर्वत ।
तान्यभिविच्छिदान्ययुद्वक्षरेष्वश्रयन्त ।
तत एतानि नाच्यावयन् ।
तस्मादयुज स्तोमा वीर्यावत्तराः ।
तेषामेषा त्रिष्टुम्निष्कुर्यादपराजयेताम् ।
पराजितं वा एतच्छन्दः ।
पराजित एवैतच्छन्दसि यज्ञस्यान्ततः प्रतितिष्ठति ।
तास्त्रयस्त्रिंशदक्षरा भवन्ति ।

त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वास्वेवैतद्देवतासु यज्ञस्यान्ततः प्रतितिष्ठन्ति ।
स ता विराजो लोमशा भवन्त्यन्नं वै विराड् विराज एवान्नाद्यस्यावरुद्ध्यै ।
ता आग्नेय्यो भवन्ति ।
मुखं मुख्यमेवैतदुद्गातात्मानं च यजमानं च करोति ।
मुख्यो हाग्र्योऽन्नाद श्रेष्ठ स्वानां भवति य एवं वेद ३००

तासु वामदेव्यम् ।
स्तुतशस्त्रयोर्ह खलु वा एषा शान्तिर्यद्वामदेव्यम् ।
यद्ध वै किं च यज्ञस्य मिथ्योल्वणं क्रियते तदेतेनैव शमयित्वोत्तिष्ठन्ति ।
मत्यं वा एतद्यज्ञस्य यद्वामदेव्यम् ।
स यथा स्थूललोष्ठम्मत्येन शम्येदेवमेवैतद्वामदेव्येन सर्वाणि स्तुतशस्त्राणि शमयन्ति ।
प्रजापतिर्ह खलु वा एतत्स्तोत्राणां य वामदेव्यम् ।
यथा ह वा इदं प्रजापतौ सर्वा जातविद्याः प्रतितिष्ठन्त्येवं ह वै वामदेव्ये सर्वाणि स्तोत्राणि प्रतितिष्ठन्ति ।
योनिर्वै वामदेव्यम् ।
तद्दशमेऽहन्योनेश्च्यावयन्ति ।
तस्माद्दशमास्या गर्भा योनेश्च्यवन्ते प्रजात्यै ।
प्राणा वै वामदेव्यम् ।
तदाहुर्वीव वा एते प्राणानिर्ऋध्यन्ते ये यज्ञीयस्य कर्मणोऽतिपादयन्ति ।
यदि वा नातिपादयन्ति ।
को हि तद्वेद यदि तेऽति वा पादयन्ति न वा
तद्यदत्र वामदेव्यं भवति प्राणैरेव तत्समृध्य्नते ।
सद्ध खलु वै वामदेव्यं स्तोत्राणां । सदग्निर्देवतानां । सद्विराट्छन्दसां ।
सत्त्रयस्त्रिंश स्तोमानाम् ।
सत्येवैतत्सन्निधायोत्तिष्ठन्ति ।
सदेव भवन्ति ।
एतां ह खलु वा एतद्द्वादशाहयाजी चतुष्पदीं
वेदासन्दीमविव्याधिनीमन्ततोऽभ्यारोहति वामदेव्यं सामाग्निं देवतां विराजं

छन्दस्त्रयस्त्रिंशं स्तोमम् ।
अभि हैतामारोहति य एवं वेद ३०१

गौरीवितिर्वा एतं शाक्त्यस्त्रयस्त्रिंशं स्तोममपश्यदुभयेषां पशूनामवरुद्ध्यै ये च ग्राम्या ये चारण्याः ।
ततो वै स उभयान्पशूनवारुन्द्ध ।
तद्यत्त्रयस्त्रिंशं स्तोमं नान्तर्यन्ति तस्मात्त्रयस्त्रिंश स्तोमोऽन्ततः क्रियत ।
उभयेषामेव पशूनामवरुद्ध्यै ।
पुरुषो ह वा एष परस्ताद्धितस्तिष्ठति ।
दश वै पुरुषस्य हस्त्या अंशूनामवरुद्ध्यै ।
पुरुषो ह वा एष परस्ताद्धितस्तिष्ठति ।
दश वै पुरुषस्य हस्त्या अंगुलयो । दश पद्या । दश प्राणा । द्वे प्रतिष्ठे । आत्मा त्रयस्तिंशः ।
पराञ्च आरण्याः पशवः प्रेरते ।
तस्मादभ्यासृणतो मृगं श्रयन्ते ।
अभ्यासृणतो ह्येष एतत्क्रियते ।
प्रजापतेर्वा एत एकवीराः पुत्रा । यद्द्वादशाहस्य स्तोमाः ।
तदाहुश्चतुर्विंशमेतदहः ।
तत्सर्वमेव चतुर्विंशं कार्यम् । एतेषांप्रजापतेः पुत्राणामेकवीराणामविलोमायेति ।
यद्वेवैतास्त्रयस्त्रिंशदक्षरा भवन्ति तेन त्रयस्त्रिंशं स्तोमं नान्तर्यन्ति ।
भूयांसि तु रूपाण्यपराध्यन्ते ।
इतराण्येव भूयांसि रूपाणि ।
त्रयस्त्रिंश एव कार्यः ।
त्रयस्त्रिंशद्वै सर्वा देवताः ।
सर्वास्वेवैतद्देवतासु यज्ञस्यान्ततः प्रतितिष्ठन्ति ।
अथो एष वाव दृढः प्रतिष्ठितस्सर्वदेवत्य स्तोमो यत्र त्रयस्त्रिंशः ।
तस्मात्त्रयस्त्रिंश एव स्तोमोऽन्ततः कार्य इति ३०२

सम्पदं ह तु लोभयन्ति ।

ब्रह्मसाम्न एव नव स्तोत्र्या उपादायात्रोपदध्यात् ।
न सम्पदो यन्त्य् । उभयेषु स्तोमेषु प्रतितिष्ठन्ति ये चायुजो ये च युग्मन्तः
।
तद्यथान्तरीषे तिष्ठन्विमुञ्चेदेवमेवैतद्वामदेव्येन सर्वाणि स्तुतशस्त्राणयन्ततो
विमुच्यन्ते ।
तदाहुर्व्युच्या३ं न व्युच्या३मिति ।
न व्युच्यमित्याहुः ।
आजिं वा एते यन्ति य एतदहरागच्छन्ति ।
तेषामेष हीयते य उपहन्यते ।
स यथा हीनमुपादधीत तादृक्तत् ।
यो वै हीनमुपाधत्त उभौ वाव तौ हीयेते ।
अथो प्रजापतिं वावैतेनाह्ना परिवेविषन्ति ।
तद्यन्न व्याहुः को हि श्रेयसः परिवेषणमववदितुमर्हति ।
यो वै श्रेयसः परिवेषणमववदति यया वै स तमार्त्या कामयत तयैनं
निनयति ।
तदाहुः ब्रह्मैव विब्रूयादिति ।
ब्रह्म वै ब्रह्मा ।
ब्रह्मैव तद्यज्ञं व्याह ।
अथो आहुरुद्गातैव विब्रूयादिति ।
प्रजापतिर्वा उद्गाता ।
प्रजापतिरेव तद्यज्ञं व्याह ।
अथो आहुर्यजमान एव विब्रूयादिति ।
यज्ञी वै यजमानः ।
यज्ञ एव तद्यज्ञं व्याह ।
अथो यथाकामं वै स्वं परिवेषणं प्रशास्तीति ।
अथो आहुः प्राङेवोत्क्रम्य क्रोशेदित्यमी अकुर्वतेत्यमी अकुर्वतेति ।
तदेव व्युक्तं चाव्युक्तं चेति ।
तदु वा आहुर्व्युच्यमेव ।
यदव्युच्यमाने तूष्णीमासीरन्विच्छिद्येरन्वै
यज्ञाद्यज्ञीयस्यैवानार्तिरुपेत्याव्युच्यमेवेति ।

तद्यावता व्याह तद्धोत्रे प्राह ।
तद्धोतानुष्टुभमभि संपादयति समिदं दशममहरपादीति ।
संव्याहरन्ति यदेवात्रोनाक्षरासु स्तुवन्ति यदतिरेचयन्ति ।
तदेवैतत्प्रजापतिमभि संपादयन्ति संपरिवेषणं प्रशास्ति ३०३

अपशव्या इव वै युग्मन्त स्तोमा श्लक्ष्णा इव हि समा इव ।
तद्यत्त्रिवृतं स्तोममन्ववस्यन्ति मिथुनत्वायैव प्रजात्यै ।
ऊनातिरिक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते ।
प्र प्रजया पशुभिर्जायते य एवं वेद ।
इयं वै पृथिव्यरिक्षेवा लोकमासीत् ।
साकामयत पृश्निं वर्णं पुष्येयमिति ।
सैतम्मन्त्रमपश्यद्
आयं गौः पृश्निरक्रमीद्
इति ।
ततो वा इयं पृथिवी पृश्निं वर्णमपुष्यत् ।
पृश्निं ह वै वर्णं प्रजया पशुभिः पुष्यति य एवं देव ।
तदाहुरूर्ध्वा वा एते स्वर्गलोकं रोहन्ति ये यजन्ते ।
त ईश्वराः प्रआञ्चोऽतिपत्तोरिति ।
तद्यत्सर्पराज्ञीषु स्तुवन्ति -- इयं वै सर्पराज्ञी -- अस्यामेवतत्प्रतितिष्ठन्ति
।
इयं वै सर्पतां राज्ञी ।
न ह वा एनं सरीसृपं हिनस्ति य एवं वेद ३०४

गायत्रीषु स्तुवन्ति गायत्री वै छन्दसामयातयाम्नयातयामताया एव ।
तिसृषु स्तुवन्ति त्रयो वा इमे लोका -- एषां लोकानां समष्टयै ।
अथो त्रयो वै प्राणापानव्यानाः ।
तानेवैतत्संतत्य तेषु प्रतिष्ठायोदृचमश्नुवते ।
गायत्रं साम भवत्ययातयाम वै गायत्रमयातयामताया एव ।
अथो मनो वै गायत्रम् ।
मनसैवैनत्तत्समृद्धयन्ति । मनसोपावर्तयन्ति । मनसा हिंकुर्वन्ति ।

मनसा प्रस्तौति । मनसादिमादत्ते । मनसोद्गायति मनसा प्रतिहरति ।
मनसोपद्रवति । मनसा निधनमुपयन्त्यसमाप्तस्य समाप्त्यै ।
यद्वै देवा यज्ञस्य वाचा न समाप्नुवंस्तदस्य मनसा समाप्नुवन् ।
तद्यन्मनसा स्तुवन्त्यसमाप्तस्यैव समाप्त्यै ।
रसो वा एतस्याह्नोऽत्यनेदत् ।
तम्मनसैव पर्यगृह्णन् ।
एष वै स रसः ।
तद्यन्मनसा स्तुवन्ति रसस्यानतिनेदाय ३०५

महाव्रतभाजनं वा एता ऋचः ।
स यावन्महाव्रतेनावरुन्द्धे तावदवरुन्द्ध एताभि ऋग्भिस्तुष्टुवानः ।
मनसो वा अन्यदहरासीद्वाचोऽन्यत् ।
तद्यन्मनसोऽहरासीत्तद्देवा संगृह्योर्ध्वा स्वर्गं लोकमुदक्रामन् ।
अथ यद्वाचोऽहरासीत्तदेतदहरभवत् ।
तेनास्मिँल्लोके प्रजया च पशुभिश्च प्रत्यतिष्ठन् ।
तद्यन्मनसा स्तुवन्ति तस्यैवाह्नोऽनुख्यात्यै ।
चतुर्होतॄन्होतानुव्याचष्टे ब्रह्म वै चतुर्होतारः ।
ब्रह्म वा अस्यै स्तोत्रशस्त्राणामाप्तुमर्हति ।
एतान्यु ह वै देवानां गुह्यानि नामानि यच्चतुर्होतारः ।
तान्येव तत्प्रकाशं गमयति ।
तान्येनं प्रकाशं गतानि प्रकाशतां गमयन्ति ।
गच्छति प्रकाशतां य एवं वेद ।
तद्यं ब्राह्मणमलं यशसे सन्तमथ यशो नार्च्छेत्सोऽरण्यं परेत्य ग्रन्थीनुद्ग्रथ्य ।
तेभ्यश्चतुर्होतॄन्व्याचक्षीत । ब्राह्मणं वोपद्रष्टारं कृत्वा ।
एतान्यु ह वै देवानां गुह्यानि नामानि यच्चतुर्होतारः ।
तान्येव तत्प्रकाशं गमयति ।
तान्येनं प्रकाशं गतानि प्रकाशतां गमयन्ति ।
गच्छति प्रकाशतां य एवं वेद ३०६

तूष्णीं स्तुतं वाचानुशंसति ।

तस्माद्यन्मनसाधिगच्छति तद्वाचा वदति ।
तस्मादोषधयो मूलतो जायन्तेऽग्रतः पच्यन्ते ।
तदाहुस्समिष्टेषु पत्नीसंयाजेषु स्तोतव्या३मसमिष्टेषू३ इति ।
असमिष्टेष्वित्याहुः ।
प्रतीचीष्वेवासु तद्गर्भान्दधति ।
स्त्री बलं च ह तु भवति पापवस्यसं च ।
समिष्टेष्वेव स्तोतव्यं पापवस्यसस्य व्यावृत्त्यै ।
अथो ह न तथा स्त्री बलं भवति ।
अथो हासु तत्पराचीष्वेव गर्भान्दधति ।
प्रत्यञ्चश्च वै पराञ्चश्च मनुष्यास्संभवन्ति ।
तस्मात्समिष्टेष्वेव स्तोतव्यमिति ।
औदुम्बरीं समारभन्ते -- ऊर्ग्वा अन्नमुदुम्बर -- ऊर्ज एवान्नाद्यस्यावरुद्ध्यै
।
वाचं यच्छन्ति ।
वाग्वै ब्रह्म ।
वाचमेव तद्ब्रह्म यज्ञमात्मसु यच्छन्ति ।
इह धृतिरिह स्व धृतिर्मैरमो मैरमतिरिति ।
यच्चित्तं या धृतिर्यन्मनो या वाक्तान्येवैतदास्तसु यच्छन्ति ।
यदस्तमिते विसृजेरन्नहर्भ्रातृव्यलोकमुच्छिंष्युः ।
यदनस्तमिते विसृजेरन्रात्रिं भ्रातृव्यलोकमुच्छिंष्युः ।
अर्धास्तमित आहवनीयं परेत्य विसृजन्ते ।
उभाभ्यामेव तदहोरात्राभ्यां द्विषन्तं भ्रातृव्यमन्तर्यन्ति ।
उभाभ्यामेवाहोरात्राभ्यां द्विषन्तं भ्रातृव्यमन्तरेति य एवं वेद ।
तदु वा आहुरस्तमित एव विसृज्यम् ।
अहोरात्रे वै परिवर्तमाने संवत्सरमाप्नुतः ।
संवत्सरो यज्ञः ।
यज्ञमेवैतदाप्त्वा विसृजन्त --
उपसृजन्धरुणं मात्रे मातरं धरुणो धयन्रायस्पोषमिषमूजमस्मासु दीधरत्स्वाहे
ति ।
स यथा न्योकसं गां संयुज्य प्रार्जयेदेवमेवैतद्वाचं चं यजमानं च संयुज्य

प्रार्जयन्ति ।
यथा हैनया वदति । तथैभ्योऽनपक्रमणी भवति ।
ते यं कामं कामयेरंस्तं ध्यायेयुः ।
स हैवैभ्यः कामस्समृध्यते ।
सुब्रह्मण्यया वाचं विसृजन्ते ।
ब्रह्म वै सुब्रह्मण्या ।
ब्रह्म वाक् ।
ब्रह्मणैव तद्वाचं विसृजन्ते ३०७

अग्निरेव प्रथममहर् । इन्द्रो द्वितीयं । प्रजापतिस्तृतीयं । बृहस्पतिश्चतुर्थं । मरुतः पञ्चमं । विश्वे देवाष्षष्ठं । वसवस्सप्तमं । रुद्रा अष्टमम् ।
आदित्या नवमं । प्रजापतिरेव दशममहः ।
इयमेव दिक्प्रायणम् । इयमुदयनम् ।
तस्मादसावादित्य इतोऽस्तमेतीत उदेति ।
एतदेव प्रायणं चोदयनं चानुसंचरति ।
आशुस्त्रिवृद् । भान्तः पञ्चदशो । व्योम सप्तदशो । धरुण एकविंश ।
ओजस्त्रिणवः । प्रतिष्ठा त्रयस्त्रिंशो । ब्रह्म चतुर्विंशः । क्षत्रं
चतुश्चत्वारिंशो । विवर्तो विशां स्तोमोऽष्टाचत्वारिंशः । प्रजापतिरेव
दशममहः ३०८

तद्यदाशुस्त्रिवृदिति । यथा क्षिप्रः पद्येवमेष यत्त्रिवृत्स्तोमः ।
अथ द्य भान्तः पञ्चदश इति क्षत्रं हि तत् ।
क्षत्रमुव इभाति ।
अथ यद्व्योम सप्तदश इति । प्रजापतिर्हि सः ।
प्रजापतिर्वै व्योम ।
अथ यद्धरुण एकविंश इत्यसौ हि स आदित्यः ।
एतस्मिन्वा इदं सर्वं धृतम् ।
अथ यदोजस्त्रिणव इति । मरुतो हि सः ।
ओजो वै वीर्यं मरुतः ।
ओजो वीर्यं त्रिणवः ।

अथ यत्प्रतिष्ठा त्रयस्त्रिंश इत्य् । अन्तो हि सः ।
अथ यद्ब्रह्म चतुर्विंश इति । गायत्री हि सा ।
ब्रह्म वै गायत्री ।
अथ यत्क्षत्रं चतुश्चत्वारिंश इति त्रिष्टुब्भि सः ।
क्षत्रमु वै त्रिष्टुप् ।
अथ यद्विवर्तो विशां स्तोमोऽष्टाचत्वारिंश इति । जगती हि सा ।
विड्वै जगती ।
विश उ वा इदं सर्वं अनुष्टुप् ।
इदमेव प्रायणम् । इदमुदयनम् ।
तस्मादित एव प्रयन्त्यत उद्यन्ति ।
अग्निरेव प्रायणम् । आदित्य उदयनम् ।
अनुष्ठयैतं लोकं प्रजानन्नेति य एवं वेद ३०९

गायत्रमुखो वै प्रथमस्त्र्यहः ।
तस्मादयमग्निरस्मिँल्लोक ऊर्ध्वो दीदाय ।
गायत्रमध्यो द्वितीयस्त्र्यहः ।
तस्मादथ वायुरस्मिन्नन्तरिक्षे तिर्यङ्पवते ।
गायत्रोत्तमस्तृतीयस्त्र्यहः ।
तस्मादसाववाङादित्यो दिवस्तपति ।
एता वै देवेषवः प्रणिहिता अनिशिता अनिलयन्तीरेषु लोकेषु सर्वं पाप्मानमपसेधन्तीस्तिष्ठन्त्यग्निः पृथिव्यां । वायुरन्तरिक्ष । आदित्यो दिवि ।
एता अस्य सर्वं पाप्मानमपघ्नत्यो यन्ति य एवं वेद ।
एताभिर्वै विजितिभिर्विविक्रिभिर्विजिता विविक्ता इमे लोका यथायथम् ।
यस्मादेते समाने यज्ञक्रतौ सन्तोऽथ नाना भवन्ति तस्माद्ध वै देवाः पितरो मनुष्यास्समाने लोके सन्तोऽनुसंददर्शिरे ।
एताभिर्ह विजितिभिर्विविक्तिभिर्विजिता विविक्ता यथायथम् ३१०

प्रजापतिं प्रजास्समृजानं मुखतः पाप्मासिनोत् ।
सोऽकामयताप पाप्मानं हनीयेति ।

स एतं गायत्रमुखं प्रथमं त्रियहमपश्यत् ।
तेन मुखतः पाप्मानमपाहत ।
तं मध्यतोऽसिनोत् ।
स एतं गायत्रमध्यं द्वितीयं त्रियहमपश्यत् ।
तेन मध्यतः पाप्मानमपाहत ।
तं पदोरसिनोत् ।
स एतं गायत्रोत्तमं तृतीयं त्र्यहमपश्यत् ।
तेन पत्तः पाप्मानमपाहत ।
तं पदोरसिनोत् ।
स एतं गायत्रोत्तमं तृतीयं त्र्यहमपश्यत् ।
तेन पत्तः पाप्मानमपाहत ।
अप पाप्मानं हते य एवं वेद ।
स्वरान्तेन वै त्र्यहेण प्रजापतिर्मृत्योरात्मानमत्रायत । निधनान्तेन प्रजाम् ।
इळान्तेन पशून् ।
एतावद्वावास्ति यदात्मा प्रजा पशवः ।
तद्यत्सदत्रायत तत्सत्रस्य सत्रत्वम् ।
त्रायत एनं सर्वस्मात्पाप्मनो य एवं वेद ।
स्वरान्तेन वै त्रियहेण प्रजापतिर्देवानसृजत । निधनान्तेन पितॄन् ।
इळान्तेन मनुष्यान् ।
तद्यत्स्वरान्तेन देवानसृजत तस्मात्तेऽमृताः ।
अमृतेन हि तान्प्राणेनासृजत ।
अथ यन्निधनान्तेन पितॄनसृजत तस्मादु ते निधनसंस्थाः ।
अथ यदिळान्तेन मनुष्यानसृजत पशवो वा इळा तस्माद्य एव पशुमान्भवति तं मनुष्या उपसमायन्ति ३११

अथ ह कबन्ध आथर्वणे केशी दार्भ्य उवास ।
अथ ह तर्हि समूढान्येव छन्दांस्यासुर्न व्यूढानि ।
तस्मै ह कबन्ध आथर्वणः केशिने दार्भ्ययैतं व्यूढछन्दसं द्वादशाहं प्रोवाच त्रिरेव गायत्रीं तर्पयतात्त्रिस्त्रिष्टुभं त्रिर्जगतीम् ।
तवैव प्रजाया अन्ये जीवितमभिध्यातारो । न तव प्रजा इति ।

तेन हेजे ।
ततो ह वा इदमर्वाचीनं व्यूढानि छन्दांसि ।
तस्मादनाढ्यानामपि सतां पञ्चालानामभ्येवान्ये जीवितं ध्यायन्ति ।
तस्यैतौ श्लोकौ
कस्मादूर्ध्वा भूमेर्यन्ति सर्गाः कस्मात्तिर्यञ्चोऽन्वन्तरिक्षम् ।
कस्मादर्वाञ्चो दिव उत्तरस्यै सूर्यस्य रश्मीननु यन्ति सृष्टाः
गायत्री त्रिवृत वसाना सा त्रिष्टुभं नुनुदेऽन्तरिक्षात् ।
सा जगतीमायतनाद्दिवोऽधि तस्मादर्वाञ्चः प्रवहन्ति सर्गाः ३१२

वाग्वै यज्ञं ससृजाना साशनायत्सापिपासत् ।
तां देवा अर्वाग्यज्ञाहुत्यातितर्पयिषन् ।
तां नातर्पयन् ।
तामर्वाक्सोमाहुतिहविर्यज्ञैरतितर्पयिषन् ।
तां नैवातर्पयन् ।
त एतं व्यूढच्छन्दसं द्वादशाहं यज्ञमपश्यन् ।
तमाहरन् ।
तेनायजन्त ।
तत एनां छन्दांसि भूतां प्रार्जन् ।
ता अन्यान्यस्यै भागाय धेनुपरिसारमतृप्यन् ।
तस्मात्पशवोऽन्योन्यस्य भागाय धेनुपरिसारं तृप्यन्ति ।
सातृप्यत् ।
स य एवमेतां वाचश्च छन्दसां च तृप्तिं वेद टृप्यत्यात्मना तृप्यत्यस्य प्रजा ।
देवा वै दे । विश्वान्देवरथेषु युक्त्वेमाँल्लोकानभ्यारोहन् ।
छन्दांसि वाव देवाश्वा । स्तोमा देवरथाः ३१३

ते गायत्रीमेव दक्षिणां युग्यामकुर्वत । त्रिष्टुभं सव्यां युग्यां । जगतीं सव्यां प्रष्टिम् ।
तेनेमं लोकमभ्यरोहन् ।
तेऽब्रुवञ्ज्यायान्वा अध्वा विपर्यूहामेति ।
ते जगतीमेव दक्षिणां युग्यामकुर्वत । गायत्रीं सव्यां युग्यां । त्रिष्टुभं

सव्यां प्रष्टिम् ।
तेनेममन्तरिक्षं लोकमभ्यारोहन् ।
तेऽब्रुवञ्ज्यायान्देवाध्वा व्येव पर्यूहामेति ।
ते त्रिष्टुभमेव दक्षीणां युग्यामकुर्वत । जगतीं सव्यां युग्यां । गायत्रीं सव्यां प्रष्टिम् ।
तेनामुं लोकमभ्यारोहन् ।
एवं वै देवा देवाश्वान्देवरथेषु युक्त्वेमाँल्लोकानभ्यारोहन् ।
अभीमाँल्लोकानारोहति य एवं वेद ३१४

या ह खलु वै सपदा छन्दस्सा प्रथममहरुद्यच्छति । विपदा द्वितीयं । नानापदा तृतीयम् । अनुपदा चतुर्थम् । अतिपदा पञ्चमम् । अभिपदा षष्ठम् ।
गायत्री वै सपदा ।
त्रिपदा वै गायत्री ।
त्रय इमे लोकाः ।
त्रिष्टुब्विपदा । एकादशाक्षराणि हि तस्यै पदानि ।
जगती नानापदा द्वादशाक्षराणि हि तस्यै पदानि ।
अनुष्टुबनुपदा ।
अनुपदा हि सा गायत्र्या अक्षरैः ।
अष्टाक्षराणि वै गायत्र्यै पदान्यष्टाक्षराण्यनुष्टुभः ।
पंक्तिरतिपदा । पञ्चपदा हि सा ।
अतिच्छन्दा अभिपदाः ।
न हि एतावन्ति कस्यै चनाक्षराणि ३१५

प्रजापतिर्बृहद्रथन्तरेऽसृजत । स मन एवाग्रे बृहदपश्यद् । वाचं रथन्तरमभि व्याहरत् ।
तद्यद्वाचं रथन्तरमभि व्याहरत्तस्माद्रथन्तरं पूर्वं योगमानशे ।
अथ यन्मनोऽग्रे बृहदपश्यत्तस्मादु बृहद्रथन्तरे इत्याख्यायते ।
मनो वै पूर्वमथ वाक् ।
मनो वै बृहद् । वाग्रथन्तरम् ।

ब्रह्म वै रथन्तरं । क्षत्रं बृहत् ।
तदिदं मनो वाचमत्यमन्यत । क्षत्रं ब्रह्म ।
तदिदं रथन्तरमवेदति वै मा मन्यतेति ।
तद्वैरूपमसृजत ।
तेन पुरस्तात्पर्यवैत् ।
ते द्वे भूत्वात्यमन्येताम् ।
तदिदं बृहदवेदति वै मा मन्यतेति ।
तद्वैराजमसृजत ।
तेन पुरस्तात्पर्यवैत् ।
ते द्वे भूत्वात्यमन्येतां तदिदं रथन्तरमवेदति वै मा मन्यतेति ।
तच्छाक्वरमसृजत ।
तेन पुरस्तात्पर्यवैत् ।
तानि त्रीणि भूत्वात्यमन्यन्त ।
तदिदं बृहदवेदति वै मा मन्यतेति ।
तद्रैवतमसृजत ।
तेन पुरस्तात्पर्यवैत् ।
तानि त्रीणि भूत्वार्यमन्यन्त ।
तेऽन्तमगच्छताम् ।
तेऽवित्तां समे वै स्वो नान्यदन्यदतीति ।
तानि षट्पृष्ठान्यासंस् । त्रीणि छन्दांसि ।
तानीमानि त्रीणि छन्दांसि षट्पृष्ठानि नानुव्यभवन् ३१६

सा गायत्र्यनुष्टुभमसृजत ।
सा चतुर्थमहरुदयच्छत् ।
तया चतुर्थमहरकल्पत ।
त्रिष्टुप्पंक्तिमसृजत ।
सा पञ्चममहरुदयच्छत् ।
तया पञ्चममहरकल्पत ।
जगत्यतिछन्दसमसृजत ।
सा षष्ठमहरुदयच्छत् ।

तया षष्ठमहरकल्पत ।
तानि षट्पृष्ठान्यासन् । षट्छनांसि ।
तानि द्वन्द्वमकल्पन्त ।
द्वन्द्वमस्मै प्रजाः पशवः कल्पन्ते य एवं वेद ।
गायत्र्या वै प्रथममहस्तायते । त्रिष्टुभा द्वितीयं । जगत्या तृतीयम् ।
अनुष्टुभा चतुर्थं । पंक्त्या पञ्चमम् । अतिछन्दसा षष्ठम् ।
तस्मादतिछन्दसष्षष्ठेऽहनि शस्यन्ते ।
तद्यथा वर्षिष्ठेन गम्भिष्ठे गाधमिच्छेतैवमेव तद्देवा अतिछन्दोभिष् ।
षष्ठेऽहनि गाधमैच्छन्त ।
अथो वै तर्हीच्छन्तेऽथो षष्ठस्यैवाह्नो व्याप्तया । उत्तरस्यो एव त्र्यहस्य
सन्तत्या अव्यवच्छेदाय ३१७

आपो वा इदमग्रे महत्सलिलमासीत ।
तस्मिन्प्रजापतिः प्रतिष्ठामैच्छत् ।
स एतं वैश्वानरं प्रायणीयमतिरात्रमपश्यत् ।
तमुपादधात् ।
इममेव लोकमस्मिन्सलिलेऽधि तमप्रथयत् ।
यदप्रथयत्तस्मात्पृथिवी ।
तस्मिन्नधि प्रत्यतिष्ठत् ।
तद्वै तम इवासीत् ।
रात्री ह्यह्न उत्तरा ।
स एतत्त्रिवृतमग्निष्टोममपश्यत् ।
तमुपादधादिममेवाग्निमस्यां पृथिव्यामधि ।
तेन ज्योतिषेमाँल्लोकान्प्रापश्यत् ।
स एतानष्टावुक्थ्यानष्टातयान्पशून्दिशोऽनुव्यतनोद्वामदेव्यमन्तरिक्षम् ।
आदित्यमेव दशममहर् । अमुमेव लोकमुत्तरमतिरात्रम् ।
स एतां व्याप्तिं व्याप्नोत् ।
इदं सर्वमभवत् ।
एतामेव व्याप्तिं व्याप्नोतीदं सर्वं भवति य एवं वेद ।
ऋतवो वै पृष्ठ्यष्षडहो । दिशश्छन्दोमा । इमावेव लोकावतिरात्रौ ।

ऋतवो वै पृष्ठ्यष्षडहो । अर्धमासा मासा अहोरात्राणि छन्दोमा ।
इमावेव लोकावतिरात्रौ ।
अथ यावेतावन्तरावग्निष्टोमाविन्द्राग्नी एव तौ ।
तद्यन्नेदीयस्सत्कनीयस्तोमं पूर्वमहस्तस्मादयमग्निर्नेदीयस्सन्म्रदायस्तपति ।
अथ यस्माद्दवीयस्सञ्ज्यायस्तोममुत्तममहस्तस्मादसावादित्यो
दवीयस्सन्नोजीयस्तपति ।
यो वै सर्वं द्वादशाहमात्मानमभि संपद्यमानं वेद सर्व एनं कामा अभि
संपद्यन्ते ३१८

पदोरेव प्रतिमा पूर्वोऽतिरात्रः ।
नव पुरुषे प्राणाः ।
स त्रिवृत् ।
त्रिवृत्प्रायणीयमहः ।
तेन तत्संपन्नम् ।
दश हस्त्या अंगुलयश्चत्वार्युरोर्बाह्वाणि ।
यदूर्ध्वं नाभेस्तत्पञ्चदश ।
पञ्चदशं द्वितीयमहः ।
तेन तत्संपन्नम् ।
दश हस्त्या अङ्गुलयस् । सप्त शीर्षन्प्राणाः ।
तत्सप्तदश ।
सप्तदशं तृतीयमहस्तेन संपन्नम् ।
दश हस्त्या अंगुलयो दश पद्या आत्मैकविंशः ।
एकविंशं चतुर्थमहः ।
तेन तत्संपन्नम् ।
दश हस्त्या अङ्गुलयो । दश पद्या । सप्त शीर्षन्प्राणाः ।
तत्सप्तविंशतिः ।
सप्तविंशं पञ्चममहः ।
तेन तत्संपन्नम् ।
दश हस्त्या अङ्गुलयो । दश पद्या । दश प्राणा । मनो वाग्घृदयं ।
तत्त्रयस्त्रिंशत् ।

त्रयस्त्रिंशं षष्ठमहः ।
तेन तत्संपन्नम् ।
प्राणा एव सप्तममहर्गायत्रम् ।
चक्षुरेवाष्टममहस्त्रैष्टुभम् ।
श्रोत्रमेव नवममहर्जागतम् ।
वागेव दशममहरानुष्टुभम् ।
अथ यदूर्ध्वं श्रोत्राभ्यां तदुत्तरोऽतिरात्रः ।
प्राण एव पूर्वोऽतिरात्र । उदान उत्तरः ।
तौ प्रायणीयोदयनीयाविति परोक्षमाचक्षते ।
प्रति प्राणापानयोस्तिष्ठति । अन्प्राणापानाभ्यां व्यथते । सर्वमायुरेत्य् ।
एवं वै सर्वो द्वादशाह आत्मानमभिसंपद्यते । सर्व एनं कामा अभिसंपद्यन्ते
। य एवं वेद ३१९

विषुवत्कं वा एतत्सत्रं यद्द्वादशाहः ।
स य एतस्य सत्रस्य विषुवन्तं वेद श्रीर्वै विषुवान्विशुवाञ्श्रेष्ठ स्वानां भवति
।
पुरुषो ह वा एतस्य सत्रस्य विषुवान् ।
पुरुषो ह्येषां लोकानां विषुवान् ।
इमे वै लोका एष द्वादशाहोऽहमस्य सत्रस्य विषुवानस्मीत्येव मन्यमान
एतेन द्वादशाहेन यजेत ।
तस्य हैतस्मिन्नेव सत्रे विषुवानुपेतो भवति ।
स वा एषोऽहन्नेव प्रतिष्ठितः ।
प्रायणीयमहर्द्वितीयमहस्तृतीयमहरित्यहरहरिति भञ्रति ।
असौ वा आदित्योऽहः ।
एतमेवैतेनर्ध्नुवन्त्येतस्य सलोकतां गच्छन्त ३२०

प्रजापतिर्वाविदमग्र आसीत् ।
सोऽकामयत बहु स्यां प्रजायेय भूमानं गच्छेयमिति ।
सोऽष्टादशैवाक्षराणि प्रजायत ।

तानि द्वेधा व्यौहन्नवान्यानि नवान्यानि ।
स एव त्रिवृच्च स्तोमोऽभवद्गायत्री च छन्दः ।
सोऽयं संपूर्णस्त्रिवृत्स्तोम आसीद् । अथ गायत्री प्रणवनवमासीत् ।
प्रणवस्तस्यै नवम आसीत् ।
तामयं त्रिवृत्स्तोमोऽब्रवीद्गायत्रीमेहि संभवावेति ।
तौ समौ सन्तौ नाशक्नुतां संभवैतुम् ।
तामब्रवीन्न वैतर्हि शक्ष्यावस्समौ सन्तौ संभवितुम् ।
यत्त एतन्नवममक्षरं तदुदूहस्वेति ।
तत्किं भविष्यति ।
यदेवास्ति तद्भविष्यतीति ।
तथेति ।
तदुदौहत ।
स एव प्रणवोऽभवत् ३२१

स प्रतिगरससुद्गीथस्तदाश्रावणम् ।
तस्मादोमिति प्रणौत्योमिति प्रत्यागृणात्योमित्युद्गायत्योमित्याश्रावयति ।
एतद्वा अस्ति यदभवत् ।
तामब्रवीदेतर्हि वै तस्मा अलं स्वो यत्प्रजनयेवेहि प्रजनयावेति ।
तामब्रवीत्संभव छन्दांसि त्वं प्रजनयतात्स्तोमानहं प्रजनयिष्यामीति ।
सोऽयं त्रिवृत्स्तोमश्चतुर्विंशतिं स्तोत्र्याः प्रायनयत् ।
अथ गायत्री चतुर्विंशतिमक्षराणि प्रजायत ।
तामब्रवीद्विभव यावत्यसि तावत्येधीति ।
साष्टाक्षरा सत्यक्षराणि त्र्यक्षराण्यकुरुत ।
तानि चतुर्विंशतिरभवन् ।
चतुर्विंशतिः पूर्वाणि ।
तदस्या अष्टाचत्वारिंशत्प्रजातमासीत् ।
सेयं गायत्री चत्वार्यक्षराण्यादत्त ।
सोष्णिगभवत् ।
षडितर आदत्त ३२२

स पञ्चदश स्तोमोऽभवत् ।
चत्वारीयमादत्त ।
सानुष्टुबभवत् ।
षडितर आदत्त ।
स एकविंश स्तोमोऽभवत् ।
चत्वारीयमादत्त ।
सा बृहत्यभवत् ।
षडितर आदत्त ।
स त्रिणव स्तोमोऽभवत् ।
चत्वारीयमादत्त ।
सा बृहत्यभवत् ।
षडितर आदत्त ।
स त्रिणव स्तोमोऽभवत् ।
चत्वारीयमादत्त ।
सा पंक्तिरभवत् ।
षडितर आदत्त ।
स त्रयस्त्रिंश स्तोमोऽभवत् ।
तदेषोऽन्तमगच्छत् ।
चत्वारीयमादत्त ।
सा त्रिष्टुबभवत् ।
अपराणि चत्वार्यादत्त ।
सा जगत्यभवत् ।
तावन्तमगच्छतां तामब्रवीन्न वा अतः पराञ्चौ प्रजनयिष्याव । एहि ।
यावदक्षरैवाग्रेऽभूस्तावदक्षरा भूत्वेति ।
साष्टाक्षरैव भूत्वै त् ।
तस्मादेतत्पतिर्यथाकामं जायां नेनीयते ३२३

तौ पञ्चदशं चैकविंशं च व्यूह्य मध्ये समभवताम् ।
स एवैष प्रजापतिस्सप्तदशोऽन्नाद स्तोमोऽभवत् ।
तस्मै त्रिवृत्पञ्चदशावित स्तोमौ बलिं कुरुत । एकविंशस्त्रिणवस्त्रयस्त्रिंशः

परस्तात् ।
तामब्रवीत्संभवं छन्दांसि त्वं प्रजनयतात् । स्तोमानहं प्रजनयिष्यामीति ।
सोऽयं त्रिवृत्स्तोमश्चतुष्टोमं चतुर्दशं षोडशमष्टादशं नवदशं पञ्चविंशं षट्त्रिंशमित्येतान्मृगस्तोमान्प्राजनयत् ।
अथ गायत्री एकपदां द्विपदामक्षरपंक्तिं विष्टारपंक्तिं विराजमतिच्छन्दसममितं छन्द इत्येतानि मृगच्छन्दसानि प्रायायत ।
सैषा स्तोमानां च छन्दसां च प्रजापतिः ।
तद्ध शौनकं कापेयं चैकतानेयः पप्रच्छ यत्षडुत्तरेण वै स्तोमाः प्रजनयन्ति ।
चतुरुत्तरेण छन्दांस्य् । अथ कोऽयमषडुत्तरी स्तोमस्सप्तदश आह्नितस्सन्मध्ये व्यवहित इति ।
स होवाच स्तोमाश्च छन्दांसि च यन्न प्रजायन्त स एवैष प्रजापतिस्सप्तदशो मध्ये व्यवक्रम्य प्रजनयन्नतिष्ठत् ।
स यो वा एतमाह्नितं वेदाह्नितो ह स सर्वत्रैव भवति ।
अनाह्नितो वा एष यत्प्रजापतिः ।
सर्वं हीदं प्राजापत्यमिति ।
ते हैत आह्नित इव चैकितानेयाः ।
तानीमानि छन्दांसि स्तोमैरकल्पन्त ३२४

त्रिवृता गायत्र्यकल्पत । पञ्चदशेन त्रिष्टुप् । सप्तदशेन जगत्य् ।
एकविंशेनानुष्टुप् । त्रिणवेन पंक्तिस् । त्रयस्त्रिंशेन विराट् । पञ्चविंशेन बृहत्य् । अष्टादशनवदशाभ्यामुष्णिक्ककुभौ ।
ता या नव गायत्र्यश्चतुर्विंशतिस्ते त्रिवृतः ।
अथ या पञ्चदश त्रिष्टुभश्चतुश्चत्वारिंशत्ते पञ्चदशाः ।
अथ यास्सप्तदश जगत्योऽष्टाचत्वारिंशत्ते सप्तदशाः ।
अथ या एकविंशतिरनुष्टुभो द्वात्रिंशत्त एकविंशाः ।
अथ यास्सप्तविंशतिः पंक्त्यश्चत्वारिंशत्ते त्रिणवाः ।
अथ यास्त्रयस्त्रिंशद्विराजस्त्रिंशत्ते त्रयस्त्रिंशाः ।
अथ याः पञ्चविंशतिर्बृहत्यष्षट्त्रिंशत्ते पञ्चविंशाः ।
अथ या अष्टादशनवदशोष्णिक्ककुभोऽष्टाविंशतिस्तेऽष्टादशनवदशाः ३२५

एकं वावेदमग्रेऽक्षरमासीद्वागेव ।
साकामयत बह्व्यसानि । प्रजायेय । भूमानं गच्छानि । यज्ञं तनवा
इति ।
सा स्वाहा स्वाहा स्वाहेत्येव द्वादशकृत्वोऽजुहोत् ।
सा त्रिंशतं त्रिंशतमेवासिनोत् ।
त्रिंशदक्षरो एवात्मनाभवत् ।
तस्यै पक्षेवाक्षरे उपोदसर्पताम् ।
सैवैषानुष्टुबभवत् ।
तस्मादेतद्योषितः पक्षेव स्तनावुपोत्सर्पतः ।
सैषा विराडेव स्तनिनी ।
सा यत्तद्द्वादशकृत्वोऽजुहोदेतानेव तद्द्वादश मासोऽसृजत ।
तान्येवैतानि द्वादशाहस्य द्वादशाहान्यभवंस् । त एव चतुर्विंशतिरर्धमासा
अभवंस्तान्येव सप्त च शतानि विंशतिं चाहोरात्राण्यभवन् ।
सैतं संवत्सरं यज्ञमसृजत ।
एष ह वाव यज्ञो यस्संवत्सरः ।
सा नावेद्यज्ञं वा असृक्षीति ।
किमु चिदसृक्षीत्येवामन्यत ।
तां मोदः प्रत्यागच्छत् ।
ततोऽवेद्यज्ञं वा असृक्षीति ।
सैक्षत यमिदं यज्ञमसृक्षि हन्तैनमात्मन एवाधि तनवा इति ३२६

साष्टाभिरेवाक्षरैः प्रथममहरतनुत । एकादशभिर्द्वितीयं ।
द्वादशभिस्तृतीयम् ।
अक्षरमेव त्र्यक्षरं पर्यशिष्यत ।
तदेवोत्तरं त्र्यहमनुव्यदधात् ।
सैतं पृष्ठ्यं षडहमतनुत ।
सैतं पृष्ठ्यंषडहं तत्वैक्षत केन न्विमं तृतीयं त्र्यहं तन्वियेति ।
स्वात्मानमेवापश्यद् । यो न्वाव मेऽसावात्मा सोऽयम् ।
हन्तैनमात्मन एवाधि तनवा इति ।
साष्टाभिरेवाक्षरैस्सप्तममहरतनुतैकादशभिरष्टमं । द्वादशभिर्नवमम् ।

अथ यदक्षरं पर्यशिष्यत तदेवैतद्द्वादशाहस्य दशममहरभवत् ।
सैषा श्रान्ता विकृष्टाशये वाग्यज्ञमूहिषी कालिलिमत्ता यथा सिंही वा
विजाता स्याद्व्याघ्री वा शिंशुमारी वैवम् ।
तां यदेतर्हि प्रत्यक्षमालभेरन्व्याप्नमस्या आपद्येरन् ।
यद्यु वा सा इयुरेतस्मात्सर्वस्मादियुः ।
तामेतां परोक्षमनुष्टुभं कुर्वन्ति ३२७

न होता चनानुष्टुभश्शंसति । विराज एव स शंसति ।
ते देवा अब्रुवन्नियमियं यज्ञमसृष्टैतानन यजामहा इति ।
ते बृहतीमब्रुवन्निदं नस्त्वं तृतीयमहर्वह ।
अभिजितं वै नस्सत्तदव्याप्नमिति ।
सद्ध वै बृहती भवति यत्सा पृष्ठं भवति ।
सैतद्बृहती तृतीयमहरूढ्वा नाकामयत वोढुम् ।
त इयमेव लोकं रथन्तरेणाजयन्नन्तरिक्षं बृहत्यामु बृहता ।
त एतेन त्र्यहेण व्यजयन्त ।
तद्यथा विजितेन यन्ति सैन्धवानजन्ति हस्तिनं वहन्ति धूर्गृहीतं रथं याति
हुलुभ्यां याति विच्छिद्वहाभ्यामेवं गर्दभरथेन ।
एवमेतं द्वितीयं त्र्यहं देवा अत्यायन् ३२८

ते बृहद्रथन्तरे एतानि रूपाणि प्रत्यौहतां वैरूपं वैराजं महानाम्नी रेवतीरिति
।
अथ बृहती प्रत्यौहद्विराजं शक्वरीं रेवतीमिति ।
तानीमान्यत्यायन् ।
तानि देवा अन्वपश्यन्यथा मत्स्यमूर्म्या यन्तमनुपश्येदेवम् ।
तानि सप्तमेऽहन्समुदमज्जन्यथा मत्स्यास्समुन्मज्जयुरेवम् ।
तान्येतानि छन्दोमेषु सर्वाणि संसृज्यन्ते ।
एतद्बृहत्यां बृहद्भवति । बृहत्यां रथन्तरम् ।
स यथोग्रगाधे संरभ्यातीयादेवमेवैतं तृतीयं त्रियहं देवा अत्यायन् ।
त एतं स्वर्गं लोकमागच्छन्नेतद्दशममहः ।
एष वाव स्वर्गो लोको यद्दशममहः ।

तच्चतुर्विंशं भवति ।
ततो या विंशतिर्विराट्सा ।
अथ याश्चतस्रस्तदेव ब्रध्नस्य विष्टपम् ।
तस्मिन्नेतद्देवास्सर्वान्कामान्दुह्रे ।
उपसृजन्धरुणं मात्रे मातरं धरुणो धयन्रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहे ति जुहोति ।
स यं कामं कामयेत तं ध्यायेत् ।
एतस्यां हुतायां स हैवास्मै कामस्समृध्यत एवंविदे ।
किमु नैवंविदे समृध्येतेति ह स्माह शाट्यायनिः ३२९

एति प्रेत्याशुमद्वीतीमद्रुक्मवत्तेजस्वद्युञ्जानं प्रथमस्याह्नो रूपं । त्रिवृत स्तोमस्य । गायत्र्यै छन्दसो । रथन्तरस्य साम्नः ।
वृषवद्वृत्रहवद्रयिमद्विश्ववदुपस्थितं द्वितीयस्याह्नो रूपं । पञ्चदशस्य स्तोमस्य । त्रिष्टुभश्छन्दसो । बृहतस्साम्नः ।
उद्वत्त्रिवद्दिग्वदृतवत्पुराणवत्तृतीयस्याह्नो रूपं । सप्तदशस्य स्तोमस्य । जगत्यै छन्दसो । वैरूपस्य साम्नः ।
राजन्वज्जनद्वद्विराट्सूर्यवच्चतुर्थस्याह्नो रूपम् । एकविंशस्य स्तोमस्य । अनुष्टुभश्छन्दसो । वैराजस्य साम्नः ।
चित्रवच्छिशुमत्पंक्त्यश्शक्वर्यो न्यूनाक्षरा गोमद्वृषभवद्वज्रवदभिमत्पञ्चमस्याह्नो रूपं । त्रिणवस्य स्तोमस्य । पंक्तेश्छन्दसश् । शाक्वरस्य साम्नः ।
परिवत्प्रतिवत्सप्तपदा द्विपदा विनाराशंसं गोमद्वृषभवद्वज्रवदभिमत्षष्ठस्याह्नो रूपं । त्रयस्त्रिंशस्य स्तोमस्यातिच्छन्दसश्छन्दसो । रैवतस्य साम्नः ३३०

यस्मादेषा समाना सती षडहविभक्तिरथ नाना भवति ।
तस्मान्नानारूपस्संवत्सरो नानारूपमेनमनु प्रजायते ।
अग्न इति प्रथमस्याह्नो विभक्तिर् । अग्निमिति द्वितीयस्याग्निनेति तृतीयस्याग्निरिति चतुर्थस्याग्नेरिति पञ्चमस्याग्न इत्येव पुनष्षष्ठस्य ।
तावेतावन्तौ संधत्त ।
एतदन्वनन्तस्संवत्सरः ।
तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च ।

एतदनु ग्रामस्यान्तौ समेत । एतदनु निष्कस्यान्तौ समेत ।
एतदन्वहिर्भोगान्पर्याहृत्य शये ।
तदेतदन्नम् ।
तं देवचक्रमक्षितं पुनर्नवमा च परा च परिवर्तते ।
स य एतदेवं वेदैतामेवानन्तततामेतामक्षितिमेतां पुनर्नवतां जयति ।
अग्न आ याहि वीतय
इति ह्वयन्त्येवैनमेतेन । अग्निं दूतं वृणीमह इति वृणत एवैनमेतेन ।
अग्निनाग्निस्समिध्यत
इति समेवैनमेतदिन्धते ।
अग्निर्वृत्राणि जंघनद्
इति व्येवैतेनैतज्जयन्ते ।
तव श्रियो चर्ष्यस्येव विद्युत
इति श्रियमेवास्मिन्नेतद्दधति ।
यो वै षष्ठस्याह्नो विभक्तिं वेद सर्वमायुरेति ।
जातवेदस इति वै षष्ठस्याह्नो विभक्तिरग्न इति च ।
सर्वमायुरेति य एवं वेद ३३१

देवा वै पृष्ठ्ये षडहे श्रियमैच्छन् ।
तामग्न इति प्रथमेऽहन्नान्वविन्दन् ।
तामग्निमिति द्वितीयऽहन्नान्वविन्दन् ।
तामग्निनेति तृतीयेऽहन्नान्वविन्दन् ।
तामग्निरित्येव चतुर्थेऽहन्नन्वविन्दन् ।
भूतमेवोत्तरेऽन्ववदताम् ।
यस्मादेषा समाना सत्यग्निविभक्तिरथ नाना भवति य एते प्रविष्टाः ।
अथो हाम्यैतैरेवाग्निभिस्सर्व ऋतवोऽग्निमन्तो भवन्ति ।
प्रसृतेळा प्रथमस्याह्न । ऊर्ध्वेळं द्वितीयं । परिष्टुब्धेळं तृतीयम् ।
इळाभिरिळं चतुर्थम् । अध्यर्धेळं पञ्चमम् । इहकारेणाभ्यस्तेळं षष्ठं च ।
अथो ह वास्यस्को नैमिशीयान्पप्रच्छ किं प्रथमेनाह्ना कुरुध्वमिति ।
प्रैमेति ।
किं द्वितीयेनेति ।

अवसं कुर्महा इति ।
किं तृतीयेनेति ।
परि वा प्लवामहा इति ।
किं चतुर्थेनेति ।
सता सदप्यदध्मेति ।
किं पञ्चमेनेति ।
पशून्विच्छिन्दन्त षमेति ।
किं षष्ठेनति ।
आगच्छामेति होचुः ।
अथो तेभ्य षेतत्पशुभ्यो भिषज्यामेति ।
तद्यत्प्रैमेति प्रव वा एतत्सार्यते यत्प्रैति ।
प्रसृतेळा प्रथमस्याह्नः ३३२

अथ यदवसं कुर्म इत्युपरत्येव वा उपविमुच्येवावसं कुर्वते ।
उपरत्येव हि द्वितीयस्याह्न इळा निधनं गच्छति ।
अथ यत्परि वा प्लवामहा इति परिप्लुत्येव हि तृतीयस्याह्न इळानिधनं गच्छति ।
अथ यत्सता सदप्यदध्मेतीळाभिरिळाः पशुभिः पशूंस्तत् ।
तदेतत्सता सदपिहितम् ।
अथ यत्पशून्विच्छिन्दन्त षमेति विच्छिन्नेव वा एषा यदध्यर्धेळान्नकृता ।
पशवो वा इळा ।
तस्मात्पशून्विच्छेदं विकारं भुञ्जते ।
अथ यदागच्छामेतीहेत्यस्यामेवैतत्प्रत्यतिष्ठन् ।
अथो तेभ्य एवैतत्पशुभ्यो भिषजितम् ।
यज्मादेषा समाना सतीळाविभक्तिरथ नाना भवति । तस्मान्नानारूपाः पशवः ।
नानारूपमेनानन्नु प्रजायते ।
यदृचारभते तत्प्रथमस्याह्नो रूपम् ।
परिष्टुब्धं द्वितीयस्योभयतःपरिष्टुब्धं तृतीयस्यानुतुन्नं चतुर्थस्याभ्यस्तं पञ्चमस्येहकारेणाभ्यस्तं षष्ठस्य ।

यस्मादेषा समाना सती स्वरविभक्तिरथ नाना भवति तस्मादयं वायुर्यथर्तु पवत शीतो हेमन्तम् । उष्णो ग्रीष्मम् ।
इन्द्रेति प्रथमस्याह्नो विभक्तिरिन्द्रमिति द्वितीयस्येन्द्रेणेति तृतीयस्येन्द्र इति चतुर्थस्येन्द्रादिति पञ्चमस्येन्द्र इत्येव पुनष्षष्ठस्य ।
यस्मादेषा समाना सतीन्द्रविभक्तिरथ नाना भवति तस्मादसावादित्यो यथर्तु तपति शीतो हेमन्तम् । उष्णो ग्रीष्मम् ३३३

इति हैवेदमग्र आस ।
तदकामयत बहुस्यां प्रजायेय भूमानं गच्छेयमिति ।
तन्मनोऽमनुत ।
तस्य द्वितीयं वित्वावितराह्वयमैत् ।
तस्माद्द्वितीयं वित्वावितराह्वयमेति ।
तदनेन मनसा सहातप्यत ।
मनो ह वाव तपः ।
तत्तप्यमानं वाचमसृजत ।
ताभ्यामस्तुत स्तो मे स्तो म इति ।
यत्स्तो म इत्यब्रवीत्तत्स्तोमस्य स्तोमत्वम् ।
स्तुवत एनेन स्वा अयं न श्रेष्ठ इति य एवं वेद ।
तावेवैतौ स्तोमावभवतां पराङ्च पूर्वाङ्च ।
तौ प्राणापानौ । तेऽहोरात्रे । तौ पूर्वपक्षापरपक्षौ । ताविमौ लोकौ । ताविन्द्राग्नी । तौ मित्रावरुणौ । तावश्विनौ । तद्दैव्यं मिथुनं । यदिदं किं च द्वन्द्वं तदभवताम् ।
तौ ह स्म प्रजापतावेवान्तस्संभवतः ।
तदिदं मनो वाचमस्कन्दत् ।
स हिरण्मयो गर्भोऽधीयतामृतः ।
एष वै मृत्युर्यदग्निः ।
तस्मिन्यद्भिरण्यं प्रास्यन्ति कल्याणतरं भवति ।
सोऽयं गर्भोऽजायत ।
तं जातममृजन्यथा वत्सं जातं माता लोह्यादेवम् ३३४

तस्य यत्प्रथममुल्बमपालुम्पंस्तत्कृष्णायस्समभवत् ।
यद्द्वितीयमुल्बमपालुम्पंस्तद्रजतमभवत् ।
यत्तृतीयमुल्बमपालुम्पंस्तद्धरितमभवत् ।
तस्मात्तत्त्विषिमत्तमम् ।
तत्तद्धयस्याध्यात्ममासीदथ यज्जरायु नाड्यामासीत् ।
तल्लोहमभवत् ।
तस्मात्तद्दुर्गन्धितमम् ।
तानि सप्तदशैवाक्षराण्यजायन्त ।
तानि द्वेधा व्यौहन्नवान्यान्यष्टावन्यानि ।
स एव त्रिवृच्च स्तोमोऽभवद्गायत्री च छन्दः ।
स ऐक्षतायं स्तोम इदं छन्द इमौ वाव तस्मा अलं यत्प्रजनयेताम् ।
हन्तैमावेव प्रजनयतमिति ब्रवाणीति ।
स त्रिवृता स्तुत्वाब्रवीद्गायत्रीं विभव । यावत्यसि तावत्येधीति ।
साष्टाक्षरा सत्यक्षराणि त्र्यक्षराण्यकुरुत ।
तानि चतुर्विंशतिरभवन् ।
सोऽस्यै गायत्र्यै चतुर्विंशत्यक्षरायै षडक्षराण्यादत्त ३३५

स पञ्चदश स्तोमोऽभवत् ।
अपरे द्वे आदत्त ।
स सप्तदश स्तोमोऽभवत् ।
अपराणि चत्वार्यादत्त ।
स एकविंश स्तोमोऽभवत् ।
तदर्धेन गायत्री विषुवन्तमगच्छत् ।
अपराणि षडादत्त ।
स त्रिणव स्तोमोऽभवत् ।
अपराणि षडादत्त स त्रयस्त्रिंश स्तोमोऽभवत् ।
सोऽतः पराचीनं न प्राविन्दत् ।
स ऐक्षतेमान्येव वीर्याणि संस्तुतानि प्रत्यपधावानि द्वे द्वेऽहनी समस्यानीति
३३६

स त्रिवृच्च पञ्चदशं च समास्यत् ।
तदेव चतुर्विंशं सप्तममहरभवद्गायत्री छन्दसाम् ।
तस्मादत्रोभे बृहद्रथन्तरे क्रियेते ।
उभो ह्येतौ बार्हतराथन्तरौ स्तोमौ ।
रथन्तरं वै मात्रायामत्र स्याद् । अथ बृहत्पृष्ठं क्रियते ।
सप्तदशं च त्रिणवं च समास्यत् ।
तदेव चतुश्चत्वारिंशमष्टममहरभवत्त्रिष्टुप्छन्दसाम् ।
तस्मादत्र रथन्तरं पृष्ठं क्रियते ।
एकविंशं च त्रयस्त्रिंशं च समास्यत् ।
ततष्षडक्षराण्यत्यरिच्यन्त ।
अथ यान्यष्टाचत्वारिंशत्पर्यशिष्यन्त तदेवाष्टाचत्वारिंशं नवममहरभवत् ।
जगती छन्दसाम् ।
तस्मादत्र बृहत्पृष्ठं क्रियते ।
उभौ ह्येतौ बार्हतौ स्तोमौ । रथन्तरं वै मात्रायामत्र स्याद् । अथ बृहत्पृष्ठं क्रियते ३३७

तानीमानि षडक्षराण्यभिहिंङकरोत् ।
ततष्षरिणरमिमीत ।
तानि द्वाचशाभवन् ।
तानि पुनरेवाभिहिंङकरोत् ।
ततष्षरिणरमिमीत ।
तान्यष्टादशाभवन् ।
तानि पुनरेवाभिहिंङकरोत् ।
ततष्षरिणरमिमीत ।
तानि चतुर्विंशतिरभवन् ।
तदेव चतुर्विंशं दशममहरभवदनुष्टुप्छन्दसाम् ।
तस्मादु त्रिहिंकृतं साम ।
तदाहुरति त्रिवृतं स्तोमा यन्ति । न गायत्रीं छन्दांसीति ।
नाहैव त्रिवृतं स्तोमा अतियन्तीति ब्रूयान्नो गायत्रीं छन्दांसीति ।
त्रिप्रायणा हि स्तोमास्त्रिमध्यास्त्र्युदयाः ।

एतदु गायत्रीं सर्वाणि छन्दांसि नातियन्ति ।
तदेतद्त्रिवृतश्चैव स्तोमस्य पुष्टं गायत्र्यै छन्दसो यदेष द्वादशाःऽः ।
तद्ब्रह्म वै गायत्री ।
क्षत्रं त्रिवृत् ।
यत्स वज्रस्तेन क्षत्रम् ।
तदेतद्ब्रह्म च क्षत्रं चैष द्वादशाहः ।
तदु वा आहुर्ब्रह्म वै त्रिवृद् । ब्रह्म गायत्री । ब्रह्मैष द्वादशाहो ।
ब्रह्मैवैष सर्वो द्वादशाह इत्येव वेदितव्यम् ।
तस्यैतौ श्लोकौ
चत्वारोऽग्रे प्र वहन्ति युक्तास्ते षड्भवन्ति परमे व्योमन् ।
ते द्वौ द्वौ भूत्वा प्र पतन्ति पक्षैस्तेऽस्मिन्कस्मिन्प्रतितिष्ठन्ति गत्वा
द्वौ स्तोमौ गायत्रीं वसाते द्वौ त्रिष्टुभं जगतीं द्वौ वसाते ।
तेभ्यो महत्प्र रिरिचेति षड्भ्यस्तस्मिन्सर्वे प्रतितिष्ठन्ति गत्वा ३३८

प्रजापतिर्वावेदमग्र आसीत् ।
सोऽकामयत बहु स्यां प्रजायेय भूमानं गच्छेयमिति ।
स तपोऽतप्यत ।
स एतं व्यूढछन्दसं द्वादशाहं यज्ञमपश्यत् ।
तमाहरत् ।
तेनायजत ।
तं व्यौहत् ।
यद्व्यौहदङ्गान्येव तद्व्यौहत् ।
तस्य यानि शरीराण्यासंस्ता एवेमा मर्त्यः प्रजा अभवन् ।
अथात्मा मनोमयस्समभवत् ।
तस्य मनश्शरीरं प्राणा अभि समविशन् ।
स व्यूढ इवासीत् ।
स देवानब्रवीत्शरीरं म इच्छतेति ।
कथं त इच्छाम इति ।
समूढछन्दसा द्वादशाहेन याजयतेति ।
तथेति ।

तं समूढछन्दसा द्वादशाहनायाजयन् ।
तद्यत्समौहन्नंगान्येवास्य तत्समौहन् ३३९

स मनोमयः प्राणमयश्चक्षुर्मय श्रोत्रमयो वाङ्मय ऋङ्मयो यजुर्मयस्साममयो ब्रह्ममयो हिरण्मयोऽमृतः प्रजापतिस्समभवत् ।
एषैव विद्युत् ।
स एष एव त्रयो वेदः ।
योर्ध्वा विद्युत्तानि सामानि । या तिरश्ची ता ऋचो । यदभीक्ष्णं मन्मलायति तद्यजुः ।
स य एतदेवं वेदैषैव देवता भवति ।
एषा ह वै देवता संस्तुतो यज्ञो भवति ।
तद्यत्पृच्छेयुः का देवता संस्तुतो यज्ञो भवतीति । विद्युदिति ह ब्रूयात् ।
एषा ह वै देवता संस्तुतो यज्ञो भवति ।
तस्माद्यदि व्यूढछन्दसा द्वादशाहेन यजेत ।
यजेतो एव समूढछन्दसा ।
उभाभ्यां ह त्वावेष्टं भवत्येवंविदः ३४०

एका ह वाव देवता स्वयंभूः प्रजापतिरेव ।
सोऽकामयत बहु स्यां प्रजायेयेति ।
सोऽस्मिँल्लोके त्रिवृता स्तोमेन देवानसृजत वसून् ।
तमभि समपतन् ।
स्वादु स्वादुरिति तमादन् ।
तमधयन्यथा वत्सो जातो मातरं धयेदेवम् ।
स षक्षत यदि वा इह भविष्यामि क्षेष्यन्ति मा । हन्तोर्ध्व उत्क्रामाणीति ।
स उ वा षक्षत हन्तो नु संसृजेय यं मां मन्यमाना यं पश्यन्तीरिमा इहोपरमेरन्निति ।
सोऽग्निमसृजत ३४१

तमस्मिँल्लोके प्रतिनिधाय पञ्चदशेनोर्ध्व उदक्रामत् ।

सोऽगच्छद्यत्रैष वायुः ।
तत्तद्वसृजतो एव रुद्रान् ।
अन्विमे समगच्छन्नभ्यभी समपतन् ।
तमत्तुमेवाध्रियन्त ।
स षन्नत हन्तोर्ध्व एवोत्क्रामाणीति ।
स वायुमेवैतस्मिँल्लोके प्रतिनिधाय सप्तदशेनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष चन्द्रमाः ।
तत्तद्वसृजतो एवादित्यान् ।
अन्विमे समगच्छन्नभ्यमी समपतन् ।
तमत्तुमेवाध्रियन्त ।
स षन्नत हन्तोर्ध्व एवोत्क्रामाणीति ३४२

स चन्द्रमसमेवैतस्मिँल्लोके प्रतिनिधाय एकविंशेनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष आदित्यः ।
तत्तद्वसृजतो एव विश्वान्देवान् ।
तदन्तमसृजतान्विमे समगच्छन्नभ्यमी समपतन् ।
तमत्तुमेवाध्रियन्त ।
स षन्नत हन्तोर्ध्व एवोत्क्रामाणीति ।
स आदित्यमेवैतस्मिँल्लोके प्रतिनिधाय त्रिणवेनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष वरुणः ।
तेत्तन्नासृजत ।
तमन्वेवागच्छन् ।
तमत्तुमेवाध्रियन्त ।
स षन्नत हन्तोर्ध्व एवोत्क्रामाणीति ३४३

स वरुणमेवैतस्मिँल्लोके प्रतिनिधाय त्रयस्त्रिंशेनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष मृत्युः ।
तत्तन्मृत्युरभवत् ।
तदङ्गानि मुखमकुरुत ।
तं मृत्युं सर्वतोमुखं भूतमन्वागत्योपेक्षमाणा एवासत । अनभिधृष्णुवतीः ।

नैनं तत्रादन् ।
स षच्चत पाप्मा वा अस्मि यो मृत्युरस्मि ।
हन्तोर्ध्व एवोत्क्रामाणीति ।
स मृत्युमेवैतस्मिँल्लोके प्रतिनिधाय चतुर्विंशनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष रोचनो नाम लोकः ।
तत्तदशनयाभवत् ।
तमशनायां भूतं बिभ्यतीर्नान्वायन् ।
अन्वीच्चमाणा एवातिष्ठन्नसौ रोचतेऽसौ रोचतेति ।
सास्य रोचनता ।
स षच्चत पाप्मा वा अस्मि योऽशनया अस्मि ।
हन्तोर्ध्व एवोत्क्रामाणीति ।
स मृत्युमेवैतस्मिँल्लोके प्रतिनिधाय चतुर्विंशनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष रोचनो नाम लोकः ।
तत्तदशनयाभवत् ।
तमशनायां भूतं बिभ्यतीर्नान्वायन् ।
अन्वीच्चमाणा एवातिष्ठन्नसौ रोचतेऽसौ रोचतेति ।
सास्य रोचनता ।
स षच्चत पाप्मा वा अस्मि योऽशनया अस्मि ।
हन्तोर्ध्व एवोत्क्रामाणीति ।
सोऽहोरात्रे प्रतिन्यदधात् ।
ते एव पिपासा चाशनाया चाभवताम् ।
अहर्ह पिपासा । रात्रिरशनाया ।
तद्यथा द्वारफलके प्रतिनिहिते स्यातामेवमेवैतेऽहोरात्रे प्रतिनिहिते अनत्ययनाय ।
ते उ ह त्वेवंविदमेवात्यर्जयतः ३४४

सोऽहोरात्रे एवैतस्मिँल्लोके प्रतिनिधाय चतुश्चत्वारिंशेनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष कामो नाम लोकः ।
तत्तच्छन्दन्नाद्या अन्तरेण नदीरसृजतैतस्य पाप्मनोऽनन्वागमाय ।
ता उ एव कामदुघा अकुरुत ।

स षत्तत हन्तोर्ध्व एवोत्क्रामाणीति ।
सोऽष्टाचत्वारिंशेनोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष सुवर्नाम लोकः ।
तत्तस्मिन्नयोगरमत बह्वस्य स्वं भवतीति ।
सास्य सुवता ।
स षत्तत हन्तेभ्यो लोकेभ्य एकं लोकं संभराणीति ।
स एभ्यो लोकेभ्य एकं लोकं समभरत् ।
तदेवैतद्द्वादशाहस्य दशममहरभवत् ।
सोऽब्रवीन्न वै म इदमकमभूदिति ।
यदब्रवीन्न वै म इदमकमभूदिति तन्नाकस्य नाकत्वम् ।
स एष वाव नाको यद्दशममहर् । एष स्वर्गो लोक । एतद्ब्रध्नस्य विष्टपम् ३४५

तद्यथा वृत्तं वा गिरिं वाधिरुह्य व्यवेत्तेतैवमेवैतस्माल्लोकादन्याँल्लोकान्व्यवेत्तते ।
स इमाः प्रजा अशनायन्तीः प्रत्यवैत्तत ।
ता द्वाभ्यां रूपाभ्यां प्रत्याद्रवन्नीलेन च सुवर्णेन च ।
तद्यत्पर्जन्यस्य वर्षिष्यतः कृष्णं तन्नीलम् ।
अथ यदप्स्वन्तर्विद्योतते तत्सुवर्णम् ।
ताभ्योऽवर्षत् ।
तत ओदनोऽजायत ।
तमशित्वोदानन् ।
स उदनोऽभवत् ।
तदुदनस्योदनत्वम् ।
उदनो ह वै नामैष ।
तमोदन इति परोत्तमाचत्तते ।
द्वितीयं ज्यायोऽन्नाद्यमजायत ।
तदभिसंपद्य व्यमथ्नत ।
स मन्थोऽभवत् ।
तन्मन्थस्य मन्थत्वम् ।

तदेतद्द्वयमेवान्नाद्यस्य रूपं यच्चैवाश्नाति यच्च पिबति ।
यदश्नात्योदनस्य तद्रूपं । यत्पिबति मन्थस्य तत् ।
उभयं हास्यैतद्गृहेऽधिगम्यते य एवं वेद ।
तौ हैतौ प्रजापतेरेव स्तनौ यद्व्रीहिश्च यवश्च ।
ताभ्यामिमाः प्रजा बिभर्ति ३४६

स उपोदको नाम लोको यस्मिन्नयमग्निः ।
अथर्तधामा यस्मिन्वायुः ।
अथ शिवो यस्मिंश्चन्द्रमाः ।
अथापराजितो यस्मिन्नादित्यः ।
अथाधिद्युर्यस्मिन्वरुणः ।
अथ प्रद्युर्यस्मिन्मृत्युः ।
अथ रोचनो यस्मिन्नशनाया ।
अतो ह पराचीनमहोरात्रे नान्वितस्सकृद्विष्टा हैवातः पराचीनं यथा
विद्युतोवरूपं स्याद्दार्वाचितानां वा समिद्धानामेवम् ।
अथ हैते प्रजापतिलोका एवात ऊर्ध्वाः ।
कामोऽष्टमस् । सुवर्नवमो । नाक एव दशममहः ।
इदमेवं प्रायणमद उदयनम् ।
ते हैते लोका एवैतानि द्वादशाहस्याहानि ।
स य एतदेवं वेदैते हैवास्य लोका भवन्ति ३४७

उपोदको नाम लोकोऽन्ने विष्टो । मनुष्या गोप्तारो । अग्निरधिपतिर् ।
यदर्चिषो रूपं तद्रूपम् । अप्सु प्रतिष्ठितः ।
ऋतधामा नाम लोको वयोभिर्विष्टो । गन्धर्वाप्सरसो गोप्तारो ।
वायुरधिपति । श्वेतं रूपं । प्राणे प्रतिष्ठितः ।
अपराजितो नाम लोको नक्षत्रैर्विष्टश् । चन्द्रमा गोप्ता ।
आदित्योऽधिपतिर् । यदुद्यतश्च सूर्यस्य रूपमस्तं च यतस्तद्रूपं । मनसि
प्रतिष्ठितः ।
अधिद्युर्नाम लोको यज्ञे विष्ट । आदित्या गोप्तारो । वरुणोऽधिपतिर् ।
नीलं रूपं यत्पर्जन्यस्य वर्षिष्यतः कृष्णं तन्नीलं । यद्वा कार्तस्वरस्य मणेर्

। अनृते प्रतिष्ठितः ।
प्रद्युर्नाम लोकोऽमृते विष्टो । रुद्रा गोप्तारो । मृत्युरधिपतिर् । लोहितं रूपं यद्गौरवच्छदायै यद्वा माहारोहणस्य वासस । ऋते प्रतिष्ठितो यन्नार्च्छति तस्मिन् ।
रोचनो नाम लोकस्तपसि विष्टो । वसवो गोप्तारस्ते हि प्रथमे देवानामियुस्तस्मात्ते पराध्या । यज्ञोऽधिपतिर् । यत्सुवर्णस्य हिरण्यस्य रूपं तद्रूपं । सत्ये प्रतिष्ठितः ।
एते वै लोका । एते गोप्तार । एतेऽधिपतयः ।
एते हैवास्य लोका । एतेऽधिपतयो भवन्ति य एवं वेद ३४८

प्रजापतिर्देवानसृजत ।
सह श्रिया वाचा च वा एनांस्तत्सहासृजतान्नेन च सहाद्भिः ।
ते देवा अन्नं श्रियं वाविदानाना वाचा यत्सधमादमिवैवासन्नन्नं हि श्रीस्सोऽशोचत् ।
स षन्नत कथं न्वहमेषामिमा श्रियस्संवृञ्जीयेति ।
तान्मनो भूत्वानुप्राविशत् ।
तेषां सर्वां श्रियं निरचिनोद्यथा बदराणि निश्चिनुयादेवम् ।
तेषां मनसा वाचमगृह्णात् ।
सैषा मनसा वाग्गृहीताप्यद्य ।
यद्ध्येव मनसा कामयते तद्वाचा वदति ।
स षन्नत केन न्वेषां रूपेण वाचमाददीयेति ।
स पुरुषरूपमकुरुत ।
तेषां पुरुषरूपेण वाचमादत्त ।
तस्मात्पुरुषस्सर्वा वाचो वदति ।
स इमा अपस्संगृह्योर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैष ऋषभो नामान्नलोकः ।
तदन्नं वा ऋषभः ।
यदा वा अश्नात्यथर्षभ्यति ।
स षन्नत किं नु तद्रूपं कुर्वीय यन्मेऽन्यो नाभ्यारोहेदिति ।
सोऽजः पृश्निरभवत् ।

तस्मादजं पृश्निं नाधिगच्छाम ।
तद्यास्ता अपोऽहरद्या एता उपर्याप । एता एव ताः ।
अथ यां तां वाचमहरद् । य एष उपरि स्तनयित्नुर् । एषैव सा वागथ योऽप्स्वन्तर्विद्योतते ।
स इमाः प्रजा अशनायन्तीः प्रत्यवैक्षत ३४६

अन्धे तमसि जल्पन्तीः ।
सोऽस्यै वाच एकमक्षरमवच्छिद्य वागिति व्यसृजत ।
तं पतित्वैषां लोकानां मध्ये व्यरमत ।
तदेतन्मण्डलमभवत् ।
तदन्वानैत् ।
स प्राणोऽभवत् ।
ताभ्यो व्यौच्छत् ।
अशनायंस्त्वेव स आसामपामेकं स्तोकं प्राश्चयोतयत्कियत्स्विदाभ्योऽलं भविष्यतीति ।
स दशधाभवच्छतधा सहस्रधा यावतीयं पृथिवी तावानभवत् ।
तदभिसंपद्य व्यमथ्नत ।
स मन्थोऽभवत् ।
तन्मन्थस्य मन्थत्वम् ।
तमशित्वोदानन् ।
स उदनोऽभवत् ।
तदुदनस्योदनत्वम् ।
तदेतद्द्वयमेवान्नस्य रूपं यच्चैव पिबति यच्चाश्नाति ।
यत्पिबति मन्थस्य तद्रूपं । यदश्नात्योदनस्य तत् ।
उभयं हास्यैतद्गृहेऽधिगम्यते यच्चैव पिबति यच्चाश्नाति य एवं वेद ।
तदाहुस्त्रय स्तोका आगच्छन्तीत्युदस्तोको घृतस्तोको मधुस्तोकः ।
ततो य उदस्तोक इमां स प्रविशत्य् । ओषधीर्घृतस्तोको ।
वनस्पतीन्मधुस्तोकः ।
तद्धैतं मीमांसांचक्रुरामलक अकूपयेयोऽहीना आश्वत्थिः केशी दार्भ्यः किं स्तोकं त्वमागच्छन्तं मन्यसे । किं स्तोकं त्वं । किं स्तोकं त्वमिति ।

स होवाच केशी घृतस्तोकमहं मन्य इति ।
अथ होवाचाहीना मधुस्तोकमहं मन्य इति ।
अथ होवाचामलक -- उदस्तोकमहं मन्य इति ।
तस्मिन्नु हैव संपादयांचक्रुः ।
उदकाध्येवेदं सर्वं जायते ।
तद्यां तां वाचं व्यसृजत सोऽग्निः ।
अथ यं तं प्राणमन्वानैत्स इन्द्रः ।
अथ यस्स प्रजानां जनयित ऋषभेऽन्नलोकेऽप्स्वन्तः ३५०

चन्द्रमा हैव सः ।
स उ हेव प्रजापतिः ।
तदेतत्परस्तादर्वाक्तेजो निर्मितं दीप्यमानं तिष्ठत्यग्निश्चेन्द्रश्च ।
तदिदमध्यात्मम् ।
या सा वागियं सा वाक्तामयं प्राण उपरिष्टादध्यास्ते ।
अथ यस्स प्रजानां जनयित ऋषभेऽन्नलोकेऽप्स्वन्तरयं स पुरुषः ।
ता एता समानीर्देवता इह चामुत्र च ।
ता एह गच्छन्ति । गच्छन्त्यमुत्र ।
या इमास्ता अमूर् । या अमूस्ता इमाः ।
ता ह योऽध्यात्ममुपास्ते स हानिदेवो भवति ।
तेषां हैतेष् । एं देवानां प्रजापतावात्मानस्संनिहिताः ।
अथ हैषां प्राणानामस्मिन्पुरुष आत्मानस्संनिहिताः ।
तमेतं पुरुषं परिगृह्य गोपायन्ति ।
तस्यैष श्लोक
ऋषभो लोको महदेव यन्नं नैवास्मात्पूर्वं न परं बभूव ।
यं देवं देवाः प्राणाः पुरुषं परिगृह्य जाग्रति स वेद लोकं पुरुषं महान्तमिति
।
इमं ह वाव तं देवं देवाः प्राणाः पुरुषं परिगृह्य जाग्रति ।
योऽयमन्नन्नन्त स हैष वामनः ।
स यो हैतं वामन इत्युपास्ते वामं वामं हैवैनमेषा देवताभिनेनीयते ।
एतस्माद्ध वा इदं राजन्यबन्धवो वामनं केन चिदवकांन्नन्ति ।

एतस्यै ह देवतायै नाम्नोऽन्तिकमेनं विदुः ।
स हैष न जीर्यति ।
समावान्हैवैष यूनश्च जरसश्च ।
स हैष प्राणान्संगृह्यावधूय शरीरं प्राणैस्सहोर्ध्व उत्क्रामति ।
एतेन ह वै प्रत्यूढानि मृत्युश्शरीराणि हरति ।
तस्यै हैतस्यै देवतायै यथा मृत्पिण्ड इषीकेऽधिहते स्यातामेवमेव हृदये पादावधिहतौ ।
तौ यदाच्छिनत्यथ म्रियते ।
तदिदमप्यविद्वांस आहुराच्छेद्धयस्येति ।
स य एतदेवं वेदाजरसं हास्मादेषा देवता नोत्क्रामति । सर्वमायुरेति ३५१

देवा वै श्रमेण तपसा वतरचर्येणासुरान्रक्षांस्यभ्यभवन् ।
तेऽसुरा विदित्वैत्परा वै ते भवन्तीति । स्त्रीरूपाण्यकुर्वत प्रथमोत्तनकाश्चण्डातकवासिनीर्यत्कल्याणतमं रूपाणां तत् ।
ता देवान्प्रत्याक्रमन्त ।
ता देवा उपन्यपादयन्त ।
न हि कस्य चन स्त्रियोऽप्रियाः ।
तेषु यदेषां तेज इन्द्रियं वीर्यं श्रमाभिजितमासीत्तदसिंचन् ।
तेऽसुरा विदित्वैतदियद्वा एषां तेज इन्द्रियं वीर्यमभूदित्यादाय प्रारवन् ।
तेषां ह देवानामप्रियमासीत् ।
रिरिचाना इवामन्यन्त ।
तेऽब्रुवन्कथं न्विदं तेज इन्द्रियं वीर्यं पुनराददीमहीति ।
त एता व्याहृतीरपश्यन् ३५२

तमेत्येकाक्षरेण रथन्तरमाददत ।
तस्मात्तत्प्रथमेऽहन्क्रियते ।
प्रमेति द्व्यक्षरेण बृहदाददत ।
तस्मात्तद्द्वितीयेऽहन्क्रियते ।
प्रतिमेति त्र्यक्षरेणवैरूपमाददत ।

तस्मात्तत्तृतीयेऽहन्क्रियते ।
अस्त्रीवगिति चतुरक्षरेण वैराजमाददत ।
तस्मात्तच्चतुर्थेऽहन्क्रियते ।
सिरिकमसीति पञ्चाक्षरेण शाक्वरमाददत ।
तस्मात्तत्पञ्चमेऽहन्क्रियते ।
छर्दिरिन्द्रियावदिति षडक्षरेण रैवतमाददत ।
तस्मात्तत्षष्ठेऽहन्क्रियते ।
आ गयं वीर्यं योनिमा दध्वं विद्वज्जनस्य छाये
ति वामदेव्यमाददत ।
तस्मात्तन्मध्यतो यज्ञस्य क्रियते ।
यत्परो योनिमतिश्चयुतितमभूत्तद्
आ दध्वं वस्विति यज्ञायज्ञीयमाददत ।
तस्मात्तत्परार्धे यज्ञस्य क्रियते ३५३

अथो आहुरपहतपाप्मानो वै देवाः ।
ते न स्वपन्ति ।
त उ श्रमस्य भूम्ना सममीलयन् ।
तेषामु स्वपतां प्रमत्तानामसूरास्तेज इन्द्रियं वीर्यमादायाप्स्वन्वभ्यवानयन् ।
तद्विष्णुरन्वपश्यत् ।
तेषां ह देवानां प्रबुबुधानानामप्रियमासीत् ।
तान्विष्णुरब्रवीन्मा वोऽप्रियं भूत् ।
अहं वै तदन्वख्यमिति ।
तानप्स्वन्वभ्यवानयत् ।
तदप्स्वन्तः पर्यपश्यन्यथा पृष्ठात् ककुदुदीषिता स्यादेवम् ।
तदेताभिरेताभिरेव व्याहृतिभिरादाय विष्णवे प्रायच्छन् ।
तदिदं विष्णुस्तेज इन्द्रियं वीर्यं धारयन्समैषत् ।
तस्माद्ध्रस्वो विष्णुः ।
तस्मादु ह्रस्वं वैष्णवं गामालभन्ते ।
स यत्र धारयन्पराक्रमत तदेव । विष्णुपदमभवत् ।
तस्माद्यो विष्णुपदीयः कैकेयस्स यज्ञ आत्तरः ।

एतं ह्यस्मिन्यज्ञमन्वविन्दन् ।
स य एतदेवं वेदा द्विषतो भ्रातृव्यस्य तेज इन्द्रियं वीर्यं दत्ते ३५४

प्रजापतिर्वा इमाँल्लोकानिमा दिशोऽसृजत ।
तान्सृष्ट्वोभयान्देवानसुरानसृजत ।
तान्समदविन्दत् ।
ते प्रजापतौ ब्रह्म संन्यदधत ।
तत्प्रजातिर्नोदयच्छत् ।
तदप्सु प्रावेशयत् ।
ते देवा असुरानजयन् ।
ते जित्वा पुनरेत्याब्रुवन्प्रजापते यन्नस्त्वयि ब्रह्म तन्नः प्रयच्छति ।
सोऽब्रवीन्न वा अहं तदुदयच्छम् ।
तदप्सु प्रावेशयमिति ।
तानप्स्वन्वभ्यवानयत् ।
तदप्स्वन्तः पर्यपश्यन्यथा पृष्ठात्ककुदुदीषिता स्यादेवम् ।
तेऽब्रुवन्सृजामहा इत इति ।
त ओमित्येतेनाक्षरेणास्यै ३५५

प्राच्यै दिशो रथन्तरं भा असृजन्त ।
तदग्नेर्घोषोऽन्वसृज्यत ।
तस्माद्रथन्तरस्य स्तोत्रा अग्नीन्मन्थन्ति ।
त ओमित्येतेनैवाक्षरेणास्यै दक्षिणायै दिशो बृहद्भा असृजन्त ।
तत्पर्जन्यस्य घोषोऽन्वसृज्यत ।
तस्माद्बृहत स्तोत्रे दुन्दुभीनुद्वादयन्ति ।
वर्षुकः पर्जन्यो भवति ।
त ओमित्येतेनैवाक्षरेणास्यै प्रतीच्यै दिशो वैरूपं भा असृजन्त ।
तद्वायोर्घोषोऽन्वसृज्यत ।
तस्माद्वैरूपस्य स्तोत्र आधवैराधून्वन्ति ।
अधोवात आगामुकः ।
त ओमित्येतेनैवाक्षरेणास्या उदीच्यै दिशो वैराजं भा असृजन्त ।

तद्वयसां घोषोऽन्वसृज्यत ।
तस्माद्यथा वयांसि पुनरादायं वाचं वदन्त्येवं वैराजेन पुनरादायमिव स्तुवते ।
त ओमित्येतेनैवाक्षरेणास्या ऊर्ध्वायै दिशश्शाक्वरं भा असृजन्त ।
तदपां घोषोऽन्वसृज्यत ।
तस्माच्छाक्वरस्य स्तोत्रेऽप उपनिधाय स्तुवन्ति ।
त ओमित्येतेनैवाक्षरेणास्यै दिशो रैवतं भा असृजन्त ।
तत्पशुघोषोऽन्वसृज्यत ।
तस्माद्रैवतस्य स्तोत्र पशुघोषं कुर्वन्ति । वत्सान्मातृभिस्संवाशयन्ति ।
तेऽब्रुवंस्तद्वेदाम यत इमेऽसृक्ष्महीति ।
तेऽप्स्वेव वामदेव्यं पर्यपश्यन् ।
तदाददत ।
तत्सर्वा वाचोऽन्वसृज्यन्तैकैकेतराणि पृष्ठानि ।
तानीमानि पृष्ठानि सृष्टानि दिग्भ्य आतपन् ।
एतानि ह तर्ह्यातिषुः ।
आतपति स्वेभ्य । आतपतीत्येनमाहुर्य एवं वेद ।
तानीयं देवताभ्यध्यायत् ।
येयं पुरस्तादुच्चरति पुरुषाकृतिर्ह्येषा तर्ह्यास ।
सा त्रिवृता स्तोमन गायत्र्या छन्दसा रथन्तरस्य भा आदत्त ।
तदितोऽधत्त ।
पञ्चदशेन स्तोमेन त्रिष्टुभा छन्दसा बृहतो भा आदत्त ।
तदितोऽधत्त ।
सप्तदशेन स्तोमेन जगत्या छनसा वैरूपस्य भा आदत्त ।
तदितोऽधत्त ।
एकविंशेन स्तोमेनानुष्टुभा छन्दसा वैराजस्य भा आदत्त ।
तदितोऽधत्त ।
त्रिणवेन स्तोमेन पंक्त्या छन्दसा शाक्वरस्य भा आदत्त ।
तदितोऽधत्त ।
त्रयस्त्रिंशेन स्तोमेनातिच्छन्दसा रैवतस्य भा आदत्त ।
तदितोऽधत्त ।

तस्मात्सर्वाणि भूतान्यप्स्वन्ततः प्रतिष्ठितानि ।
तमादद नमादितादितेति वाचोऽवदन् ।
तदादित्यस्यादित्यत्वम् ।
मानिन्दितुस्तेज इन्द्रियं वीर्यं तत्ते शमलमस्य निन्दिता प्रतिमुञ्चते य एवं वेद
३५६

तं सर्वाणि भूतानि सोऽर्यस्सोऽर्य इत्यायन् ।
तत्सोर्यस्य सोर्यत्वम् ।
सोर्यो ह वै नामैष ।
तं सूर्य इति परोक्षमाचक्षते ।
अर्यो नोऽसि भर्ता नोऽसीति हैनं स्वाश्चारणाश्चोपासते य एवं वेद ।
स यत्प्रत्यंङादाय स्वरयन्वै तत्सोर्यस्य सोर्यत्वम् ।
तद्वाव स्वरस्य स्वरत्वं यत्स्वरयन्वैत् ।
ते देवा अब्रुवन्न हार्षीद्वा अयमिति ।
तदहरभवत् ।
रातं वा अस्मा अभूदिति सो एव रात्रिरभवत् ।
एतद्ध वा अहोरात्रयोर्जन्म ।
स य ए वमेतदहोरात्रयोर्जन्म वेदाप्नोत्यहोरात्रे । नैअन्मेते अतीतः ।
सर्वं ह वा इदमन्यत्पर्यन्तवत् ।
एते ह वा अपर्यन्ते यदहोरात्रे ।
ये ते वा इदं परिवर्तमाने सर्वमाप्नुतः ।
तद्यथा रथोपस्थे तिष्ठन्पक्षसि प्रत्यवेक्षेतैवमेवैतेऽहोरात्रे आदित्यलोके
तिष्ठन्प्रत्यवेक्षते ।
स पितरं प्रजापतिमब्रवीत्तत यत्त इदं तेज इन्द्रियं वीर्यं मह्यमिदं प्रयच्छेति ।
तथेति ।
तदस्मै प्रायच्छत् ।
तस्मादुत पिता पुत्रय जीवन्नेवेशां संप्रयच्छति ३५७

स वशमेव दिव आदत्त । क्षत्रं नक्षत्राणाम् । आत्मानमन्तरिक्षस्य ।
रूपं वायोर् । आज्ञां मनुष्याणां । चक्षुः पशूनाम् । ऊर्जमपां ।

रसमोषधीनां । चरथं वनस्पतीनां । शिश्नं वयसाम् । अर्चिमग्नेर् ।
हृदयं पृथिव्यै । गन्धं हिरण्यस्य । स्तनयित्नुं वाचस् । संगमं पितॄणां
। भां चन्द्रमसः ।
तद्यदेतेषां भूतानामादत्त तदादित्यस्यादित्यत्वम् ।
आदत्ते तेजो द्विषतो भ्रातृव्यस्य य एवं वेद ।
सा हैषा देवता दीक्षिता केशवाधि कृष्णाजिना ।
तस्यै येऽर्वाञ्चो रश्मयस्तानि श्मश्रूणि । य ऊर्ध्वास्ते केशाः ।
अहोरात्रे एव कृष्णाजिने ।
तद्यद्दिवि क्षयमकुरुत तस्माद्दीक्षिता ।
दिवि ह वा एष क्षयं कुरुत यो यजते ।
यां दीक्षया जितिं जयति यामृद्धिमृध्नोति । जयति तां जितिमृध्नोति ताम्
ऋद्धिं य एवं वेद ३५८

तस्योषस्येव पत्नी चन्द्रमास्सोमपीथः ।
तस्मात्सपत्नीको दीक्षत ।
सा हैषा देवता दीक्षमाणस्य तेज इन्द्रियं वीर्यं यश आदत्ते ।
स दीक्षिष्यमाण आदित्यमुपतिष्ठेत त्वं देवता दीक्षितासि ।
सा दक्षिमाणस्य तेज इन्द्रियं वीर्यं यश आदत्से ।
मा मे तेज इन्द्रियं वीर्यं यश आदिथाः ।
तव दीक्षां अनु दक्षि इति ।
तस्यैषा देवता दीक्षमाणस्य तेज इन्द्रियं वीर्यं यशो नादत्ते ।
तदेतदुक्थस्यैव स्तोम्भः ।
ते येऽर्वाञ्चो रश्मयस्तैरस्येमे लोका स्तब्धा य एतस्मादर्वाञ्चोऽथ यत्किं च
प्राणभृत्सशारीरम् ।
अथ य ऊर्ध्वास्तैरु अस्य ते लोका स्तब्धा य एतस्मात्पराञ्चोऽथ यत्किं
चाभृतमशरीरम् ।
तद्यदेषा देवतोभयान्देवासुरानन्तरा स्तवध्वा तिष्ठति तस्मादेतत्स्तम्भः ।
स ह वै स्तब्धस्सस्तभेत ।
अथो य एनं स्तभस्योपमीमांसेत तं ब्रूयाद्या स्तब्धा देवता तस्यै त्वा
वृश्चयामीमामार्तिं न्येष्यसीति ।

तां दैवार्तिं न्येति ।
ते येऽर्वाञ्चो रश्मय एते हावशा मृत्योरन्नवन्तः ।
अथ य ऊर्ध्वास्त उ हामृतलोकाः ।
ते येऽर्वाञ्चो रश्मय एते होरयो नाम यथा नळो वासुशिर स्याद्वे अर्वा ।
अथ य ऊर्ध्वास्त उपरीयांसो नाम ।
स यथा हस्ती हस्तेनादाय पृष्ठ्येऽध्यस्येतैवमेवैषा देवतैतद्विद्वांसमुरुभी रश्मिभिरादायावरीयस्वध्यस्यते ।
तमस्येष लोको य एतस्मात्पराचीनः ३५९

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरमिति ।
तस्मिन्नसति सति न कस्मिंश्चन सत्यृतं ज्योतिष्मदुदप्लवत । सत्यं ज्योतिष्मदुदप्लवत । तपो ज्योतिष्मदुदप्लवत ।
तद्यदृतमिति वाक्सा । यत्सत्यमिति प्राणस्सो । यत्तप इति मनस्तत् ।
तेषामन्नमेव ज्योतिरासीत् ।
तान्येकमभवन् ।
तदेकं भूत्वैतेनान्नेन ज्योतिषाप्यायत ।
तदभवद्यथा मध्वष्ठी लावास्वासिक्ता स्यादृतिर्नैवम् ।
तदैक्षत हन्ताधस्तात्प्राणं करवा इति ।
तदधस्तात्प्राणमकुरुत । यथैष स्त्रिया अधस्तादाकाश एवम् ।
तस्मादापोऽसृज्यन्त बलवलबलित्येतया वाचा ।
तदिदमापो महत्सलिलमासीत् ।
यद्ध वा इदमाहुरापो वा इदमग्रे महत्सलिलमासीदित्येतास्ता आपः ।
त ऊर्मयस्स मास्यन्त फा३ल्फाश्लिक्ति ।
तद्धिरण्मयमाण्डं समैषत् ३६०

तस्य हरितमधरं कपालमासीद्रजतमुत्तरम् ।
तच्छतं देवसंवत्सराञ्छयित्वा निर्भिद्यमभवत्सहस्त्रं वा द्युम्नान् ।
द्युम्ना ह नाम तर्ह्यप्यासुः ।
यावानेष संवत्सरस् । तावन्तस्संवत्सरस्य प्रतिमाः ।

द्युम्नैर्ह स्म संवत्सरं विजानन्ति ।
अथ ह ततः पुराहोरात्रे संश्लिष्टे एवासतुरव्याकृते ।
ते उ स्म संवत्सरं विजानन्ति ।
अथ ह ततः पुराहोरात्रे संश्लिष्टे एवासतुरव्याकृते ।
ते उ अग्निहोत्रेणैव व्याकृते ।
तदेतया वाचा निरभिद्यत स्रुवस्थे सरणे सन्यौ कपाले विजिहाथाम् ।
कं लोकमभि जाया इति ।
फळ् इत्येवदमाण्डं निरभिद्यत ।
तस्य यदधरं कपालमासीत् । सेयं पृथिव्यभवत् ।
अथ यदुत्तरमासीत् । सासौ द्यौरभवत् ।
अथ यदन्तरासीत् । तदिदमन्तरिक्षमभवत् ।
स यां जायमानो वाचमवदत् । स एव त्रयो वेदोऽभवत् ।
यद्धैवैषाग्रे किं च देवता जायमानोवाद तदु ह ब्रह्मैव बभूव ।
स षक्षत महतीं वा इमां प्रतिष्ठां असृक्षीमाँल्लोकान् ।
यद्वा अतस्स्रक्ष्ये वेत्स्यते वै तत्प्रतिष्ठाम् ।
हन्त सृजा इति ।
स मनसात्मानमध्यैत् ।
तस्मिन्द्वौ द्रप्सौ समभवतां वासन्तिकौ मासौ ३६१

तावब्रवीत्सृज्येथामिति ।
कां दिशं ततेति ।
इमामिति ।
तावोमित्येतया वाचासृज्यत ।
तयोस्तदेवान्नमासीत् । तज्ज्योतिस् । तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रं ह वै भवति य एवं वेद ।
स मनसैव पुनरात्मानमध्यैत् ।
तस्मिन्द्वौ द्रप्सौ समभवतां ग्रैष्मौ मासौ ।
तावब्रवीत्सृज्येथामिति ।
कां दिशं ततेति ।

इमामिति ।
तावोमित्येतयैव वाचासृज्यत ।
तावेतस्यां दिशि पतित्वा प्रत्यतिष्ठताम् ।
तौ बृहद्भा अन्वसृज्यत ।
तयोस्तदेवान्नमासीत्तज्ज्योतिस् । तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रं ह वै भवति य एवं वेद ।
स मनसैव पुनरात्मानमध्यैत् ।
तस्मिन्द्वौ द्रप्सौ समभवतां ग्रैष्मौ मासौ ।
तावब्रवीत्सृज्येथामिति ।
कां दिशं ततेति ।
इमामिति ।
तावोमित्येतयैव वाचासृज्यत ।
तावेतस्यां दिशि पतित्वा प्रत्यतिष्ठताम् ।
तौ बृहद्भा अन्वसृज्यत ।
तयोस्तदेवान्नमासीत्तज्ज्योतिस् । तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रं ह वै भवति य एवं वद ।
स मनसैव पुनरात्मानमध्यैत् ।
तस्मिन्द्वौ द्रप्सौ समभवतां वार्षिकौ मासौ ।
तावब्रवीत्सृज्येथामिति ।
कां दिशं ततेति ।
इमामिति ।
तावोमित्येतयैव वाचासृज्यत ।
तावेतस्यां दिशि पतित्वा प्रतिष्ठताम् ।
तौ वैरूपं भा अन्वसृज्यत ।
तयोस्तदेवान्नमासीत् । तज्ज्योतिस् । तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रं ह वै ति य एवं वेद ।
स मनसैव पुनरात्मानमध्यैत् ।

तस्मिन्द्वौ द्रप्सौ समभवतां शारदौ मासौ ।
तावब्रवीत्सृज्येथामिति ।
कां दिशं ततेति ।
इमामिति ।
तावोमित्येतयैव वाचासृज्यत ।
तावेतस्यां दिशि पतित्वा प्रत्यतिष्ठताम् ।
तौ वैराजं भा अन्वसृज्यत ।
तयोस्तदेवान्नमासीत् । तज्ज्योतिस्तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रे ह वै भवति य एवं वेद ।
स मनसैव पुनरात्मानमध्यै ।
तस्मिन्द्वौ द्रप्सौ समभवतां हैमन्तिकौ मासौ ।
तावब्रवीत्सृज्येथामिति ।
तावोमित्येतयैव वाचासृज्यत ।
तावेतस्यां दिशि पतित्वा प्रत्यतिष्ठताम् ।
तौ शाक्वरं भा अन्वसृज्यत ।
तयोस्तदेवान्नमासीत् । तज्ज्योतिस् । तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रं ह वै भवति य एवं वेद ।
स मनसैव पुनरात्मानमध्यैत् ।
तस्मिन्द्वौ द्रप्सौ समभवतां शैशिरौ मासौ ।
तावब्रवीत्सृज्येथामिति ।
कां दिशं ततेति ।
इमामिति ।
तावोमित्येतयैव वाचासृज्यत ।
तावेतस्यां दिशि पतित्वा प्रत्यतिष्ठताम् ।
तौ रैवतं भा अन्वसृज्यत ।
तयोस्तदेवान्नमासीत् । तज्ज्योतिस् । तदाभ्यामातपत् ।
ततस्तौ राष्ट्रमभवताम् ।
राष्ट्रं ह वै भवति य एवं वेद ३६२

अथ ज्यृग्भ्यामार्च्छत् ।
तस्मात्पशवः शैशिर ऋतौ ज्यृग्भ्यामृच्छन्ति ।
स षन्नत यमिमं त्रयं चेदमसृद्मि हन्तास्मात्सृजा इति ।
स त्रिवृता स्तोमेन गायत्रीमध्यैत् ।
ततो वसूनसृजत ।
त इमां दिशमन्वायन् ।
पञ्चदशेन स्तोमेन त्रिष्टुभमध्यैत् ।
ततो रुद्रानसृजत ।
त इमां दिशमन्वायन् ।
स सप्तदशेन स्तोमेन जगतीमध्यैत् ।
तत आदित्यानसृजत ।
त इमां दिशमन्वायन् ।
एकविंशेन जगतीमध्यैत् ।
तत आदित्यानसृजत ।
त इमां दिशमन्वायन् ।
एकविंशेन स्तोमेनानुष्टुभमध्यैत् ।
ततो विश्वान्देवानसृजत ।
त इमां दिशमन्वायन् ।
त्रिणवेन स्तोमेन पंक्तिमध्यैत् ।
ततो मरुतोऽसृजत ।
त इमां दिशमन्वायन् ।
त्रयस्त्रिंशेन स्तोमेनातिच्छन्दसमध्यैत् ।
ततस्साध्यांश्चाप्त्यांश्चासृजत ।
तईमां दिशमन्वायन् ३६३

ता एता देवता सृष्टा स्तोमा छन्दांस्यृतवो ग्रहाः ।
पृथगेवैषामिमा श्रियो दीप्यमाना अतिष्ठन् । नान्योन्यस्य श्रेष्ठताया अतिष्ठन्त ।
तेऽब्रुवन्न वा अन्योऽन्यस्य श्रेष्ठतायै तिष्ठामहै ।

एत तमिच्छामहै यो न ईशाता इति ।
ते प्रजापतिमेव जनयितारमेत्याब्रुवन्न वा अन्योऽन्यस्य श्रेष्ठतायै तिष्ठामहै ।
तन्नस्सृजस्व यो न ईशाता इति ।
स प्रजापतिरब्रवीदेतावद्वाव त्यस्मिंस्तेज इन्द्रियं वीर्यमभूद्यद्युष्मानसृक्षि ।
ते वै संवत्सरं तप्यध्वम् ।
ते मा संवत्सरं तप्त्वोपसमेत यदेकोऽधिगच्छति यदेको यदेक इति ।
ते संवत्सरमतप्यन्त ।
तं संवत्सरं तप्त्वोपसमायन् ।
यदेकोऽध्यगच्छद्यदेको यदेकस्तदस्य मन्यौ योनावसिञ्चन् ।
तत इन्द्रस्संभवत् ।
तदेषाभ्यनूच्यते
अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम् ।
मन्योरियाय हर्म्येषू तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद
इति ।
मन्योरियायेति यदस्य मन्यौ योनावसिञ्चन् ।
हर्म्येषु तस्थाविति हृदयान्यु वै हर्म्याणि ।
हृदयो ह वै क्रुध्यति ।
ओजसो जातमुत मन्य एनम्
इति ३६४

गौर्वीतं ह पप्रच्छुस्त्वं ह वै ददर्शिथेन्द्रं जायमानमिति ।
स हैतदुवाच
अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम् ।
मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद
इत्योजसोऽन्वाहं जातं मन्य इति होवाच ।
इन्द्रस्त्वेव तद्वेद यतस्स जात इति ।
स शिरो निर्हृत्य व्यैक्षत ।
स इदमेषां सर्वं स्पृतमपश्यत् ।
सोऽब्रवीद्यदिदमेषां सर्वं स्पृतं । कं लोकमभि जायै स वै नु मे प्रयच्छ ।
इमौ नु मे ३६५

वासन्तिकौ मासौ प्रयच्छेति ।
एतौ ते प्रयच्छानीत्यन्नमन्नमिति पतित्वास्यै प्राच्यै दिशौ रथन्तरं भा आदत्त
।
तदितोऽधत्त ।
षको द्वयोर्वीर्यं दत्ते य एवं वेद ।
तं पुनरेव प्राविशत् ।
तमब्रवीज्ञायस्वैवेति ।
सोऽब्रवीत्स वै नु मे प्रयच्छेमौ नु मे ग्रैष्मौ मासौ प्रयच्छेति ।
एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्यै दक्षिणायै दिशो बृहद्भा आदत्त
।
तदितोऽधत्त ।
षकश्चतुर्णां वीर्यं दत्ते य एवं वेद ।
तं पुनरेव प्राविशत् ।
तमब्रवीज्ञायस्वैवेति ।
सोऽब्रवीत्स वै नु मे प्रयच्छमौ नु मे वार्षिकौ मासौ प्रयच्छेति ।
एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्यै प्रतीच्यै दिशो वैरूपं भा आदत्त
।
तदितो अधत्त ।
षकष्षरणां वीर्यं दत्ते य एवं वेद ।
तं पुनरेव प्राविशत् ।
तमब्रवीज्ञायम्वैवेति ।
सोऽब्रवीत्स वै नु मे प्रयच्छेमौ नु मे शारदौ मासौ प्रयच्छति ।
एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्या उदीच्यै दिशो वैराजं भा
आदत्त ।
तदितोऽधत्त ।
षकोऽष्टानां वीर्यं दत्ते य एवं वेद ।
तम्पुनरेव प्राविशत् ।
तमब्रवीज्ञायस्वैवति ।
सोऽबवीत्स वै नु मे प्रयच्छेमौ नु मे हैमन्तिकौ मासौ प्रयच्छति ।

एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्या ऊर्ध्वायै दिशश्शाक्वरं भा आदत्त ।
तदितोऽधत्त ।
षको दशानां वीर्यं दत्ते य एवं वेद ।
तं पुनरेव प्राविशत् ।
तमब्रवीज्जायस्वैवेति ।
सोऽब्रवीत्स वै नु मे प्रयच्छेमौ नु मे शैशिरौ मासौ प्रयच्छेति ।
एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्यै दिशो रैवतं भा आदत्त ।
तदितोऽधत्त ।
षको द्वादशानां वीर्यं दत्ते य एवं वेद ।
स षन्नत कथं न्विमानृतून्गृह्णीयामिति ३६६

ता उत्तानशय्यामपश्यत् ।
स शीर्ष्णैवमौ प्राञ्चावगृह्णाद् । बाहुभ्यामिमान्नाना । पद्भ्यां प्रत्यञ्चावुरसोर्ध्वौ । प्रष्टिभिरवाञ्चौ ।
तानेवं गृहीत्वाधस्तात्पर्यौहत ।
स एष ऋतुषु च संवत्सरे चैतस्यां श्रियामध्यूढस्तपति ।
तं पुनरनेन सह सर्वेण प्राविशत् ।
तमब्रवीदेकं वाव त्वाग्रे नाशकमुद्यन्तुम् ।
न वै त्वानेन सह सर्वेण शक्ष्यास्युद्यन्तुं । जायस्वैवेति ।
तस्मिन्नापस्स्िंसिमायत्पर्यपश्यत् ।
सोऽब्रवी स वै नु मे प्रयच्छेमा नु म अपः प्रयच्छाथ जनिष्य इति ।
तस्मै षट्सहस्राण्यपां प्रायच्छत् ।
तस्यैष श्लोको
न ता अन्यः प्र तरति नैनाविष्णातुमर्हति ।
वहन्त्यस्मिन्सर्वतो मधु क्षीरं घृतं दधि षट्सहस्राण्यम्बयाः
इति ।
इमा ह वै ता अम्बया नामैता एव दिशः ।
एता एवास्मै सहस्रं सहस्रं क्षरन्त्य् । एता एवैनं तर्पयन्ति ।
सोऽजायत ।

तं जातमुपामदत्
तेजोऽजनीन्द्रियमजनि वीर्यमजनि ब्रह्माजनि क्षत्रमजनि सप्तानां पशूनां यन्ताजनि सप्तानी दिशां धर्ताजनि जातोऽजनि जनिताजनि जानित्रिरजनी ति ।
अपि हात्मानमुपामादयज्ञानित्रिरित्युवाच ।
उपमाद्यो ह भवति य एवं वेद ।
तस्मै जातायैतां राजासन्दीं न्यदधुः ।
तस्यामेनमभ्यषञ्चन्त ३६७

वसवो राज्याय रुद्रा वैराज्यायादित्या स्वाराज्याय विश्वे देवा साम्राज्याय मरुतस्सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय ।
तमेवं सन्तं पिता प्रजापतिरभ्येवाशयत् ।
स वसूनब्रवीदिमं मे प्रयच्छतेति ।
तेऽब्रुवन्न शक्ष्यामः पितरं प्रजापतिं हिंसितुमिति ।
रुद्रानब्रवीन् । नाकामयन्त ।
आदित्यानब्रवीन् । नैवाकामयन्त ।
अथ मरुतोऽब्रवीत्किमस्माकं तत स्यादिति ।
यन्म इदं निष्केवल्यं माध्यन्दिनं सवनं तन्मे युष्माभिस्साधारणं भविष्यतीति ।
तथेति ।
तमस्मा अभिप्रद्य प्रायच्छन् ।
तस्यैतच्चन्द्रं मे चन्द्रं म इत्येव वदत एतत्तेज आदत्त येनैष एतत्तपति ।
स यच्चन्द्रं म इत्यब्रवीत्तस्माच्चन्द्रमाः ।
तस्य ह स्म यत्स पुनः पुनरादत्ते स ह स्म तादृश एव परिशिष्यते ।
तस्मादेतस्याप्यद्यास्त्येवाभा ।
यथैष एतद्दिवा तपत्येवमेष रात्रिं भाति ।
तमवैदक्षय्यो वा अयमिति ।
तमुदार्जत ।
तमब्रवीन्मा मा त्वं ततः प्रत्यातप्सीरिति ।
नेत्यब्रवीत्प्रत्येव त्वातप्स्यानीति ।

तस्मादेतमुभयोरहोरात्रयोः पश्यन्ति ।
प्रति हैनं तदातपन्ति ।
तौ हैतौ पितापुत्रावेव यच्चन्द्रमाश्चादित्यश्च ।
पिता चन्द्रमा । आदित्यः पुत्रः ।
परश्चन्द्रमा । अपर आदित्यः ।
तौ हैतौ सर्वासां देवतानां श्रेष्ठतां गतौ ।
तद्यथैतौ सर्वासां देवतानां श्रेष्ठतां गतावेवमेव स्वानां श्रेष्ठतां गच्छति य एवं वेद ।
इत्यधिदेवतमथाध्यात्मम् ।
अयमेव चन्द्रमा । अयमादित्यः ।
तद्वेवमध्यात्ममुपासितव्यम् ।
तद्वेव भृगुचक्षुषम् ।
स यं द्विष्यात्तं ब्रूयाद्भृगुचक्षुषेण त्वेक्ष इति ।
न हैव भोग्य इव भवति ३६८

छन्दांसि यदयजन्त तेषां बृहत्येवोदगायत् ।
अथ यावेता उत्तरौ प्रगाथौ तौ प्रस्तोतृप्रतिहर्तारावास्ताम् ।
अमितच्छन्दो गृहपतिर् । विराड्ब्रह्म । गायत्री मैत्रावरुणा । जगती होता । पंक्तिरध्वर्युः ।
तस्य यत्पञ्चमं पदं स प्रतिप्रस्थाता त्रिष्टुब्ब्राह्मणाच्छंस्य् । उष्णिक्ककुभौ छन्दसी नेष्टापोतारावनुष्टुबच्छावाको । द्विपदोन्नेता । अक्षरपंक्तिर्ग्रावस्तुद् । एकपदा सुब्रह्मण्योऽतिच्छन्दा आग्नीध्रः ।
गायत्रेयस्स एष सर्वच्छन्दा यज्ञो यद्द्वादशाहः ।
एतैर्हि सर्वैश्छन्दोभिर्द्वादशाहस्तायते ।
एतान्येव सर्वाणि छन्दांसि द्वादशाहे क्रियन्ते ।
तस्माद्यदेतेषु छन्दस्सूपहवमिच्छेत । अथर्त्विक्षूपहवमिच्छेत ।
यदो यजत एतान्येव छन्दांसि भूतो यजते ।
यदो याजयत्येतान्येव छन्दांसि भूतो याजयति ।
तस्य हैतस्य नैव का चनार्तिरस्ति य एवं वेद ।
य एवैनमुपवदति स आर्तिमार्च्छति ३६९

तदाहुः कस्मिन्स्तोमे कस्मिंश्छन्दसि कस्यां देवतायां द्वादशाहोऽन्ततः प्रतिष्ठित इति ।
स ब्रूयात्त्रिवृति स्तोमे । गायत्र्यां छन्दस्य् । अग्नौ देवतायां ।
द्वादशाहोऽन्ततः प्रतिष्ठित इति ।
त्रिवृता ह्येव स्तोमेन प्रयन्ति गायत्र्या छन्दसाग्निना देवतया ।
तैरु एवोद्यन्ति ।
तदाहुः क स्तोम एकः । किं छन्द एकं । का देवतैका द्वादशाहं वहतीति ।
स ब्रूयात्त्रिवृत्स्तोम एको । गायत्री छन्द एकं । वाग्देवतैका द्वादशाहं वहतीति ।
स ब्रूयात्त्रिवृत्स्तोम एको । गायत्री छन्द एकं । वाग्देवतैका द्वादशाहं वहतीति ।
त्रिवृतो ह्येव सर्वे स्तोमाः प्रजाता गायत्र्यास्सर्वाणि छन्दांसि ।
वाग्देवतैका द्वादशाहं वहति ।
तदाहुः क स्तोमः । किं छन्दः । का देवता द्वादशाह इति ।
स ब्रूयादेकविंश स्तोमो विराट्छन्द आदित्यो देवता द्वादशाह इति ।
आदित्यो ह्येवैकविंश । आदित्यो विराड् । आदित्यो देवता द्वादशाहः ।
तदाहुर्यत्साम द्वादशाहस्स साम इदं सर्वम् ।
कस्साम्न स्तोभः किं पदं किमक्षरमिति ।
स ब्रूयादादित्य एव साम्न स्तोभोऽन्तरिक्षं पदं । वागक्षरमिति ।
तदाहुः क स्तोभस्य स्तोभः । किं पदस्य पदं किमक्षरस्याक्षरमिति ।
स ब्रूयाच्चक्षुरेव स्तोभस्य स्तोभो । मन एव पदस्य पदं । प्राण एवाक्षरस्याक्षरमिति ३७०

तदाहुः कथं स्तोमा एक स्तोमो भवति । कथं छन्दांस्येकश्छन्दो भवति । कथमहान्येकमहर्भवति । अक्थं रूपाण्येकं रूपं भवति । कथं पृष्ठान्येकं यजुर्भवति । कथं सामान्येकं साम भवति । कथं वेदा एको वेदो भवति । कथमिदं सर्वमेकं भूत्वा कस्मिन्प्रतिष्ठितमिति ।

स ब्रूयात्स्तोम इति स्तोमा एकं भवन्ति । छन्द इति छन्दांस्येकं भवन्त्य् । अहरित्यहान्येकं भवन्ति । रूपमिति रूपाण्येकं भवन्ति । पृष्ठमिति पृष्ठान्येकं भवन्ति । देवतेति देवता एकं भवन्त्य् । ऋगित्यृच एकं भवन्त । यजुरिति यजूंष्येकं भवन्ति । सामेति सामान्येकं भवन्ति । वेद इति वेदा एकं भवन्ति । मन इदं सर्वमेकं भूत्वा प्राणे प्रतिष्ठितमिति । तदाहुर्यन्मन इदं सर्वमेकं भूत्वा प्राणे प्रतिष्ठितं कस्मिन्नु प्राणः प्रतिष्ठित इति
३७१

पुरुष इति ब्रूयात् ।
पुरुषे ह वै प्राणः प्रतिष्ठितः ।
स यो ह स पुरुषे य एवं वेदैवंविदो ह वै प्राणः प्रतिष्ठितः ।
तस्मादु हैवं विद्वान्गुरु स्यान्न हीदं सर्वं लघयेद् ।
अथो ह विद्यादहमेवेदं सर्वमस्मि मयीदं सर्वं प्रतिष्ठितमिति ।
तस्य ह न लोको व्यृद्ध्यते ।
तदाहुस्स वाद्य द्वादशाहं विद्यात्स वा वेदेति मन्येत । य एनं सर्वासु दिक्षु प्रतिष्ठितं विद्यादिति ।
दश वै दिशः ।
दशो द्वादशाहस्याहानि ।
तस्येमावेव लोकौ प्रायणीयोदयनीयावयमेव लोकः प्रायणीयोऽसावुदयनीयः ।
तस्येयमेव प्राची दिक्प्रथममहर् । इयं द्वितीयम् । इयं तृतीयम् । इयं चतुर्थम् । इयं पञ्चमम् । इयं षष्ठम् । इयमेवान्तरदिक् सप्तममहर् । इयमष्टमम् । इयं नवमम् । इयं दशमम् ।
स एष द्वादशाहस्सर्वासु दिक्षु प्रतितिष्ठति । सर्वेषां देवानां सलोको भवति ।
नास्य तस्य देवाश्च नेशते यदेनान्स नान्वागच्छेत् ।
देवानां ह वै स एको य एवंविद् ।
प्रजापतिर्वै द्वादशाहः ।
तस्य दिश एव लोकाः ।
स एष द्वादशाहस्सर्वेषु लोकेषु प्रतिष्ठितः ।

स य एवमेतं द्वादशाहं सर्वेषु लोकेषु प्रतिष्ठितं वेद । सर्वेषु लोकेषु प्रतितिष्ठति ।
स एष वाव द्वादशाहो य एष तपत्य् । एष इन्द्र । एष प्रजापतिर् । एष एवेदं सर्वम् ।
तदेतत्कृते ब्रह्माध्याहितं तपति ३७२

क्षत्रं च राष्ट्रं चर्तं च सत्यं च तान्यवस्तात्तपश्च तेजश्च स्वधा चामृतं च तान्युपरस्तात् ।
तद्यदत्र क्षत्रमिन्द्रो वा वरुणो वा सोमो वा राजा तत्तत् ।
अथ यद्राष्ट्रं यद्देवविशो मरुतस्तत्तत् ।
ऋतं रात्रिः ।
सत्यं तदहः ।
तपो विद्युत् ।
तेजो यो विद्युतोऽशनिः पतति तत्तत् ।
स्वधा वृष्टिः ।
अन्नं तदमृतम् ।
तस्यैष श्लोकः
क्षत्रं राष्ट्रमृतं सत्यं ब्रह्मणो निहितावराः ।
तपस्तेज स्वधामृतं त ऊर्ध्वासु आसते । मध्ये ब्रह्म विराजति इति ।
एतदु हैतन्मध्ये ब्रह्म विराजति ।
य उ एवंविदस्त ऊर्ध्वास आसते ।
स यथा क्षत्रियः प्रतिनिहित स्यादेवमेवैतद्ब्रह्म प्रतिनिहितमनत्ययनाय ३७३

देवा यदयजन्त तेषां बृहस्पतिरेवोद्गायत् ।
गौश्चायास्यश्च प्रस्तोतृप्रतिहर्तारावास्ताम् ।
प्रजापतिरेव गृहपतिरासीत् ।
इन्द्र एव ब्रह्मासीत् ।
स ब्राह्मणादशंसत् ।
मित्रावरुणावेव मैत्रावरुणावास्ताम् ।

अग्निरेव होतासीत् ।
स आग्नीध्रमकरोद् । अश्विनावध्वर्यू । मरुतो नेष्टापोतारौ विश्वे देवा
अच्छावाकोऽर्बुदो ग्रावस्तुत् ।
विष्णुर्वा यज्ञमभ्यष्टौत् ।
सोम उन्नेता । ब्रह्मैव सुब्रह्मण्यामाह्वयद्वा गायत्रेयः ।
स एष सर्वदेवतायज्ञो यद्द्वादशाहः ।
एताभिर्ह सर्वाभिर्देवताभिर्द्वादशाहस्तायते ।
एता हि सर्वा देवता द्वादशाहे क्रियन्ते ।
तस्माद्यदेतासु देवतासूपहवमिच्छेताथर्त्विक्षूपहवमिच्छेत ।
यदो यजत एता एव देवता भूतो यजते । यदो याजयत्येता एव देवता
भूतो याजयति ।
तस्य हैतस्य नैव का चनार्तिरस्ति य एवं वेद ।
य एवैनमुपवदति स आर्तिमार्च्छति ३७४

तदाहुर्यदन्यानि सत्राणि रात्रिभिराख्यायन्तेऽथ
कस्माद्द्वादशाहोऽहोभिराख्यायत इति ।
स ब्रूयाद्विश्वे वै देवाः पितरं प्रजापतिमुपेत्याब्रुवन्कियान्स्विद्भवानिति ।
सोऽब्रवीद्द्वादशाहमस्मीति ।
यदब्रवीद्द्वादशाहमस्मीति तद्द्वादशाहस्य द्वादशाहत्वम् ।
एष ह वाव संवत्सरः प्रजापतिरास ।
एतानेव तद्द्वादश मास उवाच द्वादशाहमस्मीति ।
तदाहुः किं द्वाः किं दश किमहरिति ।
स ब्रूयादादित्य एव द्वारादित्यो दशादित्योऽहरिति ।
स यदादित्य एव द्वारित्येष ह्येव स्वर्गस्य लोकस्य द्वारम् ।
अथ यदादित्यो दशेत्येष ह्येवासु दशसु दिक्षु तपति ।
अथ यदादित्योऽहरित्येष ह्येवाहः ।
तदाहुर्याजयितव्यं द्वादशाहेना३ ना३ इति ।
नेति ब्रूयात् ३७५

आप्नोति वा एष स्तोमान् । आप्नोति छन्दांस्य् । आप्नोति देवान् ।

आप्नोति लोकानाप्नोति कामान्यो द्वादशाहेन याजयति ।
स उ दुगृछ आभिरलोको भवति ।
अथो ये च विजानन्ति ये च न त एनं मन्यन्ते कृतं करोतीति ।
तस्माद्द्वादशाहेन नैव याजयेत्तदु वा आहुर्याजयितव्यमेव ।
प्रजापतिर्वै वादशाहः । प्रजापतिरुद्गाता । प्रजापतिर्यजमानः ।
समानी वै देवतोद्गाता च यजमानश्च ।
समानीम्वा एतावृद्धिमृध्नुतस् । समानं लोकं जयत । समान्यां देवतायां प्रतितिष्ठतः ।
अथो यज्ञो वै यजमानो । ब्रह्मोद्गाता ।
यज्ञ एव तत्प्रतिष्ठाय ब्रह्मणस्सलोकतां जयति ।
सलोकितरो यजमानाद्भवति ।
तदाहुर्यदेकैवेदं देवता सर्वमभवद्द्वादशाह एव । कतमा सा देवतेति
३७६

प्राण इति ब्रूयात् ।
प्राणो वा इदं सर्वमभवत् ।
स यद्द्वारित्येतद्ध्येवेदं सर्वं द्वारमुपजीवति ।
अथ यद्दा इत्येष हीदं सर्वं ददाति ।
अथ यच्छा इत्येष हीदं सर्वं शं स्पृशति ।
अथ यद्धा इत्येष हीदं सर्वं हरति ।
स य एतदेवं वेद यदि च ह साधु करोति यदि च न । अथ हास्य साध्वेव कृतं भवति ।
अथो ह विद्यात्साध्वेवाहं करोमि । नासाधु ।
यस्साधुकृतो लोकस्स मे लोक इति ।
तस्य ह स एव लोको भवति ।
सर्वस्य ह वा अन्यस्य लोको जीर्यति ।
एवंविदो हैव लोको न जीर्यति ।
सैषा प्रणेता देवता ।
एषा हीदं देवता सर्वं प्राणयत ।
तद्यत्प्राणयत तस्मात्प्राणः ।

स यदस्माल्लोकादेवंवित्प्रैत्येषा हैवैनं देवतादायोत्पतति ।
सैनं तं लोकं गमयति । य एतस्यै । यतः परं नास्ति ।
तदाहुः स वाद्य द्वादशाहेन यजेत स वा द्वादशाहेन याजयेद् । य
एतमादित्ये प्रतिष्ठितं विद्यादित्यादित्यो वै द्वादशाहस्तस्याहोरात्रावेव
प्रायणीयोदयनीयौ ।
अहरेव प्रायणीयो । रात्रिरुदयनीयः ।
तस्य ये प्राञ्चो रश्मयस्तत्प्रथममहः ३७७

ये दक्षिणास्तद्द्वितीयं । ये प्रत्यञ्चस्तत्तृतीयं । य उदञ्चस्तच्चतुर्थं । य
ऊर्ध्वास्तत्पञ्चमं । य अर्वाञ्चस्तत्षष्ठं । यदेव भाति तत्सप्तमं । यत्तपति
तदष्टमं । यदेव ताम्रमिव तन्नवमं । मण्डलमेव दशममहः ।
स एष द्वादशाह आदित्ये प्रतिष्ठितः ।
स य एवमेतं द्वादशाहमादित्ये प्रतिष्ठितं वेद प्रत्यादित्ये तिष्ठति ।
सर्वमायुरेत्य् । अप पाप्मानं हते । गच्छति स्वर्गं लोकं य एवं वेद ।
इत्यधिदेवतम् ।
अथाध्यात्मम् ।
अयमेव द्वादशाहो योऽयं चक्षुषि पुरुषः ।
तस्य पक्ष्माण्येव प्रायणीयोदयनीयौ यान्यर्वाञ्चि पक्षमाणि स प्रायणीयो ।
यान्यूर्ध्वानि स उदयनीयः ।
तस्याधरैव वर्तनी प्रथममहः ३७८

उत्तरा द्वितीयं । सममेषस्तृतीयं । शुक्लं चतुर्थं । कृष्णं पञ्चमं ।
कनीनिका षष्ठम् ।
य एवैष पुरुषस्तस्य ये प्राणास्तान्युत्तराण्यहानि ।
प्राण एव सप्तममहश् । चक्षुरष्टमं । श्रोत्रं नवमं । वागेव दशममहः ।
स यद्द्वाचिति द्वावेव हेमौ पुरुषो दृश्येते ।
अथ यद्दा इत्येष हीदं सर्वं दत्ते ।
अथ यच्छा इत्येष हीदं सर्वं शं स्पृशति ।
अथ यद्धा इत्येष हीदं सर्वं दत्ते ।
अथ यच्छा इत्येष हीदं सर्वं शं स्पृशति ।

अथ यद्धा इत्येष हीदं सर्वं हरति ।
स एष एवोक्थ्यम् ।
एष हीदं सर्वमुत्थापयतीव ।
तस्मादेष एवोक्थम् ।
स एष एवोक्थ्यम् ।
एष हीदं सर्वं शं स्पृशति ।
अथ यद्धा इत्येष हीदं सर्वं हरति ।
स एष एवोक्थ्यम् ।
एष हीदं सर्वमुत्थापयतीव ।
तस्मादेष एवोक्थम् ।
स एष एवर्क ।
ऊर्घ वै नामैष ।
तमृगिति परोक्षमाचक्षते ।
तस्मादेष एवोक्थम् ।
स एष एव यजुः ।
एष हीदं सर्वं जरयतीव ।
तस्मादेष एव यजुः ।
स एष एव साम ।
एतं ह तं हीदं सर्वं समेतम् ।
तस्मादेष एव साम ।
स एष एवोद्गीथः ।
स यदुदित्येतेन हीदं सर्वमुत्तब्धम् ।
अथ यद्गीत्येष हीदं सर्वं गिरति ।
अथ यत्थ इत्यन्नमेवास्यैतत् ।
तस्मादेष एवोद्गीथः ।
स एष एव ब्रह्म ।
एष हीदं सर्वं जरयतीव ।
तस्मादेष एव यजुः ।
स एष एव साम ।
एतं ह तं हीदं सर्वं समेतम् ।

तस्मादेष एव साम ।
स एष एवोद्गीथः ।
स यदुदित्येतेन हीदं सर्वमुत्तब्धम् ।
अथ यद्गीत्येष हीदं सर्वं गिरति ।
अथ यत्थ इत्यन्नमेवास्यैतत् ।
तस्मादेष एवोद्गीथः ।
स एष एव ब्रह्म ।
एष हीदं सर्वं बिभर्ति ।
तस्मादेष एव ब्रह्म ।
भर्म ह वै नामैषः ।
तद्ब्रह्मेति परोक्षमाचक्षते ।
बिभर्ति हैनमेषा देवतास्मिंश्च लोकेऽमुष्मिंश्च य एवं वेद ।
स य एवमेतं द्वादशाहमधिदेवतमधिसूर्यमधिपुरुषमध्यात्मन्प्रतिष्ठितं वेद प्रत्यादित्ये तिष्ठति । सर्वे हास्मै वेदास्सर्वे देवास्सर्वे लोकाः कामान्दुह्रे ।
अतीत्य देवान्ब्रह्मणस्सलोकतां जयति ।
स एष एवोक्थमेष ऋगेष यजुरेष सामैष उद्गीथ एष ब्रह्मैष एवेदं सर्वमित्युपासितव्यम् ३७९

इदमेवेदमग्रेऽन्तरिक्षमासीत् ।
तद्वेवाप्येतर्हि ।
तदेतद्वितानं यदिमाँल्लोकान्व्याप्तम् ।
तस्माद्विद्व नाम ।
तदकामयत स्यां प्रजायेय भूमानं गच्छेयमिति ।
तत्तपोऽतप्यत ।
तत्तप्यमानमद्योतत ।
वीव वा इदमद्युतदिति ।
सैषा विद्युदभवत् ।
एषोऽर्चिरेतज्ज्योतिः ।
विद्युद्भूत्वातप्यत ।

तत स्तनयित्नुरजायत ।
तस्माद्यदा विद्योततेऽथ स्तनयति ।
स्तनयित्नुर्भूत्वातप्यत ।
ततो वृष्टिरजायत ।
तस्माद्यदा स्तनयत्यथ वर्षति ।
तदिदमापो महत्सलिलमासीत् ।
यद्ध वा इदमाहुरापो वा इदमग्रे महत्सलिलमासीदित्येतास्ता आपः ।
आपो भूत्वातप्यत ।
ततोऽन्नमजायत ।
अन्नं भूत्वातप्यत ।
ततोऽन्नमयः पुरुषोऽजायत प्रजानां जनयिता ।
स आस्वप्स्वन्तर्भूर्भुव स्वरिति व्याहरत् ।
त एवेमे लोका अभवन् ।
तद्दिशोऽन्वसृज्यन्त ।
अथ यत्करञ्जनद्वृधदिति व्याहरत्त एवैते लोका अभवन् ।
तदृतवोऽन्वसृज्यन्त ।
सोऽब्रवीदिमा वै मे सदभूदिति ।
त एव मासा अभवन् ।
तदृतवोऽन्वसृज्यन्त ।
सोऽब्रवीदिमा वै मे सदभूदिति ।
त एव मासा अभवन् ।
ऋद्धिष्वा इति तेऽर्धमासाः ।
अहमरात्समोषमिति यदहमिति तान्यहान्यभवन् ।
यदरात्समिति ता रात्रयो । यदोषमिति ता उषसः ।
स यां जायमानो वाचमवदत्स एव त्रयो देवोऽभवत् ।
यद्धैवैषाग्रे किं च देवता जायमानोवाद तदु ह ब्रह्मैव बभूव ।
स षन्नत यमिमं त्रयं वेदमसृद्दि हन्तास्मात्सृजा इति ३८०

त्रिवृता स्तोमेन गायत्रीमभ्यक्रन्दत् ।
ततो वसूनसृजताग्निमुखान् ।

पञ्चदशेन स्तोमेन त्रिष्टुभमभ्यक्रन्दत् ।
ततो रुद्रानसृजतेन्द्रमुखान् ।
सप्तदशेन स्तोमेन जगतीमभ्यक्रन्दत् ।
तत ग्रादित्यानसृजत वरुणमुखान् ।
एकविंशेन स्तोमेनानुष्टुभमभ्यक्रन्दत् ।
ततो विश्वान्देवानसृजत विष्णुमुखान् ।
त्रिणवेन स्तोमेन पंक्तिमभ्यक्रन्दत् ।
ततो मरुतोऽसृजतेशानमुखान् ।
त्रयस्त्रिंशेन स्तोमेनातिछन्दसमभ्यक्रन्दत् ।
ततस्साध्यांश्चाप्त्यांश्चासृजत सवितृमुखान् ।
पञ्चविंशेन स्तोमेन बृहतीमभ्यक्रन्दत् ।
ततो गन्धर्वानसृजत मित्रमुखान् ।
विराजमभ्यक्रन्दत् ।
ततोऽप्सरसोऽसृजत त्वष्टृमुखाः ।
ककुभमभ्यक्रन्दत् ।
ततस्सर्पानसृजताङ्गिरसोमुखान् ।
उष्णिहमभ्यक्रन्दत् ।
ततोऽङ्गिरसोऽसृजताथर्वमुखान् ।
ग्रक्षरपंक्तिमभ्यक्रन्दत् ।
ततोऽसुरानसृजतासितमुखान् ।
विष्टारपंक्रिमभ्यक्रन्दत् ।
ततः पितॄनसृजत यममुखान् ।
द्विपदामभ्यक्रन्दत् ।
ततो मनुष्यानसृजत मृत्युमुखान् ।
एकपदामभ्यक्रन्दत् ।
ततो वयांस्यसृजत मृत्युमुखान्यु एव ।
ग्रमितच्छन्दोऽभ्यक्रन्दत् ।
ततः पशूनसृजत धातृमुखान् ।
स इदं सर्वं सृष्ट्वोर्ध्व उदक्रामत् ।
सोऽगच्छद्यत्रैनमेतदुपरि वेदयन्ते ३८१

तमस्यां प्राच्यां दिशि वसवोऽन्वैच्छन्नग्निमुखाः ।
तेऽन्वविन्दन्यदर्चिषो रूपं तत् ।
तदेवास्य त उपासते ।
तमस्यां दक्षिणायां दिशि रुद्रा अन्वैच्छन्निन्द्रमुखाः ।
तेऽन्वविन्दन्यदादित्यस्य रूपं तत् ।
तदेवास्य त उपासते ।
तमस्यां प्रतीच्यां दिश्यादित्या अन्वैच्छन्वरुणमुखाः ।
तेऽन्वविन्दन्यच्चन्द्रमसो रूपं तत् ।
तदेवास्य त उपासते ।
तमस्यामुदीच्यां दिशि विश्वे देवा अन्वैच्छन्विष्णुमुखाः ।
तेऽन्वविन्दन्यद्विद्युतो रूपं तत् ।
तदेवास्य त उपासते ।
तमस्यामूर्ध्वायां दिशि मरुतोऽन्वैच्छन्नीशानमुखाः ।
तेऽन्वविन्दन्यत्श्वेतं रूपं तत् ।
तदेवास्य त उपासते ।
तमेतस्मिन्परलोके साध्याश्चाप्त्याश्चान्वैच्छन्सवितृमुखाः ।
तेऽन्वविन्दन्यत्कृष्णं रूपं तत् ।
तदेवास्य त उपासते ।
तमस्मिन्नेवान्तरदेशे गन्धर्वा अन्वैच्छन्मित्रमुखाः ।
तेऽन्वविन्दन्यन्मधुनो रूपं तत् ।
तदेवास्य त उपासते ।
तमङ्गिरसोऽन्वैच्छन्नथर्वमुखाः ।
तेऽन्वविन्दन्यद्धृतस्य रूपं तत् ।
तदेवास्य त उपासते ।
तमासुरा अन्वैच्छन्नसितमुखाः ।
तेऽन्वविन्दन्यत्सुरायै रूपं तत् ।
तदेवास्य त उपासते ३८२

तस्मात्ते पराभूताः ।

ते ह्यस्य पापिष्ठमुपासते ।
तं पितरः पितृलोकेऽन्वैच्छन्यममुखाः ।
तेऽन्वविन्दन्यत्नीरौदनस्य रूपं तत् ।
तदेवास्य त उपासते ।
तदेतद्ध वा एतदग्रेऽन्नस्य रूपमास यत्नीरौदनः ।
तस्येयं विकृतिर्यदिदं मनुष्या उपासते ।
तं वयांस्यन्वैच्छन्मृत्युमुखान्यु एव ।
तान्यन्वविन्दन्हिरण्यपक्षश्शकुन इति ।
तत्तदेवास्य तान्युपासते ।
तं पशवोऽन्वैच्छन्धातृमुखाः ।
तेऽन्वविन्दन्हिरण्यशृङ्गो हिरण्यशफः कृष्ण ऋषभ इति ।
तत्तदेवास्य त उपासते ।
तदेतद्ध वा एतस्यै देवतायै सात्ययज्ञयो रूपमुपासते हिरण्यशृङ्गो
हिरण्यशफः कृष्ण ऋषभ इति ।
स य एतदेवं वेद ऋषभ एव स्वानां भवति ।
अथो योऽयं तपति ३८३

सोऽस्यामूर्ध्वायं दिश्यन्वैच्छत् ।
तमेतैस्सर्वै रूपैस्सहासीनमन्वविन्दत् ।
तान्येतस्मा एव सर्वाणि रूपाणि प्रायच्छत् ।
तद्यदिदमिह कल्याणं रूपमाजायते यदेवैष प्रयच्छति तदिदमिहाजायते ।
स यद्
भूर्भुव स्वर्
इति व्याहरत्त एवेमे त्रयो लोका अभवन्नुपोदक ऋतधामाऽपराजितः ।
अथ यत्
करञ्जनद्वृधद्
इति व्याहरत्त एवैतेऽपरे लोका अभवन्नधिदिवः प्रदिवो रोचतः विष्टप एव
सप्तमो ब्रह्मलोको यस्मिन्नेतत्सत्यं भाति ।
तमेषा देवता सत्यं भूत्वानुप्राविशत् ।
तत्सद्वै प्राणस्सत्याः प्रजाः ।

तेनास्य सत्येनेदं सर्वं संगृहीतं भवति ।
यदि च ह सत्यं वदति यदि च नाथ हास्य सत्यमेवोदितं भवति ।
अथो ह विद्यात्सत्यमेवाहं वदामि नानृतं । यत्सत्यं वदतो लोकस्स मे लोक इति ।
तस्य ह स एव लोको भवति ।
तद्यथेदं वयं मीमांसामह इदं ब्रह्मेदं ब्रह्मेत्येवमेवैषा देवतैतद्विदांसं मीमांसते न हैष चन तद्वेद ।
मासो देवताप्रविष्टेति य एव तद्वेद स एव तद्वेद ।
एतं सा देवता प्रविष्टेति ।
न ह वा एवंविदः किं चनाविदितं भवति न का चन देवता ३८४

तस्यैष श्लोकः ।
इतः परस्तात्पर उ परस्मात्परस्तृतीयादुत वा चतुर्थात् ।
सहस्रस्थूणे विमिते दृढ उग्रे यत्र देवानामधिदेव आस्ते

इति । एष ह वाव स देवानामधिदेवो य एष तपति ।
तस्यैतत्सहस्रस्थूणं विमितं दृढमुग्रं यत्संवत्सर ऋतवो मासा अर्धमासा अहोरात्राण्युषसः ।
स य एवमेतत्सर्वं द्वादशाहमात्मानमभि संपद्यमानं वेद सर्व एनं कामा अभि संपद्यन्ते ।
द्वादशाहे वै सर्वे स्तोमा सर्वाणि पृष्ठानि सर्वाणि छन्दांसि सर्वाणि सवनानि सर्वे पशवस्सर्वे देवास्सर्वे लोकास्सर्वे कामा ।
द्वादशाहमन्वायत्ता । द्वादशाहमन्वाभक्ता । द्वादशाहमनुसंतृप्यन्ति ।
द्वादशाहे संपन्ना । द्वादशाहे प्रतिष्ठिताः ।
तदाहुर्यदेतानि दशैवाहान्यथ कस्माद्द्वादशाह इत्याख्यायत इति ।
स ब्रूयाद्यदेवैते द्वादशाग्निष्टोमा संपद्यन्ते तेनेति ३८५

तदाहुर्यत्त्रयोदश मासास्संवत्सरस्संवत्सरश्च चतुर्दशोऽथ केन त्रयोदशं च मासमुपाप्नुवन्ति संवत्सरं च चतुर्दशमिति ।
अतिरात्राभ्यामिति ब्रूयात् ।

प्रायणीयेनातिरात्रेण त्रयोदशं मासमुपाप्नुवन्त्य् । उदयनीयेन संवत्सरं चतुर्दशम् ।
तदाहुस्स वाद्य द्वादशाहं विद्यात् । स वा वेदेति मन्येत । य एनं सर्वेषु लोकेषु प्रतिष्ठितं विद्यादिति ।
मासा वै द्वादशाहस्याहानि । त एव लोका । एत एव देवलोकाः ।
फाल्गुनो वै मासो द्वादशाहस्य प्रथममहश् । चैत्रो द्वितीयं वैशाखस्तृतीयम् । आषाढापौर्णमासश्चतुर्थं । श्रोणाश्रविष्ठः पञ्चमं । शातभिषजष्षष्ठं । प्रोष्ठपदः सप्तमम् । आश्वयुजोऽष्टमं । कार्तिको नवमम् । मार्गशीर्षो दशमं । तैष एकादशं । माघो द्वादशं ।
प्रायणीय एवातिरात्रस्त्रयोदशो मास । उदयनीयस्संवत्सरश्चतुर्दशः ।
स एष द्वादशाहस्सर्वेषु लोकेषु प्रतिष्ठितः ।
स य एवमेतं द्वादशाहं सर्वेषु लोकेषु प्रतिष्ठितं वेद सर्वेषु लोकेषु प्रतितिष्ठति ।
स एष वाव द्वादशाहो य एष तपत्येष इन्द्र । एष प्रजापतिर् । एष एवेदं सर्वमित्युपासितव्यम् ।
एष एवेदं सर्वमित्युपासितव्यम् ३८६

Credits

Sources: 1. For Books 1 and 2, *Jaiminīya-Brāhmaṇa*, Raghu Vīra and Lokesh Candra, and emendations by Bodewitz, and

2. The grantha manuscripts, Vohd II, 2 Nr. 535, Berlin, 1996.

3. For Book 3, *Jaiminīya-Brāhmaṇa*, Raghu Vīra and Lokesh Candra, 1996.

Typescript: Books 1 and 2 edited by Gerhard Ehlers; Book 3 edited by M. Kobayashi

Conversion to Devanagari using Vedapad Software by Ralph Bunker

Formatted for Maharishi University of Management Vedic Literature Collection